# श्रीगोपालचम्पूः ।



## पूर्वचम्पूः ।

कोळम्बाब्दाः १०८७, क्रैस्ताब्दाः १९१२.

# श्रीगोपालचम्पूः ।

## पूर्व्वचम्पूः ।

### प्रथमपूरणम् ।

श्रीश्रीराधारमणाय नमः ।

श्रीकृष्णचैतन्यचन्द्राय नमः ।

श्रीकृष्ण ! कृष्णचैतन्य ! ससनातनरूपक !
गोपाल ! रघुनाथाप्त ! व्रजवल्लभ ! पाहिमाम् ॥

तदेवमारम्भसम्भव[1]दन्तर्महसासहसा[2] निलिख्य तदिदमुल्लिख्यते । किमिदं मदिष्टदेवस्य मदन्विष्ट[3]दयशिष्टतद्भक्तसमुदयस्य च क्रमतः स्मरणमाविर्भूतम् । किम्वा केवलस्य मदिष्टदेवस्य ।

---

(१) जायमान । (२) उत्साहेन । सहसा अतर्कितं ।
अतर्किते तु सहसेत्यमरः ।

(३) अन्वेषणीय । मदन्विष्टो निर्विशेषणोभक्तसमुदाय एवो-च्यते भक्ताविशिष्टस्यैवेत्यर्थः ननु मदन्विष्टदयेत्यादिविशेषणाविशिष्ट-भक्तसमुदायविशिष्टस्य नादृगंवस्तुप्रथमपक्षएव ।

किम्वा (१) तद्विशिष्टस्य । आंस्रां (२) तन्त्रत (३) स्तत् त्रयमपि स्वतन्त्रतया लभ्यते । तत्र प्रथमं तावत् प्रथमतःप्रथयामि। अत्र श्रीपदमन्यदन्यदपि (४) किञ्चिदनुष्टुप्छन्दःपरछन्दतया (५) पूर्वत्र (६) परपरत्र च यत्र न दत्तं तत्र च सन्धातव्यम् ॥

यथा हेश्रीकृष्णनाम्नातिधन्य सर्व्वमूर्द्धन्य ! हे-श्रीकृष्णचैतन्य सर्वशर्म्मदकीर्तन्य ! (७) हे महित श्रीसनातनसहित श्रीरुपनामधेय मन्मूर्द्धन्याधेय (८) । हेश्रीगोपालभट्टाख्य प्रवृद्ध भट्टारता (९) समृद्ध ! हेश्रीरघुनाथदास नामधामतयाऽतिप्रसिद्ध परमभक्तिपराविद्ध ! (१०) हे तेषामेवाप्तव्रजता (११) सिद्धवर्णन सत्कर्णगर्भाभरण श्रीभूगर्भाविसंज्ञाधि-करण ! हे श्रीवल्लभ प्राग्भवीयदुर्ल्लभसुकृतसन्धी यमान(१२)मदीयशरण पितृचरण ! । किम्वा । हे-

(१) प्रतिभया नार्थनिधानात् ।
(२) ज्ञातंज्ञातं आमेवंपरमंमतेइत्यमरः ।
(३) अनकोद्देशे सकृत्प्रवृत्तिस्तन्त्रता ।
(४) हेअतिधन्य हेसर्वमूर्द्धन्येत्याद्यपि ।
(५) अधीनतया ।
(६) श्रीकृष्णचैतन्येत्यादिषुश्रीकृष्णेत्येव ।
(७) कीर्त्तनार्हे । (८) स्थाप्य ।
(९) पूज्यता । भट्टारःपूज्यइतित्रिकाण्डशेषात् ।
(१०) युक्त । (११) बन्धुवर्गता । (१२ संयुक्त ।

श्रीरघुनाथ[१]स्थास्थान् व्रजत्यनुव्रजतीति तत्तया सर्ववल्लभ । श्रीवल्लभ माम्पाहि निजचरणच्छायया मत्प्रतिपालकतामायाहि ॥

अथद्वितीयमपि प्रतीयमानं निर्मामि[२] ।

श्रीकृष्णेति । श्रीरत्र राधा । एषाहि श्रीप्रधानतया साधयिष्यमाणतायां निरावाधा । तदनन्तरकृष्णशब्दश्चात्र शब्दब्रह्मगूढ परब्रह्म नन्दनन्दन वाचकतायां रूढः[३] । तेन हे राधाख्यस्वरूपशक्तियुक्तकृष्णेत्यथर्श्च निर्व्यूढः[४] । कृष्णेति । कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत इतिप्रमाणज्ञातचरः कृष्णशब्दस्त्वत्र योगपुरस्कृत रुढितया तत्परः । भूरिति भावर्किवन्तताकरः । सचायं भावशब्दबह्लात्वर्थमात्रताधरः । धात्वर्थश्चात्राकर्षणम् । तदेवस्फुटमाप्ततया[५]सुमनसामाकर्षणम्[६] । ततश्चभिन्नपदार्थतयावगतयो र्दयितयोरिव तयो रैक्यं योग एवेति तद्युक्तआनन्दः सर्वाकर्षकानन्दइत्यर्थ

---

(१) रामस्य ।　　(२) प्रतीतिविषयं व्यङ्गं करोमि ।

(३) प्रसिद्धः ।　　(४) सिद्धः ।　　(५) प्राप्ततया ।

(६) पण्डितानामाकर्षणं तेषां सम्मतं स्यान्न तु सामान्यतारूप मित्यर्थः ।

एवामन्दः । परं ब्रह्मेति । नराकृतिपरंब्रह्मेति प्रसिद्धिः । योगपुरस्कृतरूढतोपगूढतया[1] पि श्रीनन्दनन्दन[2] मेव वक्ति तच्छब्दशक्तिरिति व्यक्ति सिद्धिश्च[3] तदेतदभिधीयते[4] चाभिधीयतइति । तस्मादेव तदीय[5] स्वभावविशेषभावनार्थमेव पुनरुक्तिरियं युक्तिं युनक्ति । चैतन्येति । हे सर्वप्रकाशक मद्रूपतया सर्वाश्रयस्वरूप ! तद्रूपता च विपश्चिद्भिरवगता । सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे इति तापनीयनान्दीनिशमनात् ॥ त्वय्येव नित्यसुखबोधतनाविति श्रीभागवतीयब्रह्मस्तवे निगमनाच्च । सत्सनातनरूपकेति । हे सनातनेन सदातनेन स्वस्वरूपमनुभवद्भिरपि सुनिरूपेण सुरूपेण रूपेण सहवर्त्तमान ! तेन स्वभक्तिवित्तचित्तमनुवर्त्तमान । गोपालरघुनाथाप्तव्रजवल्लभेति । गोपालेषु ये रघवो लघवो ये नाथा मुख्या इति विख्यातगाथा स्तैराप्तस्य व्रजस्य वल्लव तल्लज[6] व्रजस्य वल्लभ । किम्वा । गोपालानां लघुरिष्टः स च नाथश्च

(१) आलिङ्गितत्वया । (२) नन्दइत्यर्थवशात्मन्दः ।
(३) स्वरूप । विशेषार्थप्राकट्यस्य सिद्धिश्चजातेति विशेषः ।
(४) आवश्याकृत्या प्रतिपाद्यते । (५) सर्वोत्कर्षक ।
(६) श्रेष्ठ ।

यस्तस्य सम्बोधनं । त्रिष्विष्टेऽल्पेलघुरिति नानार्थ वर्गलब्धबोधनम्। आप्तव्रजवल्लभेति । आप्तव्रजानां स्वजनसमूहनां बल्लभ परेषामलभ्यसम्भ ॥

अथ तृतीयमपि सम्भृतीकरवाणि[१] ।

हे श्रीकृष्णेति । श्रीरत्र च परमप्रेयसीषु श्रेयसी राधा ततस्तद्युक्ततया मधुरलीलाया मसङ्कीर्ण । [२] हे कृष्णचैतन्याख्यभक्तावतार तादात्म्यापन्नतयाव-तीर्ण ! । हे सनातनरुपाभ्यां परमानुरक्तसुभक्ताभ्यां सह विद्यमान ! । हे गोपालरघुनाथाभ्यां तत्तन्नाम-भ्यामपि सुभक्ताभ्यामाप्तः प्राप्तो यो व्रज स्तस्य वल्लभतया सर्वदाविद्यमान ! मां पाहि मत्पालकतां-याहीति ॥

तदेवं मङ्गलं सङ्गमय्य कार्य्यं विचार्यते ।

यन्मया कृष्णसन्दर्भे सिद्धान्तामृतमाचितम् ॥

तदेव रस्यते काव्यकृति[३]प्रज्ञा[४] रसज्ञया ।

सोऽहं काव्यस्य लक्ष्येण[५]मनो निर्म्मामि तादृशं[६]

(१) प्रस्तुतीकरवानि ।

(२) सङ्कीर्णसंकुलाकीर्णौ अयं जनादिभि र्निरवकाशइतिटीका-सुनिरन्तरावृत्तइतिक्षीरः तस्मात् हे असंकीर्ण सावकाश ।

(३) प्रयत्न । (४) बुद्धीः । (५) व्याजोपदेशोलक्ष्यश्च ।

(६) काव्यतुल्यं ।

तन्महान्तो यशोचोरंस्तदा हेम्नि चितो मणिः ॥

पूर्वोत्तरतया चम्पू द्वयी सेयं त्रयी त्रयी [१] ।
पृथक् पृथक् ग्रन्थतुल्या यथेच्छं सद्भिरीक्ष्यताम् ॥

श्रीगोपालगणानां गोपालानां प्रमोदाय ।
भवतु समन्तादेषा नाम्ना गोपालचम्पू र्या ॥

यद्यपि चिरमन्तर्धा जाता श्रीगोकुलस्थानाम् ।
तदपि महात्मसु तेषां व्यूहसमूहः पुरः स्फुरन्
जयति ॥

अस्ति किल वृन्दावन नामधेयं भागधेयमिव-सुभगं वनमवनीदेव्याः । यदहो वनमप्यवनाय- [२] कल्पते सकललोकस्य प्रसङ्गमात्रतःपवमान-मपि [३] तत्र [४] क्षिप्रताप्रतापतः पवमानता [५] मप्यतिक्रामति । परमत्रिवर्गदाने निरर्गलमपि सर्वदा पवर्ग वर्ग मपवर्जयति [६] । मुक्तिसन्ध [७] सम्बन्ध-

---

(१) अथान्वयवा ।

(२) पालनाय श्लेषेण वनाभावायेति विरोधालङ्काराय ।

(३) पात्रीकारकमपि ।　　(४) पवित्रीकारत्वं ।

(५) त्वंतलप्रकरणेभावकर्मणोरधिकर्मणोरधिकारात् पवमानस्यवायोः कर्मविरोधपक्षेपवमानस्यपवित्रीकारिणोभावंस्वभावं ।

(६) ददाति ।　　(७ प्रतिज्ञा ।

गन्धमपि [१] स्वगुणैर्वन्ध-निर्वन्धनिवन्धनं [२] भवति। सदा सद्भावलेशस्य भक्तिप्रद मपि कदापि न ददाति तद्भक्तिम् [३] । ब्रह्मणात्मनि [४] यदनश्चित्त [५] मपि मत्वा जन्म वाञ्छितम् । तेन [६] तत्त्वत्परमं चितं मतमिति निजहितमहित महिमारम्भमुपलम्भयति । तदेवं गहनचर्य्या पर्य्याकुलतया विरोधालङ्कारवद्विरुद्धायमानमप्यर्थमनुरुद्धतया [७] पर्य्यवसानतः परिणामयति । तस्मिन् कवीनामकवितायामपि कविता सम्भाविता भविता ॥ तस्मिन्नेव च परमोदारसारतावगम्यते ॥ तद्धि तद्धिततया मुहुरवतीर्णस्य सर्वस्याप्यानन्दनस्य श्रीमन्नन्दनन्दनस्य सर्वमानन्दपर्व सर्वदापर्वति [८] ॥

अस्ति चेह श्रीशुकस्यापि सुख-चमत्कार-कारणं पद्यम् ।

वृन्दावनं गोवर्द्धनं यमुना-पुलिनानि च ।
वीक्ष्यासीदुत्तमा प्रीतिराम माधवयो नृपेति ॥

---

(१) मुक्तिसन्धस्तेमुक्तिसन्धस्तथाभुतः सम्बन्धोयस्य ।
(२) निमित्तं ।　(३) भङ्ग श्लेषेण विरोधं ।
(४) ब्रह्मरूपे ।　(५) चित्तंगृहीतं श्लेषेण मश्चितमितिविरोध
(६) ब्रह्मणा ।　(७ अनुकूलतया ।　(८) पर्वपूरणे ।

तत्र गोवर्द्धनस्तु पुरस्तादेवं प्रस्तूयते ।—

यद्गोकुलेश्वरइति प्रथितिः पुराणे ।
कृष्णस्य तद्भवति गोकुलमस्य धाम ।
गोवासता च किलगोकुलता-निदानं ॥
गोवर्द्धन स्तदिह सर्वनिधान[१]मेव ॥

तत्रचायं विशेषः ।—

त्रिजगति मानसगङ्गा गोवर्द्धनमपि विभिन्दती विदिता ।
अह मिह मन्ये कृष्णस्नेहजधारा तदन्तरं विशति ॥

किञ्च ।—तस्मिन् श्रीहरि राधयोर्युगलितं[२] यद्भातिकुण्डद्वयं ।
संसङ्गेन[३]परस्परं परिमला[४]न्मन्ये तयो स्तन्मिषम् ।
प्रेमासी त्प्रकटं यतः श्वसनकैः कम्पान्वितं[५] जाड्ययुग् ।
भक्तार्द्रस्थितिकृच्च तद् घनरसाकारं दरीदृश्यते ॥

यमुनायाञ्चायमतिशयः ।

स्नानजातसुकृता न केवलात् स्फूर्तिदा मुररिपो रवेः सुता ।

(१) आश्चर्यं ।　(२) शवलितं ।　(३ संसर्गेण ।
(४) विमर्द्दनं परिमलं इतित्रिकाण्डशेषात् ।
(५) भङ्गाविना कम्पादि विकृत ।

वीक्षणादपि यतो बिभर्त्ति सा
श्यामधाम-वरमाधुरीधुराम् ॥
तस्यांचोत् प्रेक्ष्यन्ते ।

स्वस्निग्धवृन्दविषयप्रियता महिम्ना
स्वेदांशएव किमु कृष्णतनोर्विसारी(१) ।
वृन्दस्य कृष्णविषयप्रियतैव किम्वा
तद्भावभावितगात्रे भवति स्म कृष्णा ॥

पुलिनानि च तस्या महाप्रेमोल्लासमाविष्कुर्वन्ति ।

तथाहि ।—

अद्यापि यानि विबुधानवलोकमात्रात्
पुष्णान्तिकृष्णकृतरासरसं विभाव्य(२) ।
तान्यत्र किं वररसायन दिव्यचूर्णै
रभ्यासतः स्वपुलिनानि चिनोति सौरी ॥

भाण्डीरस्तु स नो मनो व्याकुलयति ।

तथाहि ।—

भाण्डीरस्य स्फुटमधिहरि प्रेम किं वर्णनीयं
सान्तर्धानं स्थितवति हरौ वाढमन्तर्दधे यः ।
यान्तु स्वांशेन च विषयतामत्र गोवर्द्धनाद्या
लोके स्निग्धा रचयितुमिदं न क्षमः स्यामितीव ॥

(१) विसृत्वरोविसृमरः प्रसारी च विसारिणि । (२) प्रकाश्य ।

यं खलु वैभवविशेषं सर्वसारेण यथा-स्थानं[१] प्रकाशयिष्यमाणव्याख्या-विशेषावतारेण श्रीमद्भागवतानुसारेण गोपानां स्वं लोकं वरुणालयादागतः करुणावरुणालयः[२] स्वयंभगवानक्रूराय वैकुण्ठविशेषलक्षणस्ववैभव व्यञ्जनया सुखप्रदे ब्रह्म-हृद मज्जनेन तस्मादुन्मज्जनेन[३] च तज्जन[४]कौतुक-जननादनन्तरं छन्दःस्तूयमानेनात्मना ऽविचित्रावि-चित्रमत्रैव वृन्दावने तदीयनरलीलावेशेन साधा-रणामन्येभ्यस्तेभ्यः सन्दर्शयामास । यं प्रति[५] सम्प्रत्यपि प्रपद्यमाना विद्वांसश्चेतसापि साक्षादिव-तल्लीलाःप्रतिपद्यन्ते । यं परि[६] हरिवंशे गोविन्दाभि-षेकसम्पदंशे महेन्द्रःश्रीमद्व्रजेन्द्रतनूजतनुवद्व्या-पकतां सत्यां प्रत्याययामास । यं पुनर्वृन्दावनस्थ समस्त सममभ्यर्णामपि[७] तत्तद्दर्शनानुसारेण केचित् प्रकृत्यावरणातःपरमतियद्दूरं निर्वर्णयन्ति[८] । अतएव लीलानुरूपरूपतया भूमानमभूमानञ्च[९]

---

(१) यथावसरं । (२) समुद्रः । (३) हृदात् उत्थानेन ।

(४) व्रजजन । (५) यं प्रकाशं प्रतिअनुलक्ष्मीकृत्य ।

(६) यं प्रकाशम्परिअनुलक्षीकृत्य । (७) निकटमपि ।

(८) पश्यन्ति । (९) बृहत्वमबृहत्वञ्च ।

प्रपद्यन्ते[1] यद्रूमयः। एष[2] एव शेष[3] निर्विशेषतया ब्रह्मसाक्षात्काराकारतया च ब्रह्मसंहितादिषु बृंहितं[4] बृहद्भि र्वर्णयामासे। तत्रच प्रकटाप्रकटप्रकाशमयस्य वृन्दावनस्य वहुविधसंस्थानतया वहुविधशास्त्रश्रुतस्याप्रकटप्रकाशमय वैभवविशेष एव सम्प्रति वर्णनीयः। सच[5] गोकुलप्रधानएवेति स्वविवक्षितहिता ब्रह्मसंहितानुसंहिता[6] क्रियते। तद्वचनानि तु वोधक्रमाय क्रममतिक्रम्यानुक्रम्यन्ते ॥

यथा—

*भजे श्वेतद्वीपं तमहमिह गोलोक इति यं
विदन्तस्ते सन्तः क्षितिविरलचाराः कतिपये।
श्रियः कान्ताः कान्तः परमपुरुषः कल्पतरवो
द्रुमा भूमिश्चिन्तामणिगणमयी तोयममृतम् ॥
कथा गानं नाट्यं गमनमपि वंशी प्रियसखी
चिदानन्द ज्योतिः परमपि तदास्वाद्यमपि च।

---

*श्वेतंशुद्धम्। द्वीपमन्यासङ्गरहितम्। यथासरसिपद्मंतिष्ठति तथाभूम्यांहितिष्ठतीति श्रीगोपालतापनीभ्यः। क्षितीति। तदुक्तं हरिवंशे। यांनाविद्मोवयंसर्वेपृच्छन्तोपि पितामहमिति। श्रियः

---

(१) प्राप्यन्ते।　(२) वैभवः।
(३) अनन्त।　(४) यथास्यात् तथा।
(५) अप्रकटप्रकाशः।　(६) अनुसन्धानगम्या।

श्री व्रजसुन्दरीरूपाः । तासामेव मन्त्रेध्याने च सर्वत्र प्रसिद्धेः । तासामनन्तानामप्येकएवकान्तः परमपुरुषः श्रीकृष्णइत्यर्थः । कल्पतरवोद्रुमाइतितेषांसर्वेषां सर्वेषामेवसर्वप्रदत्वंसूचितं । भूमिरपिसर्वस्पृहांददाति किमुतकौस्तुभादि । तोयमप्यमृतवत् स्वादुकिमुतामृतमित्यादिरीत्या । वंशीप्रियसखीति सर्वतःश्रीकृष्णस्यसुखस्थिति श्रावकत्वेनेतिज्ञेयम् । किं बहुना चिदानन्दलक्षणं वस्त्वेव तत्र ज्योतिश्चन्द्रसूर्यादिरूपम् । समानोदितचन्द्रार्कमिति वृन्दावनविशेषणं गौतमीयतन्त्रद्वये । तच्चनित्यपूर्णचन्द्रत्वात् तथातदेवपरमपि तत्तत्प्रकाश्यमपीत्यर्थः । तथातदेवतेषामास्वाद्यं भोग्यमपि च चिच्छक्तिमयत्वादितिभावः । दर्शयामासलोकं स्वंगोपानांतमसः परमितिश्रीदशमात् । सुरभीभ्यः सरतीतितदीयवंशीध्वन्याद्यावेशादिति भावः । व्रजतिनहीति । तदावेशेन ते तद्वासिनःकालमिति न जानन्तीतिभावः । कालदोषास्तत्र नसन्तीतिवा नच कालविक्रमइति द्वितीयात् । सहस्रेति । सहस्राणि पत्राणियत्रतत् कमलं भूमिश्चिन्तामणि गणामयी त्युक्तत्वान्मणिमयंपद्मं । तद्रूपंतच्चमहत् सर्वोत्कृष्टंपदं महतः श्रीकृष्णाख्यस्य महाभगवतोवापदं महावैकुण्ठरूपमित्यर्थः । तत्तु नानाप्रकारं श्रूयतइत्याशङ्क्यप्रकारविशेषत्वेन निश्चिनोति गोकुलाख्यमिति । गोकुलमित्याख्यारूढिर्यस्यतत् गोगोपावास स्वरूपमित्यर्थः तस्यश्रीकृष्णस्यधाम श्रीनन्दयशोदादिभिः सहवासयोग्यं महान्तःपुरं । तस्यस्वरूपमाह तदिति अनन्तस्यबलदेवस्यांशेनज्योतिर्विभागविशेषेणसम्भवःसदाविर्भावोयस्यतत् ॥ तथातन्त्रेणैतदपिबोध्यते अनन्तोअंशोयस्यतस्यश्रीबलदेवस्यापि सम्भवोनिवासोयत्रतदिति । तदेवं तद्धामोक्त्वातदावरणान्याह तदित्यर्द्धेन । तस्यकर्णिकारूपधाम्नः किञ्जल्कं किञ्जल्काः शिखरावलिवलितप्राचीरपंक्तयइत्यर्थः तत्तुतदंशानांतस्मिन्नंशोदायोविद्यतेयेषां परमप्रेमभाजांसजातीयानांधामेत्यर्थ अतएवतस्यकमलस्यपत्राणिश्रयांतत् प्रेयसीनां गोपीरूपानां श्रीराधादीनामुपवनरूपाणि धामानीत्यर्थः । अथगोकुलावरणान्याहचतुरस्रमिति चतुर्भिः तस्यगोलोकस्यबहिः सर्वतश्चतुरस्रंचतुःकोणात्मकंस्थलंश्वेतद्वीपं तद्वीपाख्यम् तदेतदुपलक्षणम् गोलोकाख्यञ्चेत्यर्थः । यद्यपिगोकुलेपिश्वेतद्वीपत्वमस्त्येव तदवान्तर भूमिमयत्वात् । तथापिविशेषनाम्नाम्नातत्वात्तेनैवतत् प्रतीयतइति तथोक्तम्

स यत्र क्षीराब्धिः सरति सुरभिभ्यश्च सुमहा
न्निमेषार्द्धाख्यो वा व्रजति न हि यत्रापि समयः ।

किञ्च ।-ईश्वरः परमः कृष्ण इत्युपक्रम्याह—

सहस्रपत्रं कमलं गोकुलाख्यं महत् पदं ।
तत्कर्णिकारं तद्धाम तदनन्तांशसम्भवं ॥
तत्किंजल्कं तदंशानां तत्पत्राणि श्रियामपि ।
चतुरस्रं तत्परितः श्वेतद्वीपाख्यमद्भुतं ॥
चतुरस्रं चतुर्मूर्त्त[१]श्चतुर्द्धाम चतुःकृतं ।
चतुर्भिः पुरुषार्थैश्च चतुर्भिर्हेतुभिर्वृतं ॥
शूलैर्दशभिरानद्धमूर्द्धाधो दिग्विदिक्षु च ।
अष्टभिर्निधिभिर्युष्टमष्टभिः सिद्धिभिस्तथा ॥
मनुरूपैश्च दशभिर्दिक्पालैः परितोवृत्तं ।

तच्च चतुरस्रञ्चतुर्मूर्तेश्चतुर्व्युहस्य श्री वासुदेवादिचतुष्टयस्य । चतुःकृतं चतुर्द्धा विभक्तम् चतुर्धाम । किन्तु देवलीलत्वात्तदुपरिस्थो मयान-स्याप्यवतेश्चयाः । हेतुभिस्तत्तत् पुरुषार्थसाधनैः । महापद्मश्चपद्मश्च-शङ्खोमकवकच्छपौ । मुकुन्दकुन्दलीलाश्चइत्यष्टौनिधयः स्मृताः । अणिमालघिमाप्राप्तिः प्राकाम्यंमहिमातथा । ईशित्वं च वशित्वंञ्च तथाकामावशायिता । इत्यष्टौसिद्धयः । मनुरूपैः स्वस्वमन्त्रात्मकै-रिन्द्रादिभिः । श्यामादयश्चत्वारोवेदाः तैरित्यर्थः । कृष्णाञ्चतत्रछन्दो-भिस्तूयमानं सुविस्मिताः इतिश्रीदशमात् । शार्क्तिभिर्विमलादिभिः ।

(१) वासुदेवादि ।

श्यामैर्गौरैश्च रक्तैश्च शुक्लैश्च पार्षदर्षभैः[१]।
शोभितं शक्तिभि[२]स्ताभिरद्भुताभिः समन्तत इति॥

अपिच—

चिन्तामणिप्रकरसद्म-सुकल्पवृक्ष-
लक्षावृतेषु सुरभीरभिपालयन्तं।
लक्ष्मी-सहस्रशतसम्भ्रम-सेव्यमानं
गोविंदमादिपुरुषं तमहं भजामीत्यादि॥

रत्नधातुमयः श्रीमान् यत्र गोवर्द्धनो गिरिः।
रत्नबद्धोभयतटा कालिन्दी सरितां वरा॥ इत्यादि चान्यत्र॥

तदेतदनुसारेण प्रथमं तावत् काव्यस्य निधानं[३] वस्तुमात्रं सप्रमाणं प्रकाश्यते चित्रस्य फलक[४]मिव॥

तथाहि—यस्य खलु लोकस्य गोलोकतया गोगोपावासरूपस्य श्वेतद्वीपतया चानन्यस्पृष्टपरमशुद्धतासमुद्बुद्धस्वरूपस्य तादृशज्ञानमयकति-

---

(१) श्रेष्ठैः। (२) विमलादिभिः।
(३) आश्रयः। (४) फलकं भित्तिपट्टादिकं।

पयमात्रप्रमेयगात्रतया[१] तत्तत्परमतामता । परम-गोलोकः परमश्वेतद्वीपइति ॥

तदेव युक्तमुक्तं भवति । यत्रहि । स्वच्छन्द-तानन्दप्रदबहुवचनार्था गोपीपदार्थाः श्रियः श्रयन्ते नान्यवैकुण्ठवत्तदेकवचनार्थताकुण्ठाः । तासां तत्पदार्थता[२]च तन्महावागर्थसाराकर्षयन्त्रे महा-मन्त्रे[३]वल्लवीवल्लभतया तस्य जपमुपदिशन्तीति सिध्यति ॥

अत्र न केवलं तस्य द्विवर्णपदस्य वृत्तावेव रूढि-मवलम्बामहे । अपितु ध्यानेऽपि । किन्तु नायं श्रियोऽङ्केति शुकानुवादः सामान्यलक्ष्मीविजयं व्यनक्ति लक्ष्मीसहस्रेति विरिञ्चिवाणी लक्ष्मी-विशेषत्वमुरीकरोति । यस्मादत्त कुरुपाण्डवशब्द-वद्यथावसरं खण्डाखण्डवाचकतामता । तदेवं सति तत्रापि[४]राधा परमेति ॥

पाद्मस्कान्दादिवाराहविमिश्र मात्स्ये—
गोविन्दवृन्दावननामतन्त्रे[५]ऽप्यभाषि यत्तत् कथ-
मन्यथा स्यात् ।

---

(१) ज्ञेयस्वरूपतया । (२) गोपीपदार्थता ।
(३) गोपालमन्त्रे । (४) गोपीषु । (५) वृन्दावनीतसीये ।

लक्ष्मीरभितः स्थितमा गोप्यो लक्ष्मीतमाः प्रथिताः ।
राधा गोपीतमा चेह स्याः का वा समा रामा ॥

तदेवम्विधानां तासामपि सर्वासामेक एव रमणास्ततएव गोकुलधामा गोविन्दनामा प्रत्येकमेकामेकां रमां रमयतां रमा रमणनाम्नां पुरुपुरुषाणां परमः ॥

यत्तु मध्ये[१]मायया प्रत्यायित[२]मौपपत्यं तत् खल्ववास्तवत्वात् परस्तादवध्वस्त[३]मिति श्रीपरमपुरुषशब्दाभ्यां प्रमितं । कथायान्तु प्रमाणविशेषप्रथनया प्रथयिश्यामः ॥

एवं शिष्टः[४] श्रीरामोप्यतिदिष्टः ॥

किञ्च—अशेषा एव च तरवः कल्पतरवः सङ्कल्पदानवलात् केवलान्नतु मान्यता धन्यसामान्य-विशेषात्[५] तेषु च जात्या कल्पतरवस्तु विलक्षणतया कृतलक्षणा[६] एव ॥

किञ्च—आदर्शनिभ—स्वच्छविभव—नानादर्शस्पर्शादिमय-भूमिका-भूमिश्च कान्ते[७]रुत्त कान्ते[८]

(१) अवतारसमये । (२) ज्ञापितं । (३) दूरीकृतं ।
(४) अत्राशिष्ट अथकितः । (५) पूज्यजाति विशेषात् ।
(६) गुणैः प्रतीतेतुकृतलक्षणोहन लक्षणौ ।
(७) शोभायाः । (८) अभिलाषस्य ।

वृष्टिस्त्रष्टिकारिणी चिन्तामणीयते ॥

आस्तां तावदुत्तरमुत्तरमनुतारतम्यरम्यतागम्य-महिमा गृहादिषु महाचिन्तामणिमयी । यस्मात् तदुद्भिन्ना[१]स्तत्तदुद्भिदश्च तदीयशोभामात्मन्युद्भावयन्ति[२] । यत्र च दृष्टिश्रवणमयातास्तद्गोचरिताश्च जातिरूपाभ्यां नग-मृग-पक्षिविशेषास्तत्रत्यानाश्च चित्रमादधति ॥

किञ्च—तोयमप्यमृतायते किमुतामृतं । किञ्च-कथापि यथा गानं तथा कर्णयोः पानकायते किमुत स्वयमेव गानं । किञ्च—

गमनमपि नृत्यचातुरीधुरीणतामुरीकरोति । नृत्यं पुनरतीवाहृत्यं ॥

किञ्च—वंशी यथा कंसारातेराशुसुखविलासं शंसंती सहायतया च लसन्ती च प्रियसखीयते । न तद्वदन्यो धन्योपिजनः सम्भवति ॥

किञ्च—चिदानन्द[३] एव केवलं[४] स्वरूपानति-

---

(१) कीटादयः । 　(२) प्रकाशयन्ति ।

(३ परङ्केवलं चिदानन्दलक्षणं वस्तुतत्रज्योतिः प्रकाशमपिस्यात् तेषांतत्रस्थानामा स्वाद्यमपि केवलंचिदानन्दलक्षणं ।

(४) परमित्यस्यार्थोयं ।

रिक्त[१] शक्तिव्यक्ति[२]वशाद्व्यक्ति[३]विशेषतया व्यक्तीभवन्[४] गोकुलशद्वल-लब्धलोकवल्लीला कैवल्य कलनाय[५]पुष्पवदादि[६] लक्षणप्रकाशकतया तत्तत्प्रकाश्य पुष्पादि[७] लक्षणास्वाद्यतया च प्रकाशते । नतु मर्त्यलोकवद्विपरीत परिणतिरिति परितत.. वीभत्सितव्यद्रव्यतामापद्यते ॥ तथाच हयशीर्षपञ्चरात्रे पंचतत्वनिरूपणे वैकुण्ठस्थ द्रव्यतत्वं निरूपितं ।—

गन्धरूपं स्वादरूपं द्रव्यं पुष्पादिकञ्च यत् ।
रसवद्भौतिकं द्रव्यमत्र स्याद्रसरूपकमित्यादि ॥

तथापि—प्रपञ्चं निष्प्रपञ्चोपि विडम्बयसि भूतले ।
प्रपन्न-जनतानन्द-सन्दोहं प्रथितुं प्रभो ॥

इति ब्रह्मवचनानुसारेण कृतप्रपञ्चानुकारे लीलासारे तस्य तत्प्रपन्नजनस्य च यथावेशः स्यात् । न तथा नित्याकारेपीति लभ्यते ॥

ततः पूर्वन्न तस्य चावेशः स्यात् ॥

---

(१) अभिन्न । (२) प्राकट्य ।

(३) वस्तुविशेषतया । जाति जातं च सामान्यंव्यक्तिस्तु प्रथगात्मताइत्यमर ।

(४) प्रकटीभवन् । (५) रचनाय ।

(६) चन्द्रसूर्यादि । (७) कुमुदपद्मादि ।

ततश्च तदिच्छावशाल्लीलाशक्तिः परत्र च प्रायः सर्व्वं व्यक्तीकरोतीति विवेक्तव्यं ॥

किञ्च—मुरजिन्मुरली-कली[१] खुरली[२] च स्वमाधुरीप्रदुग्धमुग्धसुराभिदुग्धानां सुरभीणामूधोगिरतः सरितः प्रसारयन्ती परितः परिखायमाणां क्षीरवारिधिं विस्फारयति[३] । तत्र कामधेनुतया निकाम[४]मेव स्नुवतीनां[५] क्षीरवाहितापि प्राचुर्य्येणैव पर्य्यवसाय्यते ॥

ततो नानारसा अपि ता नद्यः प्रतिपद्यन्ते विद्यावद्भिः ॥

किंच—यत्र च तत् कैशोरानुरूपार्द्धवार्द्धक यौवन नवयौवनादिवयस एव तत्पितृभ्रातृसखिप्रभृतयस्ते निखिलवर्गा नान्यामवस्थामाश्रिता भवन्ति ॥

अन्यच्च—यस्य च गोलोकस्य मध्यमध्यास्य[६] स्फुटतरा[७]नेकसहस्रपत्रीपरिचितमजस्र[८]मेव खल्वमलं महामणिकमलं गोकुलनामतया निज-

---

(१) मधुरध्वनि ।
(२) अभ्यासः खुरलीयोग्या इतित्रिकाण्डशेषः ।
(३) विस्तारयति । (४) यथेष्टं । (५) स्नुप्रश्रवणे ।
(६) अधिष्ठाय । (७) अतिशयविकाशिनः ।
(८) निरन्तरं ।

रूपं निरूपयति[१] । गोगोपगोपावासव्रजरूप[२]व्रज एवाहमस्मीति ॥

न्यायविन्यस्तमेतच्च खल्विदं[३] । रूढिर्योगमपहरतीति । यथा जलजशब्देनाप्सव्यमात्रं[४] नोच्यते किन्तु कमलमेव रूढितामेव खल्वाख्याग्रहणमाविष्करोति ॥

श्री शुकदेवेनाप्येतदेवस्तुयोक्तं । भगवान् गोकुलेश्वरइति वरट् प्रत्ययः खल्वत्रशीलार्थतापरः । तदेव चाम्नातं[५] गोकुलं वनवैकुण्ठमिति ॥

अथ श्रीमद्व्रजराजतनूजताशीललीलस्य महाभगवतस्तदीयकर्णिकामध्यमधिकृत्य नानावर्णाधाम[६]तया निर्वर्णित[७]मणिमयमहाधाम[८] निकाममुद्भ्राजते । यदेव स्वयमनन्तांशसम्भूतमिति स्फुटमनन्तधा प्रकाशते । यस्मिन् केसरविसरान्[९] प्राचीरांगान् समन्ततः समया । सदया दाया-

(१) ज्ञापयति । (२) समूहरूप ।
(३) गोकुलत्वं । (४) अप्सुप्रभवं आप्सव्यं ।
(५) वेदनकथितं । (६) तेजः । (७) निर्दिष्ट
(८) गृहं ।
(९) किञ्जल्कान् समूहान् स्वमार्गनियोज्यंपर्णानिकट मित्यर्थः ।

दायाः[१] सोपासीना[२] वसन्ति गोपालाः । गोकु-
लतावत्ततस्तदपि सम्वलते ॥

तथाहि—अंशा भागा दायास्तद्धितयोगेन[३]
दायवन्तश्च ।

तत्[४] किलजाते[५] भागा वकजिति ते सन्ति
दायवन्तश्च ।

तस्मिन्नंशो येषामिति वा गम्यो बहुव्रीहिः ।
व्रीहिनिभस्तत्प्रमा तेषां वृत्तौ[६] तदाश्रयोयुक्तः ॥

तदेवमेषां तज्जातित्वमेवोक्तं श्रीशुकेन ।—

एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः ।
विवेश गोष्ठं सबलो गोपीनां नयनोत्सव इति ॥

पत्राणि तत्र[७] कमले कमलालयाना-
मंशेन केलिविपिनानि भवन्ति येषु ।
चिन्तामणि-प्रकर-सद्म-सुकल्पवृक्ष-
लक्षावृतेषु निभृतं रमते मुकुन्दः ॥

तत्राधिराज्यं किल राधिकामनु-

---

(१) दाय माददते ये ते ।　　(२) ब्राह्मणादिभिः

(३) अत्राप्यंशिस्तत्सम्बन्धितद्धितविशेषयोगेन ।

(४) तस्मात् ।　　(५) गोपजातेः ।

(६) जीविकायां संख्यया समासं ।　　(७) कमले ।

प्रत्तं[१] प्रियेणेति पुराणविश्रुतं ।
अहन्तु मन्ये पुनरुक्तमत्र तद्
गुणेन तस्याः स च यद्वशंगतः ॥

इह च पूर्व्वं यदेव श्रीपरमपुरुषशब्दाभ्यामध्यवसितं[२]तदेवाध्यवसीयते। तासु[३] केवलासु ब्रजराजसुतवधूभावस्य लब्धप्रसिद्धितां विना ब्रजकमलसकलपत्रावल्याधिपत्यं न प्रसिद्ध्यतीति ॥

अथ किंचित्कुञ्चितकमलपत्रवदुन्नतपार्श्वद्वयावयवतया वहिर्दुर्लंघशृंगमणिमयालवालशोभामत्राणां[४]पत्राणामन्तरालेषु केसरादवतीर्णानि विस्तीर्णानि पृथक् पृथगुपनिष्कराणि[५] विराजन्ते। तेषामग्रिमसन्धिषु स्फुटमधिमध्यमध्यमध्यस्त[६] समस्तेश[७]गोष्ठानि गोष्ठानि विभ्राजन्ते। अत एव तत्[८]पर्य्यन्तस्य तस्य गोकुलतावकलिता ॥

तत्रापि दोहसमयं समया सभेन
गोवृंदपालवलयेन निविश्य पश्यन् ।

---

(१) प्रदत्तं । (२) निश्चितं ।
(३) सर्व्वासु । निर्णीतेकेवलमितित्रिलिङ्गत्वेकक्रृत्स्नयोरितिनानार्थः
(४ पात्राणां । (५) घण्टा पथः संसरणां तत्पुरस्योपनिष्करमित्यमरः । पुरवर्त्मानि ।
(६) अर्पित । (७) ब्रजेन्द्र । (८) कमल ।

चिन्तामणिप्रचितसद्म-सुकल्पशाखि-
पद्मा[१]वृतेषु सुरभीरभियाति कृष्णः ॥

यस्य च समीपगानामालयरूपस्य कमलस्य सर्वतश्चतुरस्रं भवति तदिदं सर्व्वं वृन्दावनमिति वदन्ति तद्वहिरन्तरं समस्तदीपायमानः समहाद्वीपायमानः परमसुवशः सर्वश्च देशः श्वेतद्वीप इत्याचक्षते गोलोक इति च । यस्तु वहिर्भागः सागरवदपरिच्छेद्यस्तत्र विगतशोका धारित्रनिभ-[२]विचित्रलोकाः सलोका विद्यन्ते । पत्रस्थितानि तु वनानि केलिवृन्दावनानीति भणन्ति ॥

यथोक्तं पञ्चरात्रे—

महावृन्दावनं तत्र केलिवृन्दावनानिचेति ॥

अथ चतुरस्रमनु कमलात् पतया[३]लुतया परितः स्रवन्ती मधुधाराः पिवन्त इव पुनरपरतत् पानाय वमन्त इव च दक्षिण पश्चिमयोः सर्वतः पर्वतः पर्वतषट्पदा दृश्यन्ते । यत्र[४]च तत्रापि महामणिमयकूटघनः[५] श्रीगोवर्द्धनः कूटीभूत[६]

(१) संख्या ।　(२) धरित्रिसम्बन्धितुल्य ।
(३) पतनशीलतया ।　(४) पर्वतानां मध्ये ।
(५) शृङ्गनिविडः ।　(६) पुञ्जीभूत ।

महानिधिवदखर्वमानन्दगर्वं सर्वाधिपतेरप्याविर्भावयति ॥

श्रीगोवर्द्धननामा चायं रमणीयमणिशिलाभिः समासन[१]मासनं । खगावलिकलितकाकलीभिः स्वागतं[२] स्वागतं । श्यामाकदूर्वाब्जविष्णुक्रान्तापर्य्य[३] गाक्रान्ततिर्य्यग्निर्य[४] न्निर्भरिभिर्निष्पाद्यं पाद्यं । चञ्चनमृगचरणान्यञ्चदक्षत[५]दर्भानन्ताङ्कुरैः समर्घ्यं[६] मर्घ्यं । तीरसनीड[७]जातीलवङ्गकक्कोलसङ्गतपल्लवै[८]रलमाचमनीय[९]माचमनीयं । नवनवनवप्रसूतगवी-नवीन-स्नुतक्षीर-परिणत-दधितत्प्रसृत घृतसवलनैस्तरूपहृत मधुपर्कं मधुपर्कं[१०] । शिखरशेखरशिलासर[११]प्रखरधारापातैरनुकृतस्नपनपरिचर्य्याप्रीतिमज्जनं[१२] मज्जनं । दुकूलवदनकूलसंश्लेषस्वर्णवर्णवृक्षविशेषवल्कलैः कलितसुखवसनं[१३]वसनं । स्वभावानुबन्धगन्धसुगन्धशिलाशत-

---

(१) समंसमविभागमासनं स्तिथिर्यस्य ।
(२) सुष्ठुप्राप्तं । (३) परितः । (४) निर्गच्छन् ।
(५) तृणधान्यादिउद्भूत । (६) सुलभं । (७) निकट ।
(८) अल्पसरोभिः । (९) आचमनायहितं ।
(१०) सम्पर्कं । (११) निःसरत् । (१२) भक्तजनं ।
(१३) अच्छादनं ।

परिणतहरिचन्दनगौरगैरिकैश्चर्चातिशयं[१]चर्चातिशयं । प्रफुल्लमालमालतीलतादिभिर्नन्दितसुमनसः सुमनसः । गव्या[२]खुरव्याहतिजातागुरुदारुधूमैर्व्याहतसर्वधूपं[३] धूपं । दिवापि विद्योतिमणिनिकरज्योतिभिः सर्वसम्पदुद्दीपं[४] दीपं । मंजुलगुञ्जापिञ्छादिविञ्छोली[५]वाञ्छितनिर्माणैः कृतसुषमाभरणा[६]माभरणां । अभिलासानुकूलफल-मूल-वलयैः सर्वसुखसमाहारं समाहारं । पुष्पवासितशीतलजलवलयितपुनराचमनमनु विमलपरिमलातुलतुलसिकापल्लवादिभिर्मुखवासनं मुखवासनम्[७] । मरुदुच्चलस्फुटत्पुष्पसम्पच्चम्पकदीपावल्या स्फुटमारात्रिक[८] मारात्रिकम् । घनकिसलयवलयसङ्कुलवकुलमुखशाखिनिकरैः *शोभांतरतमातपत्रमातपत्रम् । मलयमरुल्लवचलत् पल्लवविशालशालैर्नंदितभव्यजनं व्यजनं । निजस्वरविवेकिनां केकिनामनेकाङ्ककेकाभिः कलिलास्यं[९]

---

*शोभा विशेशश्रेष्ठमतन्निगच्छन्ति पत्राणि यत्र तत् छत्रं ।

---

(१)विचारातिक्रामिणां । (२ गोसमूह । (३)सन्तापं ।
(४) प्रकाशनं । (५) गुच्छ । (६) पूरणाम ।
(७) आमोदीमुखबासनः । उत्तरञ्चमुखं वासयति यत् ।
(८) रात्रिपर्यन्तं । (९.) व्याममुखं ।

लास्यम् । हरिवेणुध्वनिभ्रमदकीचककलक्रमकृताकर्षवनितान्वित—शय्यायमान—पुष्पपातपर्य्यायैः कृतसर्व्वातिशयनं[१] शयनं । काकली-कलिल-कलकोकिलकुलैर्लब्धसज्ञानं[२] सज्ञानमपि हरिं परिकलयन्[३] पूर्व्वपूर्व्वसिद्धनिजहरिदासवर्य्यतां पर्य्यापयन्नास्ते ॥

कृतहरिदासवर्य्यसङ्गा मानसगङ्गा च सर्वसुखस्थेमनि कृष्णप्रेमणि मानसद्रवमयीति किल तन्नामतया तां वर्णयन्ति उपश्लोकयन्ति च[४] ॥

स्वल्पेनाघजिदंश वामनपद-स्पर्शेन गङ्गा सदा सर्व्वाघप्रशमन्यभूदपि शिवस्यारूढमूर्द्धाजनि ।
स्वेनैवाघजिता सदा विहरता ब्रह्मेशलक्ष्मीजयिप्राशस्त्येन सह व्रजेन मिलिता गङ्गापरा किं पुनः ॥

अथ यत्रा[५]प्युत्तरपूर्वयोः कस्यानन्दव्रजरूपस्य व्रजस्यालिन्दाददूरभवेति किल कालिन्दीति नाम्नी यमुना विलसति ॥

या खलु—कदाचिद्धाराभिर्वहति हरिरत्नद्रवनिभा कदाचित् स्तब्धाङ्गी स्फुरति हरिरत्नक्षितिरिव ।

---

(१) अतिक्रमं ।　(२) गांगतौ ।　(३) लक्षीकृत्य अर्पयन् ।
(४) श्लोकैरुपस्तुवन्ति वर्णयन्ति ।　(५) वृन्दावने ।

क्रमाद्वेणौ तस्मिन्न नदति नदत्यर्कतनया
जलस्थलयोः शर्म्म प्रसवति हरेः सेवनविधौ ॥
पश्यन्ती जलजेक्षणा घनरसावर्त्तश्रुतिः शृण्वती
जिघ्रन्ती झषनासिका तरलदोरालिङ्गनं कुर्वती ।
जल्पन्तीव च हंसचक्रवदना नीरात्मना कृष्णाभाग्
या कृष्णा वत साथ कीदृगसकृद्देव्यात्मना चेष्टते ॥

यत्र च सर्वत्र सरांसि चैवमुत्प्रेक्षन्ते—

व्रजविपिनविभागे निश्चलो यस्य[1] वासः
स्वयमयमपरेषां पोषको जज्ञनीति ।
कलय वरसरांसि स्रोतसामत्र वृन्दै-
र्विदधति यमुनादिद्वीपिनीः[2] स्फीततोयाः ॥

यत्र च—

काश्चित् पङ्कजकैरवावलिलसत्स्रोतस्वतीप्रान्तगा
नानापुष्पवनीविराजदवनीमध्यस्थिताः काश्चन ।
केकाझङ्कृतिमत्कुहूमधुरिताः कान्ताङ्गचर्च्चाचिता
नासादृक्स्रवसः[3] सदापि सुखदा रासाङ्किता भूमयः ॥

---

(१) गोवर्द्धनस्य ।
(२) नदीः ।
(३) प्रागयंगनया समाहारत्वादेकवचनं ।

किञ्च—भाण्डीरस्तरणि[१]पदं समुन्नते र्न
प्रयातः परमिह किन्तु विस्तृतेश्च ।
तच्छाखाः परि[२] विहरन्नवारपारे[३]
कालिन्द्या मुहुरभियाति गोपसङ्घः ॥

तथा—क्वचित् सद्माभासप्रकटवलवत्कोटरघटः
क्वचित् पल्यङ्काभप्रथितपृथुशाखासुखतमः ।
क्वचिद् दोलातुल्यप्रथितलतिका-पालिवलितः
सदासौ भाण्डीरः कमिव[४] हरिकेलिं न तनुते ।
तदुदीचीमनुदेशः प्रथयति सौख्यानि रामघट्टाख्यः ।
यत्र च रामं[५] कुर्वन् सुखयति रामः सरामता[६]
मञ्चन् ॥

अथ तस्य लोकस्य लोकपालैर्वरणीयानि[८] विमानचारिणां वराण्यावरणानि सुरवर्त्मनि वरीवृतति । यत्र च—वासुदेवादिसंज्ञम् स्वयमेव चतुर्व्यूहवृन्दं लोकपालायमानं सेनाव्यूहतामुररीचरीकरीति[९] । तत्र च पुरुषार्थादयः के वराकाः ॥

---

(१) तरणिः सूर्यो नौकाश्च । (२) लक्षीकृत्य ।
(३) पारावारे । (४) इवशब्दोऽत्र वाक्यालंकारे ।
(५) रमणं । (६) रामासहिततां ।
(८) प्रार्थनीयानि ।
(९) अत्यर्थमंगीकरोति ।

तदेवं सति गोलोकनामायं लोकः परममान्यः सामान्यतयापि केन वर्ण्यन्तां यः खल्वमृतसिन्धु-रित्यमृतान्धसः । यशसः सवया[१] इति कवयः वैचित्रीधर्म्माकृतिरिति विश्वकर्म्माणः । आनन्दा-नां ब्रह्मसाक्षादिति ब्रह्मानुभविनः । प्रेमा स्वयं व्यक्त इति भगवद्भक्ता मन्यन्त इत्यनेकमतपरा-मृष्टतया दृष्टः ॥

किञ्च—किं तेजः किं नु चित्रं किमुत नटकला
　　　　　　　　　　किन्तरां कोऽपि लोकं
किम्वा प्रेमा स साक्षादिह कलितवपुर्यः शुकेन
　　　　　　　　　　　　　प्रगीतः ।
इत्थं तल्लोकपाल-प्रमुखदिविषदां संहतिस्तर्कयन्ती
तस्मिन् गोविन्दधाम्नि प्रतिदिनमयते सम्भ्रमञ्च
　　　　　　　　　　　　　भ्रमञ्च ॥

तदेवं वुद्धिपद्धतिमप्यतीतवानसौ लोकः प्रसभं वुद्धिमध्यमध्यारोहति ॥

यतः—ये ये प्रीतिं ददति विषया ये च तत्तद्विदूरा-स्तेषूत्कण्ठा मम नहि कदाप्यत्र सत्यं[२] करोमि ।

(१) सवयस्काः ।
(२) सत्यं शपथ तथ्ययोः ।

कृष्णो स्नेहं वत वितनुते यश्च यत्रापि कृष्णाः
शश्वल्लोकः सतु सरभसं मां दिदृक्षुं करोति[१] ॥
यस्या[२]कर्णानमप्यपूर्वममितब्रह्माण्डकोटिव्रजे
वैकुण्ठेष्वपि वाञ्छितं किमपरं यल्लालसा[३]श्रीरपि ।
गोलोके सतु वान्धवाग्रिमतया विभ्राजते सर्वदा
येषां तन्मधुरिम्नि हन्त मम हृन्मज्जन्मुहुः सज्जति ॥

हन्त किं करवाणि सहसैवारब्धवानेतद्दर्शनं । निर्वाहन्तु न पश्यामि ॥

यतः प्रथमतश्चतुरस्त्रंपरिहरिचरितचारुता-
प्रणिधान[४] एवेदृशता दृश्यते ।—

यथा—गवां चेपश्चारं प्रति सखिभिराक्रीडपरता
मुहुस्तासां दूरे गमनमनुसम्भालनविधिः ।
तदाह्वानं तासु क्रममनुविसृष्टिः सवयसां
पुनः क्रीड़ावेशः स्मृतिपदतया क्षोभयति नः ॥

तत्रापि—

क्वचापि कृष्णारामौ तौ करवद्धकरौ मिथः ।
हसन्तौ हासयन्तौ च कुर्वाते चित्तमाकुलं ॥

---

(१) सोत्कण्ठीकरोति ।
(२) कृष्णस्य ।
(३) यत्र सतृष्णा । (४) भावना ।

किंच—

वृत्तानङ्कुरयन्तु विद्रुतदशामद्रीन्नयन्तु द्रुतं स्तम्भं चाम्भसि लम्भयन्तु सरितां किंवा प्रतीचीनतां[१] ।
वेणुध्वान-घटा यतोऽतिनिकटाः कस्मादकस्माद्बलात् कर्णाभ्यर्णगता इव स्फुटममून् धुन्वन्ति तद्ध्यायिनः ॥

तदनुभविनां सुखन्तु मनसि स्फुरदपि न वक्तुमीश्यते ॥

यतः—यस्मिन्न् हरिर्याति विहारहेतोस्तस्मिन्मुदा फुल्लति चेत् कुटोऽपि[२] ।
न तत्र पृच्छा नच वक्तृता त[३]न्न पृच्छ्यमेतन्नच वाच्यमस्ति ॥

इदञ्च[४] सुजन-मतिमतीवाकर्षति—

गायन्ति तत्र धवलाः[५] परिपालयन्तः
पारावतीं[६] मधुररागवतीमुदस्त्राः ।
जन्मादिकृष्ण-चरितानि चिरं गतानि
स्मृत्वा यतः सपदि मुह्यति सर्ब एव ॥

---

(१) प्रत्यक् प्रवहतां । (२) वृक्षोऽपि ।
(३) तस्मात् । (४) वक्ष्यमाणं ।
(५) गाः । (६) गोपगीतिं ।

अहो कुतः कुतो वा मनः संयमनीयम् । यतः गोष्ठानि[१] च तानि दृष्टुं मनः[२] प्रसभमुत्कण्ठयंति ॥

यथा—विराजत् कस्तूरीद्युतिपरिमलैर्गोमयमय
स्फुरच्चुर्णौः सद्मप्रतिकृतिवपुर्भिस्तरुवरैः ।
वा नूतैर्वत्सैर्निशि सुरभिजिद्भिः सुरभिभिः[३]
नन्तादृग्गोष्ठानि प्रतिमति[४] दिशन्ति स्मृति
शतम् ॥

सन्ध्ययोस्तु—

वत्सान्मोचयतां धनानि[५] दुहतां दुग्धानि सञ्चिन्वतां
गाः सम्भालयतां गृहान् प्रचलतां कृष्णं पुरः
कुर्व्वतां ।
तल्लीलाः परिगायतां पुलकितामस्राणि चातन्वतां
गोपानां वत चित्तमुञ्चित[६] मदं मञ्चितमाक्रामति ॥

सदा चैतानि राजवर्त्मानि तत्कीर्त्तनचत्वराणीव प्रसभं मच्चित्तमाकर्षन्ति ॥

तथाहि—रामः कृष्णः कृष्णरामौ च कृष्णः
कृष्णः कृष्णः कृष्ण इत्येष जल्पः ।

---

(१) कर्तृणि । (२) कर्म्म ।
(३) सुरभिर्गोविचस्त्रियां । (४) मतिं मतिं प्रति ।
(५) गोधनानि धनरजस्वलमितिवत् । (६) सम्वृद्ध ।

यातायातं कुर्व्वतां सर्व्वदापि
स्वैरालापे श्रूयते तत्र तत्र ॥

श्रीकृष्ण-प्रमदानां प्रमदानां प्रमदवन(१)पात्राणि पत्राणि तु वर्णमानानि कवीनामपत्रपामेव विभ्रति (२)यतस्तत्रत्यं सर्व्वमेव चित्रमिति दुष्प्रत्यायतां(३) प्राप्नोति ॥

येषुहि—

क्वचित्कुञ्जाः सद्मभ्रमकररुचस्तैरवयवैः
क्वचिच्चित्रैः सद्मान्यपि तुलितकुञ्जानि शतशः ।
जलानि क्वाप्युद्यत्कमलवलितानि प्रतिपदं
स्थलान्यप्येवं क्वाप्यथ किमिव किं निर्णयपदं(४) ॥

सखीनां सारण्यत्रिदश-सुदृशां(५) गानवल्गनां
मुहुः प्रोद्यन्मूर्च्छां मधु-मधुर-राग-प्रणयिनीम् ।
हरिप्रेमार्त्तस्त्रीप्रथमरचितां शृण्वति जने
सुखं वा दुखं वेत्यवकलयितुं कः प्रभवति ॥

क्वचिद्गानं सूक्ष्मं क्वचिदपि च तौर्य्यत्रिककला
क्वचित् प्रेम्ना गोष्टी क्वचिदपि महाकेलिकलहः ।

---

(१) क्रीडावन ।　　(२) पुष्णन्ति ।
(३) कष्टेन प्रतीति कारितां ।　　(४) भविष्यति ।
(५) वनदेवी सहितानां ।

इति स्फारं ताभिः प्रणयमयसारं विहरणम्
हरेर्ध्यायन्नाना[१] भवति कविचित्तं मुहुरपि ।
प्रेमा कामति[२] तत्क्रिया कलहति स्तम्भादिभावा-
वली
सख्यां सञ्चरति श्रुतश्च चरितं सर्व्वश्रुतं लङ्घति[३] ।
इत्थं केलिकलाकलापकलितं वृन्दावनान्तर्वने
दम्पत्योर्निखिलं[४] विचारपदवीमुल्लूय विभ्राजते ॥
अकुण्ठामुत्कण्ठां वहति हरिरासु प्रतिपदं
हरावप्येता यद्व्यतिमिलनसौख्यं विजयते ।
अहो यस्मादस्मिन्[५] निरुपधि सखीवृन्दमुभय[६]-
प्रकृष्टोत्कण्ठत्वम् विशति तदिदं हन्त किमिव ॥
अपि सुन्दरतां प्रति ताः, सुन्दरतां किल वहन्ति
गोपाल्यः ।
यन्निर्दूषणभूषण,-भूषणकृष्णे विभूषायन्ते ॥
न भजति लक्ष्मीस्तुलनामिति किं स्तुतये घटेत
राधायाः ॥
या लक्ष्मीमपि जेत्रीः स्वरुचा गोपीः पृथक् कुरुते[७] ॥

---

(१) नानाविधं व्याकुलं । (२) कामइवाचरति ।
(३) सर्वश्रवणं तिरस्करोति ।
(४) दम्पत्योरित्थंनिखिलमित्यन्वयः ।
(५) प्रसङ्गे । (६) उभयेषां । (७) न्यूनीकुरुते ।

तस्मादसाम्प्रताय[१]तु साम्प्रताय[२]मद्विधाय स्वं [३]वर्णयितुं किमुत निर्वर्णयितुं[४] ॥

रव्यादिद्युतिजिष्णुदिव्यधरणिक्षौणीरुहान्तर्गत-
प्रासादस्थितसिंहपीठमहसि च्छन्नान्यदृष्टित्विषि ।
स्पष्टात्मीयदृशि[५] प्रकीर्णक-विकीर्णालीहितालीवृता[६]
राधामाधवमाधुरीवरसुधातृष्णां मुधा[७] यच्छति ॥

तदेवमानन्द सत्र[८]पत्रादिस्थितानामुपरि सान्द्र-शाखाभिरलक्ष्यतलानामनल्पकल्पवृक्षलक्षाणा मधिमध्यम् राजसमाजविराजमानां वर्णितमञ्जु-किंजल्ककर्णिकामधिवसतः सदा लसतः सपरिवारवार[९]-सुरभीपालभूपालकुमारस्य तस्य सर्व्व-चिन्तातीतचिन्तामणिमयमक्षामम्[१०] सप्तकक्ष्या

(१) अयोग्याय ।　(२) अधुनिकाय ।
(३) आत्मानं गोलकमितियावत् ।
(४) निवर्णनन्तु निध्यानं । अथवा तृष्णांमुधायच्छतीति पद्यस्थेनान्वयः ।
(५) स्पष्टाआत्मीयदृशिर्यत्र ।
(६) प्रकीर्णकेन चामरेण विकीर्णं अलीनामीहितं याभिस्ताभिरालीभिर्वृता ।
(७) प्राप्तिसम्भावनायाअभावादितिभावः ।
(८) सदादानं । सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च ।
(९) समूह ।　(१०) क्षेक्षये ।

रामं धाम[1]-निकामं धाम[2] विस्तारयन्नेत्राणि विस्तारयति । तत्र च भासमानं तदावासमभितः सततमुपपरार्द्ध[3] गणनीयानां सजातीयानामद्वितीया वसतिः । सेयमभिस्निह्य वन्दिभिः सन्दिह्यते ॥

अङ्कं तदालिङ्गितुमब्जवन्धो, र्वन्धु[4] र्ययौ किं परिवेषएषः ।
गोपालयानां वलयावलिर्व्वा,गोपेशवेश्माभित एवमस्तीति ॥

तद्वासिनस्त्वेवं स्तूयन्ते—

अर्थाः सर्व्वजनार्थनामतिगताः कामा निकामाग्रिमा
धर्माः कर्म्मठ वेदधर्म्ममहिता मोक्षाश्च मोक्षातिगाः
तेषां तत्र वसन्ति सेवकतया कृष्णाय तृष्णाजुषां
यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयस्तत्कृते ॥

नेत्रं श्रोत्रं चित्तमप्यन्यदन्य-
तुच्छं यस्मिन् भाति कृष्णं विना तु ।
घोषे तस्मिंश्चक्षुषश्चक्षुरेवं
श्रौती वार्त्ता पश्य दृश्या विभाति ॥

---

(१) गृहं । (२) तेजः ।
(३) परार्द्धादधिकतयेत्यर्थः उपाधिकतसूत्रात् ।
(४) वन्धुरिववन्धुः सहचरत्वात् ।

विभ्राजन्ते सूत्रसञ्चारविद्या
पाञ्चाल्यः[१] किं विश्वविस्मायनाय ।
किम्वा गोपाः स्वान्तरे कृष्णभावै-
र्वद्धाः सन्तस्तत्र तत्र भ्रमन्ति ॥

किञ्च—पितायं मातेयं पितृसहजवर्गः स्वयमसौ
तथैवान्ये चान्यप्रथितहितसम्बन्धमहिताः[२] ॥
व्रजे ख्यातिर्यैषा वकरिपुगणो भाति खलु तां
क्वचित्तुल्यः प्रेमा पथिकमनुशश्वद्भ्रमयति ॥

अथान्यदपि किमपि विभाव्य सम्भाव्यते[३] । तद्यदि सतामनु[४] भवमप्यनुभविता[५] तदा भव्य[६] मेव खलु भव्यम्[७] नचेन्नव्यकाव्यता तु न व्यभिचरिता अथवा तथापि यत् किञ्चिदपि तेषां वाञ्छितं स्यादेवेति सर्व्वमञ्चितमेव मन्यामहे ॥

तत्तु सम्भावनं यथा—अथ गोपावासाभ्यन्तरे तादृशामेव सभ्यानां लभ्या[८] सभावलिरुपलभ्यते यत्र भूरिवैचित्रीधुराणि महा गोपुराणि[९] पुराणीव

(१) सूत्रसञ्चारविद्यायाः पाञ्चाल्यः प्रतिमाः । (२) पूज्या ।
(३) सम्भावनाविषयः क्रियते । (४) लक्षीकृत्य ।
(५) लक्षीकृत्य । भविष्यति । (६) मंगलं ।
(७) भवितुमर्हतिभव्यकर्त्तरि । (८) योग्या ।
(९) गोपुरन्तुपुरद्वारं ।

विराजन्ते येषां पन्थानः किल किञ्जल्क-वलज[१]-पर्य्यन्ताः समन्तात् विभ्राजन्ते यत्र च परस्पर-मभिमुखाः सुमुखामहान्तस्ते गृहामिथः पृथुल-शोभा लोकस्पृहा इव विमृश्य दृश्यन्ते । यत्र च सिंहसंहननानां[२] पुरुषसिंहानां निश्चलांघ्रीणि-महासिंहासनानि विचित्रतया नेत्राणां परिवृंहण-ता[३]मंहन्ते[४] यत्र च परावरकक्ष्यावासिलोक-लक्ष्याणि सममेव समक्षाणि सन्ति मिथः सुख-शतानि वर्षन्ति । यत्र चैकत्रासीनानामन्यत्रापि रूपककाव्य इव[५] प्रतिरूपाणि[६] रूपाणि[७] प्रती-यन्ते नच तानि केवलानि अपि तु प्रतिध्वनयश्च ध्वनिकाव्य इव ध्वनितया[८] विभाव्यन्ते । यतः स्वच्छान्तःकरणा महान्तः खलु परगुणान्तराण्य-प्यायच्छन्तीति[९] प्रथितिः[१०] प्रथीयसी[११] । यदा च तथा प्रतीयन्ते[१२] विभाव्यन्ते च तदा ह्यागन्तु-

---

(१) पूर्द्वार । (२) वरांगरूपोपेतोयः सिंहसंहननोहिसः ।
(३) विस्तारकर्ता ।
(४) अंहिगतौआत्मने पदीत्वयं प्राप्नोति इत्यर्थः ।
(५) प्रतिरूपकवत् । (६) प्रतिबिंबरूपाणि ।
(७) स्वरूपाणि । (८) ध्वनिस्वरूपतया । (९) गृह्णन्ति ।
(१०) ख्यातिः । (११) पृथुतरा । (१२) प्रतीताविषयाभवंति ।

का नानाजनास्तत्तद्रूपाणां जानानाः[१] परितः परिहस्यन्ते[२] । यत्र च कुत्रापि यदा तदा परमानन्दस्यन्द[३]-सन्दोह-दोहन-कान्तिकन्दलीलम्भितसुखतन्द्रः श्रीमन्नन्दकुलचन्द्रः स्वयमालोकसुधया लोकश्चक्षुश्चकोरवार[४]-पारणामापूरयति तदा तूत्सवानामपि महानुत्सवः[५] स्फुरति ॥

अथ सभावलयमन्तरा च कक्ष्यापञ्चकतया लब्धबोधः सर्व्वचित्तावरोधः स तु व्रजनृपावरोधः[६] समुद्भ्राजते। तत्र तमेव हि सह मातर[७]पितंसादिवृन्दः श्रीगोविन्दः स्वयमावसति । यत्र सभावलयान्तरन्तः परितः परिताश्चतस्रोऽप्यन्तः पृथगवरोधलताः कक्ष्या लक्ष्यन्ते । अन्या च पञ्चमी धन्या सर्वमध्यलब्धन्यासतया यत्र चित्रीयते । यस्यान्तु महाप्राङ्गणसङ्गिन्यां प्रतीचीमनु स्वान्तरङ्गमङ्गनमङ्गनं परितो[८] निकायानां निकायः[९] सर्वतोऽपि

---

(१) तत्तद्रूपबुद्ध्याप्रवर्त्तमाना इत्यर्थः । ज्ञोऽविदर्थस्यकरणेषष्ठी ।

(२) परिहासविषयाभवन्ति ।

(३) निर्झर । (४) समूह ।

(५) उत्सेकामर्षयोरिच्छाप्रसरे मह उत्सवः । (६) अंतःपुरं ।

(७) अदंतोऽयं निपात इति भाषावृत्तौ भाषामतमुक्तं ।

(८) अंगनस्य सर्वतः ।

(९) गृहाणां समूहः पाणिनीये घञंतप्रकरणात् ।

श्रेयस्या श्रीमद्व्रजनरदेवप्रेयस्या समाश्रियते।
उदीचीमनु सुखमयूख[१]रोहिण्यारोहिण्या।
प्राचीमनु समस्तकृतसेवेन श्रीमद्व्रजनरदेवेन।
अवाचीमनु स्वजन सभाजनभोजनापवर्ज्जन[२]
प्रयोजनसामग्र्या॥

अथ तद्वहिर्वहिरन्तःपुरप्रयुतविभागप्रचुराणां परमसन्तुष्टजनयुष्टानां चतुष्टयीनां च कक्षाणां पश्चान्निश्चितपश्चिमादि-ककुभां शुभां रीतिमवलम्ब्य सकलशर्म्मदृश्वरी[३] श्रीमद्व्रजेश्वरी। रामधट्टाभिरामः श्रीमद्बलरामः। सर्वलोकगतिः श्रीमद्व्रजाधिपतिः सच गोवर्द्धनानन्दनः श्रीमद्व्रजाधिपतिनन्दनः पतिरतीव राजते॥

तत्र चाहरहरनिरह-रहःकेलिकेलिततृष्णायो रामकृष्णायो विख्याततन्नामसु मध्यमकक्ष्याद्वय धामसु परमरमागणश्रेयसीनां प्रेयसीनामावासप्रासादावलिरुद्भासते॥

यत्र चावेशन[४]मनु सावेशं नानाकलाकलापं[५] कलयन्तीनामालीनां निजनिजयूथवरूथपाथाः

---

(१) मयूखास्त्विट्करज्वालाः। (२) अपवर्जनमंहतिर्दानं।
(३) स्पृवती। (४) आवेशनं शिल्पशाला। (५) समूहं।

परमापूर्व्वपूर्व्व-पूर्व्वानुरागादिकथानिकायं गायन्तीनां मधु-मधुरकाकलीकुलानि तत्रकीयं सर्व्वं तर्व्वन्त[१]मार्द्री कुर्व्वन्ति । किमुत बहुकष्टसृष्टतया मिथुनीभूतं तत्तन्मिथुनम् ॥

तयोर्द्वयोरावरणतया लक्ष्ये ये चान्यतरे कक्ष्ये ते रामकृष्णयोर्यथा हरितं[२] वहिरवहिरुपवेश सदेशरूपे[३] भवतः । यथा निकटतट[४]मेतयो[५]रभिमुखानि सर्व्वतः सुखानि तयोर्मध्यमयोर्द्वाराण्यधियन्ति ।

एषां च सप्तकक्ष्यातुलचातुरीधुरीणा पुरी प्रत्यन्तरकक्ष्यमेकभूम द्विभूमतादिप्रकारेणाधिकभूमिकारचनाभिरुच्चतररीतिकायाः समानमानगृहस्वस्ववीथिकाया[६] धारिणी गोलोकधरणी लोकहारिणी[७] भवति । तत्र सर्व्वास्तु गृहलेखामणिभित्तिसम्वध्यमध्यरेखालब्धद्वैविध्या समन्तादुभयतः स्थितद्वारतया परस्परसन्मुखताशोभानन्दितदिगन्ताः कैमुत्य[८]मासादयन्ति ॥

---

(१ वृक्षपर्य्यन्तं । (२) येषां या दिक् । (३) निकटरूपे ।
(४) निकटतटमनतिक्रम्य । (५) आवरणरूपयोः ॥
(६) श्रेणी । (७) मनोहारिणी । (८) अतिशयितां ।

यत्र च सर्व्वमध्यमावरोधस्याधिमध्यं वृहत्प्रांमणामधिकृत्या खराडपुटभेदन[१] मुकुटभङ्गीलक्ष्मिं निःश्रेणि श्रेणिमिश्रान्तः[२] श्वभ्र[३] शुभ्रलघुलघुद्वार-सुखारोहसञ्चारमेर्वाकारचार्वङ्गकुट्टिमादुपरिपरितःस्तम्भवारसङ्गतमगारमेकं सर्वतश्चलत् पताकमवलोक्यते ॥

यदा च तस्य सर्व्वककुद[४] मुदञ्चितस्य धिष्णयस्य[५] घुरूपरि[६] चालङ्करिष्णुतया श्रीकृष्णः स्वयं वर्त्तिष्णुर्भवति तदा सर्व्वजिष्णुतदुपरिचरिष्णुजिष्णुनीलमणि[७] रिव कं वा तल्लोकभविष्णुलोकं कान्तिकन्दलीभिर्न पुष्णाति ॥

या चेयं कर्णिकायामुपरिपुरी तदधस्तादन्यापि समन्तादस्ति। किन्तु सा प्रतिकृष्णकान्ताधामन्येन निजाङ्गनानिभपत्रपंक्तिसीमन्येव चाऽऽयंत्रितद्वारमणोलि पर्य्यामङ्गाना द्युमणिनन्मणिगणसमुज्ज्वलालयकलापा वातानीत-सुजात[८]-पुष्पजात-परिमल-सम्पाता[९] निर्ज्जनता जनित-स्वैर-

(१) नगरं। (२) सोपानसमुहयुक्त। (३) अवकाश।
(४) राजचिह्न। प्राधान्येराजचिह्नेचवृषाङ्गेककुदोस्त्रियां।
(५) स्थानस्य। (६) सर्व्वोपरि। (७) इन्द्रनीलमणिः।
(८) कोमल। (९) मिलनं।

नानारतरतिप्रदा । शय्यासन-च्छत्र-चामरादि-सामग्री सम्यग्प्रीतिबहुशती प्रीतिदा नानाक्रीडा-भाण्ड-मण्डलमण्डिता खण्डमण्डया । तत्तच्चेष्टा-धिष्ठान नर-मृग-पक्षिप्रतिकृति(१) लक्षविलक्षिताः (२) प्रेयसीषु विभक्तप्रदेशविशेषाशेषालयायते । यत्रत्येन(३) पथा यथावत् प्रेयसीनामानन्दनः श्रीमान्नन्द नन्दनस्तत्र पत्रसमुच्चदुद्यानवृन्द(४)म-मूभिरनुविन्दन्नतीव नन्दति । तस्मादुद्यानादन्तर्द्वा-रेण (५) चतुरस्त्रं प्रत्युद्यान(६)मपि बिन्दति ॥

एवं श्रीबलरामस्य रामघट्टाख्य निजक्रीडावन-गमनञ्च तलवत्मनैव वर्त्तते किन्तु संक्षिप्ततया निहि-तेन पत्रावलिपर्यन्तालवालपिहितेन मन्तव्यम् ॥

तामेतामुपरिगतां श्रीमद्व्रजेश्वरपुरीं परि तु श्लोकाः परिगीयन्ते ॥

यस्यां पताका मृदुवात-कम्पिता
नानामुखीभावमिताः पुनः पुनः ।
सौरभ्यमायाति यदा यतस्तदा

---

(१) प्रतिमा । २ युक्ता । ३ यत्रभवेन ।
४ वनभेदवृंदं । स्यादुद्यानंनिःसरणोवनभेदप्रयोजने ।
५ प्रच्छन्नद्वारेण ।
६ उद्यानंनिःसरणानिष्क्रमणामितियावत् ।

विवृत्य पश्यन्ति दिशा[१]ममूमिव ॥
नित्यं सुधाधाम[२]ज-धामसङ्गतः
पूर्णाङ्गता[३]मङ्गलसङ्गतिं गताः ।
यत्रापि कुम्भा विधुकान्तसम्भवाः
कूटान्त[४]रत्नमुकुटा इव स्थिताः ॥
यत्रान्विता स्वच्छतया विभातया[५]
हीरादिरत्नच्छदि[६]रालिरीक्ष्यते ।
विम्वच्छलाकृष्टनभस्थतेजसां[७]
सायुज्यभूमिर्विभु[८]रात्मना[९]मिव ॥
मयूर-पारावत-कोकिलाद्या
वसन्ति यस्यान्तु विनापि यत्नम् ।
शब्दायमाना विपिनस्य तैर्यै
विवादसम्वादवदाचरन्ति ॥
विचित्ररत्नावलिचित्रचर्चिता
सौवर्ण-भित्तिः परितश्चकासती ।
गोपाल बाल्यादिविलास-माधुरीः
साक्षादिवालक्षयते शिशूनपि ॥

---

१ दिशं ।　　२ चन्द्ररश्मि ।　　३ पूर्णाङ्गत्वेन ।
४ गृहाणांमध्ये ।　　५ विराजमानया ।
(६ पटलंच्छदिरित्यमरः । इयंतंनपुंसकलिङ्गमितिक्षीरस्वामी ।
७ चन्द्रसूर्य्यादीनां ।　　८ ईश्वरः ।　　९ जीवानां ।

विस्तारितोत्सङ्गनिभैरलिन्दैः
श्लिष्यन्ति कृष्णां भवनानि नित्यम् ।
येषां[1] सदान्तर्निवसन्ति ते त-
द्भक्ता अमी[2] तादृशन्तां[3] व्रजन्ति ॥
प्राङ्गणानि मणिदर्पण-च्छवी-
न्युल्लसन्ति सदनावलीमनु ।
येषु नूतनवधूर्वकान्तकं
व्रीड-नम्रवदनापि वीक्षते ॥
चन्द्रकान्तमणि-बद्धभूतले
पल्ललानि[4] च लसन्ति सर्व्वतः ।
राधिकादि-मुखकान्तिकन्दली
यानि पूरयति हन्त सर्व्वदा ॥
लोकः श्रीनाथलोकप्रतिरुचिविजयी
काननं श्रीस्पृहाजि-
ह्वासः श्रीराजधानीनिखिलशुभरुचां
वासिनस्ते तएव ।
भोक्ता कृष्णः स भोग्यः प्रणय-
मधुरिमा शश्वदि त्येवमस्मिन्

---

(१) गृहाणां । (२) गृहाः ।
(३) तद्भक्ततुल्यतां । (४) अल्पसरांसि ।

प्रत्येकं सर्व्वमन्तःकरणमतिगतं कस्तदन्तं लभेत ॥

तत्प्रेमशर्म्मणां सर्व्वातिशयिधर्म्मतायामहमपि मर्म्मवेत्ता ॥

यतः—हरिर्गोपक्षौणीपतिमिथुनमन्ये च विविधा
न नः क्रूरं चित्तं मृदुलयितुमीशा(१) लवमपि ।
अहो तेषां प्रेमा विलसति हरौ यस्तु बलवान्
हरेर्वा यस्तेषु द्रुतयति स एव प्रतिपदम् ॥

अतः सर्व्वतः क्षेमाणां सएव प्रेमा सर्व्वत्र स्फुरति ॥

तथाहि—

हरिः प्रेमा साक्षादिव भवति किम्वा व्रजजन-
स्तयोरेकस्मिंश्च स्फुरति स(२)हि शश्वत् स्फुरति नः ।
इदं(३) वारम्वारं विधि-शिव-सुरर्षि-प्रभृतयः
स्फुटं(४)कर्त्तुं शक्तिं दधति(५)नतरां यत्(६) कियदपि ॥

स(७) तु परमाश्चर्य्यचर्य्यः(८) ।

यतः—तदीयानां प्रेमा यदपि कृतिचर्य्यातिगसुख-
स्तथाप्युच्चैर्हेतुर्भवति हरिसाहाय्यकविधौ ।

---

(१)न समर्थाः । (२)प्रेमा । (३)पूर्व्वोक्तं । (४)व्यक्तं ।
(५) धृतवंतः । (६) यस्मात् । (७) प्रेमा ।
(८) चर्य्यापरिपाटी ।

जगत्कार्य्ये यद्वच्छ्रुतिमतपरब्रह्म नितरा-
मचिन्त्यो यो भावः स हि न हि वितर्कं विषहते ॥
यस्मादेवं स एव चित्तमाकर्षति तस्मात् ॥
ज्ञात्वा कर्म्म स्वयमुत परात् कृष्णतृष्णानुकूलं
तस्मिन्नन्तर्बहिरपि सदा गोपराजावरोधे ।
यातायातं मुहुरतितरां कुर्वतामादृतानां-
मप्युत्कण्ठा चलितमनसां मानसं भावमीहे ॥
तत्रत्याना समूहावलोकनन्तु परमपरमाद्भुतम् ॥

तथाहि—

उद्घूर्णान्ते प्रियपरिजनाः स्निग्धभावा यथा[१] स्वं-
गोपक्षौणीपतिमनुगतास्तस्य चात्मद्वितीयां[२] ।
यौ प्रेमाख्यप्रवलरशनायन्त्रणात् कृष्णकान्ति-
ज्योतिश्चक्रे रविशशितनू ये च नक्षत्रसङ्घाः ॥
गानन्तु प्रतिगणं साधारणमपि कञ्चिद्विशेषं वहति ।

यथा—

जन्माद्यर्भकताहरेः प्रवयसां मध्येसभं[३] प्रायशः
पौगण्डादिषु निर्जरारिविजितिः प्रायः सुहृन्मण्डले ।
कालियादिषु दुर्जनेष्वपि कृपाभक्त-व्रजेऽनल्पशः
प्रायेणात्मनि रागरीतिरभितः कान्तागणे गीयते ॥

(१) यथायोग्यं । (२) भार्य्यां । (३) सभामध्ये ।

तत्र च—

सङ्गाने चेद्व्रजति मुरजिद्भक्तमात्रं(१) विमोहं
शर्म्माशर्म्माप्यनुमितिमियान्तर्हि न प्रेक्षकाणां ।
शान्तिर्दास्यं सहचरदशा वत्सलत्वं तथान्य-
द्व्यच्छेदेषां हृदि कथमिह क्षीरवार्वद् विवेकम् ॥

हन्त पद्यद्वयमिदमलोले मनसि उद्धूय तदेवान्दो-
लयति । यथा—

मातर्मातर्जननि ! मम तद्देहि देहीति शब्दै-
र्वत्सायुष्मन् ! सुत ! वदसि किं प्राणलाल्येति चार्द्रैः ।
नानालाप(२)प्रणयवलिता मां वलात् स्नेहमुद्रा
तस्मिन् गोष्ठे(३) स्मरयतितरां तौ सवित्रीकुमारौ ॥

गेहेशि ! त्वं चरित(४)सुकृता हन्त वत्सस्त्वदग्रे
वक्ति प्साति(५) प्रथयति रुचिं याचते जाहसीति ।
अर्द्धा(६)देवं स्थगितवचनं स्नेहपूराद्व्रजेशं
ध्यायद्वृत्तिं(७) वत न लभते मन्मनो वंभ्रमीति ॥

इति श्रीगोपालचम्पूमनु गोलोकरूप-
निरूपणं प्रथमं पूरणम् ॥



(१) कर्तृ । (२) आलापोभाषनंमिथः । (३) व्रजे ।
(४) आचरित । (५) भुंक्ते । (६) अर्द्धप्राप्य । (७) स्थिति ।

# अथ द्वितीयपूरणम् ।

अथ कथाप्रथनाय प्रथनमिदमारभ्यते ॥

स्वभजन-लसन्मानस-सन्मान[1]दजन्मादिली-लाभव्याय[2] भुव्याविर्भावितस्य तस्य निजव्रज-लोकचक्रस्य दन्तवक्रं हतवता श्रीभगवता तत्र विगतसर्व्वशोके गोलोके पुनरपि संश्लेषः साधित इति चम्पूद्वयस्य प्रतिसम्पूर्त्ति-वक्ष्माणा सप्रमाणा कथा-लक्ष्यतया[3] विविक्त[4]मेव व्यक्तीकरिष्यते। सिद्धे तत्र तु संश्लेषे कुत्रापि रात्रिविशेषे शेषे गोलोकाद्वन्द्वमहेन्द्रद्वारि हारि दुन्दुभिद्वन्द्वमुन्ननाद। नादविशेषमिशेणानन्दमेवेदमुज्जगारेति मत्वा लोको प्युज्जजागार। नच स एव केवलः किन्तु कृष्णावलोकतृष्णया सह। यथा कमलसमूहः परिमलधारया। अथ निजनिजवृन्दिनः सूतमा-गध-वन्दिनः श्रीमन्नन्दराजपुरविराजमानबृंहित-सिंहद्वारि सर्व्वोर्द्धं विन्दमानां चन्द्रशालिकामधि-रुह्य नूतनानि पूतनादिदन्तवक्रान्तदुर्बुद्धिशक्रारि-

(१) पूजा। (२) मंगलाय। (३) आश्रयतया।
(४) पूर्वंयथास्यात्तथा।

चक्रवधसम्वद्धानि विरुदादिछन्दांसि स्वछन्दतया नटन्त इवापर्य्यन्तं पठन्तः समन्तादेव जनसन्दोहमानन्ददोहं लम्भयामासुः। सानुरागरागावलिविभाग-लङ्गिमसङ्गीतसङ्गि-तल्लीलाकथाकुलमप्याकलयामासुः[१] ॥

तदा मुहुरपि हेरेरवदान[२]गानतो लब्धतोषपोषाघोषाधिपति-दम्पतिमुखाः परमसुखाददतिशस्त[३]-वस्त्रालङ्कारभारं[४] तेभ्यः स्वयमीहया[५] विहापयामासुः[६]। किन्तु अनशोऽपि तृप्तिर्न क्लृप्ति-[७]मवाप कथं वा तत्रावश्यमेव वशनीया[८] सातिः[९] सातिमासीदतु तदनु च समुद्भूतप्रेमरसराशि र्व्रजवारिराशिः स्वयमेव निज-हृदयङ्गमव्रजमङ्गलश्यामलाङ्गसङ्गानतरङ्गसङ्ग-साङ्गितया विश्वविस्मयकारितां सङ्गतवान्। तत्र च गीयमानतया सन्निधीयमानस्य तदीययशसश्चन्द्रमसः[१०]समन्तामनुमिमीमहे ॥

---

(१) श्रावयामासु।

(२) अवदानंकर्मवृत्तमित्यमरः। सोत्कर्षचरितमितिक्षीरस्वामी।

(३) मंगल। (४) समूहं। (५ आत्मनइछया।

(६) ददुः। (७) सामर्थ्यं। (८) कमनीया।

(९) सातिर्दानावसानयोः। (१०) चंद्रमसासह।

यदा तु श्रीलगोपाललीलागानाग्रहिला महिला गातुमारब्धास्तदा सर्व्वे एव सतृष्णास्तूष्णीमासन् । कृष्णमुरलीकाकलीमनु कोकिला इव । यदेव गानं वैदग्धीदिग्धकङ्कणादिझङ्कारालङ्कृत-मन्थाननिर्घोषः स्वरतालादिदानमिव कुर्व्वाणः स्वपोषं पुपोष[1] ॥

तदेवं सति सर्व्वतः सारेण सप्रमाणवर्णायित-व्यानुसारेणापगतापरपतिभ्रमाः सर्व्वा एव व्रज-रमा मारवाणदलितमर्माणस्तदेकसेवाधर्म्येषु[2] निजनिजहर्म्येषु सममेव लब्धागमनं तमेकमेव रमणं रमणतां[3] गमयमाना[4] न विराममिच्छन्तीति सखीभिरेव प्राभातिकरागमयगान-नर्म्मणा तस्मादुपरमयामासिरे ॥

तच्च न सहसा किन्तु क्रमशः ।

तथाहि ॥

वाहू विश्लथितौ श्लथीकृतमुरोवक्त्रं दरव्यावितं
तल्पादुत्थितमेकदा विनिमयेना[5]लम्व्य यत्नाम्मुहुः
याभ्यां स्पर्शसुखाग्रहोऽपि दमितस्ताभ्यां हरि-
प्रेयसी-

---

(१) स्वेनपुपोषेत्यर्थः ।　(२) धर्म्मादनपगतेषु ।
(३) क्रीडाकर्तृतां ।　(४) प्रापयमाना ।　(५) परस्परेण ।

व्यक्तिभ्यां वत सोढ़[१] मत्र सहसाकृष्टुं न दृष्टिं मिथः ॥
हन्त तासु च सर्व्वाधिका या तु राधिका सा खलु
तदारम्भसम्भवादेव प्रायः सर्व्वदा मूर्च्छामृच्छति ॥

यत्र च ॥

पूर्व्वानुरागगलितां मम लम्भनेऽपि
लोकापवाददलितामथ मद्वियुक्तौ ।
दावानलज्वलितजाति[२] वनी-सदृक्षा-
मेतां कथं कथमहं वत सान्त्वयामि ॥ इति ॥

सद्य भावयन्तं सम्प्रति चातिव्यग्रीभवतं व्रज-युवराजं प्रति समाश्वासनया विश्वासनया च तां व्यवहितां कुर्व्वाणाः प्राणतुल्याः परमाल्यस्तदीयताम्बूलोद्गारादिसम्वलनया चेतनामालम्बयन्ति॥ समन्तादपि सान्त्वितामथ पृच्छन्ति च हन्त केयं तव रीतिरिति ॥

सा पुनः सास्रमाश्रावयति ॥

न मूर्खधीरस्मि न वा दुराग्रहा शारीरभोगेषु न
चातिलालसा ।
किन्तु व्रजाधीशसुतस्य ते गुणा वलादपस्मारदशां
नयन्ति मां ॥

---

(१) सामर्थ्यैनासीत् । (२) मालती ।

किं कुर्म्महे यया मर्म्मपीड़या क्वचन च शर्म्म न लभामहे वयमिति ॥

अथ पुनर्व्याकुलीभवन्ती सा शुभ्रदन्ती रसान्तरेण ताभिः सान्त्विताक्रियते । तद्दिने तु तदिदमाचचक्षे । अशेषमङ्गलसङ्गताचरणानां श्रीव्रजेशगृहिणीचरणानामादेशप्रवेश आसीत् । हन्त सर्व्वा एवार्वाचीनवयसः समागताः । मत्प्राणाधिका राधिका कथ मधुनापि नागतेति । तदेवमवधारितवती श्रीराधापि सावधानीभवन्ती शीघ्रमेव प्रातरौचितीं विधाय सर्व्वाभिरेवोपशाय विशाय[1] वलिताभिः कल्यमाकल्य[2] मिलिताभिर्ललिताविशाखादिसखीभिः सार्द्धं श्रीव्रजाधीश्वर्य्या धाम जगाम। गत्वा च परमकान्त-स्वकान्ति-कन्दलीभिरन्तिमगताभीरक्रान्ताः समन्तादप्यन्तर्वहिरपि देवयामास[3] ॥

यत्र तासां निर्निमेषता च जाता। सम्भावनावती भावनाचेयम् ॥

अधिविधुनीलाम्बुजयुगमपि तिलपुष्पं सबन्धूकं।

---

(१) उपशायो विशायश्च पर्य्यायशयनार्थकौ ।

(२) प्रातर्ज्ञात्वा । (३) विराजयामास। श्लेषेणादेवीकारयामास ।

यस्यां कनकलतायां सेयं कृष्णाङ्गना[१] चित्रं ॥

अथ भक्तितृष्णागमनाः कृष्णजननीमनुमाननीयतया निजमाननमवनीमवनीय ननाम ॥

सा च तां सह सभ्यानन्द[२]मभ्यनन्दत् ॥

तत्र च ॥

असौ चरणयो र्नता शिरसि हस्तमाधत्त साप्यसौ भुवि तथा स्थिता कचमजिघ्रदुत्थाप्य सा ॥
असौ कुचितविग्रहा भुजतले निधायाथ सा सवाष्पकमुदैक्षत द्वयमहो द्वयोः किं ब्रुवे ॥

तदेवमपि रोहिणीप्रभृतीनामादराय भृतनिभृतसङ्कोचामालोचयन्ती राज्ञी तामनुजज्ञे[३] । पुत्रि! वन्दस्व वन्दनयोग्या इति । सा च रम्यगुणा पुरुनिपुणा भक्तिपुरतः सर्व्वा एव गुरूरवनम्य दूरदेश एव विनिवेशं विनतवक्त्रमाससाद ॥

अथ ललितादिस्तदालिपालिरपि तासु गुरुवनितासु तद्वदेव कृतवरिवस्या[४] तस्या एव सदेशमुपविवेश ॥

---

(१) श्लेषे श्यामा चासौ अंगना चेति ।

(२) सभ्यानन्देन सह वर्त्तमानं यथा स्यात् ।

(३) तां प्रति अनुज्ञां दत्तवती ।　　(४) कृताराधना ।

ततश्च श्रीरामप्रसूः स्पष्टमाचष्ट । व्रजेश्वरि ! सर्व्वसुखरोहिणीरोहिणीताराद्य विद्यते । तदा-दिश्यतामियं सद्भावधूत-सर्व्वदिश्यवधूनैपुणया पाकादिसादृगुण्याय(१) पूर्व्वमेव सोमाभा(२ नु-लोमतया(३) या रसवतीं(४) प्रतीता:(५) समममन्या-धन्यामङ्गलाद्या मङ्गलाऽऽरामरामानुजरमास्तथा याः परापरनामानः कल्याणारामरामरामाः समन्तादप्यमूरमूमेवानुवर्त्तन्तां । ललिताद्याः पुनरस्याः कायनिकायरुपा एवेति । न साहायका-स्मामि नियोजनीयाः ॥

अथ तयापि तथादिष्टा शिष्टाङ्गनागणागण्य-गुणा शिरो नमयित्वा सखीषु तिरोभूय तत्काल-मेव चचाल ॥

अथ प्रसङ्गमन्यमपि सङ्गतं(६) प्रथयामः ॥

अथ धृतप्रणयनयसारा वयसा महसा(७) सहसा च कृतसवयसः सभानुकाराः स्वकुलपरम्परागत परिचारक शूद्राभीरकुमाराः स्वावसर विसर(८)-

(१) पाकादीनां यद्‌सादृगुण्यं तस्मै । तत्सम्पादयितुमित्यर्थः ।
(२) चंद्रावली ।　(३) अनुगततया ।　(४) पाकशालां ।
(५) ख्याता ।　(६) हृदयंगमं ।　(७) उत्साहेन ।
(८) स्वपर्य्यायसमूह ।

प्राप्तावसरतया प्रातरेव मोहनागार-द्वार[१]-सारमाव्रजन्तः समं विराजन्ते स्म ॥

ततश्च स्नानीयादिरम्यकरैस्तैः किङ्करैरनुगम्यतया सतु वरकिशोरबया निखिलत्राता रामभ्राता प्रातराचाराचरणाय सदेश[२]मुपवेशप्रदेशं पूर्वमेव विशेष ॥

तत्र च नर्म्ममयशर्म्मदप्रणाया वैश्याभीरतनयाः सखायः सुवलादयः सममेव समगंसत[३]। तैः सङ्गतैः सहतु विलम्वकथन्ता कथावलम्वेन मिथः परिहासविलासकौतुकी वरासनमध्यासामास[४]। तेच सर्व्वे प्रेम्ना परिचर्य्यायां परमाश्चर्य्यचर्य्याः ॥

यतः—

आधेयाधारादिभावेन भेदात्
प्राणा भिन्नाः प्राणिनः सन्ति भिन्नाः।
ये कृष्णाद्याः स्निग्धता शर्म्मभाजः
प्राणा ज्ञेयास्ते मिथः प्राणिनश्च ॥

प्रभाते च प्रभाते तादृशानां मध्ये तादृशस्य तस्य तु

---

(१) कांतासहितविलासगेहद्वारं। (२) निकटं।
(३) सङ्गतवंतः। (४) उपविवेश।

श्रीमद्वक्त्रकराङ्घ्रिधावनकला तैलादिभिर्म्मर्द्दनं
स्नानं गात्रमृजांशुकद्वयधृतिः साचामपुण्ड्रक्रिया ।
प्रातर्धर्म्मगकर्म्म दिव्यवसनं रत्नावलीमण्डनं
वंशीशृङ्गशिखण्डदण्डकलना मच्चित्तमाकर्षति ॥

तेषु च केषुचिदङ्गसेवकेषु विशेषः शेषवचसामपि शेषस्यविषयायते ॥

यतः—

सौरभ्यं शिरसः पदाम्बुजयुगं वाहुप्रसारादिकं
लब्धाश्लेषविशेषतां दधति ये कृष्णस्य तृष्णान्विताः ।
वात्सल्ये परिषेवणे सखिपदे कान्तास्थितावप्यमी
सौख्यं यत्तदशेषमेव दधते प्रेम्णा तदभ्यङ्गिनः ॥

अथ तस्मात्तैः परिवीतः पीतवसनः स्वाङ्गन[१] प्रवेशमङ्गीकुर्व्वन् सदेशसमवयस्काभिः समं जनन्या जीवन्यास इव प्रतिमया लभ्यते स्म ॥

तत्र च ॥

आगच्छज्जयतादहो मधुरता निर्म्मञ्छनद्रव्यतां
गच्छेयं मम दृग्द्वयस्य भवतादत्राति पक्ष्मास्थितिः ।
इत्थं कञ्जविलोचनस्य कलयन्नाकस्मिकीमागतिं
चित्रं चित्रजनः सदा भजति चेद्दासान्तु किं तद्ब्रुवे ॥

(१) व्रजेश्वर्य्याः ।

अथ गुरवश्च ता रजनिजनित-तद्विरहज्वाला-कलितस्नेहपूरवशतयामुहुरगुरुता[1]मासाद्यानवद्या मोद[2]माविष्कुर्व्वत्यः पूर्व्वदिङ्मुख-महामन्दिरा-लिन्दादवतेरुः। तत्र पूर्व्वं माता[3] वत्समिव माता वत्सं[4] मिलितवती। यत्र रोहिण्यपि रोहि-णीव[5]दूहाश्चक्रे लोकचक्रेण॥

श्रीगोविन्दश्च द्वयोरपि तयोः पदारविन्दं क्रमा-द्वन्दित्वा नन्दित्वा मान्यानामन्यासामपि यथान्यायं मानमुन्नमयामास॥

तत्रैव च श्रीनीलाम्वरमनु समागतिकराः सह-चराः श्रीदामसुदामादयः श्रीहरि-सहविहारि-विततयस्तथा सर्व्वविद्यापटवः पुरोहितवटवस्तथा काश्चिदन्यास्तत्प्रसूसमानमाननीयतन्माननीयादि वराङ्गनासुगणयास्तथा सर्व्वसुखदोहाः स्वसृस्व-स्त्रीयादिस्निग्धसम्वन्धिनीसन्दोहास्तत्प्रदेशं विश-न्ति स्म॥

---

(१) गुरुभावान्यथात्वं। पक्षे अगुर्वाख्यसुगंधिकाष्ठतां।

(२) आनन्दं श्लेषे सौरभ्यं।

(३) गौः। (४) पुत्रं।

(५) वत्सलागौरिव।

वारं वारं प्रत्येकमुत्थानाद्यभावार्थं तथैव हि सर्व्वैर्मर्य्यादापर्य्यापितास्ति ॥

अथ या खलु सिद्धानां परिषदि योगमायेति प्रसिद्धाभक्तिसिद्धान्तसद्भावरते श्रीमद्भागवते च योगमायामुपाश्रित इत्यादिना भगवल्लीलाधिकारितया सिद्धास्वरूपशक्तिः स्वाभिव्यक्तिमन्तरेण रूपान्तरेण तापसीति व्यवसीयते(१) । यस्याः पौर्णमासीति नाम-व्याहार(२)-व्यवहार आसीत् तस्यामागतायामगर्वेण सर्व्वेऽपि ससम्भ्रमभ्रमं(३) नमः सममकुर्व्वत । तया चानन्दादाशीर्भिः स्फुटमभ्यनन्दिषत ॥

अथ यश्च सर्व्वविद्यानिष्णातस्तस्याः स्नातकः(४) श्रीकृष्णस्य रहस्यनर्म्मणि वद्धतृष्णतया तद्वयस्यतां वश्यतामानिन्ये यश्चाविदूषणभावरूषित(५) एव देवर्षिप्रकृतितया तस्य कौतुककृते विदूषकता(६)मपि विभूषयति स्म । स खलु मधुमङ्गलनामा नर्म्मणा मर्म्मस्पर्शिकुतुकरचनैराशीर्वचनैः

(१) निश्चीयते ।　(२) वचनं ।　(३) सावधानं ।
(४) गुरवे तु वरं दत्त्वा स्नायाद्वा तदनुज्ञया । वेदं व्रतादिपारं वा नीत्वाह्युभयमेव वा । स स्नातक इतिस्मृतेः ।
(५) युक्तः ।　(६) वैहासिकतां ।

सर्व्वानमन्दमानन्दयामास । निधिमिवंहरिसन्नि-धिञ्चानञ्च[१] ॥

ततश्च परस्परं करवद्धकरौ सितासित-कुमार-वरौ मातृभ्यामुभयतः पृष्ठतः प्रदत्तहस्तौ स्मित-वशम्वदवदनशस्तौ मन्दं मन्दं तदेवामन्दमलिंद-मविन्दतां ॥

सुवर्ण[२]स्वर्णकिर्मीरितप्रयत्न-निर्मितपृथुरत्नपीठ-मभि पृथक् पृथक् निविष्टवन्तौ सुधावृष्टिमिव च सर्वेषूपविष्टेषु दृष्टिं विसृष्टवन्तौ ॥

अथ प्रतिमास्या[३] सेयमास्या[४] जन्मतारा-गमनमयीति श्रीयशोदायशोदातुस्तस्य तदा तदा-चार्य्याणामर्भकादर्भकाग्रीयनीराभिषेकं विवेका-तिरेकवन्तः शन्तममन्त्रप्रवचन[५]-सचनया[६] रचयामासुः ॥

ततश्च ॥

मन्त्रा गीतानि वाद्यान्यपि च जयरवाः
कृष्णशोभास्तदीय-

---

(१) प्राप । (२) शोभनवर्ण ।
(३) प्रतिमासोद्भवा । (४) स्थितिः ।
(५) पठन । (६) घटनया ।

प्रेयोवर्गातिचित्रप्रणयविलसिता
नीतिपर्व्वण्यमुष्मिन् ।
प्रत्येकं तत्तदेकीभवनमपि तदा
प्राप रुच्यत्वमुच्चैः
शृङ्गाराद्यो रसो वा कविकृतिरथवा
षाडवो[१]वापि यद्वत् ॥
तस्मिन्नीराजनिर्म्मञ्छनभविकपदा-
र्थालिसंस्पर्शनाना-
माज्यादर्श्यादिदर्शद्विजनिजजनतां-
र्चादिकानां शुभानां ।
कृष्णो गोत्रादि[२]रासीत् प्रवरवरदशां
तानि[३] जग्मुः समन्ता-
द्येभ्यो[४]ऽन्ये च प्रथन्ते शुभशतनिवह-
स्यान्वयाः सर्व्वलोके ॥
ब्राह्मण्यस्त्वधिकच[५]मच्युतस्य दूर्व्वा-
पूर्व्वाणि न्यधिषत[६] तत्र मङ्गलानि ।
यद्याशीर्वचनमिहारुरोध वाष्पः

(१) पानकभेदः । (२) आदिप्रवर्त्तकः ।
(३) निर्मञ्छनादीनि । (४) गोत्रप्रवरेभ्यः ।
(५) कचानांमध्ये । (६) धृतवत्यः ।

कल्याणं वत भवतान्मनोरथस्य ॥

हृगम्भः स्तम्भरुद्धापि कुर्वती तिलकं प्रसूः ।
कुर्य्यात् किं यदि साहाय्यं नाकरिष्यत रोहिणी ॥

मातुः पितुस्तस्य च तत्र मातृ-
भावान्विता भ्रातृवधूस्वसॄणां ।
उपायनं पुण्ड्रमितीयती(१) गी-
रासीत्तदीयार्थचयेमिति नं ॥

अथ प्राचीगतद्वितीयप्रकोष्ठादागम्य रम्यकुमारः कश्चिदाचष्ट । यः खल्वेतदर्थमेव पूर्व्वं विसृष्टः । श्रीमन् व्रजयुवराज ! श्रीमद्व्रजराजसभायां सर्व्वएव पर्व्वणीह सम्वलिता वर्त्तन्ते । किन्तु भवद्यात्राद्वारमात्रावलोकिनः । यानि च सर्व्वारा-धनधनानि श्रीमद्व्रजराजचरणराजीवपरिसराय(२) सज्जितानि(३) भवद्भिसर्जितानि ताम्वूल दुकूला-दीनि तानि चाधुनापि मूर्द्धानं धुनाना नोप-युज्यते स्म ॥

अथ सोऽपि तदवधारय(४)न्नेव तदेवावधारय(५)न्मातरमनु कातर इव निष्क्रमणाक्रम समनुज्ञा-

(१) इयेतावती । (२) पर्य्यन्तभूः परिसरइत्यमरः । (३) मिलितानि । (४) शृण्वन् । (५) निश्चिन्वन् ।

याचनमनुसन्धाय प्रणामादिना पौर्णमासीमुट-ज[1]गृहाय विहाय श्रीराममग्रेविधाय श्रीदामा-दीन् परितो निधाय पश्चिमाग्रिमप्रेमदोलायमान स्वान्तस्ततो निष्क्रान्तः । सहसा महसा वृतः सभ्यालिभिरभ्यालोकयाञ्चक्रे ॥

अथ सोदितमेघाश्चातका इव लब्धचन्द्राश्चकोरा इव सङ्गतजला जलजन्मान इव समुन्मीलित-प्राणा देहा इव सर्व्वेऽप्यानन्द गर्व्वेण वन्दि-वृन्दादिकलितकोलाहलेन च सममेव समुत्तस्थुः ॥

किन्तूत्कलिकाकलितमनसोऽपि स्वस्व मर्य्यादया पर्य्यापिता इव लब्ध स्तम्भारम्भास्तत्र तत्र केवलं स्थितवन्तः युक्तमेव च तत्प्रोक्तं यत स्तस्मिन् खल्वस्माकं श्रीमन्नन्दव्रजराजग्रामे तत्तत् प्रेम-विशेष रीतिर्नीतिरेव ग्रामणी[2]रिव वर्त्तते ॥

तथाहि ॥

कदाचित् कस्यचित् कश्चित् प्रतिवचनं ॥

तौ शुभ्रद्युतिनीरदद्युतिहराविन्द्राश्महेम-प्रभा-हृद्वस्त्रौ सितकञ्जनीलकमल श्रीचोरिचार्व्वाननौ ।
चञ्चत्खञ्जनगञ्जनाक्षियुगलौ दन्तीन्द्रजिद्विक्रमौ

(१) पर्णशाला ।　　(२) अग्रणी ।

ता न स्तम्भयतां जनात् यदखिलांस्तन्मित्रचित्रं नहि ॥

यदा च दक्षिणे सर्व्वानर्व्वाचीनमाहात्म्यगुरवो गुरवो वभूवुः । ते च सर्व्वे पूर्व्वपूर्व्वतः पूर्व्वजाः एवतस्थुः । यत्र पुरोहिताः स्वयमनर्घ(१)मर्घ्यं दधानाः सर्वतः पूर्वे भवन्तः स्वनाम-निरुक्तिमिव व्यक्ती कुर्वन्ति स्म । पुरोधीयन्त इति । तदेतदपि युक्तं श्लेषेण च प्रथमतो हितास्त एव हि भण्यन्ते ॥

अथ तादृश निजकूलचन्द्र प्रेमानन्दामृततुन्दिलिततया किल श्रीमदुपनन्दाभिनन्द नन्द सनन्द नन्दनादिनामानः प्रवलनन्दनस्नेहमधुरधामानस्ताननुचप्रेम्ना सम्यग्वन्धुतावन्धिनः सम्वन्धिनः परापरनामानस्तन्मिलनमनुसन्धाय स्थिताः ॥

अथ वामेऽपि तथैवालघुप्रेम्ना लघुभवन्तो(२) लघवः समवतस्थिरे ॥

सर्व्वे चैते यथापूर्व्वं यथायथं सर्व्वचित्तारामेण रामेण सह हारिणा हरिणा मिलिताः समुन्मीलितभावाः वभूवुः । चन्द्रमसं विन्दमानाः कुमुदसन्दोहा इव ॥

---

(१) अमूल्यं । (२) शीघ्रीभवन्तः ।

ततश्च—क्षणाकतिपयीं[1] दक्षीणानन्दवृन्दार्पित सत्वर विसृत्वर[2] मोहादुन्मग्नेषु तेषु तदीय श्रीमन्मुखनिरोक्षणालग्नेषु श्रीमान् व्रजराज स्तं व्याजहार । तात ! तवाद्य विद्यते सर्व्वसम्पन्मयी जन्मतारा तस्माद्व्रजधाम स्वयमामध्याह्न मध्यासितव्यं[3] । गोसम्भालनपालनाय पुनः प्रातरेव मया समया[4] स्थिता युक्ता[5] नियुक्ताः सन्ति । स्वयमथ प्रथमत उपविश्य दृश्यतां स्वजनव्रज-इति ॥

अथ सोऽप्यवाचीनता[6]-समीचीन[7]-शिरस्क-तया राज्ञां तामाज्ञां मालामिव शिरसि निधाय । श्रीराममुखतामरस[8]मवधाय[9] स्वजन व्रज-सहिततया सहितमधिरुह्य चतुष्क[10] देशगतं पुष्कल[11]मुपवेष-वेश्म वलितस्मितं तारापतिरिव पूर्व्वपर्व्वतमध्यासितवान्[12] । विप्रादि-सम्प्रदान-तया यथायथं गवादिकमपि सातवान्[13] । ततश्च तस्मिन्नुपविश्य पुनस्ताम्बूलादि सम्विभागसुख-

---

(१) क्षणाकतिपयं अतिक्रम्य ।　(२) प्रसारि ।　(३) वस्तव्यं ।
(४) निकटं ।　(५) योग्या ।　(६) नम्रता ।
(७) उत्तम ।　(८) कमलं ।　(९) दृष्ट्वा ।　(१०) अंगन ।
(११) प्रचुरं ।　(१२) उपाविवेश ।　(१३) दत्तवान् ।

सम्वलनया सम्वन्धिभिर्मिथो नर्म्मसम्वादसम्वन्धिसन्धि[१]कुतूहलं कलयामास[२] ॥

मुहूर्त्तादथ कश्चिदन्तःपुरसारः कुमारः समागम्य साम्येनोपविष्टयो ज्यायःकनिष्ठयोः सम्वन्धिनिवहाऽऽराधनाय धृततृष्णयोः श्रीरामकृष्णयोः कर्णाभ्यर्णं लगितवान् । ताभ्यामनुमतः[३] पुनस्तद्रूपतश्चित्रीभवितुः श्रीमद्व्रजधरित्रीशितुः[४] । तेन चाद्य श्रीवत्स-वत्स[५]प्रसादलब्धस्य वत्सस्य शुभसम्पन्मय जन्मर्क्षमिति विनयसन्धेन केवलेनाञ्जलिवन्धेन व्यञ्जनया भोजनाय याचिताः सन्तोऽतिसन्तोषाद्व्यतिवीक्ष्य युगपदुत्थितवन्तस्ते प्रस्थितवन्तश्चान्तःपुरं ॥

अथाग्रतःसरेण तेन सुकुमारेण कुमारेण प्राङ्गणातः प्रतिरुद्धसङ्गमनासु शुद्धान्त[६]सङ्गताङ्गनासु प्रविष्टास्ते कंसजिदिष्टा गृहादिशोभेक्षणस्पृहातः क्षणमाविष्टाः क्रमशो भोजनालयाय कलयांवभूवुः[७] ॥

---

(१) मिलनं ।　(२) कारयामास ।　(३) अनुज्ञातः सन् ।
(४) राज्ञः ।　(५) नारायण ।　(६) अन्तः पुर ।
(७) जग्मुः ।

रामकृष्णौ तु गवालोकनसतृष्णौ तदङ्गनसङ्गत-मेर्वाकारमहागारमारुह्य महीमहित माहेयी[1] स्थानेषु पीयूषवृष्टीरिव दृष्टी विधाय विधेयै[2] विंदूरदेशान्निदेशयामासतुः । भो भो गोपगणा ! वर्त्मनः सव्यापसव्ययोरेव पातव्या गव्या[3] इति ॥

अथावतीर्णाभ्यामाभ्यामभ्यागतैरपि ।

अगुरुज-गुरुधूपः शुभ्रता रत्नपीठा-
वलिमदशनपात्रासङ्गिभृङ्गारसङ्घः[4] ।
नियत सचिवलोकः सादरप्रेमचासी-
दिति दिशि दिशि घर्म्मर्य्यं[5] भोग-हर्म्म्यं व्यलोकि ॥

अङ्घ्रि-त्तालनमार्ज्जने इह भवान् जीयादिति प्रार्थना
सम्यग्वीजनमन्तर-प्रमदसूहासप्रसूसूक्तयः ।
रुच्यानां परिवेषणं मुररिपोर्दृष्टिप्रसादामृतं
यत्रैवं सुहृदां सभोजनविधिः सूतेन किं वा सुखं ॥

तत्रानुपयुक्तयुक्त[6] भोक्तॄणां विप्राणां पंक्तिरेकत्र । सग्धि[7]-दिग्धानामसन्दिग्ध-स्निग्धानां वैश्यवंश्यानामन्यत्र तत्र तत्र च वृष्यमध्यम-नव

---

(१) धेनु ।　(२) सेवकैः ।　(३) गोसमूहाः ।
(४) स्वर्णजलपात्रसमूहः ।　(५) धर्मादपेतं ।
(६) अनवशिष्टयोग्य ।　(७) सग्धिः स्यात्सहभोजनं ।

यौवनानां पृथक् पृथगिति वियुतावपि[१] मिथो यथास्वं परिहासविलासेन संयुतिरिव वीक्ष्यते स्म । नच केवलेन तेन[२] तदवलोचनसमुन्मीलितलोचन-रोचन-विलासालाप-लीलारसवारिधे[३]र्व्रजेन्द्रकुल-सुधानिधेरसकृदनुभव-यौगपद्येन च ॥

यत्र च स[४] एव सर्वरससत्रममत्रमेकमासीत् तत्र च परस्परस्य स्फुटहासवार्त्तां सञ्चारयन्तः परितो हरौ च । षण्णां रसानां परिवेषका ये ते सप्तमस्यापि वभूवुरत्र ॥

यत्र परिहासवीजञ्च पृथग् दिग्देशलोकप्रसिद्धानामत्रैव चान्यथासिद्धानां तेमनादीनां[५] नाम नाम्नातुं[६] शक्यते नामान्तरेण वाम्नायते । सदाम्नाय[७]जन्मभिरपि वन्धुसम्वन्धिभिरित्यादि लक्षणं लक्ष्यते ॥

किञ्च, तत्र मधुमङ्गलः कौतुकेन केनचित् प्रहितेन निजहितेन श्रीमद्व्रजेशं सन्दिदेश । राजवर तदेत-

---

(१) पार्थक्येऽपि । (२) परिहासेन ।

(३) पूर्वोक्तानुभवेन उन्मीलिते विकसंती ये लोचने तयो रोचनो विलासो यत्र ता दशी या आलापलीला तत्संबंधी यो रसस्तस्य वारिधेः । (४) कृष्णः ।

(५) व्यंजनादीनां । (६) कथयितुं । (७) सम्प्रदाय ।

दस्माकं ब्राह्मणा निवेदयन्ति शौक्रनामधेयं प्रथम-मेव जन्म तावदस्मादृशां भृशशर्म्मणो चक्लृपे(१) । यद्‌द्वितीये सावित्राख्ये जन्मनि लब्धस्वकुलैश्य-वैश्यद्विजतया राजन्य(२)वद्ब्राह्मणाभोज्यपक्वान्नैरपि भवद्भिर्विदूरविभक्तपङ्क्तावेव निवेशिता वयं न प्रतीमः । तत्र किं किं परिवेषितमत्र वा किमिति । तस्माद्गोष्ठाधिपतिना स्वदृष्टिनिष्टङ्कितीकृतान्यस्म-त्कृते पुनः प्रथमतः सर्व्वाण्येव तेमनानि परिवे-ष्यन्तां यान्येव वार्षभानव्यादिस्वहस्तप्रयस्ततया(३) परमशस्तान्युत्तरतापन्यनुसारेण पूर्व्वं दुर्व्वास-सापि क्रोधदुर्व्वासनां निर्वासयता(४) प्रसाद(५)-मपि भासयता रसनयाभ्यस्तानीति(६) निखिल-मिष्टताविशिष्टतया किल वर्त्मन्येव परिवेशकैश्चोरं चोरमुर्व्वरितानि पराण्यपि दृशैव भुक्तपूर्व्वाणि सन्ति । तानि च भुक्त्वा वैष्णवयज्ञाय श्रुतिस्मृति-विहितहितप्रतीकार(७)मयं दैक्षसमाख्यं तृतीयमपि जन्म द्रुतमुरीकरिष्यत इति ॥

(१) शर्मरूपेण सम्पन्नं बभूव । (२) क्षत्रिय ।
(३ प्रयस्तं तु सुसंस्कृते । (४) दूरीकुर्वता ।
(५) प्रसादस्तु प्रसन्नता । (६) आस्वादितानि ।
(७) उपाय ।

वृदेतदाकलय्य कलितं हासकोलाहलं गोकुलकुलेश्वरी गृहाद्वकलयन्ती स्वयमनलपक्कतुलितानि सूर्य्यकान्तस्थालीषु सूर्य्यपक्कानि वहून्यनुपभुक्तचराणि विहापयामास। येन वहुलमेव सहायकुतूहलं निखिलः कलयांवभूव[१]॥

तदेवमुदरपूरणमात्रेण तृप्ता नतु तत्तद्वहलरसपूरकुतूहलेन। न तरां तत्तदानन्दमूलेन सदालुकूलपीतदुकूलेन प्रतिरुचि नवनवायमानता हि तत्रा[२]यता[३]। तथापि वलादिव परिमल-रमणीयमाचमनीयं दत्तं गत्यन्तरेणासमापनीय स्पृहयता हि तत्र वृहती॥

ततश्च॥

दिव्यताम्वूलचार्चिक्य[४]वस्त्रमाल्यविभूषणैः।
अर्च्चिता वन्धवः सर्व्वे दक्षिणाभिश्च भूसुरा॥
लक्षितायाञ्च दक्षिणायां मधुमङ्गलः सतु नर्म्म-
शर्म्मामृतमदुग्ध।
भो व्रजमहनीया! नास्यामक्षीणायामपि दक्षिणाया
मीर्ष्यया वयं वीक्षणीयाः।

(१) वभार। (२) हियतः कृष्णो। (३) दीर्घा।
(४) अङ्गराग।

भवतां भुञ्जानानामेकैक-व्यञ्जन-मूल्य-तुल्यतयाऽस्माकं समस्तापि सा[१] न प्रस्तावयति[२] ॥

तदेवं वहलहासकोलाहल-कुतूहले निवृत्ते पितरमुपेत्य सर्व्वसुखपालः श्रीलगोपालः शनैः सनिं[३] प्रणायन्[४] सविनयमाललाप । अर्व्वागेव[५] सर्वानादाय सभालयवलयं स्वयं तत्र भवन्तः समयन्तु । वयन्तु श्रीरामदामसुदामादयः समागतप्रायाः । तदेवं मातृगृहमुपेत्य तामप्युवाच, मातर्मातॄणां[६] सम्भालनार्थमनुयातॄनस्माननुमन्यस्व ॥

माता च क्षरत्क्षीरकुलकुचमुकुलमाललाप । आयुष्मन् ! युष्मदेकप्राणा वयं तस्मान्न विलम्बनीयमिति ॥

ततश्च तस्याः सवयसः प्रवयसश्च सर्व्वाः सद्भ्रशः सास्रमूचुः वत्सनाम्नैव ता मातरः । एषा तु तव मातैव तस्मादस्यां कथं न विलक्षणं पक्षपातमापातयसि[७] । स च नतवदनः सास्रस्मितवाच-

(१) दक्षिना । (२) नप्रापयति ।

(३) सनिस्तवध्येषणेत्यमरः । गुर्वादेः कश्चिदर्थप्रार्थनयानियोजनमितिक्षीरः । नियोजनं प्रस्थापनं ।

(४) कुर्वन् । (५) प्रथमं । (६) गवां । (७) रचयसि

मुवाच, मातरः किं कूर्म्म तास्तु पशुजातयो न विवेकमेकमपि लभन्ते यतो मां विना तृणमपि न तृणुवन्ति[१] ।

मातोवाच । सम्यगाह वत्सः यतो धर्म्म एवास्माकं मर्म्मभेदी बभूव । येषां धनानि तनयाश्च सदा वनानि निलयान् कुर्व्वन्ति ।

कृष्णः सस्मितमाह स्म, मातरत्र वने न कोऽपि त्रासः सतु समूलकासं कषितानां[२] केशिप्रभृतीनां सङ्गत एव गतः ।

मातोवाच । तर्हि किमाकर्ण्यते यदद्यापि किञ्चिदेषामौद्धत्यं विद्यते प्रेतानामपि[३] तत्तदाकारतया सद्यः प्रेततां[४] प्राप्तानामिव ।

कृष्णः सस्मितमाह स्म । मातर्न ते प्रेतजातितामवाप्ताः किन्तु भवच्चरणरेणुगण-गुणित[५]-भूमिमनुमरण-प्रतापवर्गादपवर्गमेवगताः वयन्तु मायामयतत्[६] प्रतिकृति[७]प्रपञ्चसञ्चयमञ्चन्तः सुखसन्तानाय मध्ये मध्ये लीलामध्यस्यामः[८] ।

---

(१) तृणुअदने । (२) समूलकं स सहितं हिंसितानमित्यर्थः ।
(३) मृतानामपि । परासुप्राप्तपञ्चत्व परेतप्रेतसंस्थिताः ।
(४) प्रेतजातिताः । (५) पुनः पुनः सेवित ।
(६) पूतनादि । (७) प्रतिमा । (८) अर्पयामः ।

यथा निलायनैः[१] सेतुबन्धैर्मर्कटोत्प्लवनादिभिः । कौशल्येयलीलां ॥

ततश्च सर्व्वासु गतसन्देहासु स्नेहातिशयात् कृष्णमाता सव्येन पाणिना पृष्ठमपसव्येन चिबुकं स्पृष्ट्वा कृष्णज्येष्ठंप्रति सवाष्पमाचष्ट । वत्स नीलाम्बर ! तवेयमम्बा मम समक्षं बाल्यादेव त्वयि नातीव वात्सल्यमुल्लासयति किन्तु स्वयमुदासीनावदासीनाभवति । तत् खलु मम तारल्यं कथमिव वैरल्याय कल्पतां । तस्मादहमेव त्वामुपदिशामि । पीताम्बरेण सममविलम्बमेवालम्बनीयं ब्रजवर्त्मेति ॥

अथ रामानुजं हितवती रोहिण्यभिहितवती । तात ! यशोदामात ![२] बाल्यादेव लाल्यभावान्मातुरुपदेशं जातु नच मन्यसे । मम तु तं न मतान्तरमातनोषि । ततः सकृदपि मम निदेशमसकृदिव मन्यस्व । मातुर्मनस्तापविस्तारान्निस्ताराय निजवदनांशुसुधां विस्तारय त्वरितमिति ॥

---

(१) तिरोधानैः ।

(२) मातुरामन्त्रणेमातजादेशः समासान्तपुत्रप्रशंसायां ।

अथ तासां चरणापाताचरणाय कृतरोचने निर्म्मलकमललोचने सर्व्वाभिरनर्व्वाचीनाभिः सह गृहं हित्वा तत् पाणिं गृहीत्वा प्राङ्गणसङ्गितां गतायां गोपपतिपतिव्रतायां सर्व्वतः श्रेयस्यस्तत् प्रेयस्यः सगवाक्ष-भित्तिभित्तीकृत(१) निजविलोकना विलोकयामासुः ॥

तथाहि ॥

औत्सुक्यं प्रियमाधुरी मधुमदं प्रेमातिपात(२)भ्रमं
विश्लेषागमभीतिमप्यनुगता लज्जातिपर्य्याकुलाः ।
गोचाराय वनाय गच्छति हरौ तस्याङ्गनानां गणा-
श्चित्राणीव निरीक्ष्य तस्थुरभितो छित्रक्षणं भित्तिषु ॥

तत्र सति ।

अच्युतस्य नयनद्वयमासां तृष्णयाप्यतिह्रिया
निमिमील ।
अस्य मानसमसूरति गूढं पश्यतीति मिलितुं
तदिवेच्छ(३) ॥

यदा च तासां स्फुरणं जगाम तन्मनस्तदाशङ्कत
तासु राधया(४) ।

---

(१ अर्द्धीकृत। (२ अतिशय।
(३ मनोमिलितुमिच्छु। (४) हेतुना।

अहो गुरुणां पुरतोविकारितां लभेय चेत् किं
करवैतरामिति ॥

तत्र मातृगणातः क्रमपूर्व्वं प्राप्य यन्[1] वकशमः
समनुज्ञां ।
अम्बका[2]न्यहरत प्रतिविम्व व्याजतः स्वतनुगान्य-
खिलानाम् ॥

अथामर दुर्लभच्छत्रचामर पटपुट ताम्बूलसम्पु-
टादिघटितकराः सवयसः कर्म्मकराः श्रीराम-
दामादिभिः सह गच्छन्तं तमन्वगच्छन् ॥

अथ ततभायां[3] परमसभायां ।
पितृमुखलोकान् स्फुरदवलोकान् ।
सुखयितु कामः सहसखि रामः
समधुरवेशः सपदि विवेश ॥
तत्तद्वृन्दैः कृतपरिवेषः[4]
त्तोणीपृष्ठस्थितविधुरेषः ।
क्रमतो दृष्टिभ्रमणाभ्रेष[5]
स्थितिकृत[6]मखिलानपि विशिशेष[7] ॥

---

(१) गच्छन् ।　　(२) नेत्राणि ।　　(३) विस्तृतदीप्त्यां ।
(४) परिवेषस्तु परिधिरुपसूर्य्यक मण्डले ।
(५) अभ्रेषन्यायकल्पास्तु ।　　(६) यथास्थास्तथा ।
(७) विशिष्टान् कृतवान् ।

रहितनिमेष प्रथितोन्मेष स्वकहृक्प्रेष प्रचितान्वेषः[१]।
अभवदशेषच्छवि सविशेष स्वतनुश्लेषः[२] श्रीहरिरेषः
तदेवं लब्धपरमानन्दमज्जनेषु सर्व्वसज्जनेषु कुल-परम्परावराचार्य्यः[३] कश्चन सूताचार्य्यः कतिचि-दात्मीयान् परिवार्य्य[४] पेशल[५] वेशौ काकपक्ष-केशौ[६] कौचिद्बालकौ पुरतः सन्धार्य्य तत्र प्राट्[७] पाठयामास च तावाशीर्वादविरुदम् । तौ[८] च चातकानामन्त-स्तडित्वन्तमिव सागराणां वारि-निधिमिव धनचिन्ताचितानां चिन्तामणिमिव ज्योतिर्मण्डलानां व्योममण्डलमिव तेषामाश्रयं तमेकं श्रीव्रजराजकुमारमालोकयामासतुः । ततश्च तौ सपरिवारमेव तं पारावाररहित-शोभावार-वारां निधिं[९] निध्याय[१०] क्षणाकतिपयमनुध्याय च स्वजनस्तम्भितपतनारम्भौ मूर्च्छाप्रायमृच्छतः स्म ।

---

(१) रहिता निर्मिषोयस्याः प्रथितउन्मेषोयस्या साचसाच यास्वकस्य स्वजनस्य हक्तस्याः कर्मभूतायायः प्रेषः प्रेषणं तेन प्रचितः अन्वेषोऽन्वेषणं यस्यसः ।

(२) अशेषाभिः छविभिः सविशेषः स्वतनुश्लेषः सद्यो गौःयस्य तथाभूतो भवत् । (३) वरणीयः ।

(४) परिवारान् कृत्वा । (५) चारौ दक्षे च पेशलः मृदौच ।

(६) काकपक्षागर्भाकेशाः । (७) आगतवान् ।

(८) सूतकुमारौ । (९) समुद्रं । (१०) दृष्ट्वा ।

तदुपरिष्टादेव कथञ्चिद्विशिष्टतामाविष्टौ सगद्गदं जगदतुः । जयाशेषचिन्तारत्ननीलरत्नाकर व्रज-धरणी धर ! जय धरणीभारावतार[१] वितीर्ण[२] धरणीधरशेषपर्य्यन्ताशेषसुखसमाज व्रजयुवराज ! जय निजवंशाग्रव्रज[३] कीर्त्तिध्वज-समान शुभ्र-धाम श्रीबलराम ! जय जयेति ॥

पुनश्च कमललोचनं विलोचयन्तावूचतुः ॥

रोहिण्युद्यद्विधुः[४] पक्ष इव कृष्णः स्वजन्मनः ।
सोऽयं यशोदानन्दः[५] सन्[६] यशोदानन्दनन्दनः ।

पुनश्च साश्चर्य्यं ॥

यशः प्रशंसन्ति बुधा सुधागिरः
सर्व्वत्र शश्वद्विशदं भवेदिति ।
अहो यशोदा यदसूत सा यश-
स्तत्कृष्णरूपं पुरतोविलोक्यतां ॥

ततः श्रीमान् व्रजराजः सुप्रलापं[७] ललाप ।
सर्व्वसूतचूड़ारत्न रत्नचूड़ ! कावेतौ सुकुमारौ कुमारौ ?

---

(१) दूरीकरण ।　(२) दत्त ।　(३) अग्रेव्रजतीति ।

(४) दृष्टांते रोहिण्यामुद्यन् विधुर्य्यत्र । दार्ष्टांतिके रोहिण्यामुद्यन् योविधुः स्वयमेव तन्नामा तद्रूपः सन् ।

(५) यशोदायआनंदस्तद्रूपः पक्षेयशोदांनंदयति ।

(६) सद्रूपः ।　(७) सुप्रलापः सुवचनं ।

रत्नचूड़ उवाच ।

सर्व्वसम्पद्विराजमान श्रीमद्व्रजराज! मम भागिनेयौ ।

व्रजराज उवाच ।

कतमायाः भगिन्या भागधेयरूपावेतौ ॥

रत्नचूड़ उवाच ।

असपत्न रत्नगर्भापते(१) रत्नवत्याः । सा चैषा भवद्-पूर्व्वपूर्व्वपुरुष-पुण्यदर्शनाय कृतपरामर्शा समागतास्ति । नमस्करोति चेयं ॥

व्रजराज उवाच । भगिनि ! भागधेयेन वर्द्धस्व ॥

रत्नचूड़ उवाच ।

देव ! मम भगिनीपतिरप्ययं सुमतिनामा ॥

व्रजराजः सस्मितमुवाच ।

बाल्येदृष्टोऽयं नातीव निष्टं किन्तु शक्यते ।

तञ्च सत्कृत्योवाच ।

मान्य ! स्वयमग्रतः समग्रमेहीति पृष्टवांश्च ।

सम्प्रति भवतां कुत्र भवनं ? ॥

स उवाच(२) । राजवीर ! नीरधि-तीरएव ॥

उपनन्द उवाच । तर्हि दूरादभ्यागतोऽयमभ्यागतः ॥

---

(१) सपत्नरहितपृथिवीपते ।

(२) सुमतिः ।

अथ वदनसुधाकरांशुसुधास्नापितदिगन्तः * स्मित-मधुराधरावृत कुन्दकोरकदन्तः श्रीकृष्णः सतृष्णमिव[१] पृष्टवान् । किं नामानावेतौ ? ॥

रत्नचूड उवाच । प्राणकोटिनिर्म्मञ्छनीयनखकोटे मधुकण्ठ स्निग्धकण्ठनामानौ ॥

कृष्ण उवाच । समान नामानौ दृश्येते ॥

रत्न चूड उवाच । सहजा[२] वेतौ सहजा[३] वेव ॥

उपनन्द उवाच । रत्नचूड़! किं खलु भवद्विधात्मनवद्यादधीतवन्तावेतौ ? ॥

रत्न चूड उवाच । अथ किं[४] आकस्मिकतया विस्मायकौ गुणविशेषावप्यनयोः स्तः ॥

उपनन्द उवाच । कौ तौ ? ॥

रत्नचूड उवाच । सर्व्वज्ञता तदविता कविता चेति । ततश्च सर्वे साश्चर्य्यं पश्यन्ति स्म ॥

व्रजराज उवाच । मान्य सुमते! कुत एतत्प्रभावभावितावेतौ ? ॥

---

* कस्मिंश्चित्पुस्तके "दिगन्त" इतिपाठोऽपि दृश्यते ।

(२) वाक्यालङ्कारे ।　　(३) सहोदरौ ।

(४) यमजौ ।　　(५) अथ किं स्यात् अनुमतौ ।

सुमतिरुवाच । विश्वपावन ! स्वच्छकीर्त्ते ! पृच्छ्येतामेतावेव ॥

व्रजराज उवाच । आयुष्मन्तौ ! युष्मद्वृत्ते नास्माकं चित्तं विस्मयमेवाविवेश तस्मादपनीयता[१] मयं[२] । तौ च साञ्जलिवचसा व्यानञ्जतुः[३] । श्रीगोलोकलोकदेव ! श्रीगुरुप्रसाद एव सर्व्वत्र दुर्वारं कारणमिति तत्र भवन्त एवानुभवन्ति ॥

व्रज उवाच । के खल्वीदृशमहामहिमानस्ते ! अथ तौ पुनर्घटितकरपुटावूचतुः । सुगृहीत[४]नामधेया मद्विधभागधेयरूपाः सर्व्वसुखवर्षि श्रीदेवर्षिचरणाः ॥

अथ सर्व्वेऽप्यूचुः । तर्हि नाश्चर्य्यमिदं ।

पुनश्च तावूचतुः । सम्प्रति च यदुपदेशाद्वृन्दावनदेशमागता वयं । नूनं यत्प्रसादादेव देववर्गदुर्गम-समधिगमस्य[५] भवाभिभव-भावनभावनस्य [६] तदेतद्भवदीयवैभवप्रदेशस्य प्रवेशे सदेशरूपतां याताः स्मः ॥

---

(१) दूरीक्रियतां । (२) विस्मयः । (३) व्यंजितवंतौ ।
(४) पूजनीय । (५) ज्ञानस्य ।
(६) भवाभिभवभाविनी भावना यस्य ।

पुनः सर्व्वे साश्चर्य्यं पश्यन्ति स्म ॥

ततश्च श्रीकृष्णाश्चिन्तितवान् । आं आं चिरान्ममाप्यनयोरागमनं स्फुरणमयमासीदिति ॥

अथ श्रीकृष्णानुमतानुगततया श्रीरामस्तु समीपमागम्य व्रजराजमुवाच । वृहत्तात ! तयोरनयोः कौतुकं द्रष्टुमुत्कण्ठताः स्म । तदनुमोद्य पुनर्व्रजराज उवाच । रत्नचूड़ाद्य दिनमारूढं । प्राघुणा[१]श्च त एते घुणाक्षरन्यायेनोपलब्धाः । तदेषामातिथेय[२]वस्तुभिरवितथमातिथ्यमेवाद्य विधीयतां । पार्श्ववर्त्तिनश्चादिष्टवान् । दीयतामेभ्यो वर्षं यावद्भोग्या वरीयसी[३] समग्रा सामग्री । सा च यथैवास्माकं तथैव प्रातरारभ्यतु सभ्याः समाहूयन्ता कौतुकावलोकनाय ॥

अथ पुरस्कृतोपनन्देषु व्रजजनवृन्देषु तत्र[४]ज्ञापितनिजानंदेषु तथा तेषु सूतेषु च कृतसर्व्वक्लेशवर्जनेषु भोज्यभोग्ययोग्यवस्तुभिः प्रस्तुतविसर्जनेषु[५] मध्याह्नः सोऽयमह्नाय[६] व्यतीत इति राज्ञे विज्ञाप्य विज्ञात सकलतत्वः श्रीमान्महासत्वः श्रीपत्तिरपि

(१) पथिकाः । (२) अतिथ्युचित (३) उत्तमा ।
(४) आह्वाने । (५) दानेषु । (६) शीघ्रं ।

श्रीरामादिसहितगतिस्तत्तन्नमनादि क्रमान्निष्क्रम्य प्रस्थितवान् ॥

तत्र च ॥

बुद्धिरेव सुहृदामनुमेने[१]
तं[२]गवानुगतये न मनस्तु ।
सा[३]हि मन्त्रसचिवं[४] सुविचारं
पाति तत्तु[५] रहितार्गलकामं ॥

अथो वनं प्रतिचलितः सहाग्रजः
समित्रकः पृथुमुरलीमनादयत् ।
यतः श्रुताद्दत पुरतस्तु तस्थुषां
सुपूर्णताभवदतिशून्यतान्यतः[६] ॥

तदा गुरुव्यवहितिमागता मुदा
परस्परं पशुपसुताः करैर्युताः ।
सभागतं जहसुरधीत्य[७] कस्यचि-
द्वचस्तदास्खलितमनूद्य[८]चापरे ॥

हासेचोपरताभासे राम उवाच। भङ्गुर! [९]मधुमङ्गल! मातृभिरस्मासु विनीयमानेषु[१०] भवान्

(१) अनुमोदितवान् । (२) श्रीकृष्णं । (३) बुद्धिः ।
(४) सहायं । (५) मनः । (६) पृष्ठतः ।
(७) स्मृत्वा । (८) अनुवादं कृत्वा ।
९ हेकुटिल । (१०) शिक्ष्यमाणेषु ।

किमविस्पष्टमाचष्ट। व्रजेश्वरि ! कथयिष्याम्यहं रह इति । किन्तु ताभिरावेशवशान्नावकलितं ॥

मधुरुच्चैर्विहस्य निमील्य च मौनमालम्ब्य क्षणादुवाच च । हन्त शान्तममपि तद्विस्मृतमिव ॥

राम उवाच । प्रियसख ! शपथं प्रथयामि तथ्यं कथ्यतां किन्तत् ॥

मधु मङ्गल उवाच । यज्ञोपवीताय शपे । नान्यथा प्रथयामि ॥

यतः ॥

दान्तेन दमितः सोऽहं शमितः शान्तचेतसा ।
ज्ञातेन ज्ञापितः पूर्णोनाचार्य्येणास्मि पूरितः ।
तेन छन्नेन[1] चाभूवं छादितानृतवाक् पुनः ।
कथं वा स्पाशितान्[2] कुर्य्यां गुणांस्तान् स्पष्टमिष्टदान् ।

किन्तु युवयोर्वधूनां चाज्ञामाज्ञाय परं विज्ञापनीयं तासु तन्न चेन्न ॥

कृष्ण उवाच । उन्मत्त ! प्रथममावयोरावेदय ॥

मधु मङ्गल उवाच । यदि न खिद्याथे ॥

उभावूचतुः । नहि नहि ॥

---

(१) गुप्तेन । (२) स्पष्टावाभने । बाधितान् ।

मधुमङ्गल उवाच । एवमुच्चैःकार[१]मपि विवच्मि तयोरनयोर्यथास्वं प्रेयसीभिः सह सा सा श्रेयसी क्रिया नाद्यापि विच्छिद्यमाना विद्यते । यन्मुहुरारभ्यत एव वनाभ्यन्तरे केलिकलहप्रलापकलाप इति ॥

ततश्च कृष्णः सव्येन पाणिना तदपसव्यं बाहुं गृहीत्वा दक्षिणांगुष्ठमध्यमाभ्यां तदधरपुटं मृदु निष्पीड्य स्मयमानउवाच । सुष्ठु घुष्ट[२]पट्टडोरकेण तदिदं सीव्यते यन्मुनितामापद्यते विकीर्ण[३]बुद्धिरयं मन्मित्रविप्रः । मधुमङ्गलस्तु तद्वन्मुद्रितमुख एवाम्बूकृतनिरस्तग्रस्त[४]वचनतया व्यक्तवान्[५] । तथा चेदन्त लोभनमन्यत्र तु दुर्लभं निजगृहान्मत्स्यण्डी[६]खण्डचयमादायाखण्डकालमेव मन्मुखं पूरयथः । ततः कथं वा किमर्थं वा वाणीव्ययं करवाणि । तदेतदपि सेवन[७]मेव भण्यते ॥

---

(१) अयुक्ताख्यायां णमुलयं ।

(२) मार्जित । (३) विक्षिप्त ।

(४) अंबूकृतं सनिष्ठेवं निरस्तं त्वरितोदितं लुप्तवर्णपदं ग्रस्तं ।

(५) व्यंजितवान् ।

(६) खंडविकृतिः मिश्रि इति प्रसिद्धिः ।

(७) सेवनं सीवनंस्यूति रिति पर्य्यायात् सेवा पक्षे सेवनंसीवनं

रामः सस्मितमुवाच ।—उत्कोच[1]श्चामिषमेव भण्यते। तदपि ब्राह्मणाः कामयेरन् । तदेवं सखि सभासत्सु हसत्सु स्वयं सतु नर्म्मपटुर्वटुः सतृष्णां कृष्णां क्षणमालिङ्ग्य प्रेङ्खोलयन्[2] प्रकटं जाहसीतिस्म ॥

अथ सर्व्वगुणशाली वनमाली वहल कुतूहलकलित चित्ततया चलितः सखिभि र्वलितः फलितशाखि[3] शाखाशिखाललितेनाध्वना धेनूर्लब्ध्वा वेणुध्वनिमुद्भावयामास ॥

ततश्च धेनूपलक्षणतया सर्व्वाणि यदाकृष्यन्त[4] तदा साश्चर्य्यं नभस्थः कश्चिदाह स्म ।

सर्व्वः प्रवाहः सर्व्वत्र स्वानुकूल्येन कर्षकः ।
वेणुध्वनिप्रवाहस्तु प्रातिकूल्येन कर्षति ॥

अनन्तरञ्च ।

गावः स्वानृषभान् भुजङ्गमभुजः
षड्जान् पिकाः पञ्चमा-
नन्ये च प्रतिपद्य[5] तान्निजनिजान्
सुष्ठु स्वरान् वेणुतः ।

---

(१) उत्कोचेन्यामिषं । आमिषंपललेलोभ्ये　(२ आंदोलयन्
(३) वृक्ष ।　(४) अकृष्यानि ।　(५) ज्ञात्वा ।

आश्चर्य्येण विकर्षणं मुहुरहो मोहं तथा भेजिरे
सर्व्वे चेदसकृत् क सान्त्वनविधिं कुर्व्वन्तु के वा तदा ॥
स्वयमपि मोहं भेजे यदि निजवेणुध्वनौ कृष्णः ।
स्यादुर्व्वारित्तः को वा जीवः सहि सर्व्वजीवस्येति ॥

किन्तु हन्त वेणुरवश्रवणसुखविस्तार एव तत्र निस्ताराय वभूव ।

यतः ।—

मोहेऽपि स्वप्रकलितं निशम्य मुरली—कलं ।
परस्परं जाग्रतस्ते पश्यन्ति स्म सविस्मयं ॥

ततश्च स्वस्थीभूतेषु तेषु समुत्थितेषु गाः प्रतिप्रस्थितेषु च मधु * मधुरस्मितमुवाच । ब्राह्मणान् प्रति दुरनुध्यान[१]स्य फलं सद्य एव जातं निध्यातं[२] । यदहो मम मूकत्वमनुध्यातं सर्व्वमध्यमध्यासीनेनैकेन[३] सर्व्वस्यैव तु मूकत्वं जातं ॥

एवमेव तेन सह हसन्तस्ते माथुरदेशदेशरूप गोनिर्देशवचनतया ॥

सम्वोधने हिहीत्यूचुः क्षेपे जिहि जिहीति तु ।
धिरीह इति विष्कम्भे[४] गां नेतुं यमुनाममी ॥

* श्रीमधुमंगलः । (१) अवज्ञा ।
(२) दृष्ट । (३) मया । (४) प्रतिबन्धे ।

चोकारं पाथसः पाने भ्किरिकारं वियोजने ।
तस्मात् पयस उत्थाने चक्रुस्तिरितिरीति ते ॥
स्तम्भयित्वाम्भसस्तीरे गोसंख्या[१] गोगणानथ ।
सम्भाल्य सम्भृता[२]नन्दाः कृतस्नानादिका जगुः ॥

प्रहापितं [३] प्रतिशिशु मातृभिस्तदा
सुभोजनं सुरभितयोजनं मुदा ।
हरिः सखीन् परि परिवेषयन् हसन्
परीक्षितं सकृदकृत स्वजिह्वया ॥

ततश्चाचरिताचामः श्रीदाम दाम सुदाम वसुदामादिभिः सह कर्पूरपूरित खपुरानुकूल स्वर्ण वर्णपर्ण शुभ्रतावकीर्णचूर्णमयताम्बूलपूर्णकपोल-लोलकुण्डलमण्डनानन - लक्ष्मीकश्चक्षुर्विजितनालीकः[४] स्वजनावलोकनाभीकः[५] श्रीलगोपालः स्वालयाय चचाल ॥

यथा ॥

शनैः शनैः सरभस[६]मन्यवन्यया[७]
स तर्णयन्[८] सुरभितृणानि सौरभं[९] ।

(१) गोपाः । (२) पूर्णा । (३) प्रेषितं । (४) कमलः ।
(५) कामयिता । उत्सुकोवा । (६) सकौतुकं ।
(७) वन्या वनसमूहं स्यात् ।
(८) चारयन् । (९) गोसमूहं ।

व्रजस्थितान् प्रतिविरहाकुलीभवन्
वकान्तकः प्रतिचलति स्म तैः सह ॥
विधाय गा गोकुलसम्मुखीना
महातरुच्छायमुपास्य कृष्णः ।
देवोपदेवस्तुतिगीतवाद्यं
शृण्वन्मुहुः प्राप तटं व्रजस्य ॥

गीर्वाणैर्दिव्ययानैः पथि पथि मुनिभि र्मंत्रयोगादिसिद्धै
र्गव्याभि(१)र्घ्राणदृग्भिस्तदनुगतनरैर्दृष्टदेशे सरद्भिः
गोष्टस्थैरुन्नतस्यैः प्रणिहित(२)वदन श्रीमयूखःसमंता-
न्नेत्राब्जप्रान्तलक्ष्मीकलित(३)सुखकुलः पूर्णवेणु(४)
र्विवेश ॥

हम्वारावः पशूनां प्रमदकलकलः
पाशुपाल्यव्रजानां
स्तोत्रासारः सुराणां निगमसमुदया-
वृत्तिघोषस्त्वृषीणां ।
इत्थं सांराविणा(५)न्तर्वधिरसमदशा-
मागते सर्व्वलोके
वेणोः सूक्ष्मोऽपि नादः स जयति नितरां
यः समस्तं भिनत्ति ॥

---

(१) गव्या गवां समूहे स्यादित्यमरः । (२) प्राप्तप्रणिहिते समे
(३) पूरित । (४) वादितवेणुः । (५) मिलित्वारवसघं ।

अथ वनकुल-गोकुलाभ्यां मिथः सुखमभिमुख-मागतयोर्म्महतां समूहयो र्म्महोदधितुल्ययोः सङ्गमः सम्वृत्तः । यथा—नित्यमेव तथानुभविनामपि दिवौकसांचमत्कृतिरजायत । यत्र श्रीगोविन्द एव स्वयमिन्दवति[१] स्म । स्वयमेवच वेणुशिक्षया धेनूः पृथक् पृथगवातस्तम्भत्[२] ॥

तत्र गोष्ठाद्वाहिर्व्विलम्भित मुहुरुपष्टम्भानां[३] दोहनादिकर्म्मणा गवां तर्णकादीनामपि शर्म्म निर्म्माय दुग्धाय जनान् पुरोविधाय सवयोभिः सवयोभिरावृतौ सर्व्वेषां मध्यवृत्तौ सुवृत्तौ गोपुर[४] माव्रजन्तौ गृहाय व्रजन्तौ स्वकुल-यशोदायि यशोदादिपुरन्ध्री[५] राजिनीराजितौ राजितौ लाजादिभिरभिवृष्टौ सममेव समस्तनयनहृष्टौ गोष्ठाभ्यन्तरं प्रविष्टौ निजनिजप्रेयसीसमाकृष्टिपटु दृष्टिविशिष्टौ निहतदनुजौ रामरामानुजौ चरण-मार्जन वीजनादिभिर्व्विशश्रमतुः ॥

तत्र क्षणकतिपयं जननीजनित-लालननिर्म्माण शर्म्मानुभूय स्नानधामनि सम्भूय निजसेवाकृज्जन

(१) इंदुवदाचरति । (२) अवष्टम्भितवान् । (३) निरुद्धानां ।
(४ पुरद्वारं । (५)पतिपुत्रदुहित्रादिमती कुटुम्बिनी पुरन्ध्रीइत्यमरः

कारित-मज्जनादिभिः सुवेशतया विभूय पुनर्जननी सनीड[१]मेवाजग्मतुः ॥

ततश्च सन्ध्यां गमयित्वा जनकादिभिः सह भोजनलीलां जनयित्वा वहिः सभाभागमागम्य नाना वन्धुजनतया समागम्य तद्विशिष्टौ सूपविष्टौ वभूवतुः ॥

यत्र नानागुणिशतेषु समागतेषु ताभ्यां सुकुमारता प्रभूताभ्यां[२] कुमारसूताभ्यां सह सुमति रत्नचूडावाववव्रजतुः ॥

ततः श्रीमता गोलोकसाम्राज्यवता भोजनादिकं पृष्टयोस्तयोः परमहृष्टयोः श्रीयुतरामानुजस्तु निजानुजवदेव तौ सूततनूजावाहूय भूयसा स्नेहेन सदेशमुपवेशयामास । निजव्रजवासिसूतादीनां प्रभूतानां भव्यानि काव्यानि तै[३]रेव श्रावयामास च। ततश्च तौ परमहृष्टौ सन्तौ स्वगुणकलापं सफलयितुं वलवदुत्कण्ठतवन्तौ ॥

अथ प्रहरमात्रायां रात्रावाचरितयात्रायां नन्दित सर्व्वसमाजेन श्रीव्रजराजेन समज्या[४]प्रधानेषु

(१) समीपं । (२) प्रचुराभ्यां । (३) निजसुतादिभिः ।
(४) जशःकीर्तिःसमज्याश्चेत्यमरः ।

प्रातर्नव्यकाव्यश्रवण-निमन्त्रणमपवर्ज्य[१] विसृज्यमानेषु तं निजजनकमनुज्ञाप्य कनकवसनः तौ सुकुमारौ सूतकुमारौ करे गृहीत्वा स्पृहान्तरं हित्वा मातृगृहान्तः सङ्गतवान्। मातरं प्रति तयोः प्रसङ्गं सङ्गमितवांश्च ॥

ततस्तु तां सर्व्वस्तुतां तौ कुमारसन्तौ सुखसारं सम्भवन्तौ विविधमेवं विचारितवन्तौ। किमियमस्य गोकुलकुलचन्द्रस्य क्षीरनीरधिगम्भीरवेला? किंवा पूर्णा तदुदयाकर राकासाकारतया लब्धमद्विधदृष्टिमेला? किम्वा प्राचीदिगेव[२]मानन्दनया रचितनया? वस्तुतस्तु तनयविषयदया किल स्फुरदेव मुदयतया शीतलीकृत लोकसमुदयेति ॥

अथ साच परमरमणीयचरिता मधुरेण व्यवहारादिनाभ्यवहारादिना वस्त्रालङ्कारादिना च प्रचुरतरमेव स्नेहं तयोराचरितवती ॥

ततश्च तयोर्मङ्गलाय मातरमाशिषश्चित्वा[३] वाससमासादनाय[४] चानुज्ञावितरं[५] याचित्वा[६]

---

(१) दत्वा ।　(२) पूर्वोक्तप्रकारेण ।

(३) गृहीत्वा । चिञोद्विकर्मत्वात्मातुः शकाशात्इत्यर्थः ।

(४) प्रापणाय ।　(५) दानं ।　(६) अत्रापिद्विकर्मकत्वं ।

स्वयमपि स्नेहावेशमय तन्निदेशवशतया विश्रमाय संवेशवेश्म प्रविशन् सर्व्वसुखसारः श्रीगोपाधिपतिकुमारस्तौ सूतसुतौ स्वेन युतौ विधाय श्रीराधिका-सदेशमाशादितौ चकार ॥

आसनौ च तौ विद्युदावलिषु तदधिदेवतामिव कमलिनीषु कमलालयामिव सर्व्वसम्पत्तिषु सदनुकम्पामिव गुणश्रेणिषु सविनयनीतिमिव हरिरतिजातिषु महाभावसम्पदमिव निखिलसखीषु श्रीराधामीक्षामासतुः ॥

अथ तां पश्यन्तांवेव प्रेमवश्यं तावात्मान मजानन्तावात्मना(१) कृष्ण एव सान्तयामास ॥ सान्त्वितौ च तौ तंच तांचनिचाय्य(२) चिन्तयामासतुः

इन्द्रनीलरुचिजीवनं महः स्वर्णवर्णनिकराकरप्रभा।
यच्च याच चयनं तयोरिदं द्वन्द्वमादिरससारकारणं ॥

इति ॥

अथ कंसरिपुणा परिचायितयोश्च तयोरेषा सकौतुकं वालदेवरयोरिव कुमारवरयोः सशर्म्म सनर्म्म च पुरस्कारं चकार ॥

---

(१) स्वयं । (२) दृष्ट्वा ।

ततः सङ्गिनः प्रदाप्य मातुलगृहमेव तौ प्रस्थाप्य श्रीगोविन्दः स्वमोहनमन्दिरं प्रविवेश संविवेश च ॥

तत्र(१) ॥

आयाते रमणे ससम्भ्रममुपागम्यासनादिक्रिया-
माचर्य्य व्यजनादिभिः स्वयमसौ सेवावधानं दधे ।
शय्यायां त्वरितं गते पुनरियं लीना सखी याचिता-
प्यासीत् क्वापि कदापि तत् परिचिता-
नास्मीति वद्व्यञ्जती ॥

तत्र सखीनां वचनं ॥

अदृष्टे दर्शनोत्कण्ठां दृष्टे तु त्वमुपह्नुतिं ।
सर्व्वदा कुर्व्वती कृष्णे कीदृशीति न लक्ष्यसे ॥

ततः सखीभ्यां सुगृहीतबाहु
र्नीतापि मध्ये गृहमायताक्षी ।
स्तम्भेन बाह्येन तथान्तरेण
कृतावलम्बा चकृषे प्रियेण ॥
बलेन कृष्टा हरिणाप्यनल्पं
तल्पं गतासीन्निमिलितुश्च लोला ।

(१) प्रायनेप्रकारमाह ।

तथापि नायादृजुता[१] न्तु किन्तु
कराकरि[२]प्राय तया[३] ससञ्ज[४] ॥
अमिलनहठक[५]द्यदा मिलद्वा
हरिमथभेद यिते[६] यमाशु केन ।
इयमपि चरितं न चित्रमस्या
यदलमसौ रस[७] रूपतामयासीत् ॥
श्रीकृष्ण कृष्णचैतन्य ससनातनरूपक ।
गोपाल रघुनाथाप्त व्रजवल्लभ पाहि माम् ॥

इति श्रीगोपालचम्पूमनु गोलोकविलास-
विकासनं द्वितीयं पूरणं ॥

श्रीगोलोकविलासः सम्पूर्णः ॥

———

(१) सरलतां । (२) करेण करेण कृत्वा युद्धं प्रवर्त्तते ।
(३ प्रचुरतया । (४) मिलितवती । (५ राधा ।
(६) भेदयिष्येते । (७) श्लेषण पारदः ।

# अथ तृतीयपूरणम् ।

श्रीकृष्ण कृष्णचैतन्य ससनातनरूपक ।
गोपाल रघुनाथाप्त व्रजवल्लभ पाहि मां ॥

तदेवं प्रशस्तशाखावलोकतः श्रीमान् गोलोकः प्रस्तुतः(१) । यत्र(२) लोकाभिव्यक्त-तदनभिव्यक्त-वैभवभेदाद्द्विधापि वृन्दावनं विभावितं । यत्र च लोकानभिव्यक्त वैभवे चिन्तामणिमय-कमलाकार गोकुलप्रकारश्चाविकलमनुकलितः(३) । यत्र(४) च सप्तप्रकोष्ठा गोष्ठाधिपतिपुरी वर्णनाभिरुरीकृता(५) । यत्र(६) च प्रातरौचितीचितकृतिप्रभृति श्रीहरिचरितं प्रचारितं । यत्र(७) च गोपराजराजितसकल-सभाजितसभायां भव्यकाव्याविज्ञसर्व्वज्ञतातिमनोज्ञप्रज्ञ - सूतवंशप्रसूतकुमारद्वयागमनमनवद्यं वर्णितं । यत्र(८) च व्रजराजादिभिस्तत्कथा शुश्रूषा प्रथयाञ्चक्र इत्यपि निगदितं । तदनन्तरमत्रतु तत्कथा वितायते ॥

---

(१) कथितः । (२) प्रस्तावे ।
(३) ज्ञापितः । (४) गोकुले । (५) विस्तारिता ।
(६) पूर्य्यां । (७) हरिचरिते । (८) सर्गान्ते ।

श्रीव्रजराजस्तस्य तु सव्यतत्तटघटितां प्रतीची[१] मुखतया श्रीनिधानं श्रेणिमाश्रित्य दत्तसुखसमाजः श्रीव्रजयुवराजस्तथापसव्यतस्तत्तटगतकुड्यसनीड़-घटितां प्राची[२] मुखतया सुखकरीमावलिमासाद्य परमहितः क्षितिसुरोत्तमसमूहसहितः पुरोहितः [३] सम्यग्विराजते स्म । तत्रावाचीकुट्टिमगताश्च केचिदाभीरवीरा विराजन्ते स्म ॥

ततश्च तयोः कुट्टिमयोर्मध्यभागश्च प्राङ्गणात् क्रमत उन्नतः स्वयन्तु विस्तीर्णतया नातिनिम्नतया च कुट्टिमस्थानां सुष्ठु दृष्टिसङ्गतः सन् विभ्राजते स्म । श्रीभ्राजं गोलोकसम्राजमभिमुखीकृत्य तयोः कुट्टिमयोर्मध्यस्थौ पुटिताग्रहस्तौ तौ सूतसूतौ तु सह सहायमुत्थानयुतौ वर्त्तेते स्म । ययोश्च सव्यापसव्यतः सर्व्वे व्रजस्थाः सूतादिषु स्फुरदर्ह-दवस्थाविशिष्टमुपविष्टा विस्तीर्णता साङ्गप्राङ्गणे तु परे शिष्टा इति श्रियते ॥

सर्व्वस्मादुच्चमाने मणिजनित महासिंहपीठे निविष्ट-सान्निविष्टः सत्प्रकीर्णादुपलालितकरै भ्रातृमध्यं प्रविष्टः

(१) पश्चिमा । (२) पूर्व । (३) शांडिल्यः ।

दृष्टिं पीयूषवृष्टिं विनिदधदसकृत् कृष्णवक्त्रे सतृष्णां
श्रीमान् गोलोकराजः ससदसि ददृशे
राजमानः प्रजाभिः ॥

श्रीशुभ्रासनतूलिकोपरिमिलत्कायाधरांशो मना-
गालम्बादुपधानचन्द्रवलयस्पेषत्तिरोवर्त्तनः ।
धिन्वन् सस्मिततया दृशा परिषदं श्रीरामदामादिमान्
श्रीकृष्णः समया[1]त्र[2] साम्प्रतमपि
प्रत्यक्षवल्लक्ष्यते ॥

तत्र[3] च तस्य वर्णादिकमेवं वर्ण्यते ।

श्यामे श्यामदशामवाप सहसा शोणेतथा शोणतां
पीते रोचिषि पीतधाम विविधे वैविध्यमागादिति ।
अङ्गोपाङ्गरुचा हरेर्जनदृशां वीथिर्गता तत्क्षणा-
न्नानारूपगतीर्नटानुपजहासेव स्मितव्यञ्जतः ॥

किञ्च ॥

चन्द्रोऽयं श्याम एष प्रथमजलधरः कान्तिभिर्विश्वदीपः
शोभन्ते विद्युतस्ता इह सपदि जहत्यात्मसत्तामसूस्तु ॥
नक्षत्राणीह लीनान्यपि वत कुमते
नो नभः सा सभासा-
वित्यन्योन्यं विनोदाद्विवदन[4]मुदभूत्तत्र शश्वत् कवीनां

(१) निकटं । (२) सभायां । (३) दर्शने । (४) विवादः ।

तत्रैव कस्यचिदन्यस्य कविता ॥

उपरि मधुकरावली तदीयं
तलमनु सस्मितनीलवारिजातं[१] ।
त[२]दनु रविसुताच्छ[३]वारिपूरः
स्फुरति सखे! किमियं सभा नवास्ति[४] ॥

अथात्मस्थाने युक्तः श्रीकृष्णरामाभ्यां प्रयुक्तः प्रसिद्धनामा श्रीदामा श्रीभाजं व्रजराजमावेद्य सद्यः पुरमध्यमासाद्य कृती श्रीव्रजराज्ञीप्रभृती बहिःकुट्टिमात् किञ्चिदुन्नतकुट्टिममनु मर्य्यादा-पर्य्यापणस्य[५] दल[६]प्राय-दलतावलनस्य गरुड़-मणि[७]कुड्यवर्य्यस्य निविष्टजननेत्राधस्तनभागं तनुप्रमाणमंशमंशमत्यतिचर्य्य स्फुटमुपर्य्युपरि घटितगात्रं लब्धसन्निकृष्टिदृष्टिविसृष्टिमात्रपात्रं श्रेणितयालङ्कृतमनेकनीरन्ध्रजालरन्ध्रजालं समया समानीय प्रतीहारं[८] सप्रतीहारं प्रणीय[९] दृग्भङ्गि-

---

(१ सभाकारं श्रीकृष्णस्यशरीरं वर्णयतिमधुकरावली कुटिल कुन्तल,मुखंनीलकमलं,यमुनाजलं तदीयमङ्गलं ।
(२) तदीयश्यामरूपं । (३) निर्मलः । (४) अनादरे ।
(५) प्रासस्य । (६) पत्र । (७) हरितमणि ।
(८) द्वारस्थाःस्थौप्रतिहारौ । (९) कृत्या ।

कलया तासामन्तःसभासक्तितामभिनीय पुनस्त-योः[१] रविप्रकृष्ट[२] एवोपविष्टः ॥

यत्र[३] श्रीमतां मित्राणां सङ्गतो मधुमङ्गलोऽपि रङ्ग इव तत्तत्प्रसङ्गेन नर्म्मभङ्गिभिः शर्म्म दातु-मङ्गीकुर्व्वन्निव निविविशे ॥

तत्र श्रीव्रजराज्ञी यथा ॥

मणिमयवरपीठे यातृ[४]मुख्यान्तराले
तनयनववधूभिः सेविताराात्प्रदेशा ।
सुतमुखविधुकान्तिं सा गवाक्षात् पिबन्ती
सुतसुचरिततृष्णाक् कृष्णमाता व्यराजीत् ॥

अथ राज्ञा व्रजस्य मधुरमाज्ञाप्यते स्म ।

अये मधुकण्ठस्निग्धकण्ठौ! वयमुत्कण्ठिताः स्मः । ततः किञ्चिदुट्टङ्क्यतां ॥

तौ च साञ्जली व्यानजतुः[५]। देव ! किं प्रक्र-मितव्यमवलम्ब्य सम्वदावहे ।

व्रजराज उवाच ॥ भवन्तौ सर्व्वज्ञाविति विज्ञाना-यास्मदीयकथाभिरेवास्मान् विस्माययेताम् ।

---

(१) रामकृष्णयोः । (२) निकटे । (३) बहिःसभायां ।
(४) भार्य्यास्तुभ्रातृवर्गस्य यातरःस्युःपरस्परं ।
(५) जगदतुः ।

तावूचतुः। यथा शिष्टिः[१] शिष्टाग्रणीचरणानां। किंतु शावयो[२]रावयोरेकतरः समाज्ञाप्यतां यथान्यतरः श्रोता भवति।

व्रजराज उवाच। दिनमेकमेकमन्तरा प्रत्येकमपि तत्तद्रूपतामाप्नोतु। प्रक्रान्ता[३] पुनर्ज्यायानेव ज्यायान्[४] विधीयते॥

ततश्च धृतोत्कण्ठः सपदि मधुकण्ठः कृताञ्जलितया नान्दीं पठन्नखिलमानन्दयति स्म॥

यथा—

श्रीमान् यो भगवान् स्वयं विजयते ब्रह्मा सुरर्षिर्महाव्यासस्तत्प्रभवः परीक्षिदपि यावुग्रश्रवःशौनकौ।
श्रीमद्भागवतप्रथाप्रणयिनस्तान् विश्वनिस्तारिणः
श्रीगोष्ठस्य महिष्ठतां प्रथयितुं कम्रा[५]न्नमस्कुर्महे॥

ततश्च॥

पश्चादल्पं तालयुग्मं गृहीत्वा
गायन्तौ द्वौ पार्श्वयोर्मड्डु[६]विज्ञौ।
श्रोता भ्राता यस्य सव्येतराग्रे
सोऽयं वक्ता सर्व्वमुच्चैर्दिधिन्वे[७]।

(१) आज्ञा। (२) पृथुकःशावकःशिशुः। (३) प्रारम्भकर्ता (४) श्रेष्ठः।
(५) कामयमानान्। (६) वाद्यविशेषः। (७) धिविप्रीणने।

इतिप्रकारे लब्धसारे पुनर्मधुकण्ठः सोत्कण्ठं गायन्नृत्यन् तत्तद्भावाभिनयं प्रणयन् कथामभ्याददे(१) यथा ॥

अथ सर्व्वश्रुतिपुराणादिकृतप्रशंसस्य वृष्णिवंशस्य वतंसः श्रीदेवमीढनामा परमगुणधामा मधुरामध्यासामास । तस्य चार्य्याणां शिरोमणेर्भार्य्याद्वयमासीत् । प्रथमा द्वितीयवर्णा, द्वितीया तु तृतीयवर्णेति । तयोश्च क्रमेण यथावदाह्वयं पुत्रद्वयं प्रथमं बभूव । शूरः पर्ज्जन्य इति ॥

तत्र शूरस्य श्रीवसुदेवादयः समुदयन्ति स्म । श्रीमान् पर्ज्जन्यस्तु मातृवद्वर्णसङ्कर(२)इति न्यायेन वैश्यतामेवाविश्य गवामेवैश्यं वश्यं चकारः । वृहद्वन एवच वासमाचचार । सचायं वाल्यादेव ब्राह्मणादर्शी(३) पूजयति मनोरथपूरं देयानि वर्षति वैष्णववेदं स्निह्यति यावद्वेदं व्यवहरति यावज्जीवं हरिमर्च्चयति स्म । तस्य मातुर्व्वंशश्च व्याप्तसर्व्व-

---

(१) आरब्धवान् । स्यादभ्यादानमुद्घातः । प्रथमप्रारंभइत्यर्थः ।
(२) युक्तः ।  (३) यावतो ब्राह्मनान् पश्यति तावदेव पूजयतीत्यादिना णमुलार्थो ज्ञेयः ।

दिशां विशां वतंसतया परं शंसनीयः आभीर-
विशेषतया सद्भिरुदीरणादेष[१] हि विशेषं भजते ॥

तथाच मनुः ।

ब्राह्मणा[२]दुग्रकन्यायामावृतो नाम जायते ।
आभीरोम्बष्टकन्यायामायोगव्यान्तु दिग्गण ॥ इति ॥
अम्बष्टस्तु विशः पुत्र्यां ब्राह्मणाज्जात उच्यते ।

इति चान्यत्र । अतः पाद्मे सृष्टिखण्डादौ ।
यज्ञं कुर्व्वता ब्रह्मणाप्याभीरपर्य्याय-गोपकन्यायाः पत्नीत्वेन स्वीकारः प्रसिद्धः । एष एव च गोपवंशः श्रीकृष्णलीलायां सम्वलनमाप्स्यतीति सृष्टि-खण्डएव तत्र स्पष्टीकृतमस्ति । तस्मात् परम-शंसनीय एवासौ वैश्यान्तःपातिमहाभीरद्विजवंश-इति ॥

अथ स्निग्धकण्ठेन चान्तश्चिन्तितं । एवमपि केचिदहो एषां द्विजतायामपिसन्देह देहयिष्यन्ति ये खलु श्रीमद्भागवते "कुरुद्विजातिसंस्कार"मिति गर्गं प्रति श्रीव्रजराजवचने "वैशास्तु वार्त्तया

---

(१) अस्य मातृवंशः । (२) शूद्राक्षत्रिययोरुग्राः ।
(३) मिलनं ।

जीवे"दित्यारभ्य: "कृषि गोरक्ष्य वाणिज्यं कुसीदं तुर्य्यमुच्यते । वार्त्ता चतुर्व्विधा तत्र वयं गोवृत्तयोऽनिश"मिति ब्रजराजं प्रति श्रीकृष्णवचने तथैवाग्न्यर्कातिथि-गो-विप्रेति श्रीशुककृत-गोपवासवर्णने व्यतिरेकतस्तु धर्म्मराजचर[1]तायामपि विदुरस्य शूद्रागर्भोद्भवतयान्यथा व्यवहारश्रवणेऽप्यधिकं वधिरायिष्यन्त इति ॥

अथ स्फुटमूचे, ततस्ततः ॥

मधुकण्ठ उवाच ॥

सच श्रीमान् पर्ज्जन्यः सौजन्यवर्य्येणार्ज्जितेन निजैश्वर्य्येणापि वैश्यान्तरसाधारण्यमतीयाय । तच्च नाश्चर्य्यम् यतः स्वाश्रितदेशपालकतामान्यतया वदान्यतया क्षीरवैभवप्लावितसर्व्वतालब्धप्राधान्यतया च पर्ज्जन्यसामान्यतामाप । यः खलु प्रह्लादः[2] श्रवसि,[3] ध्रुवः[4] प्रतिश्रुति,[5] पृथु[6]र्महिमनि भीष्मो दुर्हृदि, शङ्करः सुहृदि, स्वयम्भूर्गरिमणि, हरिस्तेजसि वभूव । यस्य च सर्व्वैरपि

(१) भूतपूर्वे चरट् ।
(२) अत्र प्रसिद्धाश्लेषेण तत्तद्योज्यं । प्रकृष्टो ह्लादो यस्य ।
(३) यशसि ।　(४) स्थिरः ।　(५) प्रतिज्ञायां ।
(६) स्थूलः ।

कृतगुणनेन[१] गुणगणेन वशिताः सहस्रसङ्ख्याभिरप्यनवसिता[२] मातामहमहावंश प्रभवाः सर्व्वथा प्रभवस्ते गोपाः सोपाध्यायाः स्वयमेव समाश्रिता वभूवुः । तत्सम्वन्धिवृन्दानि च वृन्दशः यं खलु श्रीमदुग्रसेनाग्रीययदुसंसदग्रगण्यस्ते समग्रगुणगरिमगण्यग्रगण्यमवलोकयन्तः सकलगोपलोकराजराजतासम्वलकेन[३] तिलकेन सम्भावयामासुः यस्य च प्रेयसी सकलगुणवरीयसी वरीयसीनामासीत् । यस्य च श्रीमदुपनन्दादयः पञ्चनन्दना जगदेवानन्दयामासुः । तथाच, वन्दिनस्तस्य श्लोकं[४] श्लोकता मानयन्ति ॥

अन्यस्तु जलपर्जन्यः सुखपर्जन्य एष तु ।
सदा यो धिनुते[५] सृष्टै[६]रुपनन्दादिभिर्जनं ॥
पर्जन्यः कृपवृत्तीनां[७] भुवि लक्ष्यो[८] व्यलक्ष्यत ।
तदेतन्नाद्भुतं स्थूललक्षतां[९] यदसौ गतः ॥

---

(१) अभ्यासेन । (२) अवसानप्राप्ता ।
(३) प्रापणकेन । (४) पद्ये यशसि च श्लोकः ।
(५) प्रीणयति । (६) उत्पादितैः । (७) दरिद्राणां ।
(८) आश्रयः ।
(९) स्थुर्वदान्यस्थूललक्षवानसौडा वहुप्रदे । श्लेषेण स्थूलानां लक्षरूपतां । पक्षे लक्षसंख्यात्मकानां ।

उपमान्ति च।

उपनन्दादयश्चैते पितुः पञ्चैव मूर्त्तयः
यथानन्दमयस्या[1]मी वेदान्तेषु प्रियादयः[2] ॥

उत्प्रेक्षन्ते च ॥

उपनन्दोभिनन्दश्च नन्दः सन्नन्द-नन्दनौ।
इत्याख्याः कुर्व्वता पित्रा[3] नन्दिरर्थान् सुदण्डितः ॥

तदेवं सतीषु सर्व्वसम्पत्तिषु तस्य पुत्रसम्पत्तिस्तु परमरमणीयतामवाप। नेपथ्य[4]सम्पत्तिषु वासः[5] सम्पत्तिरिव। तत्रापि मध्यमसुतसम्पत्तिः सुतरां ऐश्वर्य्याणामविच्छिन्नसम्पत्तिपङ्क्तिमनु मध्यमसम्पत्तिरिव।

अत्र केचिदर्ज्जुनमुपमानीकुर्व्वन्ति। वयन्तु तस्य मध्यसम्वध्यमानस्य सर्वानन्दनस्य श्रीमत्पर्जन्यनन्दनस्य वालकपर्य्यायेण तेन पाण्डुतनयेनोपमानं न मन्यामहे, अपिच। परमोदारेषु च सहोदरेषु तेषु न केवलं जन्मना तावन्मध्यवर्त्तितया सोऽयं वर्त्तते। अपितु स्नेहसम्पदामास्पदतयापि न च

---

(१) श्रीभगवतः। (२) प्रियमोदप्रमोदानन्दब्रह्माख्याः।
(३) क्षीरस्वामिमते निर्यकारोऽयं। टीकाकारमते सयकारश्च।
(४) आकल्पवेशौ नेपथ्यमिति। (५) वस्त्रं।

केवलं तेषां किन्तु सर्व्वेषामपि । येन[१] तस्मिन् पित्रोरप्यधिका स्नेहर्द्धिकाया वर्द्धिष्णुता भ्रातॄणामपि सदा सुखसम्वर्द्धनी वभूव, न जातु स्पर्द्धनी[२]।

नचैतावानुद्भूतः सुगुणास्तस्मिन्नद्भुतः ।

भवति हि स्वयं भगवति तस्य भक्तिविशेष व्यक्तिः।

"यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्व्वैर्गुणैस्तत्र समासते सुरा" इति हि भगवती श्रीभागवतगीर्देवी ॥

तदेतन्मधुकण्ठतः श्रुत्वा श्रीमदुपनन्दः श्रीमदभिनन्दं नीचैरुवाच ॥

विज्ञातां कथां प्रकुर्वाणस्य किमस्य परहृदयविज्ञता ॥

अथाभिनन्दस्तदवधार्य्य साश्चर्य्यं मधुकण्ठमुवाच ।

ततस्ततः ? ॥

मधुकण्ठ उवाच ॥ तदेवं सति नाम्ना सुमुखेन केनचन गोपानां मुखेन[३] तस्मै परमधन्या कन्या दत्ता या खलु स्वगुणवशीकृतस्वजना यशांसि ददाति शृण्वद्भ्यः किमुत पश्यद्भ्यः किमुततरां भक्तिमद्भ्यः। ततश्च तयोः साम्प्रतेन[४] दाम्पत्येन सर्वेषामपि सुखसम्पत्तिरजायत किमुत मातरपितरादीनां ॥

(१ स्नेहसंपद्धेतुना । (२) ईर्षा । (३) प्रधानेन । (४) योग्येन ।

तदेवमानन्दित-सर्व्वजन्यु[१]-र्विगतमन्युः[२] पर्ज्जन्यः सर्व्वतो धन्यः स्वयमपि भूयः सुखमनुभूय चाभ्यागारिकताया[३]मभ्यागतम्मन्यः[४] श्रीगोविन्दपदारविन्द-भजनमात्रान्वितां देहयात्रामभीष्टां मन्यमानः सर्व्वज्यायसे ज्यायसे स्वककुलतिलकतां[५] दातुं तिलकं दातुमिष्टवान्। श्रीवसुदेवादिनरदेव-गर्गादिभूदेव-कृतप्रभां सभां कृत्वा दत्तवांश्च ॥

स पुनः पितुराज्ञामङ्गीकृत्यकृतकृत्यस्तस्यामेव श्रीवसुदेवादि-सम्वलितमहानुभावानां सभायामाहूय सभाव[६]मुत्सङ्गसङ्गिनं विधाय मध्यममेव निजानुजं तेन तिलकेन गोकुलराजतया सभाजयामास ॥

अथ तत्रानुजे सङ्कुचति सर्व्वत्रच जने विस्मयं सचमाने[७] पितरि च रोचमान लोचने स[८]चोवाच। मयेदं नाविचारमाचरितम्। यतः सर्व्वएव स्नेहपरम्परायाः पराधीनः। सा[९]च साद्गुण्यस्य।

---

(१) जन्म ।　(२) शोकः ।　(३) कुटुम्बव्यापृततायां ।
(४) अभ्यागतमिवात्मानं मन्यमानः ।　(५) श्रेष्ठतां ।
(६) यथास्यात् ।　(७) भजति सति ।
(८) उपनन्दः ।　(९) स्नेहपरम्पराधीनता ।

तच्च सर्व्वसमञ्जसतायाः । साचात्र[१] यथा तथा न मद्विधे । सैव[२] च खलु सर्व्ववशीकारितायां स्वैरितामर्हति ॥

किञ्च ॥

सर्व्वान्तर्य्याम्यप्येनमेवोररीचरीकरीति[३] । दृश्यतामस्यां भासमानायां सभायांसर्व्वेषां नेत्रपटली-षट्पदवल्लीलायमाना केवलमस्य मुखं कमलमिव सम्वलते । तथा प्रथमतएव[४] तदानुकूल्यमत्राकल्पते[५] । परिकल्पतामपीदं मम नाम्नैव । तस्मादस्माकमयमेव राजेति ॥

अथाभवत् कुसुमजवृष्टिभिः समं
स्फुटध्वनिर्द्दिवमनु साधु साध्विति ।
सभासदामिह च विकासिदृष्टिभि-
र्यथा स्फुरज्जय-जय-शब्दमङ्गलं ॥

अथ स्निग्धकण्ठ उवाच ।

मधुरकण्ठकृतजगदुत्कण्ठ श्रीमन्मधुकण्ठ श्रीमदुपनन्दनन्दनयोस्त्रयएव मध्यमा इति कोऽयं

---

(१) नन्दे । (२) सर्वसमञ्जसा ।
(३) अतिशयेनाङ्गीकरोति ।
(४) तस्यान्तर्य्यामिनः । (५) परामृश्यते ।

मध्यमः कीदृशी वा तस्य समञ्जसतेति सौदा-
हरणमुच्यतां ? ॥

मधुकण्ठ उवाच ।

एकं तावद्व्रजन्मःप्रह्वन्नता[१]समुचितं प्रवह्लिका[२]
पद्यमिदमनवद्यं पूर्य्यतां ॥

स्निग्धकण्ठ उवाच । कामं ॥

मधुकण्ठ उवाच ॥

आकृ[illegible]पुत्रमनेन पुत्रीकृतेन भूतिं भजते सएषः ॥
इति स्वयं वेत्ति न तेन[३] मैत्रीं, भिनत्ति कोयं वदेति
स्निग्धकण्ठः सोत्कण्ठतया शीघ्रमेव सानन्दमुवाच :
नन्दएवेति ॥

मधुकण्ठ उवाच ॥

भवता ज्ञातमेवेदमिति तदेतच्छ्रूयतां ॥

स्वेनाल्पेन गुणेन वाञ्छति निजे पूजासुखे भूयसी
लोको[४] यस्तु[५] महीयसापि खलु ते-
नैवा[६]न्यदीये [७]सदा ।
सोऽयं श्रीव्रजराज एव यदसौ शूराङ्गजं[८] धिन्वितुं[९]

---

(१) हृष्टता। हृष्टो मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीत इतिपर्य्यायात्।
(२) प्रहेलिका। (३) वसुदेवेन सह। (४ अन्यः।
(५) नन्दः। (६) स्वेन गुणेनैव। (७ पूजासुखे।
(८) वसुदेवं। (९) प्रीणयितुं।

तत्तद्धानिमसोढ़ सख्यमभिनन्नाल्पश्च तस्यान्तरं ॥

ततश्च । तदेतन्मधुकण्ठसूक्तसुधाकरमासाद्य रत्नाकर इवोच्छलदन्तरङ्गस्तदन्तर्व्वहिरङ्गसभ्य-सङ्गस्तदुपरि हृदयङ्गमरत्नावलिं विकीर्णवान् हृदयावलिं वा वितीर्णवानिति स्वयमपि न भिदां विदाम्बूभुव ॥

अथ स्निग्धकण्ठ उवाच । ततस्ततः ।

मधुकण्ठ उवाच ।

ततः श्रीमानसौ धन्यःपर्ज्जन्यः श्रीगोविन्दपदार-विन्दभजनाय वृन्दावनं प्रविशन् समासत[१] एव समस्तशास्त्रसारं पृच्छतः पुत्रानुपदिदेश ॥

यथा—

किं भयमूलमदृष्टं, किं शरणं श्रीहरेर्भक्तः ।
किं प्रार्थ्यं तद्भक्तिः किं सौख्यं तत्परप्रेम ॥ इति ॥

तदेवं सहभार्य्ये वृन्दावनं गते तस्मिन्नार्य्ये श्रीमानुपनन्दः स्वनामानुरूपं श्रीमन्नन्दव्रजमहेन्द्र-सभायामयन्त्रितमन्त्रितया स्थितवान् विचित्र-वीर्य्यसभायां भीष्म इव । सोऽपि मन्त्रमिषेण

(१) संक्षेपः ।

विशेषेण तदाज्ञामेव गृह्णन् सर्व्वं सर्व्वकालं सुराजा[१] प्रजाकुलं पालयति स्म ॥

तत्र चेयं चर्य्याचरिताश्चर्य्या बभूव । यथा मर्य्यादां पितुरयमाव[२] देव सर्व्वां धर्म्मादिर्न विपदमेति यत्र चार्थः । सम्पत्तिर्न पुनरभूदमुष्य वश्या येनासौ प्रसभमवाप वृद्धिमेव ॥

तदेवं सर्व्व-समृद्धि-वृद्धि-सिद्धिमायाते राजन्वति[३] व्रजजनजाते[४] कलिकायमाना काचिदुत्-कलिका[५] क्रमेण विकासमयामास सर्व्वेषां प्राणातुल्यस्य निजकुल्यस्य राज्ञस्तस्य सन्ततिर्न जायत इति । कालात्यये चाशाव्यत्ययात् सर्व्वं जन[६]मतीव कृच्छ्र[७]मानर्च्छ[८] । अग्रजादींस्तु-सुतरां । श्रीमद्व्रजपतिजम्पती तु प्रजाशां पूर्व्वतएव सन्दिग्धदिग्धामपि कुर्व्वाते स्म । उत्तरतस्तु विशेषतः ॥

स्निग्धकण्ठ उवाच ।

कथं तत्प्रेष्ठाः[९] पुत्रेष्ट्यादिकं नानुष्ठापितवन्तः

(१) स्वतिभ्यां पूजायां समासान्तप्रत्ययाभावः ।
(२) प्राप । (३) सुराजवति । (४) समूहे ।
(५) उत्कण्ठोत्कालिके समे । (६) प्रति । (७) कष्टं ।
८ अपालयत् । (९) श्रीउपनन्दादयः ।

कथं वा विदग्धयोरपि तयोः सन्दिग्धता जाता, तथापि परमेशपरयोः कथन्तरां वा तदाशा उत्तरतस्तु विशेषतः कथन्तमां ।

मधुकण्ठ उवाच ।

अनुष्ठापितमपि तत्त[1]न्न प्रतिष्ठामाससाद ।

स्निग्धकण्ठ उवाच ।

कथं तत्, ? कथं वान्यदन्यत् ? ।

मधुकण्ठ उवाच ।

तथाहि तत्तदशेषसम्पत्योरपि दम्पत्यो रहसि सम्वादोऽयं वभूव ।

यथा श्रीमान् पतिरुवाच ।

कुटुम्बिनि ! किमलम्बी मम सन्तानाय वितानादि[2] वितानयति शोकवशोऽयं लोकः । यतो मम सङ्कल्प[3]कल्पनासमये यादृशाय सर्व्वतो विचित्राय पुत्राय चित्तं कल्पते[4]। सतु परम एवापूर्व्वः कथमपूर्व्वविषयतां प्राप्नोतु । तत् पुनरन्यत्र वचनगोचरं रचयितुं संकुचत्येव चेतोवृत्तिः । यतो यत्[5] खलु मयि दयापरायणास्य श्रुति-

(१) पुत्रेष्ट्यादिकं ।　　(२) यज्ञादि ।
(३) संकल्पःकर्ममानसं ।　　(४) संपद्यते ।　　(५) रूपं ।

पारायणफलस्य(१) श्रीनारायणस्य रूपं ततोऽपि मधुरतरं कतरद्वा भवेत् । पारिजातकुसुमादाकाश-कुसुममिव ॥

अथ—स्निग्धकण्ठस्त्वन्तश्चिन्तयामास ।

अस्य ततोऽपि मधुरतरत्वं नायुक्तं । यत एत-दुद्दिश्य श्रीभागवतपद्यं ॥

"यन्मर्त्यलीलौपयिकं(२) स्वयोग—मायाबलं दर्श-यता गृहीतं(३) । विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गमिति" ॥

अथ स्फुटं पप्रच्छ । ततस्ततः ?

मधुकण्ठ उवाच ॥

अथ श्रीमती तत्पत्नी चोवाच ।

कीदृशं रूपं तदिति कथ्यतां ? ॥

स उवाच ॥

श्यामश्चञ्चलचारुदीर्घनयनो बालस्तवाङ्क-स्थले दुग्धोगारिपयोधरे स्फुटमसौ क्रीडन्मयालोक्यते ।

---

(१) साकल्यासङ्गिवचने पारायणपरायणे इत्यमरः । आसङ्गि-वचनत्वे तु वाच्यलिङ्गमपि । यथानारायणपरायणाः । तस्माद्दयायां परायणस्यासङ्गिनः श्रुतिपाठसाकल्यफल-रूपस्य ।

(२) योग्यं । (३) प्रकाशितं ।

स्वप्नस्तत् ? किमु जागरः ? किमथवेत्येतन्न निश्चीयते
सत्यं ब्रूहि सधर्म्मिणि ! स्फुरति किं सोऽयं तवाप्यन्तरे?

सोवाच ॥

श्रीमन् ! ममापीयमेव मनोवृत्तिर्मति[१] वृत्तिमति-वर्त्तमाना वर्त्तते ॥

केवलविलज्जया तज्जातु भवन्तं न निवेदयामि तस्मादस्मादसम्भवमनोरथान्निवृत्तिशास्त्रविचार-मुपगच्छन्तौ[२] मनएव संयच्छेवहि[३] ।

स उवाच ॥

यद्यपि मयाप्येतदेव मध्ये मध्ये स्फुटमध्यवसी-यते[४] तथाप्यस्त्येकोऽवशितविश्वोद्रेको महान् सहायः श्रीमन्नारायणदेव एव शरणमिति चित्त-वृत्तिः परिवर्त्तते। योऽस्माकमदृष्टश्रुतमिदं दृष्टमिव करोति स सर्व्वं कृतपूर्व्वी तदपि कुर्वीत ॥

सोवाच ।

देव ! तस्य देवस्य कामपि सेवा योग्यामिवात्र योग्या[५]मुपलभामहे ॥

---

(१) बुद्धि
(२) अंगीकुर्वन्तौ । (३) संयतं करवाव ।
(४) निश्चीयते । (५) अभ्यासः ब्युत्पत्ति [illegible]

स उवाच ॥

बाढ़ं; किन्तु कीदृशी सा ? ।

सोवाच ।

द्वादशीव्रतरूपा ॥

स सानन्दमुवाच ॥

सङ्गतं[१] ब्रवीषि, ममाप्युत्कण्ठाऽङ्कुरितं स्फुरितमेतदेवासीत् । तस्मादद्यारभ्य समारभ्यतामेष व्रत इति ॥

तदेवं सम्प्रवदमानयोरनयोरुद्भवन् देवदुन्दुभिनादः सर्व्वमतिचक्राम ॥

अथ तयावृत्तस्वचित्तवृत्ति प्रथया[२] तत्कथया श्लथितस्वान्तः श्रीव्रजधरित्रीकान्तः कान्तनिजालङ्कारवारं सूतकुमाराय विततार । श्रीमती व्रजपतिपत्नी च महानीलमणिमयनायकं हारं विहापयामास ॥

अथ सोत्कण्ठं स्निग्धकण्ठ उवाच ॥

तर्हि किं जातं ? ॥

(१) सङ्गतं हृदयङ्गमं ।
(२) कथया वृत्ता स्वप्रथा स्वचित्तवृत्तेःप्रथा यया ।

मधुकण्ठ उवाच ॥

तेन व्रतेन पूर्णे वर्षे बृंहिते च तर्षे युगपदेव देवदेवः स्वप्ने तयोराविर्बभूव चोवाच च । अहो ! मय्यतिषक्तौ भक्तौ कथं निर्विद्य खिद्याथे ? । योऽसावतसीकुसुमसुषमः सुकुमारः कुमारः शश्वदेवानुभवतोर्भवतोः कुमारतया स्फुरति सतु सदा भवतोरेवानुगतः प्रतिकल्पं स्वभक्तिप्रवर्त्तनाय दिवि मत्प्रवर्त्तित द्रोणधरारूपांशकतावतो[1]"स्तद्भूरिभाग्य"मित्यादि रीत्या ब्रह्माद्यलभ्यसाक्षात्फलसाक्षात्काराय स्वयमेव पृथिव्यां भवतो[2]र्भवतोरेव भवं[3] लभत एव। अचिरादेव च रुचिरारुचिरेषा युवयोः सफलतां वलिताः ॥

तदेवं श्राविताभिहिते तिरोहिते च परमहिते भगवति लब्धजागरावुपलब्धामृतसागराविव च मिथस्तदेव सङ्कथयन्तौ प्रथयन्तौ च परमचमत्कार निवहं वहतः स्म ॥

अथ स्निग्धकण्ठः स्वगतं चिन्तयामास । तदेवं जातान्येव मम प्रश्नानामुत्तराणि । तत्र च भवतो-

(१) अंशिनोः । (२ जायमानयोः ।
(३) जन्म ।

रेवेति युक्तमेवोक्तं श्रीभगवता[१] "प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मज" इति वदतोप्यव्यभिचार-वचःप्रचारसर्गस्य मुनेः श्रीगर्गस्य प्रायः सोऽय-मभिप्रायः ॥

श्रीभगवता सह सम्बन्धः किल केवलप्रेमनिबन्धनः

"भक्त्याहमेकया ग्राह्य" इत्यादेः ।

अतस्तद्विशेषस्य तद्विशेष[२]एव हेतुः ।

"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह"मित्यादेः ततस्तस्मिन् वत्सतां[३] सतां वात्सल्याभिध एव प्रेमा प्रमापयति[४] ॥

तत्र श्रीवसुदेवस्य तदैश्वर्य्य-पर्य्यालोचनेन वात्सल्यस्य तारल्यं सावल्यञ्चासादितम् ॥

श्रीव्रजराजस्य पुनस्तद्वात्सल्यं शश्वदुद्बुद्धं शुद्ध-मेव च प्रसिद्धं, पितृभ्यां पुत्रतया तद्धारणा कारणां च मुनिभिर्म्मनएव मन्यते । "आविवेशां[५]श-भागेन मन आनकदुन्दुभे"रित्यादेः ।

---

(१) नारायणेन ।　　(२) सम्बन्धविशेषस्य प्रेमविशेषः ।

(३) पुत्रतां ।　(४) प्रमाणसिद्धिं करोति ।

(५) श्रीकृष्ण इतिशेषः ।

"दधार[१] सर्व्वात्मकमात्मभूतं[२] काष्ठा[३] यथानन्दकरं[४] मनस्त[५]" इत्यादेश्च ।

श्रीव्रजराजाभ्यामपि मनसा धारणं तस्य कार्य्यान्यथानुपपत्तिसिद्धेन भक्तिस्वाभाव्येनैव सम्भाव्यते तत्र च सति साम्प्रतन्तु[६] विशेषत एव साम्प्रतं[७] । परावस्थामनु[८]कृता सक्तौ हि भक्तौ तदुदयः स्यात् । तस्मात्तवैवात्मजस्तस्य वसुदेवस्य तु क्वचित् कार्य्ये निमित्ते जातः प्रादुर्भूत इति ॥

अथ प्रकटमुवाच । ततस्ततः ? ।

मधुकण्ठ उवाच ।

तदेवं परमार्त्तं रूपकण्ठतां[९] प्राप्तायामुत्कण्ठायामेकदा सर्व्वेऽनर्वाचीना व्रजवासिनः सभावाः सभायां मिलिताः । मिलित्वा च तदेवं सोत्कण्ठं सुष्ठु प्रतुष्टुवुः[१०] ॥

तदा च तत्रैका तापसी केनचन स्नातकेन सममायाता । ताञ्च महाप्रभावलक्षणां लक्षयित्वा सर्व्वे समुत्थायातिथ्यमावितथ्येन[११] विधाय

(१) श्रीदेवकीत्यर्थः । (२) परमार्थरूपं ।
(३) दिशस्तु ककुभः काष्ठाः । (४) चन्द्रः । (५) मनसा ।
(६) जन्मसमये । (७) योग्यं । (८) लक्षीकृत्य ।
(९) कण्ठसमीपतां परिपूर्णतामित्यर्थः ।
(१०) प्रस्तुतवन्तः । (११) यथार्थत्वेन ।

विज्ञापयामासुः । साक्षाद्भगवतो योगमायेव का त्वमसि ? श्रीमन्नारदस्याभिनवतनुरिवायं वा कः ? इति ॥

सा च सहासमाह स्म ।

पौर्णमासी नाम्नी कात्यायनी[1] च कुमारश्रमणा[2] च पारिकाङ्क्षिणी[3] चेक्षणिका[4] चास्मि ।

अयं च मधुमङ्गलनामा स्नातकः[5] श्रीनारदप्रकृतिः । आवाञ्च विद्याविशेषेणैतद्वयस्कावेव सदा विद्यावहे[6]

ते ऊचुः । एतावती कृपा कृपणेषु कथमस्मासु कृता ?

सोवाच । भवतां किमपि वैभवं सम्भाव्य ।

सर्व्वे ऊचुः ।

किं तत् ? ।

सोवाच ।

भवतां प्राणकन्दस्य श्रीमन्नन्दस्य जगदानन्दः स खलु नन्दनः सम्भवितेति ।

---

(१) योगमाया । पक्षे, कात्यायन्यर्द्धवृद्धा या काषायवसनाथवा।

(२) बाल्यादेव ब्रह्मचारिणी ।　　(३) तपस्विनी ।

(४) दैवज्ञा ।

(५) गुरवे च वरं दत्वा स्नायाद्वा तदनुज्ञया वेदं व्रतादिपारं वा नीत्वा ह्युभयमेव वा । स स्नातक इति स्मृतेः ।

(६) विश्रम्भवार्त्ता ।

सर्व्वे सबाष्पपुलककुलमूचुः ।

वृहद्वनमस्माकमिदं वृहत्तीर्थं भवति । तस्मादस्मभ्यं दत्तविश्रान्तिके[१] कृष्णान्तिके स्फुट[२]-मुटजं तव घटयामः ।

सोवाच ।

उपश्रुति[३]रेषा श्रुतिवेषा[४] नद्यापि न व्यभिचरिता । यतः कृष्णाया इति विवक्षितमपि कृष्णस्येति लक्षितं करोति । कृष्णनामा हि भवितासौ महाप्रभाववति यस्मिन् जातवति निर्द्दानवता पृथिव्यां भविष्यति । तदीयगुणे तु समानवता सगुणता विद्यादिप्रवन्धे तत्सम्वन्धे तु निर्गुणता[५] । सकिञ्चनता[६] विषयसम्पत्तौ तद्भक्तौ तु निष्किञ्चनतेत्यादिकं विरुद्धायमानमपि सर्व्वैरनुरुद्धं[७] करिष्यते । तस्मादस्माकमत्र स्थातुमाग्रह एव भवतामनुग्रहाय सम्पन्नः[८] ॥

---

(१) स्थाने । (२) महत् । (३) अङ्गीकारः ।
(४) श्रुतितुल्या । (५) मायागुणराहित्यं ।
(६) आढ्यता । (७) वाञ्छितं ।
(८) अनुग्रहरूपेण सम्पन्नः ।

अथ तां सर्व्वे सानन्दं वन्दमानास्तया सममिन्दीवररुचिनिन्दीहितकालिन्दीं विन्दमानाः(१) पर्णमन्दिरं पूर्णयन्तस्तत्र वासयामासुः ।

तस्मिन्नेव दिवसेऽपगतदोषे प्रदोषे समुद्भटकंसरोषेण जातचित्त-शोषेण कृतपरिदेवेन(२) वसुदेवेन प्रहिता व्रजहिता वड़वारोहिणी रोहिणी गुप्तमाजगाम । यस्यामागतायां परमपतिव्रतायां सर्व्वएव व्रजराजराज समाजः शुभशकुन(३)संकुल शकुनादिसमजेन(४) सममुल्ललास । तत्रचानन्द मोहिन्यौ श्रीयशोदारोहिण्यौ यमुनागङ्गे इव सङ्गतसङ्गे परस्परं परेभ्यश्च सुखसमूहमूहतुः(५) ॥

व्रजराजपत्नी च तस्या ज्यैष्ठमवष्टभ्य(६) मासत्रयजातमन्तर्व्वत्नीत्वं(७) पर्य्यालोच्य स्वाभदवेदनेनैव(८) शातजातं(९) प्राप ॥

अथ माघमासि चासितप्रतिपदि कृतसर्व्वसुखप्रसरजन्यां(१०) रजन्यां सा व्रजराजं सेवमाना

---

(१) प्राप्तवन्तः । (२) विलापः परिदेवना । (३) सूचक ।
(४) समजेन तिर्य्यक् समूहेन ।
(५) प्रापयामासतुः । (६) आरभ्य ।
(७) आपन्नसत्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी ।
(८) ज्ञानेन । (९) सुखसमूहं । (१०) जनिरुत्पत्तिरुद्भवः ।

तन्द्रापरतन्त्रायमाणा स्वप्नतुल्यतामाश्रितं किञ्चि-
दश्चितं ददर्श ॥

यथा स एव बालः सर्व्वतस्तदावरणकारिकया कयाचिद्दिव्य कुमारिकयात्मानं पिधाय व्रजराज-हृदयान्निजहृदयं प्रविश्य दृश्यवदेव स्थित इति । ततश्च सोऽयं स्वीयं हृदयकमलमध्यासामास ।

सेयन्तु जठरमध्यमिति ।

व्रजराजश्च निरन्तर-स्वान्तरतत्प्रवेशावेशं दुर्निर्देशं चिरमनुभूय दूयमानतां विधूय तथैवानुभूतवान् ॥

अथ स्निग्धकण्ठः स्वान्ते चिन्तयति स्म ।

सत्यमेतदत एव सद्वाणी गुणिभि[१] मुनिभि मुहुरनयोरात्मज इति मतं ॥

मया च सुविचारतस्तदेव पूर्व्वं निश्चितमाचरितमिति ।

उवाच च । ततस्ततः ? । मधुकण्ठ उवाच ॥

अथ तदारभ्य गर्भलक्षणमुपलभ्य सम्भृतभव्यानां सभ्याङ्गणागणानां गोकुलकुलपात्री[२] सुखदात्री बभूव ॥

---

(१) सद्वाणीं गुणयन्तिअभ्यस्यन्ति ये तैः

(२) व्रजेश्वरी ।

यथा ॥

मुखमापाण्डु कुचाग्रं स्फीतं जठरं दरोत्तुङ्गं ।
अभजत कर्णजपतां[1] गर्भे वृत्ते यशोदायाः ॥

यथा च ॥

व्रजराज्ञ्यां स्फुरितात्मा[2], कृष्णः स्फुरति स्म लोकेऽपि ।
दीपः स्फटिकघटीभा, गन्तर्व्वहिरपि विभाति तत्तुल्यः ॥

किन्तु—

जितरसनारसधैर्य्या[3], गाम्भीर्य्यादिप्रवीणापि ।
स्पृहितं किञ्चिन किञ्चिद, व्रजनृपगृहिणी तदा चक्रे ॥

यथा—

ऐहत[4] दोहद[5] मेषा, कृष्णावेशाविशत्तृष्णा[6] ।
तुलसी-संस्कृतघृतयुक्, ससितं[7] सितकान्ति[8]-गन्धि परमान्नं ॥

अथ योगमाया रोहिण्याः साप्तमासिकं गर्भं स्रस्तं विधाय देवकयास्तद्विधं[9] तं तस्यां[10]

---

(१) कर्णजपःसूचकःस्यात् ।

(२) विग्रहः । (३) रसना रसो जितो येन तादृशं धैर्य्यं यस्याः सा ।

(४) तृष्णांचकार ।

(५) श्रद्धालुर्दोहदवतीत्यमरः । इदं तु इच्छामात्रविशेषे तु गर्भिणी-छायाविशेषः ।

(६) कृष्णस्यावेशेन चाविशन्ती तृष्णा यस्यां । (७) सशर्करं ।

(८) कर्पूर । (९) साप्तमासिकं गर्भं । (१०) रोहिण्यां ।

नियोजयामास । ततश्च लब्धसर्व्वसमयसम्पद्दशे[१] चतुर्द्दशे मासि श्रावणातः प्राक् श्रवणार्च्चे समस्तसुखरोहिणी रोहिणीगुण[२] गुणनया[३] सुषमं[४] सितसुषमं[५] सुतं सुसाव । सान्द्रशुभ्रताविभ्राजमानतया पौर्णमासी चन्द्रमसमिव दर्शितविक्रमक्रमतया सिंहवधूः शावकमिव निर्म्मलपरिमलधारया नवकमलिनीधवलकमलमिव सर्व्वश्रवणासङ्गमङ्गलतया निरवद्यविद्यता यशस्तोममिव च ॥

किञ्च ॥

शुभ्रांशु-वक्रं तड़िदालि-लोचनं
नवाह्न-केशं शरदभ्र-विग्रहं ।
भानु-प्रभावं तमसूत रोहिणी
तत्तच्च युक्तं स हि दिव्यबालकः ॥

स एष च ॥

असितवर्ष्मा[६] सितवर्ष्मा सदनुजः सूदितदनुजः पालितधेनुको दलितधेनुकः प्रलम्बबाहुः प्रलम्ब-

---

(१) दशा अवस्था । (२) रूप । (३) अभ्यासेन ।
(४) सुन्दरं । (५) शुक्लशोभं ।
(६) अवश्च प्रमाणे: । पिन्नबन्धने । वर्ष्म देहप्रमाणयोः ।

घातयिता स्वयं रामनामा रामरमितद्विविदविदा-
रयिता च भवितेति ज्योतिर्विद्भिरुद्धावितम् ॥

अस्य जातकर्म्मादिकञ्च मर्म्मगैरेव शर्म्मान्त-
नामभि[१] र्गुप्तमेवपर्य्याप्तमकारि आनकदुन्दुभि-
मन्त्रणापरतन्त्रतया । किन्तु तत्रैकं दुःखमिवा-
सीत् ॥

यत्नः ॥

सतु जन्मत एवानुज-जन्म यावज्जड एवादृश्यत
तत्र प्रतीकारश्चैक एवासीत् । यथान्तर्धृतनिजाव-
रजं व्रजेश्वर्य्यङ्कमेव । केवलं वलमानः[२] समुल्लसि-
तवल्लक्ष्यते ॥

तदेवं दिनकतिपये लब्धव्यत्यये गर्भसन्दर्भात्[३]
स्पष्टमष्टममासि तदवरजन्मजन्मनः समारम्भः
सम्भवति स्म । यथा चाधुनापि वर्णयन्ति ॥

अष्टाविंशचतुर्युगे कलिशिरः संमर्द्य वैवस्वते
भाद्रान्तर्वहुलाष्टमीमनु विधोः पुत्रे[४] विधोरुद्गमे ॥
योगे हर्षणनाम्नि शुद्धविधिभे पूर्णः परः श्रीविधु-
र्नन्दन्नन्दवधू-मुदे स्वयमुदैदह्नाय[५] धून्वंस्तमः ॥

---

(१) ब्राह्मणैः । (२) भजमानःसन् ।
(३) गर्भस्य संयोगात् । (४) बुधवासरे । (५) शीघ्रं ।

यथा च—

तदा युगादि देवास्ते स्वस्वसम्पदुपायनं ।
आदाय कृष्णजन्मर्क्षनिशामाशु सिषेविरे ॥

यत्रहि ॥

विवभूव विना सत्यं ध्यानं त्रेतां विना मखः ।
विना द्वापरमभ्यर्च्चा हरेर्नाम कलिं विना ।
विना मधुं सप्तलादि(१) विनोष्णां पाकिमाम्रता ।
विना शरदमम्वु-श्रीः शालिस्तस्याः परं(२) विना ।
शिशिरेण विना माध्यं(३) विनाह्नाम्वुज-विस्तृतिः ।
विना ज्योतिर्विदां मत्या ग्रहाणां शुभदा स्थितिः ।
विना गुरु-प्रभावेण सर्व्वत्र स्फुरणं हरेः ।
विना सूति-प्रतीत्या च प्रसूतोऽसौ यशोदया ॥

तदिदमग्रे व्यक्तीकरिष्यते ॥

किञ्च ॥

मध्ये तारावारसारं(४) नभस्तत्
प्रान्ते सिन्धूर्द्धं ध्वनन्मेघवन्धुः ।
इत्थं वर्षाधामतर्षा(५) शरच्छ्री-
स्तस्यां तिथ्यां तथ्यमातिथ्यमाप ॥

(१) सप्तला नवमल्लिका । (२) हेमन्तं । (३) कुन्दं ।
(४) तारासमूहेन सारं शोभनं ।
(५) वर्षायां धाम्नि तर्षो यस्याः । धाम आश्रयः ।

किञ्च—

जातिभिः सह माधव्यः केतक्यः केतकैः समं ।
कुमुदान्यम्वुजैः सार्द्धं स्फुटन्ति स्मेति दिग्यदा ॥
तदा तदपि नाश्चर्य्यमाचार्य्यैः परिचीयते ।
सर्व्वाश्चर्य्य-निधिः सोऽपि जन्म-चर्य्यां यतो गतः ॥

तथाहि[१]—

एतदुत्तरं भावितद्विलोकानां लोकानां भाविभानं[२]॥ मुखमस्य लसितस्मिता सितकमलानामधिपमिव विलोकयते ।

नेत्र-युगलं सूक्ष्मभ्रमरचित्रकैरवान्तःपत्राणां[३] । घ्राणं नीलनीरदच्छविलब्धकील[४]तिलप्रसूनानां । ओष्ठाधरं सिन्दूरगिरि-जनि[५]जवा-वन्धूक-विम्व-गोष्ठीनां । कर्ण-द्वन्द्वमञ्जनभूमिजश्यामलता-पोतानां । करप्रान्तताकान्तभुज-युगलं सनवपल्लवनवतमाल-शाखानाम् । श्रीवत्ससिन्धुवत्सा[६]ख्यलेखासहित-वत्सं[७] धृतदक्षिणावर्त्त-द्युतिविशेषकृतस्थिरविद्यु-दाश्लेषमेघखण्डानामिति ॥

---

(१) सर्वाश्चर्यत्वं ।	(२) प्रतीतं ।
(३) सर्वत्र षष्ठ्यन्तपदानां अधिपमिव विलोकयत इतिपूर्वेनान्वयः ।
(४) प्रतिवन्धक ।	(५) जन्म ।	(६) लक्ष्मी ।
(७) वक्षः ।

किञ्च ॥

मुखेन महापद्मं विजेता, नयनाभ्यां पद्मं, नासिकया मकरं, स्मितेन कुन्दं, कण्ठेन शङ्खं, चरणयोः पृष्ठाभ्यां कच्छपं, रुचा नीलं, सर्व्वैरेवच सर्व्वेषां खर्व्वं[१]; किं वहुना? स्वेन मुकुन्द[२]मपीति युगपदत्र तत्तदवसर[३]-लभ्यावसर[४]-प्रसवादीनां[५] तथा दुर्लभसन्निधीनां[६] निधीनामपि सन्निपतनं[७] नासम्भाव्यम् ॥

अथ तस्य जन्मनि कोऽपि विशेषः ॥

यथा—

तदा तत्र मायामिलद्बाल्यकाया,
तदीयानुकूल्यं कृपामात्रमूल्यम्
सदा कुर्व्वती तं समस्तानतीतं,
विधायाग्रजातं स्वयं प्राप जातम्[८] । ॥

अथ स्निग्धकण्ठेन भावितं सप्रमाणं खल्विदं । "अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजे"ति श्रीभागवतादेव । तच्च[९] "नन्दस्त्वात्मज उत्पन्ने-

(१) संख्याविशेषं । (२) नारायणं निधिविशेषं च ।
(३) समय । (४) प्रस्तावःस्यादवसरः ।
(५) पुष्पादीनां । (६) निकटस्थितीनां । (७) मिलनं ।
(८) जन्म । (९) अनुजातत्वं ।

जाताह्लादो महामनाः" इत्यादिष्वात्मजपदैः स्थापनाव्यपदेशतः(१) सदेश(२)रूपमेव निरूप्यते किन्तु तदिदमप्रच्छन्नं विविच्य पृच्छामः, यथेह सन्देहः सर्व्वेषामपि शाम्यति स्पष्टमप्याचष्ट ॥

अहो आर्य्य ! तर्हि कथं वसुदेव-देवकी-पुत्रतया सोऽयमवधार्य्यते ? ॥

तदीदृग्वचसि सति स्निग्धकण्ठे वचसि किञ्चित् कुण्ठेन मधुकण्ठेन मनसि भावितं श्रीमता देवर्षिणेदमावां प्रत्यतिहर्षेणादिष्टं, यदि कदाचित्कृमति महाप्रेमवति व्रजे कृतव्रजनयोः कथा-योगो भवतोः सम्भाव्यते । तदा श्रीकृष्णदेवस्य सर्व्वतो वर्य्यमैश्वर्य्यं गोपनीयमित्यतो मुनिवर्ग-प्रसिद्धगर्ग-सिद्धान्तमेवालम्ब्य सम्वदिष्यावहे । स चामीभिः श्रुत एवेति नाश्चर्य्याय पर्य्यवसिष्यतीति ॥

प्रकटञ्चोवाच ॥

अत्र खल्विदमस्य श्रीव्रजराजतनूजस्य रहस्य-मुद्रावयतो मम समतिक्रमः स्वयममुनैव(३) वाढं सोढव्यः ॥

---

(१) कथनतः ।　　(२) सन्याय ।

(३) देवर्षिणैव ।

तथाहि । अस्मिन् सर्व्वतो लब्धातिरेका संसिद्धिः[१] खल्वेका वर्त्तते । यदतिक्रान्तसर्व्वेह[२] स्नेहमय हृदय एव सदा वर्त्तमानः स्निग्धता-दिग्धजनानां भाव-मुद्रया परोक्षं कृतयापि स्वहृदि प्रतिविम्बित-तया मुद्रितो भवति[३] । अस्य स्वरूपेणाविर्भा-वश्च स्नेहमयस्फूर्त्तिपूर्त्तिवशीभावत एव सर्व्वथा नत्वन्यथा । पुत्रतयाविर्भावे च वीजं पितृभाव-मयस्नेह एव नान्येषामिवान्यत् । जाते च कुत्र-चित् पुत्रतयाविर्भावे तत्तत्सम्वन्धमय स्नेहकृत-चयस्फूर्त्ति[४]रेव तथा[५] तथाविर्भावे निवन्धनं भवति ॥

तदेवं स्थिते सर्व्वतः समुद्बुद्धशुद्धपित्रादिभाव-विचित्राणां व्रजनृपतिप्रभृतीनां भृतिभुक्[६]पर्य्य-न्तानां व्रजजनानां येषामधिमध्यं प्रति द्विपरार्द्धं प्रतिकल्पमाविर्भवति वृद्धिजीविका[७]जीविकाना-

(१) स्वभावः ।
(२) अतिक्रांता सर्वा ईहा अभिलाषा येन । इच्छाकांक्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः ।
(३) आवृतो भवति व्याप्तो भवतीत्यर्थः ।
(४) कृतचयश्चयनं यस्यां तादृशी या स्फूर्त्तिः ।
(५) भ्रातृपुत्रभागिनेयादि ।　　(६) दास ।
(७) कुसीदं वृद्धिजीविका ।

मिव तेषामेव प्रेमसञ्चयपर्य्युदञ्चन[१]प्रपञ्च-मञ्चं[२]स्तद्वृद्धेरपरिच्छेद्यताबुद्ध्या प्रतिदातुमध्य-वसायं मुञ्चन् सदा पुत्रादितया स एष विराजते नान्ये[३] तु तत्र[४] किलतिलमप्यवकाश-कालं लभन्ते।

एतदेवोक्तं ब्रह्मणा।

"एषां घोषनिवासिनामुत भवान् किं देव! राते" त्यादिना एतदेव च श्रीनारायणदेवेन समादिष्टम् "योऽसावतसीकुसुम - सुषमसुकुमारः कुमार" इत्यादिना॥

ततश्च॥

तस्मान्नन्दात्मजोऽयं ते नारायण-समो गुणैः।
श्रिया कीर्त्त्यानुभावेन गोपायस्व समाहित"

इति गर्ग-वचनानुसारेणेदमुत्प्रेक्षामहे। एतद्रूप-स्वपुत्र-मात्रपर्य्याप्तसर्व्वस्वार्थेन श्रीमद्व्रज-महेन्द्रेण महीय्यमानस्य[५] यस्य महाभगवतो या योग-मायाख्या दुर्घटघटनी स्वरूपशक्तिः। शास्त्रेण व्यक्तीक्रियते, तेन[६] किल दत्ता सा तत्पुत्रे श्रीकृष्ण

---

(१) स्यादृशां पर्य्युदञ्चनं। (२) विस्तारं प्राप्नुवन्। (३) जनाः। (४) कृष्णे। (५) पूज्यमानस्य। (६) महाभगवता।

एव पर्य्यवस्यति स्म । सा चेह स्वजन-स्नेहनिक्षिप्त (१)चित्तस्य यद्यप्यस्य तत्पुत्रस्य प्रायो वधानं न प्राप्नोति तथापि तस्मा(२)दन्यस्माच्च परोक्षमनुक्षणामनुगतिं लीलासाहायकं च प्रपञ्चयति(३) यथा च योगमाया तथा तदनुगता मायादयोऽपीति । यद्यप्येवं तथापि त्वत्प्रत्तशक्तिमेनं त्वमेव निज-श्रीप्रभृतिशक्तिभिर्गोपायस्वेति गर्गो व्यञ्जितवान् । तदेवं सति "बहूनि सन्ति रूपाणि नामानि च सुतस्य ते" इत्यपि तदुक्तिरुद्रिक्ती(४)स्यात् ॥

यतः स्वस्निग्धजन-भजनरसावेशितावशतया या खल्विच्छा नित्यानित्या वास्य प्रादुर्भवति साच साच यदृच्छयैव सिद्धिमृच्छति ॥

ततो द्विभुजतया सदा विराजमानस्य श्रीमद्-व्रजराजात्मजस्य खल्वस्य स्वस्निग्धजनभावस्वभाव-विशेषविनोदमनुमोदमानस्य तद्भाव(५)रूपानुरूपं रूपं यदृच्छावशादेकधानेकधा च समीपतोऽसमीपतोऽप्याविर्भवति तिरोभवति च ॥

---

(१) अर्पित । (२) श्रीकृष्णात् । (३) विस्तारयति ।
(४) अतिशयेन युक्तं ।
(५) स्वस्निग्धजनभाव ।

ततः श्रीवसुदेवदेवकयोरन्तर्थच्चतुर्भुजमस्य रूपं स्फुरति स्म तदेव हि वहिराविर्भवति स्म । "फलेन फलकारणमनुमीयत" इति न्यायेन । तेनैव च न्यायेन श्रीव्रजेश्वरयोस्तु परं द्विभुजमूर्त्तितया स्फूर्त्तिरासीत् । ततः "प्रागयं वसुदेवस्य क्वचिज्जात स्तवात्मज" इति धृततपोवर्गस्य गर्गस्य वचनमनुसृत्य परामृश्यते । यदा नृशंस-कंसभिया स्वाविर्भूतचतुर्भुजरूपाच्छादनपूर्वकद्विभुजरूपाविर्भावनाय श्रीदेवकीच्छा जाता तदा तस्य यद्पूर्व्वं द्विभुजरूपं पूर्वं मायया सह श्रीयशोदायाः स्वान्तरमायातं तदेव[१] तत्र सन्निधानमवाप्य[२] चतुर्भुजं रूपमन्तर्भाव्य स्वयमाविर्वभूव । यत्र साकारतया मातृगर्भस्थितापि माया निराकारतया तूर्द्धगत्या तद्वाहनतामागता । गन्धवाह[३]श्रेणी नीलकमलदलमिव तत्र सर्व्वालक्षिततया त[४]त्प्रापितवती तदाकर्षणा घर्षणा परं मातरमपि मोहेन म्लापितवती ॥

(१) कर्तुं ।　　(२) प्राप्य ।
(३) गन्धवाहानिलाशुगाः ।
(४) वाहनत्वं ।

अथ पुनस्तेन गर्भस्थेनाकारेण मातुः प्रसूति-श्रमञ्च सम्प्रथय्य वहिरात्मानं सम्वलय्य प्रसूति-शय्यामेवाधिशय्य स्थितवती। या खलु श्रीदेवकीतः श्रीरोहिण्यां सङ्कर्षण-संक्रमणोऽपि तथा प्रक्रमते स्मेति ॥

अत्र च स्निग्धकण्ठेनान्तश्चिन्तितम् । सत्यमिद-मेवाह स्म नूनं । "अथाहमंशभागेने"ति हि मायां प्रति श्रीभगवद्वाक्यम् । अंशेन "कार्य्यार्थे सम्भ-विष्यतीति" च देवान् प्रति ब्रह्मवचनं तत्रांश-भागेन चतुर्भुजरूपेणाकारभेदेनेति भगवदभिप्रायः कार्य्यार्थे तत्तन्मोहनायांऽशेन सम्भविष्यति श्री-कृष्णस्य द्विभुजरूपेणाकारभेदेन सह मिलिष्यति सेति ब्रह्मणोऽभिप्रायः । तदेवमेव हि व्याख्या-तमन्यत्र श्रीभागवत-तत्वविद्भिः । "अवतीर्णौ जगत्यर्थे स्वांशेन वलकेशवा" वित्यत्र स्वांशेन मूर्त्तिभेदेनेति ॥

अपिच श्रीव्रजेश्वरसम्वन्धनिवन्धना या कृष्णे योगमायाभिव्यक्तिरुक्ता सा सिद्धान्ततोऽपि सिद्धता-मासीदति । भगवतः खलु प्रियजनेच्छामेवानु-गच्छति सर्व्वशक्तिव्यक्तिर्नतु यदृच्छामिति ॥

अथ सर्व्वे साश्चर्य्यमूचुः । भवतु नाम तत्तत् किन्तु ततः किमनन्तरं जातम् ॥

मधुकण्ठ उवाच ॥

अनन्तरन्तु चतुर्भुजताविर्भावानुरूपयतः प्रव्यक्त-योगमायस्य तस्य प्रागुपदेशतः श्रीवसुदेवः सर्व्वत्र मायिकशायिकायां[1] जातायां पूर्व्वदेव-भिया[2] द्विभुजमत्रकीयं बालकमत्रानीय तया बालिकया विनिमितवान् । सोऽयन्तु तेनेश्वरताप्रत्यायकेन-चतुर्भुजरूपेणोपदेशेन च न तत्रजातकतां व्यञ्जित-वानिति पुत्रतां सन्देहितवानत्र तु द्विभुजरूपेण-वचनादिशक्त्यभिव्यक्तेरभावेन च ता[3]मेव व्यज्य पुत्रतामेव निर्देहितवान् श्रीमानानकदुन्दुभिस्तु तदिदं सर्व्वं नानुसन्दधाविति ॥

स्निग्धकण्ठ उवाच ॥

नानुसन्दधातु नाम । तथापि, यां तनयामत्र-कीयामपमाय[4] स्वयमपनिनाय तस्याः प्रति-दानस्यापि सद्भावाभावात् कथमिव न्यस्ते[5]ष्व-

(१) मायाकृतशयने ।
(२) असुरभिया । पूर्वदेवाःसुरद्विषइत्यमरः ।
(३) जातकतां । (४) परिवर्त्य ।
(५) न्यस्त निमृष्टे ।

स्मिन्नात्मीयतां प्रत्यपद्यत । आगमादावपि यस्य नन्दनन्दन-नन्दात्मज-नन्दज-नन्दतनय-वल्लवीनन्द-नादि-नामानि तत्तदभीष्टप्रदतया निर्दिष्टानीति ॥

पुनः सहासमाह स्म ॥

यस्य नन्दनन्दन इति नाम विपरीततया पठतापि क्रमपरीततयाऽनुभूयते । तस्मादेवमप्य-स्मन्नृपतेरेव पूर्वव्यञ्जितं समञ्जसतासञ्जन(१)-मञ्जसा तस्य(२) लभ्यत्वायो(३)पलभ्यत इति ॥

हसित्वा पुनरुवाच ॥

अथ स व्रजदेवसुतस्य वसुदेवस्यागमनप्रकार-स्तुवर्ण्यतां ॥

मधुकण्ठ उवाच ॥

अद्भुतो बन्धो व्यदालीदशयिषत जना
द्वाररोधा विदीर्णाः
शेषश्छत्रं बभूव द्युमणिजनि-नदी प्राप केदार-भावं ।
आगोपाधीशगेहं वृति(४) रहितमभूद्गोकुलं कृष्णवाहं
प्राप्य श्रीशूरपुत्रं यदिह तदखिलं
कस्य किं ब्रूहि तत्तु ॥

---

(१) आसञ्जनमाशक्तिः । (२) वसुदेवस्य ।
(३) योग्यत्वाय । (४) आवरणं ।

स्निग्धकण्ठ उवाच ॥

तदखिलं गोपराजस्य भाग्यमिति ॥

तद्देवं लब्धप्रथायां कथायां ॥

तयो[१]र्मायाजालप्रथनतुलया सङ्कथनया
हरेः सा सा लीला नयनमिव याता किल यदा ।
तदा वाष्पस्तम्भप्रलयमुखभावाः प्रतिपदं
वभूवुर्ये वा ते कति कति च वर्ण्या व्रजसदां॥

अथ स्निग्धकण्ठ पुनरुवाच । ततस्ततः ? ॥

मधुकण्ठश्च सार्द्रदृष्टिनिसृष्ट[२] सुखसमाजतया व्याजहार ॥

ततश्च ॥

तं रत्ननिधायं[३] निधाय गते श्रीवसुदेवे कारणाभावात् प्रचलायित[४]ताप्रचय[५] दोहं मोहमपहृत्य च गतायां मायायां श्रीव्रजराजजाया पुनः सम्भूतं[६] सुतं साक्षादेव ददर्श ।

यथा विष्णुपुराणे ॥

ददृशे च प्रबुद्धा सा यशोदा जातमात्मजम् ।
नीलोत्पलदलश्यामं ततोऽत्यर्थं मुदं ययौ ॥ इति ॥

---

(१) कथकयोः ।  (२ निक्षिप्त ।  (३ रत्नमिवनिधायेत्यर्थः
(४) घूर्णितःप्रचलायितः ।  (५) समूहः ।  (६) मिलितं ।

यथा च ॥

बालं दिव्यातिदिव्यासितमणि-वपुषं चन्द्रजिच्चन्द्रवक्त्रं
लोकातीताब्ज-नेत्रं द्युतरु[१]-नव-दलोल्लङ्घिशोभाङ्घ्रि
पाणिं ।
किञ्चिच्चञ्चत्करादिप्रदिममधुरितक्रन्दनाद्विश्वमोहं
पश्यन्ती गोपराज्ञी तनुजममनुत स्वं तदा चित्रकल्पं ॥
साम्राज्यं श्यामभासां निधिरपि तदितं
रूपरत्नाकराणां
भाग्यं लावण्यभाजां विलसितनिगम[२]
स्तत्तदङ्गावलीनां ।
एवं मीमांसमाना व्रजपतिदयिता
यावदास्ते स्म तावत्
क्रन्दन्नोमोमितीत्थं नवशिशुरसकौ
तद्ध्रुवं स्वीचकार ॥
दृष्ट्वा पुत्रमसौ व्रजेशगृहिणी सद्यःप्रजातं सखी-
राहूता न शशाक कर्त्तुमपि चेदास्तां परं चेष्टितं ।
अस्रैरावृतमक्षिकण्ठमथ यत्[३]स्तब्धश्च तस्या वपु-
स्तस्मिन् लालनलालसावशतया चात्मात्मना व्याप्रितः ।

(१) द्युतरु कल्पवृक्षः । (२ परिपाकनिश्चयः ।
(३) यस्मात् ।

किञ्च ॥

यदा माया गता तर्हि व्रजे मोहं जहौ जनः ।
कदा यदा ह्याविरासीत्तत्र श्रीपुरुषोत्तमः ॥
तदा व्यवहितानामप्येष[१] प्राकाशयन्मनः ।
कुमुद्वतीनां सुमनोगणां वा[२] शीतदीधितिः ॥
स्फुरति स्म परं मातुः शय्यायां न स वालकः ।
स्निग्धानामपि चित्तेषु स्वच्छेषु प्रतिविम्ववत् ॥
स्फुरति स्म यदा वालस्तासां व्यवहितोऽपि सः ।
तं द्रुतं तास्तदा जग्मुः सारङ्ग्यो वा[३] घनागमं ॥
रोहिण्यादिभिरेताभिः सममालोकि वालकः ।
उदयत्पूर्णचन्द्रो वा चकोरीभिः समन्ततः ।
स्तम्भेऽपि स्मेरनेत्राभ्यां पश्यन्तीं सुतमेव तां ।
प्रतिकार्य्यं विचार्य्यामूः पर्य्यालोचन्त तं ततः ।
ता एता मनसा दृशा कलित[४]मप्यत्रासितं वालकं
सन्देहास्पदतामनैषु[५]रसकृद्यत्नन्तु योग्यं मतं ।
यद्वस्तु प्रथितं[६] सुदुर्लभतया तद्दैवतो लभ्यतां
किन्त्वेतत् प्रथमं प्रतीतिपदवीं नात्मन्यलं यच्छति ॥

---

(१) कृष्णः ।　(२) इव ।　(३) इव ।　(४) दृष्टं ।
(५) प्रापयामासुः ।　(६) प्रसिद्धं ।

तद्यथा ॥

नव्येन्दीवरमान्यमस्ति किमिदं? किं शक्रनीलं महत्?
किं वैदूर्य्यमहो! तदेतदतुलं ज्ञातुं न यच्छक्यते ।
पश्यामः किल[१] वालकस्य तु तनुं सर्व्वेन्द्रियाणां कृतिं
रुन्धाना खलु या[२] तनोति नयनद्वन्दस्य निर्द्वन्दतां ॥

तत्र च ॥

निर्म्मितं किल मृगमदसौरभतमालदलसारेण, अभ्यक्तं किल निखिलविलम्बक-लावण्येन, उद्वर्त्तितं किल निजदेहतेजसा, स्नातं किल निजमुखनिर्य्य[३]त्कान्तिसुधया, अनुलिप्तं किल जननीदृष्टिकर्पूरलब्धसंघृष्टिभद्रश्रिया[४] भूषितं किल सहजशुभतारूषितनिजाकारेणेति[५] सद्योजातं तदपत्यं वितर्क्य मिथःकृतसमागमाः सर्व्वाः पुनस्तं वालं लभ्यतमालपत्रभोगमृगभेद-मृगमदसारपङ्कमिव कोमलाङ्गं निजकरचूर्णित-तम इव चूर्णकुन्तलं वहन्मुखविधुविम्वमीक्षन्तं सर्व्वमनांस्याक्रष्टुमिव करौ मुष्टीकुर्व्वन्तं तरणिजा-

(१) वितर्के । (२) तनुः । (३) निर्गच्छत् ।
(४) पक्षे भद्रश्रीश्चन्दनोऽस्त्रियाम् ।
(५) इत्यनेन प्रकारेण ।

निजाङ्गुरु[1]तरङ्गमिव करचरणकमलं चालयन्तं विलोकयामासुः ॥

तदेवं विलोक्य च ।

सर्व्वास्ताः कलकलमेव मोदयुक्ताः
कुर्व्वत्यः पर[2]मविदुर्न तत्र कृत्यं ।
एका तु द्रुतमथ सुष्ठुधीरचित्ता
तं कम्प्रे करयुगले दधत्यपश्यत् ॥

ततश्च । पुमपत्यचिह्नमह्नायावगत्य तासां प्रत्येकमपिसमीहितं ॥

यथा ॥

अहो शिरसि धारये नयनयोर्मुहुः स्पर्शये
हृदि प्रचुरमर्पये हृदय-मध्यमावेशये ।
इदं विविधभावनं भृशमतीत्य वीचिक्षिषा[3]
बलाद्धरदृशां दृशां विषयतामनैषीदमुं ॥

तत्रच ।

मुहुरहो तनयं नयनं गतं,
प्रमदतः प्रणयन्त्यपि[4]नातृपत् ।

---

(१) लघु । (२) अन्यं ।
(३) वीक्षितुमिच्छा । (४) कुर्वत्यपि ।

घन-रुचिर्जननी-स्तन-युग्म-जा-
ममृत-वृष्टिमधादपि दृष्टिजां ॥

ततश्चात्यर्व्वागर्हशिशुस्नपनादिपर्व्वानुसन्धानतः सर्व्वासां सावधानताविधाने जाते ॥

रोहिण्याज्ञामनु पतिसुतश्रेयसी[१] वृद्धविप्रा-
वृत्तं विज्ञापयितुमतुलानन्दमेति स्म नन्दं ।
वक्षोल्लासात् पलितवलनादम्बराच्छुभ्रधामा[२]
धाम्नां[३] ह्रासप्रथितितुलिता या जवान्निर्जगाम ॥

अथ तदेतत्पर्य्यन्ते वृत्ते जाततत्तद्भावसम्पदः सभासदः प्रतिकृताञ्जलितया स्थितयोर्मधुकण्ठस्निग्धकण्ठयोर्मधुकण्ठः प्राह स्म ॥

व्रजेन्द्र ! सोऽयं पुत्रस्ते सदः[४]साद्भुतसम्पदः ।
जन्ममात्राज्जनश्रेण्या नन्दन-श्रेणि-जन्मदः ॥

ततश्च तौ निजोपकण्ठमनु व्रजराज आजुहाव । आगतयोश्च तयोः शिरसि करसरोरुहमाधाय निजालङ्कारैरलञ्चकार । सर्व्वेश्च तत्सम्प्रदायं वहु-सम्प्रदाने सम्प्रदान[५]मकरोत् । उवाच च, अद्य वासः समासाद्यतां भोजनाद्यर्थमिति । सर्व्वान्

(१) पतिसुताभ्यां श्रेष्ठा ।　(२) अम्बराद्धेतोः शुभ्रा कान्तिर्यस्याः ।
(३ गृहाणां ।　(४) इदानीं ।　(५) दानपात्रं ।

प्रति चोवाच । पुनरेवं प्रातः प्रातरायातव्यमिति ॥

अथ गोसम्भालनार्थं पितरमनुज्ञां समभ्यर्थ्य मातरञ्च वन्यभोजनप्रस्थापनं प्रार्थ्य सूतकुमारयोश्चात्मसङ्गमनं समर्थ्य कृतव्राजे व्रजयुवराजे सर्व्वे यथा स्वमावासं ययुः ॥

इति श्रीगोपालचम्पूमनु कृतपूरणव्रजवर्त्तितृष्णश्रीकृष्णजन्मसम्पन्मयं[१] नाम तृतीयं पूरणम् ॥

---

(१) कृतपूरणा व्रजवर्त्तितृष्णा यत्र तादृशी या कृष्णजन्मसम्पत्तिस्तन्मयं ।

# अथ चतुर्थं पूरणम् ।

अथ पूर्व्वेद्युर्मधुकण्ठः कृती[1] यथाऽचीकृतत्[2] एवमपरेद्युश्च व्रजदेवसभायां भासमानायां स्वावसरनिदिग्धः[3] स्निग्धकण्ठस्तत्कीर्त्तिमचिकीर्त्तत् ॥

मधुकण्ठ सोत्कण्ठः पप्रच्छ ॥

यथा—

मधुकण्ठ उवाच ॥

प्राग् यद्वश्चरितं हरेररसयद्वागिन्द्रियं तद्वद-
प्यद्यास्वादयितुं ममेच्छतितरामुद्यम्य कर्णद्वयं ।
यद्यप्येकक[4] एव भोक्तृपदभाग् जीव[5]स्तथापि प्रति-
स्वं चक्षुःप्रभृतीनि तानि च मुहुर्व्वाञ्छन्ति भोगप्रथां

तथाच—स्निग्धकण्ठ उवाच ।

अथानन्दसमृद्धा सा वृद्धा गोदोहनार्थं गोस्थानमध्यवस्थितान् मध्यस्थितश्रीमन्नन्दोपनन्दादीन् विन्दति स्म ॥

---

(१) कृती कुशल इत्यपि । (२) कीर्त्तयामास ।
(३) निदिग्धोपचिते ।
(४) एकाकी त्वेक एककः । (५) आत्मा ।

तत्र च ॥

अस्तव्यस्तगतिः प्रमोद-मधुरा पश्यन्त्यमून[१] अतः
किञ्चिद्वक्तुमिवोद्यदास्यवलना दीर्घायिताल्पाक्षितिः ।
हस्तन्यस्तफलादिरेव[२]मपि सा पुत्रोद्भवं व्यञ्जती
यत् किञ्चिद्वदति स्म तत् पुनरवादी[३]दित्यमी
मेनिरे ॥

मधुकण्ठ उवाच । किमुक्तवती सा ? ।

स्निग्धकण्ठ सस्मितमुवाच ।

अस्माकं राजाद्य प्रजातप्रजाः कथं भवन्तस्तन्मिलनाय नायान्तीति ।

मधुकण्ठ सहासमुवाच । ततस्ततः ? ।

स्निग्धकण्ठ उवाच ॥

ततश्च तज्जन्मवृत्तामृतनववर्षाभिः शिखिन इव गोपाः कोलाहलं कलयामासुः । श्रीगोपत्यधिपस्तु वानस्पत्य[४] इव पुलकाङ्कुरकुलाकुलतया परं[५] परमानन्दं व्यञ्जयामास न तु वचसा ।

मधुकण्ठ उवाच । ततस्ततः ? ।

---

(१) व्रजराजादीन् ।　(२) एवमनेन प्रकारेण ।
(३) पुनरुक्तं कृतवती ।　(४) वानस्पत्यःफलैःपुष्पात् ।
(५) केवलं ।

स्निग्धकण्ठ उवाच ॥

ततश्च स्मितसम्भ्रमादरभर-कर्व्वुरितैः सर्व्वैर्वन्दितया नन्दितया च तया सत्वरया पलिक्नी[१] वरया सनिजाङ्गजात[२]एव भवान्मङ्गलसङ्गीभूयाद्वित्यपूर्व्वां सुखपूर्व्वां वाचं प्रोच्य रोचनाकुङ्कुमसङ्गलेप-सङ्कुलसदङ्कुरफलमङ्गले श्रीमद्व्रजराजस्य क्षेमङ्करकरयोर्विन्यस्ते तेन विलोकितकल्पः[३] श्रीमानुपनन्दः सानन्दं जल्पति स्म ।

इह दोहाय संहाय[४] रंहसायमाना धेनुसङ्घाः काममप्यविहाय द्रुतमस्याः सगृहाय[५] विहाप्यन्तां

तत्र सर्व्वे चामोदगर्व्वेण प्रोचुः ।

अन्यद्वा यत् किञ्चिदस्याहितं समीहितं भवति ॥

ततश्च ॥

आह्लादेन समं जज्ञे वालः किं किं स एव सः ।
एवं विवेक्तुं नन्दस्य नासीन्मति[६]मतीमतिः ॥

अथ श्रीमान् व्रजेशः स्वीकृतधार्म्मिकवेशस्तदपि वहुलमन्यदपि वहुलादिकं[७] दानाय सश्चक्रमे ।

---

(१) वृद्धा । (२) सपुत्रः । (३) ईषद्दृष्टः ।
(४) मिलित्वा । (५) पत्ये । (६) विचारयुक्ता बुद्धिः ।
(७) गवादिकं ।

यत्र सर्व्वे[१]श्च तथाभावाय. खर्व्वंश[२]श्चक्लृपे । सङ्कल्प्य च गृहे गन्तुं कृतस्पृहे धृतवेशे च तत्त[३]-द्वृतव्रजनरेशे श्रीरामप्रसूसमादेशान्महागोपुरदेशा द्दुन्दुभिद्वन्द्वमुन्ननाद । तच्च वाद्यविद्याविदुर[४]-व्यञ्जितं वाद्यं व्यक्तमेवेदं मुहुर्वक्ति स्म । प्रादुर्भूतो नन्दानन्दः प्रादुर्भूतो नन्दानन्द इति ॥

ततश्च ॥

अपिश्रुतमभून्निशि त्रिदिववाद्यगर्जोर्जितं
जितं जितमिति स्वनं नतु विनिश्चितं कारणं ।
तदा तदनुवादि तत् कलयताममीषां मुहु-
र्मुदा कलकलारवः समजनि व्रज-प्राणिनां ॥

अथ सम्मदेन[५] मुहुर्लम्भितस्तम्भारम्भतायाम-प्युत्कण्ठयाकृष्ट इव तत्रच लब्धकम्पसम्पत्तायामपि केवलं स्वकृतसेवेन नारायणदेवेन दत्तहस्तावलम्ब इव धैर्य्यमवलम्बमानः स्वालयं प्रति व्रज-भूपालः प्रचचाल ॥

ततश्च ॥

तद्वृन्दे गृहमभियाति वन्धुवर्गा
धावन्तः क्रममिलिता मिथः पुरोगाः ।

---

(१) व्रजजनः । (२) सर्वसंख्यया ।
(३) तैस्तैरुपनन्दादिभिः । (४) विज्ञः । (५) आनन्देन ।

ये[१] गङ्गाझरमनु निर्झरप्रभेदा[२]
यद्वत्तगुलिततयानयन्त वृद्धिं ॥
अथागताः पुरवनिताः पुरः पुरः[३]
सहस्रशः कलित[४]शुभा युतायुताः[५] ।
व्रजेश्वरं पुरु[६]निरराजयन् जय-
न्नवात्मज-प्रभवमहे महेहया ॥
ततश्च कोलाहलिभिर्व्रजस्थितैः
समं गतः[७] श्रीलमहाव्रजेश्वरः ।
स्वंवास्तु सालङ्कृति चार्व्वशूशुभन्
नभः सभं[८] पूर्णसुधांशुवत् प्रभुः ॥

यद्यपि विप्राः सहसा, स्वयमागतये कृतोद्यमाः सर्व्वे
तदपि तदादरविधये, राज्ञाहूताः पृथक् पृथक् प्रथमं ॥

सुखाविष्टस्तस्मिन्मधुरमुपविष्टः सदसि तै[९]-
र्महास्निग्धैः शर्म्मप्रकरपरिदिग्धैः परिवृतः ।
पठद्भिः पुत्राशीरुचितनिगमं भूसुरवरैः
किरद्भिर्दूर्वाद्यं शिरसि सुखपूर्व्वं समाहितः ॥

---

(१) वंधुवर्गाः । (२) नदीसमुद्राः ।
(३) पूर्याःपुरतः । (४) गृहीत । (५) मिलिताः ।
(६) अतिशयं यथास्तात्तथा । (७) प्राप्तः ।
(८) सनक्षत्रं । (९) गोपैः ।

सन्ने[1] यत् परिचस्करे वपुरपि स्वस्ति-श्रुतिः शुश्रुवे
श्रीमन्नन्दमहात्मना सुतजनौ[2] तत्त[3]त्स्तुवे नापरं ।
अद्यापि स्फुटमेति सर्व्वजनता येषां श्रुतादप्यहो
स्नाना[4]द्यप्यतिगम्यसत्कृतिफलं यस्यास्ति नान्तः
सदा ॥

अथ जातकर्म्म भव्यं कर्त्तव्यमिति गुरुभिरादिष्टेन तेन तत्प्रत्युत्क्रम[5]श्चक्रे ॥

यथा—

आनर्चिरे व्रजेशित्रा मातृका यास्तदा तु ताः ।
मातुः कमिव[6] कं यासामित्यर्थव्यक्तिमागता ॥
अथ नान्दीमुखश्राद्धं राद्धं[7] गोपालपालिना ।
पितरो हि स्वयं यस्मिंस्ते नान्दीमुखतां[8] गताः ॥

अथ वेदविधानपटुभिः पुरोहितवटुभिः सार्द्ध-मन्तःपुरं प्रविष्टे भद्रकुम्भादि[9]भद्रविशिष्टसूतिका गृहाग्रवेद्युपविष्टे श्रीव्रजकुलमाहिष्टे परममनोरथा-

---

(१) स्नातं ।　(२) जन्मनि ।　(३) कर्म्म ।
(४) आत्मस्नानादेरधिकं ।
(५) प्रत्युत्क्रमः प्रयोगार्थ इत्यमरः कर्म्मारम्भे प्रथमप्रयोग इति क्षीरस्वामी ।
(६) सुखमिव ।　(७) सिद्धं ।　(८) मङ्गलपाठकर्त्ता ।
(९) पूर्णकुम्भादि मङ्गल ।

रोहिणी रोहिणी तदवधाय कुलत्रययशोदायि-यशोदा-खट्टमन्तःपटेन व्यवधाय वालं पिधाय गृहावग्रहणी[१]मानिनाय । किन्तु नववालकं विलोकयितुं शर्म्मणा नर्म्मणा च निजाऽलङ्कृत्यर्थं प्रजावत्यस्तं प्रत्यभितः किमपि किमप्यमूल्यता-पर्य्याचितं याचितवत्यः । प्रतिश्रुते तु तं विलोक-यामासुः ॥

सच खल्वस्तोक-रोक[२] लोकवलय-भव[३] प्रवलनवकुवलय-कुल[४]पतिदुर्लङ्घ्यशोभासङ्गदुर्लभ-कोमलामलकान्ति-विश्रान्तिभूमिं कलित[५]मर्म्म-प्रयतन[६]कर्म्म । विश्वाद्भुत विश्वकर्म्मनिर्मित-निर्म्मल-नीलचिन्तामणिप्रतिमाप्रतिप्रतीका[७]ति-क्रमिपरिमिल-सर्व्वावयवं प्रवलप्रवाह-व्यतिसंघ-ट्टनकुट्टित-वालवायज[८]-समवायज-मञ्जुलाञ्जन कलिततल-निश्चलजल-कालिन्दीह्रदजालज-वाल-

(१) देहलीं । (२) दीप्तः ।
(३) भुवनमङ्गल ।
(४) सजातीयानां समूहे ।
(५) प्राप्त । (६) प्रयत्न ।
(७) प्रत्ययप्रद ।
(८) नानाच्छविनीलमणिविशेषवैदूर्य्यनाम ।

शैवालकरुचि-रुचिर-रोचि[1]र्वलिताराल[2]श्लक्ष्ण-[3]वालसमुदायं कमलालया-करकिसलय-सित[4]लसित-सितकमलान्तर्वलयदल-निर्म्मलविलोचनं । वैकुण्ठस्थित-कल्पतरुतल्लज[5] पल्लवकुण्ठताकर-करचरणाधरं । निर्पीतकनकरुचि-शुचिर्पीतन[6]पीतिताम्वरावरणारोचनं रोचनं वालकमालोचयन्नात्मानं नयनपयःपयसा[7] स्नपयन् विलक्षणतया क्षणकतिपयं जलवदासीत् ॥

यद्यपि वहुविधभावा, जाता गोष्ठेशितुस्तर्हि ।
तदपि च जाड्यं वलव,-ज्जज्ञे गाम्भीर्य्यशीलस्य ॥

अथ चिराय धीरभावं धारितवति व्रजधरित्री-राज्यश्रीमति तदानन्दस्पृहिणी नवनन्दनमुपनन्द-गृहिणी तदुत्सङ्गसङ्गिनं चकार ॥

उत्सङ्गं वहति शिशुं व्रजाधिराजे
सा दूरादधिशयिता प्रसूतिशय्यां ।
आसीत्तच्छ्रवणजवाष्परोमहर्ष-
स्तम्भाद्यैर्विवशतनूर्व्रजाधिराज्ञी ॥

---

(१) दीप्तिः ।　(२) वक्र ।　(३) सूक्ष्मं मसृणञ्च ।
(४) वक्र ।　(५) प्रसस्त ।　(६) कुंकुमः ।
(७) नयनजलविन्दुना ।

अथ तत्र[1] मेधाजनकं कर्म्म शर्म्मान्तनामभि-[2] र्निर्म्ममे । यत्र "भूस्त्वयी"त्यादिकं पठित्वा हेमान्तर्हितया नामिकया वालो घृतलवं लेहयामासे । अथायुष्यक्रिया क्रियते स्म । यत्रा"ग्निरायुष्मा"नित्यादयः कुमारस्य दक्षिणे कर्णे जेपिरे । ततो "दिवस्पती"त्यादिकेन डिम्भः स्पृष्टः । "दिक्चतुष्टये मध्ये च प्राणे"त्यादिभिर्भूमिश्चाभिमन्त्रिता । "अथाश्माभवे"त्यादिना पुनरर्भकोऽभिमृष्टः । तत "इडासी"त्यादिना तन्माताभिमन्त्रिता । पुन"र्म्मातुः स्तनद्वयमिमं स्तन"इति"यस्ते स्तन"इत्याभ्यामृग्भ्यां क्रमेण प्रक्षालितम् ततश्च तमुत्तानशायिनं सूतिकाशय्यायां निधाय तच्छिरःप्रदेशे "आपोदेवेष्वि"त्यादिनोदपात्रं निहितमिति ॥

तदेवं जातकर्म्मशर्म्मणि निर्वृत्ते वाल-नाभिनाले प्राप्तच्छेदनकाले वृत्ते परमानन्दसन्दोहेनानवहित[3]प्राया या सैव तदैव तदवधात्री धात्री सपुलककाया चित्रमिदमिति द्वित्रिवारमिदं निवेदितवती । राजन् ! इतरत्रनाभिसरसि नालमेव

---

(१) जातकर्म्मणि । (२) ब्राह्मणैः ।
(३) अनवधान ।

लक्ष्यते नतु नालीकं, अत्र पुनर्मालीकमेव नतु नालमिति ॥

किञ्च ॥

अङ्घ्योर्व्यक्तदरारिवज्रकमलाद्याश्चर्य्यचिह्नैरलं
कम्रैरुज्ज्वलितां तथा करयुगे तैः कैश्चिदन्यैरपि ।
पश्य श्रीव्रजनाथ ! नीरदरुचेर्वालस्य सामुद्रको-
ल्लंघिश्रीविभवस्य देहवलनामस्मासु चित्रप्रदां ॥

तदा च सर्व्वस्मिन्नपि विस्मितचर्य्यापर्य्याकुले वटवः सहासपाटवमूचुः । अये सर्व्वशर्म्मद ! निर्म्मलधर्म्मणो भवतः कथमशौचं नाम-सामर्थ्यं समर्थयतां ! । यतो नाड़ीच्छेद एव वृत्ते त[1]दामनन्ति[2] स्म ॥

तदेवमुल्लसन्निखिलरोमसमुत्फुल्ल-मुखसोमः परिवारितवटुस्तोमतया वहिर्विहितहोमस्थानमागम्य सम्यगर्पितसर्व्वानन्दः सद्भिःसमर्पित-तत्तद्वृत्तशन्तम-कन्दः[3] श्रीमान्नन्दस्तान् दानीय-विप्रानानीय प्रदानारम्भं सम्भृतवान् ॥

आरेभे सच दातुं, न लेभे तुलांतु सद्भिनां तेषां ।
तादृशतत्प्रसवश्री—,वार्त्ता यैरर्पिता परितः ।

(१) अशौचं । (२) कथयन्ति । (३) कल्याणतममूलः ।

तथापि ॥

अयुतं प्रयुतं नियुतं, भवति दशानां सहस्रमारभ्य ।
नियुते विंशतिलक्षं, तावद्धेनूरदान्नन्दः ।
विंशतिलक्षं दत्वा, धेनूः सौवर्णशृङ्गसङ्क्यङ्गीः ।
हृदयमपूर्णतयासी,-त्तस्यान्यस्मै प्रदानाय ।
दशभिर्दशभिर्द्रोणैः, कृततिलसप्ताचलीमददात् ।
यद्भृतिमणिकनकानां, तदधिकतरभारता द्विजैर्मेने ॥
तेभ्यश्च दक्षिणीयेभ्यः[(१)] प्रत्ता या दक्षिणामुना ।
तथाप्यक्षीणयान्येषामक्षीण्याश्चर्यमाययुः ।
वाड्व्याना[(२)]मसङ्ख्यानां नासीत् परिचितिस्तदा ।
ब्रह्मवर्चसमेवास्मिन् परिचायकतां ययौ ॥

तत्र ये विदितवेदाभिप्राया विप्रा निजनिजविद्यातिशायकाः सूत-मागध-वन्दि-कृशा[(३)]श्विगायकाः स्वच्छन्दनानाशब्दवादका वादकाश्च ते सर्व्वेऽपि तस्मिन् पर्व्वणि सङ्गिनः सन्तः[(४)] सुमङ्गलमेव शब्दायमानाः पृथक्कायामप्यपृथग्मिस्वना इव विश्वं विस्मापयन्ति स्म । यावदेवं वृत्तं

---

(१) दक्षिणीयो दक्षिणार्हस्तत्र दाक्षिण्य इत्यपि ।
(२) ब्राह्मणसमूहानां ।　　(३) नटः ।
(४) मिलिताः सन्तः ।

वृत्तं तावद्व्रजस्थलमपि हृष्टमिव दृष्टं किमुत व्रज-स्थाः यतः संमृष्टतया विक्षेपशून्यमिव संसिक्ततया स्निग्धमिव । चलचित्रध्वजादितया नृत्यदिव चासीत् । तत्र च यदा गोवृषवत्सानामपि स्वभावत एव भवतः सानुरागस्नेहस्य तैलविद्रावितहरिद्रा-समक्ति-व्याजाद्बहिरपि व्यक्तिरासीत् । हर्षवैचित्र्यस्य च विचित्रधातुवर्ह-स्रक्-काञ्चनमाला-व्याजात् । तदा किमुत गोपानां ते ह्यद्यापि यशसा विद्यमाना गोःपृथिव्याः पातार इतीव तथोच्यन्ते । ये खलु व्यञ्जितरसभावतया विधृतालङ्कारतया च स्ववर्णा-नकाव्यग्रन्थैरभेदमाययुः उल्लासविधृतनानामणि-मयवलि(१)पाणितया प्रेमणि स्वेषां वीरताञ्च(२) व्यञ्जयामासुः । यदा चैवं गोपास्तदा पुनरतीव जीवनायमान- गोकुलकुलेश्वरी—गुणगणादिग्ध-स्निग्धहृदया गोपवरवर्णिन्यः किंयद्वा वर्णनीयाः ॥

याः खलु पूर्वं तदपत्यसम्पत्त्यभावान्निर्वेदवेद-नया त्यक्तप्रायपरिष्काराः सम्प्रति तु किञ्चिच्छ्रु-वणप्रवण(३)तदपत्यश्रवणमात्रेण विधृत-विविध-

---

(१) वलिरुपहारः वलिष्ठो वा ।　　(२) वीरतां श्लेषे शूरतां ।
(३) कर्णतत्परः ।

मुखविकारास्तत्पर्व्वरञ्जनार्थं विलम्बनीमपि परिष्कृतिमुरीकृत्य नृत्यन्त्य इव तत्पुरीं प्रति चलिताः । याश्च व्यञ्जिजिषितमङ्गलसङ्गतया(१) स्नेहमयकामनापरिणामतया च स्वयमेव महामणिमयोपायनपाणयो बभूवुः । यासामानन्दादन्यदेव शोभावैभवमाविर्भवति स्म ॥

तथाहि ।

जितकुङ्कुममुरु रुरुचे, मुखशशिनां रोचिरेतासां ।
समुदितमुदितं पर्व्वणि, सुतजनुषः श्रीयशोदायाः ॥

तत्रच गायन्ति ॥

अजनि यशोदा निशि सुतसारं ।
इति महिलालिरिता तदगारं ॥ ध्रु ॥
सम्भ्रमविरचितवहुविधवेशं
पथि माल्यच्यवपूरितदेशं ।
चलमणिकुण्डलवलितकपोलं
अपरिकलितगलदंशनिचोलं ॥
उच्छलितच्छवि-चपलाहारं
चित्रवसनवस(२)रसनावारं इति ॥

---

(१)व्यञ्जितुमिष्टो मङ्गलस्य सङ्गो याभिः तासांभावस्तत्ता तया ।
(२) वसतीति वस ।

किञ्च ॥

व्रजः प्रकटतां यातस्तत्र कृष्णश्च सत्कृतः ।
इत्यवाद्यन्त वाद्यानि वाद्याधिष्ठातृदैवतैः ।
तस्मादानन्दसन्दोहादुपनन्दपुरःसराः ।
गम्भीरास्तेऽपि चाभीरा विजह्रुर्ननृतुर्जगुः ॥
तदा तत्रागता योषा[1]स्तं सदाशीर्भिरर्भकं ।
निर्वर्ण्य[2]वर्णयित्वा च परस्परमिदं जगुः ॥

पाहि चिरं व्रजराजकुमार ! ।
अस्मानत्र शिशो ! सुकुमार ! । ध्रु ॥
द्रुततरवृद्धिसमृद्धिगतेन,
शं भवता[3]द्भवताभिमतेन ।
स्पृहयामस्ते हसितमुखाय,
अङ्गन-सङ्गतरिङ्ग-सुखाय ॥
गोवाला[4]वलि-लूमा[5]लम्बि,
चलनं तव वलतामविलम्बि ।
सह गोशावक-गम-रमणेन,
सुखयसि हन्त कदा कमनेन ॥

---

(१) स्त्रियः ।　　(२) दृष्ट्वा ।
(३) शं सुखं अस्माकं भवतात् ।
(४) वत्स ।　　(५) पुच्छ ।

गोगणचारणविहरणमस्य,
स नु पश्येद्वरभाग्यं यस्य ।
दुष्ट-कदन-दद-सुष्टुवलाय,
भवशिष्टालिविशिष्टफलाय ॥

इति सङ्गीतसङ्गिन्यो रङ्गिण्यो महसम्पदि ।
पीता[१] तैलेन सिञ्चन्त्यः सिञ्चन्त्यः प्रययुर्वहिः ॥

ततश्च ॥

दधिदुग्धादिसेकेन मिथोऽमी शुभ्रतां गताः ।
तरङ्गा इव दुग्धाब्धेरनृत्यन् वरगोदुहः ॥

अथ तास्तदवधाय तदेव गायन्ति स्म—यथा ॥

पश्य सखीकुल ! गोकुलराजं,
पुत्रोत्सवमनु खेलाभाजं ॥ ध्रु ॥
उदधि-प्रभ-दधि-सम्प्लवदेशं,
परितो घूर्णितमन्दरवेशं ।
मध्यघटी फणिराजे कृष्टं, हृद्य सुहृद्भिरतीव च हृष्टं
मध्ये मध्ये दुर्लभदानं, ददतं दधतं विस्मयभानम् ।
एकं पुनरलमभवदपूर्व्वं,
अजनि विधुर्वत यदितः[२] पूर्व्वं ॥ इति ॥

(१) हरिद्रा । (२) मथनात् ।

एतदपि श्लोकयामासुः ।

मेयं दुग्धविकीर्णपालिरपितु द्राग्वारिधारागति-
र्नेयं स्यान्नवनीतपिण्डविसृति र्मुक्तास्तु रुक्ताम्बुदाः[१]
नेयं दीर्ण[२]हरिद्रनीरविहृतिः[३] किन्तु प्रभा विद्युतां
पर्वैवेदमतीव हर्षमहसा वर्षावपुर्निर्म्ममे ॥ इति ॥

वालस्य मातामहमेत्य[४] मातुला-
स्तदा गृहीताः करचोरका इव ।
दध्यादिपङ्केषु मुहुर्विकर्षणात्
पितृव्यवर्गेण विहस्य दण्डिताः ॥

श्रीमान्नन्दश्च ॥

महोदारचित्तश्चितानेकवित्तः
समाहूय सर्व्वं गुणाजीवि-खर्व्वं ।
विना तद्विचारं वपुः शक्तिसारं[५]
समुत्क्षिप्य रत्नं ददे सातियत्नं ॥

किञ्च ॥

ग्रहीता याचितान्यत्र प्रदाताङ्गीक्रियायुतः ।
श्रीमन्नन्देन दाने तु तत्र जातो विपर्य्ययः ॥

---

(१) अम्बुदात्मुक्ताः मुक्ताम्बुदाः ।
(२) चूर्ण ।　　(३) विहारः ।
(४) त्यक्त्वा ।　　(५) यथास्यात् ।

अतएव ॥

विना याचूञां ददाने तु सर्व्वं व्रजपतौ तदा ।
कल्पद्रु-चिन्तामण्याद्यास्तेप्यासन् कृपणा इव ॥

तत्र च ॥

अनेन प्रीयतां विष्णुस्तेन[१] स्तां[२]न्मे सुते शिवं
एवं प्रसभमुद्भूता दाने नन्दस्य भावना ॥

अथ सर्व्वा जनता जनितस्नानकामा सममभुना[३] यमुनामयामास ॥

तत्र चानन्देन श्रीनन्देन सह गलद्व्रीड़ां जलक्रीड़ां सन्तत्य निर्म्मलपरिमल[४]-परिमलन[५]-पूर्व्वकं स्नानमातत्य दिव्यवस्त्रसम्वस्त्रणं[६] वितत्य चन्द्रचन्दनसमालम्भं[७] प्रतत्य तत्रोटजमध्यमध्यासीनां सिद्धप्रतन[८]-प्रयतननतया पूर्णमानसां पौर्णमासीमनु नमनमवतत्य वन्दिजनजनित विश्राव[९] पूरित श्रवसा[१०] श्रवसा[११] वलिता सा[१२] पुनस्तदेव सदनमाससाद ॥

---

(१) प्रीणनेन । (२) भवतु । (३) नन्देन ।
(४) सुगन्धिद्रव्यं । (५) मर्द्दन ।
(६) वस्त्रेणाम्नभाच्छादनं संवस्त्रणं । (७) अङ्गरागं ।
(८) पुरातन । (९) विख्याति । (१०) श्रोत्रेण ।
(११) यशसा । (१२) जनता ।

ततः श्रीमान् व्रजस्य राजा[१]रुचि[२]दानानि रचयन् वन्धुवृन्दसिन्धुं पूरयामास ॥

अथ तस्मिन्नानन्दपीन्नि[३] प्रतिदीन्नि[४] श्रीरामजनन्या श्रद्धा[५] यन्त्रितया निमन्त्रिताः कृतघृतपक्क-जेमनाः सर्व्वे एव पर्व्वलक्ष्म्या[६] पूरिताश्चन्द्रा इव स्व-स्व-मन्दिरमविन्दत ॥

विदित्वा च तदानन्दं प्रति कृतप्रतिजागरां[७] जागरा[८]मेव नृत्यगीतादिधन्यायां रजन्याम-भजन्त ॥

श्रीरोहिण्या हरिजनि-सुखं शक्यते केन वक्तुं
यस्माद्वेषं विविधमदधाद्वर्त्ततः प्रोषितापि ।
चित्रं चित्रं सुकृतवरिमा दृश्यतां विश्ववन्द्यः
श्रीमन्नन्दोऽप्ययमनुत निजं भाग्यमायाति[९]मस्याः ॥

अथ सोऽयं रत्नाकरोऽपि व्रजस्तं हरे[१०]राविर्भाव-मारभ्याहरहर्विरह-रहित-तद्विहरणाद्वर्धिष्णुसमृद्धिः कामपि चमत्कारितां वितेने । क्रमा[११]दाविर्भूतानां

(१) श्लेषेणचन्द्रः । (२) प्रीति । (३) पुष्टे ।
(४) दिवसे । (५) आदरः । (६) पौर्णमास्या ।
(७) अवेक्षा प्रतिजागरा इत्यमरः । अवधानमिति क्षीरः ।
(८) जागर्य्या जागराद्वयोः । (९) आगति ।
(१० इलेषेण चन्द्रस्य । (११) गोपसमवायात् ।

भूतानां परमाणां रमाणां रमणधामतया तु किमुत ? ॥

अथ मधुकण्ठेन चिन्तयाञ्चक्रे ।

आं श्रीमद्भागवतसम्वादश्चात्र सम्भवति—।

तत आरभ्य नन्दस्य व्रजः सर्व्वसमृद्धिमान् ।
हरेर्निवासात्मगुणैरमाक्रीड़मभून्नृप !॥ इति ॥

स्निग्धकण्ठस्तु विभाव्य पुनराह स्म ।

अहो महोत्साह[१]स्वभावतादिभिर्विराजमानता श्रीमद्व्रजराजस्य ।

यतः—

तावन्मानं वितरणमहो सम्पदस्ताः कियत्य-
स्तावत् सद्मं महसि रचनं भृत्यवर्गाः कियन्तः ।
तावत् प्रान्तं[२] जनसमवनं[३] कत्यमुष्यावधाना-
न्येवं सर्व्वं व्रजनरपतेः को नु[४] शक्तो विवेक्तुं ? ।
इति ॥

समापयंश्चोवाच ॥

ईदृशस्तनयो जातस्तव गोष्ठक्षितीश ! यः ।
लक्ष्मीलक्ष्मान्वितं कुर्व्वन् गोष्ठं निन्ये विलक्षतां ॥

---

(१) महोत्साहो महोद्यमः । (२) तावत्पर्य्यन्तं ।
(३) प्रीणनं । (४) वितर्के ।

तदेतद्वृत्ते च वृत्ते पूर्व्वदिनवदखिला एव निजनिजालयमासादितवन्तः श्रीगोकुलयुवराजश्च गवां कुलमिति ॥

इति श्रीगोपालचम्पूमनु श्रीमन्नन्दनन्दन-
पर्व्व नाम चतुर्थं पूरणम् ॥

———

# पञ्चम पूरणम् ।

अथोत्तरेद्युस्तथाद्योतमानायां सभायां कण्ठध्वनिकृतसर्व्वोत्कण्ठः शुभंयुर्मधुकण्ठः समाचष्ट । अये स्निग्धकण्ठ ! श्रूयताम् ॥

अथ तस्मिन्नेवापदोषे प्रदोषे समस्तदेवरूप श्रीवसुदेव-सदेशतः सन्देशहरः कोऽपि गोपितात्मा श्रीव्रजराजचरणराजीवपीठपर्य्यन्तधाम समाजगाम । सच श्रीमता तेन तदीयप्रत्न[१]सेवकरत्नतया परिचितियुक्तः पर्य्यनुयुक्त[२]कुशलततिर्नमः समाचरन्नुवाच ॥

रक्षांसि सर्व्वं भक्षयितुं जीवति नृशंसे कंसे किमिव निरंकुशं[३] कुशलं ? तच्च मम वेशेनैव वितर्क्यतां । यदस्माकं तरण्या[४]तरणं तरणौ[५] च सति कुत्रापि प्रस्थानं न सम्भवतीति वाहुभ्यामेव सन्तरणात्तीर्णतरणिजः सार्द्रवस्त्रः प्रदोषे समागतोऽस्मि ॥

व्रजराजस्तु रूक्षं हसन्नाह । विशेषश्चेत् कथ्यतां ? ।

---

(१) पुरातन । (२) पृष्ट । (३) निर्बाधं ।
(४) नावा । (५) सूर्य्ये ।

दूत उवाच ॥

किमधिकया वैवधिकतया(१) साम्प्रतमस्माकम-जीवनिरेव जीवातु(२)वल्ली। यया निजाधीशं तादृशतदधीनं न पश्यामः ॥

व्रजराज उवाच ॥

सम्प्रति तं प्रति किमपि विशेषवृत्तं वृत्तमस्ति? ॥

दूत उवाच ॥

अथकिं! यतएव तदीयचरणाहितः प्रहितस्ते-नाहमयमास्मि ॥

व्रजराज उवाच। किं तत्? ॥

दूत उवाच ॥

आनन्तर्य्येण(३) पर्य्यवसितताया निशाया नि-शीथे श्रीमदीशस्य तस्मिन् कारागार एव श्री देवकीदेवीतः काचित् कन्या जाता ॥

व्रजराज उवाच ॥ ततस्ततः? ॥

दूत उवाच ॥

ततः सा नवसुता सुतरां गुप्तापि रुदती रक्षिभि रक्षिभिरलक्षितापि विदिता, वेदिता चान्तःपुरी-

---

(१) वार्त्ताहरतया।　　(२) जीवातु जीवनौषधं।

(३) अव्यवहितेन।

शय-सानुशय[१]-दुराशय-दुरीशाय। सच श्रीदेवकी-देवी-विवाहगताहमारभ्य नभःसभ्यजनवाणीतः सुष्ठु भीतः सततं व्यग्रतया जाग्रदेव तिष्ठति। ततस्तद्वचनवर्णाकर्ण-मात्रेण समग्रव्यग्रमनाः विक्षिप्तकेशः स भोजेशः सकरवालः करालः[२] स्खलद्गतिः कुमतिः सूतिकागारमाससार ॥

व्रजराजः सभयमुवाच । ततस्ततः ? ॥

दूत उवाच ॥

ततश्च निरवग्रह[३]ग्रहवन्निरनुग्रहः सहसा रंहसा सूतिकाशय्यामेव सज्जन् स निर्लज्जः प्रजाताया[४] जातपरिवेदनाया देव्याः क्रोडतः समाच्छिद्य तद्विद्यमानमेव विक्षिप्तचित्तः क्षिप्रमेव तां प्रस्तराय प्रक्षिप्तवान्। यतः सर्व्वतः स एव प्रतिक्षिप्तता[५]माप ॥

अथ व्रजराजः सास्रमुवाच ॥

आः! कथमेतद् दुरक्षरमक्षितमनक्षर[६]मस्मासु श्रावितं। भवत्ववद्याप्यवद्यमिदं मदीयसंस्त्याये[७] न

(१) अनुशयो दीर्घद्वेषानुतापयोः। (२) करालो दन्तुरे तुङ्गे
(३) स्वच्छन्दो निरवग्रहः। (४) जातापत्या प्रजाता स्यात्।
(५) प्रतिक्षिप्तोऽधिक्षिप्तः स्यात्।
(६) अनक्षरमवाच्यं स्यात्। (७) गृहे।

प्रस्ताव्यम् । सा तु तद्दुःखदुःखिता श्रीदेवकी सखी तथा तद्विरहिणी श्रीरोहिणी च मोहमाप्स्यति ॥

दूत उवाच ।

देव ! श्रूयतामव्यग्रमग्रिममाश्चर्यं ।

व्रजराजः सहर्षमिवोवाच ।

आयुष्मन् ! कथ्यतां तथ्यं ? ॥

दूत उवाच ॥

सा तु कन्या तस्यान्यायभाजो भोजेशस्य हस्तादस्तापि[1] प्रस्तरमप्राप्ता प्रत्युत तन्मस्तक—न्यस्तचरणमूर्द्धगत्या समुत्पत्याशु दिव्यन्यदेव दिव्यं रूपं स्मितवती प्रकाशितवती ॥

व्रजराज उवाच । कीदृशं ? ॥

दूत उवाच ॥

श्यामाष्टपाणिपरिवेष्टितपार्श्वयुग्मा
चक्रादिशस्त्रवलिता खगसिंहवाहा[2] ।
देवादिभिः परिणुतप्रसरत्प्रभावा ।
सर्व्वैः समुन्नतमुखैः परितो व्यलोकि ॥

---

(१) क्षिप्तापि ।

(२) खं आकाशं गच्छति सचासौ सिंहश्चेति स वाहः यस्याः । उद्यान इति वाहः ।

इति यादृशं ॥

व्रजराजः साश्चर्य्यमुवाच । किं वदसि ? ॥

दूत उवाच ॥

देव! नात्रान्यथा। किमप्यन्यदपि कल्प(१) माकल्पतां(२)।
सा खल्विदं साच्छुरित(३)मच्छमुवाच ॥

रे! पाप! कंस! किमिति त्वमहन्मुधा मां
त्वत्पूर्वशत्रुरजनि क्वचन प्रदेशे ।
यस्मादुपेत्य निधनं तव जातु(४) कर्त्ता
तन्नान्यमप्यतिशिशुं क्वचिदिच्छ हन्तुं ॥

व्रजराजः साश्चर्य्यस्मितमुवाच ॥

नूनं श्रीवसुदेवभक्तिप्रणालीपुत्रीकृता भद्रकाली सा भद्रमिदं वदति स्म । यदद्यावधि नाधीर(५) मवधीरितः(६) सोऽयं वचसापि केनचनापीति ॥

दूत उवाच ॥

अर्य्य! (७) क्षितीश! पुनश्चेदमाश्चर्य्यमवधार्य्यतां। स खलु भ्रातृव्यपदेशभ्रातृव्यः(८) स्वस्य भगिन्य ष्टमगर्भमनिष्टतया निष्टङ्कितं कुर्व्वतीं सुरवर्त्म-

---

(१) शुभात्मकं । (२) श्रूयतां । (३) सोत्प्रासं सक्रोधं इत्यर्थः ।
(४) कदाचित् । (५) यथास्यात् । (६) अवज्ञातः ।
(७) अर्य्यः स्यात् स्वामिवैश्ययोः । (८) शत्रुः ।

वाणीमपि देव्यादिष्टः स्वद्विष्टसुरक्लृप्तां[१] मत्वा तौ[२] कारागारादाहूय भूयः पादग्रहणचर्य्यापर्य्या[३]-पर्य्यन्ताग्रहतः पुत्रषट्क-हत्यागस्त्यागं[४] भूरिविसूरित[५] इव विधित्सन्[६] निगडान्मोचितवान् ॥

व्रजराजः सानन्दमुवाच । ततस्ततः ? ॥

दूत उवाच ॥

ततश्च मदीयश्रीमदीश्वरी पुत्रघातिन्यपि तस्मिन् सारल्यदोषादेव रोषान्निववृते श्रीमन्मदीशिता तु विचारितवान् । पूर्व्वं शुष्कपेषं पिष्टवान् सम्प्रति तु सर्पिःपेषं पिनष्टि सोऽयमस्मानिति । तदेवं तत् कौटिल्यकोटिं परिकल्प्यापि सौजन्य-प्राबल्यादिह सारल्यमेवावलम्बितवान् । तेन पितरि शूरेण[७] दुर्म्मतिनानुमतः शूरनन्दनः सहधर्म्मिण्या सह स्वगृहमागतवांश्च न पुनर्विश्वासमाश्वासञ्च लब्धवान् ।

यतः ।—

जात्यन्धजनितः कंसः सदा दुन्वन् समाश्रितान् ।
मातरञ्च दुनोत्युच्चैः शिलापुत्रः शिलामिव ॥

---

(१) कल्पितां । (२) देवकीवसुदेवौ । (३) पूर्णा ।
(४) अगोऽपराधः । (५) अनुतापो विसूरितमिति क्षीरः ।
(६) कर्त्तुमिच्छन् । (७) मर्य्यादाभेत्रा ।

व्रजराजः सहासमुवाच ॥

तदनन्तरं प्रातरारभ्य स पुनरसभ्यः कांकारि[१]-मकार्षीत् ? ॥

दूत उवाच ॥

स्वभावजां कारि[२]मेव । तथाहि-प्रातरसौ दुष्टस्त्व-न्यद्दुश्चेष्टितमनुष्ठितवान् ॥

व्रजराज उवाच । हन्त कथय तत् किं ? ॥

दूत उवाच ॥

प्रातः स तु मलिनीकृतनिजकुलः खलिनी[३]पतिः स्वदयितान् दैतेयानानयामास निशामयामास[४] च निशीथिनीवृत्तम् । ते च भिन्नसेतवः[५] केतव इव राहुनिभमेतं मिलिता व्याघ्रवर्गनिर्घोषप्रभघर्घराय-मानां गोष्ठीमनुष्ठितवन्तः । किं वहुना ? । तत्र महेन्द्रादिनिर्जयगर्जनपर्य्यवसानतस्तात्पर्य्यमिदमेव जातम् । यद्विश्वद्रीचां[६] विष्णुमनुचारिष्णूनां देव-देवद्र्यग्[७]भूदेवगवादीनां पीडनेनैव तत्पीडनमी-डितं तथा तत्सध्रीचीनतया[८] निर्द्दशानिर्द्दशानां

---

(१) इणाच भावे लक्ष्यां प्रश्नोत्तरयोः । (२) क्रियां ।
(३) खलसमूहः । (४) श्रावयामास । (५) भिन्नमर्य्यादाः ।
(६) व्यापकानां । (७) देवानुगतः । देवानं चति देवद्र्यङ् ।
(८) तत् सहायतया ।

वालानां निर्दयतया निर्दलनमिति खल्या[१] मेव वल्या[२]मवलम्ब्य तत्र सच सम्वलते स्म । तया[३] च तदानीं वहु प्रयच्छते स्म ॥

व्रजराजस्तु तदिदं रुष[४]द्वचनमवकलय्य सरुष-स्ततः[५] सत्रासमुवाच ॥

तत्र श्रीमद्भ्रात्रा किमप्यक्लिष्टं[६]मप्युपदिष्टमस्ति ॥

दूत उवाच ॥

अथ किं ! यत् खलु शीघ्रमेवास्मै राजव्याज राक्षसाय सङ्गत्य[७] वलिर्वलयितव्यो मिलितव्य-श्चाहमिति । किञ्चेदमपि सन्दिष्टम् । भव-न्नन्दनोत्पत्तिसमयं समया[८] वयमत्युत्कण्ठिता-स्तन्मङ्गलेन सङ्गमनीयाः । तथा भवत्पुत्र-निर्व्वि-शेषस्य[९] तस्य वालविशेषस्य वृत्ते वर्त्तयि-तव्या[१०] इति ॥

---

(१) खलसमूहं ।　(२) वलार्हां ।
(३) तस्यै खल्यायै खलसमूहायेत्यर्थः । अशिष्टव्यवहारे सम्प्रदाने तृतीया ।
(४) रुषती वागकल्याणीत्यमरः ।
(५) कंसात् ।　(६) पूर्वापरसम्वद्धं ।　(७) मिलित्वा ।
(८) निकटं ।　(९) तुल्यस्य ।
(१०) तद्वृत्तान्तं ज्ञापयितव्या ।

अथ तदेतदवकलय्य संशय्य[१] च तं भोजनादिना योजयित्वा निजाग्रजानुजानाकार्य[२] तदग्रे पुनस्तं तदनुरह[३]समनुव्याहारितवान् ॥

तत उपनन्दउवाच ॥

युक्तमेवानकदुन्दुभिना सन्दिष्टम् । साम्प्रतं करेणौव[४] करेण राजविषधरस्य तस्य मुखमुद्रणमेव साम्प्रतम्[५] ॥

अथ व्रजेशस्तं सन्देशमुररीकृत्य[६] प्रातः प्रायमधिगत्य[७] दूतं निर्दिदेश । सौम्य ! भवानव्यग्रमग्रतः प्रयातु तद्वालकस्य साङ्गमङ्गलसङ्गितां तथा तस्य वाञ्छितमन्यमुदयन्मुदमुदन्त[८]मपि स्वमुखस्वस्तिमुखत[९]एव प्रथयतु । वयन्तु भ्रातुराज्ञया राज्ञे करमाचित्य[१०] प्राभृत[११]ञ्च परितः प्रचित्य दिनपञ्चकानन्तरमागच्छन्त एव स्म ॥

तदेवं गते दूते दिनान्तरे तु जातकमातुः स्नानविधाने कृतसन्धाने[१२] सर्व्वमङ्गलसङ्गतमहः[१३]

---

(१) सन्देहं कृत्वा । (२) आहूय । (३) रहसि ।
(४) राजग्राह्यभागेन । बलिहस्तांशवःकरा इति । (५) योग्यं ।
(६) निश्चित्य । गतिसंज्ञत्वात् समासः । (७) ज्ञात्वा ।
(८) वृत्तान्तं । (९) लेखतः । (१०) दत्वा ।
(११) उपायनं । (१२) योजने । (१३) दिवसं ।

सङ्गत्य[1] महन्महः सन्तत्य पुरोहितसहित-
हितमहितपश्चजन[2]प्रपञ्चं यथापुरःसरमन्तः पुर-
मानायमानायं[3] नववालकं गोपालभूपालः
समालोकयामास ॥

तथाहि ।

तस्मिन् पुण्याहवर्य्ये व्रजनृपतिशिशो-
रादिवीक्षासुधाभिः
सत्रं[4] यज्ञे तथा तच्छ्रवणपरिमला-
देव शक्ता यथा ते ।
आजन्मप्राप्तसम्पन्मृदुतरतनवो-
प्यात्मना[5] प्रीतिदाना
न्यूहुर्भारायमाणान्युत दधुरमितान्
स्वेद-रोमाञ्च-वाष्पान् ॥
श्रीमद्गोपनृपेण-नूतनतनूजातस्य वीक्षाकृते[6]
प्राग्र्या[7] एव निमन्त्रिता व्रजजनाः
सर्व्वे तु तत्राययुः ।
यर्ह्यम्भोजवनाकरः[8] स्वकुसुमव्रातप्रकाशप्रथा-

(१) प्राप्य ।　(२) पुरुष ।　(३) आनिक्षगयेचयाम ।
(४) सत्रमाछादने यज्ञे सदादाने धनेऽपिच ।　(५) स्वयं ।
(६ दर्शनाय　(७) श्रेष्ठा ।　(८, सरोवरः ।

स्थातः स्यात् किमु तर्हि षट् पदगणा-
नाकारय[1]त्यात्मना ॥
पर्य्यगू हारिणि राङ्कवा[2]स्तरचिते
विस्तीर्णगेहे यशो-
दाद्यग्रे स्थविरोपनन्दगृहिणी-क्रोड़े विचित्रं शिशुं ।
दर्शं दर्शममी न यद्यपि गतास्तृप्तिं तथाप्युच्चकै-
र्नास्थुः पृष्ठयजनावकाशविषये शीलं हि मर्य्यादिता ॥
अङ्कभ्राजिशिशूपनन्दगृहिणीमाज्ञा मदीयेदृशी
यन्मा मादृशदृष्टिसम्भ्रमवशादुत्थात यूयं मुहुः ।
इत्येवं विनिगद्य याजकगुरुः सम्मोदसम्पन्मिलत्-
कम्पः सात्ततपाणि साश्रुनयनं
स्वस्ति श्रुतीरूचिवान् ॥
आगच्छन्तः स्वगेहादभिमुखमिलिता
बालवैशिष्ट्यपृच्छा-
वन्तस्तद्वालदृष्ट्या प्रमुदितहृदयैरूचिरे कैश्चिदेवं ।
शोभा सा दृष्टि गम्या नतु परवचन
श्रेणिगम्येति हर्षात् ।
कुण्ठत् कण्ठैरभावि प्रतिवचसि परै-
स्तत्तु नाश्राविचान्यैः ॥

---

(१) हूतिराकारमाह्वानामित्यमरः । (२) रांकवं मृगलोमजं ।

आकैशोरं यत् परिष्कारवस्त्रं
यावद्धार्य्यं माससमासं सुतेन ।
तस्मै तावत्तद्विचारेण सर्व्वैः
प्रत्तं पित्रा गोपिकोषो[१] ह्यनन्तः ॥
शोभां विन्दन्नन्दजालोकलोकः[२]
सश्चायासीत् कृत्रिमाकृत्रिमा या[३] ।
वस्त्रादीनां चित्रता[४] यत्र[५] पूर्व्वा[६]
नेत्रादीनां चित्रता[७]सीदपूर्व्वा[८] ॥
आगता निजगृहं यदाप्यमू-
र्नन्दबालमवलोक्य लोभनम् ।
हन्त तर्ह्यपि दिनानि कानिचित्
मेनिरे दृशि गतं व्रजप्रजाः ॥

अथ मथुरापथिकतां प्रथयिष्यमाणः श्रीगोकुल-कुल-राजस्त्वग्रजादीन् निज-प्रतिनिधितादिकर्म्माणि निर्म्माय चलन्नन्तश्चिन्तितवान् । हन्त ! सुहृदि दुर्हृदि च मम मानसं समानसम्बन्धहार्द्दबन्धमपि प्रसभं भृशमेव तत्र प्रसजति नवजातके । येनासौ

---

(१) भांडारागारं ।　(२) नन्दजमालोकयति यो लोकः ।
(३) शोभा ।　(४) नानावर्णता ।　(५) नन्दजालोकलोके ।
(६) कृत्रिमा ।　(७) चित्ररूपता ।　(८) अकृत्रिमा ।

पीविता जीविताशापि न परिच्छिन्नतामिच्छति । सम्प्रति दुष्टस्याविप्रकृष्टमटन्नस्मि । नानुभवन्नस्मि किं भविता ? तस्माद्विकलता - विकलनाय[१] विलोकं विलोकमेव तं बालकं यदुनिलयं चलानीति ॥

अथ गमनसमये च

उत्सङ्गे निहितस्य तस्य तु शिशोर्वक्त्रं मुहुर्दृष्ट्वा-
नामोदं चिरमाददे निटिलका[२]द्गण्डावचुम्बीद्दृशं ।
आशिश्लेषतरां वपुर्न तु तदा तृप्तिं व्रजेशो ययौ
यां[३] पाथेयतया विवेद[४] मथुराप्रस्थानमास्थाय सः ॥

वत्स ! श्याम ! पिता तवायमयितुं राज्ञः पुरं त्वत्कृता-
नुज्ञां प्रार्थयते ततो वितरतादित्येष धात्रीरितः ।
आश्चर्यातुल बालभाववलनाद्दभ्रे स्मितं तेन च
श्रीमान् गोपजनाधिपः प्रचितधीः[५]
प्रस्थानमासेदिवान् ॥

स्मारं स्मारं तन्मुखं सुस्मिताक्तं
व्यक्तं व्यक्तं गोपयन् प्रेमधाम ।

(१) दूरीकरणाय । (२) शिरसः ।
(३) तृप्तिं । (४) ज्ञातवान् ।
(५) स्फीतधीः ।

आनन्देनानल्पजल्पेषु गोपे-
स्वात्मारामप्रायतां प्राय नन्दः ॥

अथ मथुरामासाद्य सद्य एव कराधिकारिषु करमुपसाद्य(१) तद्द्वारा दूरत एव राजानमनुजानन्तं(२) प्रसाद्य शकटघटावमोचनमेवानञ्च(३) न तु श्रीवसुदेव-सद्म । कंसे तेन(४) साकं निजानासञ्जन-(५)व्यञ्जनाय ॥

स्निग्धकण्ठ उवाच ॥

शिष्टद्विष्टिविशिष्टोऽपि सञ्जातजातकद्वेषपातकोऽपि परधनायया(६) धनानुसन्धाननिर्वन्धसन्धोऽपि स(७) कथमस्मिन्(८) निगमशिष्टि(९)संश्लिष्ट विचित्रेण पुत्रेक्षणेन पुत्रत्त्वणेन(१०) च विस्मायितसकले जगद्वित्त(११)वित्ताशकले(१२) सरलायते स्म ॥

मधुकण्ठ उवाच ।

उक्तमेव पुरा यत् प्रगुणतया(१३)खिलसमञ्जस-

(१) दत्वा । (२) अनुज्ञां ददतं । (३) आप ।
(४) वसुदेवेन । (५) अनासक्ति ।
(६) परधनलालसया परधनतृष्णाया ।
(७) कंसः । (८) नन्दे । (९) आज्ञा । (१०) महात्मत्वेन ।
(११) विख्यात । (१२) अखण्डवित्त । (१३) सरलतया ।

यशसः श्रीव्रजेशचन्द्रमसः खल्वस्य गुणेन गुणेनेव[१] को वा बद्धो न भवेदिति ॥

स्निग्धकण्ठ उवाच । ततस्ततः ? ॥

मधुकण्ड उवाच ।

ततो व्रजत्रातरि तं भ्रातरमनुनिर्ज्जनमिलनाय मन्त्रं वलयति पर्य्याकलितावसरः[२] स श्रीशूरतनूजवरः स्वयं केवलसेवकविशेषसङ्गितया सम्वलते स्म ॥

अथ तेनाव्रजितसदेशः श्रीमान् व्रजमहेशः सहसा महसावृततया साभ्युत्थान[३]मुत्थाय न्यायपरमः कृततदभिगमः स्वमनुजमनुरक्तः परिष्वक्तवान् परिष्वक्तश्चानेन। नतु कश्चित् कश्चिन्नतवान्। जाता[४] वेकस्य ज्यायस्त्वमन्यस्य तु जाता[५]विति। न च केवलमेतदेव कारणतामवलम्वते ! अपि तु परस्परप्रणयातिशयश्च। येनान्यन्नानुसन्धातुं शक्यते ॥

एतदेव च दृष्टान्तेन स्पष्टीकृतं श्रीवादरायणिना—“देहः प्राणमिवागतं” इति। तत्र च देहस्थानीयस्य

(१) रज्ज्वाइव। (२) प्राप्तावसरः।

(३) अभ्युत्थानन्तु गौरवमिति क्षीरः।

(४) वर्षो। (५) जन्मनि।

गोस्थानपतेरस्मदीशितुरेवासक्तिरतिरिक्ता दर्शिता। प्राणाः खल्वन्यं देहं सञ्चरति। देहस्तु तं विना न भवत्येवेति। सतु चतुरशिरोमणिः स्वयमेव रागत[1] स्तच्छिविरा[2] गतस्तेना[3] तिथिवदेव पूजितस्तद्व्यवहारेण जितः सम्प्रति जातयोः स्वतनुजातयोः प्रसक्तधीरिदमुक्तवान्।

"दिष्ट्याभ्रातः प्रवयस इदानीमप्रजस्य ते।
प्रजाशाया निवृत्तस्य प्रजा यत् समजायते"त्यादि।
उपाधिकृतहानिवृद्धिं विना कृतस्नेहसमृद्धिमयदेहतया गम्भीरस्वरतया च पयः पयोधि[4]रिवायं व्रजाधीश्वरस्तु तस्य[5] सर्व्वस्तुतस्य वंशान् कंसकृतध्वंसाननुशोचन् कर्म्मवादरोचनया धैर्य्यं सम्वर्मय[6]न्नात्मनश्च तस्य च शर्म्म[7] सूनृता[8]मृतभृतसन्तर्पणं कृतवान्॥

ततः श्रीमानानकदुन्दुभिस्तं कृतकार्य्यमवधार्य्य भाव्युत्पातं विचार्य्य स्वभवनमेव गन्तुमनुमतवान्॥

---

(१) सन्।　(२) निवेशःशिविरंशंडः।
(३) नन्देन।　(४) क्षीरसमुद्रः।
(५) वसुदेवस्य।　(६) कवचेनैव संनह्यन्।
(७) सुखं।　(८) सूनृतं प्रिये।

श्रीव्रजराजस्तु वस्तुतश्चेतसा चेतः प्रचलित एव सम्प्रति तु गेहं प्रति देहमेवेहयामास ।

अथ व्रजवृत्तमनुवृत्यतां ॥

यथा पूर्व्वदेवानां पूर्व्वमन्त्रणायामामन्त्रिता राक्षसपक्षिणी निर्द्दशानिर्द्दशांश्च देशदेशतः शावकान् वकानिव श्येनी विनिघ्नती कंसस्य निघ्नती[१] वैरोचनि[२]कन्या रजन्यामस्यां व्रजप्रदेशसदेशमाजगाम। या खलु जटाघटा-विघटित[३]प्रकटनमुण्डा विसङ्कट[४]दंष्ट्रासंसृष्ट[५]दष्टडिम्भकोटिविकटतुण्डा नेत्रगर्त्तवर्त्तमानवर्त्म[६]-लोम-समुद्दण्डकुण्डलि-खण्डित-ब्रह्माण्डवर्त्तिधैर्य्या पक्षति[७]-द्वयमध्यस्थितवक्षस्थललम्बमानवक्षोजयुगलदुग्धमिषविषविषमज्वालासह्यवलदह्यमानपर्य्यन्ततया यन्त्रितजन्तुस्थैर्य्या चेत्यादिमहाघोरतावहा । किं बहुना ? प्रतीक[८]मात्रप्राणिप्रतीका[९]पृथुकानेव च पृथुकानिव[१०]कुर्व्वती वर्त्तते ॥

---

(१) आयत्तेवाचरन्ती । (२) वलि । (३) युक्त ।
(४) पृथु । (५) लग्न । (६) पक्ष्म ।
(७) पक्षमूल । (८) अवयव । (९) प्रतिकूला ।
(१०) चिपिटकानिव ।

अथ सा श्रीव्रजक्षितीश-रक्षित-गीर्व्वाणवाणाङ्ग-धानुष्कभिया दुष्करस्वरूपं विहाय हारिरूपान्तरं प्रातिहारिकतया[१] धृतवती । येन[२] खलु सम्पद-धिदेवीयमविभूमि[३] सम्पतन्ती निजाश्रयविशेष-मन्विच्छन्ती च सर्व्वसल्लक्षणतया कृतलक्षणं[४] सम्प्रति जातं श्रीव्रजराजजातमेव समाश्रयिष्यतीति मत्वा तस्याः नूतनवपुः पूतनायाश्चाकूत[५]ममत्वा[६]-हारितहृद्भीरक्षिभि र्न निवारिता रक्षिणीभिश्च नाव-धारिता, येयं पक्षपातिनी[७] कंसपक्षपातिनी[८] सात्वतभर्त्तुः श्रवणकीर्त्तनादिप्रदेशमनुवर्त्तितुम-समर्था तद्बहिर्मुखानामर्भकान्निघ्नती तत्पक्ष[९]-पातिन्येव लक्षिता । एवमप्यस्याः श्रीमद्व्रजागम-नादिकन्तु कौतुकविशेषाय साधयितुं योगमाया खलु योगमायान्ती[१०] बभूव । यस्या[११]श्च हेतो-

---

(१) मायावी प्रातिहारिकः ।　　(२) रूपेण ।

(३) भूमौ ।　　(४) गुणैःप्रतीते तु कृतलक्षणाहतलक्षणौ ।

(५) अभिप्रायः ।　　(६) अज्ञात्वा ।

(७) पक्षाभ्यां पतनमुत्पतनं कर्त्री ।　　(८) कंसानुग्रहवती ।

(९) केशेपक्षः समूहार्थः पक्षः साध्यविरुद्धयोः । बलेकालेप-तत्रेच रुचौपार्श्वे प्रकल्पितेतिक्षीरः ।

(१०) संयोगं प्राप्नुवती ।　　(११) योगमायायाः

रन्यत्र कुत्रचिन्नेत्रमनादधती सर्व्वमत्यादधती[१] श्रीमन्नन्दमन्दिरस्थं तमेव वालकमालोकयामास। अङ्गारधानीसङ्गतस्फुलिङ्गव[२]दङ्गारसङ्गमिव तमसि पतङ्गी तञ्च योगमायाकृतप्राकृतवालक-कल्पता[३] कल्पनया यथावन्नानुवभूव उज्ज्वलगुञ्जापुञ्जतुल-नया प्रज्वलदिङ्गल[४]मिव ॥

अयन्तु श्रीमान्नन्दनन्दनः स्वतातशुभानुध्यान-मययोगमायया सेविततया जन्मत एव समस्त-ज्ञानादिसम्पन्मयतायां शस्तः स्वजनस्नेहवशम्वद-[५]वाल्यादिलीलासुखावेशेन तत्रा[६]नादृत्यातुल त[७]द्व्यक्तिव्यतिरिक्तीकृतस्तथाप्यवसरमवाप्य मध्यं मध्यं सा स्वसेवामध्यवस्यन्ती तत्र प्रादुर्भवति। ततः सम्प्रति च तामन्तर्विकृताकृतिमुपलभ्य भव्यस्वभावरोचने लोचने निमीलितवान् ॥

ततश्च सा सहसा पराभाव्यधिया भिया विना भूता तमङ्कमेव निःशङ्कमानीतवती। भूषकधिया सर्पन्ती सर्पी नकुलमिव ॥

---

(१) अत्याधानमतिक्रम इतिक्षीरः। (२) स्फुलिङ्गयुक्त।
(३) सदृशता। (४) अङ्गारं। (५) आयत्त।
(६) योगमायायां। (७) ज्ञानादि।

स्निग्धकण्ठ उवाच ।

अग्रजन्मंस्तन्मातरौ कथमिव तामपरिचितां न निवारितवत्यौ न च विचारितवत्यौ ॥

मधुकण्ठ उवाच ।

पुरस्तादेव योगमायाख्यं कारणमुपन्यस्तम् प्रक्रियान्तरञ्च तत्र तया[१] क्रियते स्म ।

यथा—

सा हि, तत्रान्तर्गूढाङ्गभुजङ्गीसङ्गतायाः कूट[२]-कनकमय पयःकनकालुकायाः[३] साम्यावगम्यं रूपं दधती परितः स्रवदस्रधारा-वारा[४]-जस्र-स्तन्यप्रवाहान् वहन्ती स्नेहानुकारकदेहत एव ते[५] मोहितवती ॥

पुनश्चेदं सगद्गदं जगाद अयि यशोदे ! त्वमपि हठोत्तरतया कठोरासि सुतरान्तु स्वसुतस्थित-चित्ताद्रोहिणी रोहिणी । यतः शयनतल एवेदृश-सुकुमारं कुमारं निधाय चिन्तामविधाय नाति-कृतनिष्ठं तिष्ठथः, नतु हृदये । प्राणा अपि हृदय-

(१) योगमायया ।　　(२) छल ।
(३) भृङ्गारःकनाकालुका ।　　(४) समूहः ।
(५) यशोदारोहिण्यौ ।

एव रक्षणीयाः किमुत प्राणाधिकोऽयं सुतः । तस्माद् धिग्वो राक्षसीतोऽपि रूक्षमानसा मानषीः । अहन्तु सम्पदधिष्ठातृदेवी त्वया प्रसूतं सुतं विश्व-विलक्षणलक्षणं श्रुत्वा तत्क्षणमेवागतानेन वसन्तेन वासन्तीमिव दृष्टिं हृष्टां कृतवत्यस्मि । मम च स्तनौ सर्व्वश्रेयस्तननौ[१] नित्यममृतं क्षरतः येन पीतेन सोऽयं निःसन्देह-सिद्धदेहः स्यात् । तस्मादहमस्य सर्व्वसुखविधात्री धात्री च भविष्यामीति ॥

स्निग्धकण्ठ उवाच ।

ततोग्रहणादनन्तरं किं जातम् ?

मधुकण्ठ उवाच ।

तदेवं मिषतः सा विषयोषा तं गृहीत्वा विलम्बं हित्वा चूचुकोपर्य्यैव तन्मुखवार्य्युद्भवं[२] निदधे ॥

स्निग्धकण्ठ सभयमुवाच ॥ ततस्ततः ? ॥

मधुकण्ठ सहासमुवाच ॥

ततः स तु स्वमातुः साक्षात्तस्यास्तादृशभृशदुर्नय-दर्शनादुपजातेन तत्प्राणान् पिवता रोषतेजः सङ्घातेन तत्स्तन्यस्य तद्देहस्य च दोषं शोषयन् मातृभावाभासस्फुरदुल्लासस्वस्पर्शस्वाभाव्येन तु

(१) सर्वश्रेयोविस्तारकौ । (२) पद्मं ।

तद्देहे सुगन्धितामिव तत्स्तन्ये पीयूषतां रूषयं[१]-
श्चूषणां चकार ॥

कृष्णेन पूतनास्तन्यपानमित्थं विरोचते ।
यथा गङ्गा प्रवाहेण कर्म्मनाशाजलाहृतिः ॥

सा तु राक्षसपक्षिणी मुञ्च मुञ्चेति पुष्टक्रुष्टतया व्यथितसनीड़ां[२] पीड़ां प्रपञ्चयन्ती प्राणानपि मुञ्चन्ती संस्कारवशात् तं वक्षस्येव निक्षिप्य पक्षविक्षेपाद्व्रजाद्बहिः ससार ममार च । यत्र ह्रादिनी[३] सा ह्लादिनी[४]त्येव तर्क्यते स्म । यत्र च स्वरूपावस्थितिमेव चाससार ॥

उड्डिड्ये सपदि यदा तु पक्षिणी सा
तं बालं हृदि परिगृह्य लम्बमानं ।
उड्डीना द्रुततरमेव मातृयुग्म-
प्राणाश्च स्फुटितहृदम्बुजादिवासन् ॥
तस्मिन् हृते पूतनया तु बाले ।
मात्रोर्यदि प्राणगणो न मूर्च्छेत् ।

---

(१) संयोजयन् ।　　(२) निकटवर्त्तिनीं ।
(३) शब्दवती ।　　(४) वज्रं ।

भोक्तुं तदाभीलकुलं[१] तदा ते[२] ।
किं शक्नुयातामपि किन्तु नैव ॥

आक्रन्दा[३] द्रिदुराणि[४] पक्षपवनात्
कल्पं[५] भुवि भ्रंशनाद्[६]
भूभ्रंशं शवरूपताशवलनाद्गोत्रा[७]गपंक्तिरपि ।
आशङ्क्याभिगता दिविष्टपटली तत्तद्विजातीयतां
निर्णीयाथ विसिष्मिये कतिपयं
कालं वकीसंस्थितौ[८] ॥

ततश्च पूतनां निश्चित्य—
तस्याः सुरा वक्षसि लग्नमेनं ।
स्मेरं गृहीताकुशचूचुकाग्रम् ।
अस्य प्रभावावलिविज्ञचिन्ताः ।
सर्व्वे समन्ताज्जहसुर्विलोक्य ॥

ऊचुश्च ॥

अभजदिह यदेषा पर्व्वताकारवर्ष्मा
क्षयमतितनु[९]मूर्त्तिं प्राप्य वालं तमेतं ।

---

(१) आभीलकुलं दुःखसमूहं । स्यात् कष्टं कृच्छ्रमाभीलमित्यमरः
(२) मातरौ ।
(३) आरवे रुदिते त्रातर्य्याक्रन्दो दारुणो रवे ।
(४) वज्राणि । (५) प्रलयं । (६) पतनात् ।
(७) पर्वत । (८) मरणे । (९) सूक्ष्म ।

न हि तदतिविचित्रं प्रेक्ष्यतामेव साक्षा-
द्विधुरयममृताङ्गः पूतनेयं विषाङ्गी ॥

तथाच ।

विषं स्याद्विषमन्यस्मिन्नमृतं तु विषे विषं ।
पूतनाकृष्णसङ्घर्षे दृश्यतामेतदेवहि ॥

अथवा ।

नवनवरसपाकादुत्पलाभोगधात्री[१]
स्थलज-जलज-पद्मे[२] सर्व्वदा दुःखदात्री ।
रजनिचरगणानां शश्वदामोदपात्री ।
प्रतिहरि[३] लयमागात् पूतना व्याजगात्री ॥

किन्तु, स्वचरितचातुरीभिरिदमिवायं[४] सूचयति ॥

स्तनन्धयस्य स्तन एव जीविका
दत्तस्त्वया स स्वयमानने मम ।

---

(१) पूतनापक्षे नव नव रसान् पाकान् डिम्भान् आप्नोतीति क्विपि या नव नव रसपाकाप्नुत् तथा या पलस्य मांसस्य आ सम्यक् भोगन्धात्री धर्त्री साच साच सेति कर्म्मधारयः । रात्रिपक्षे उत्पलानां आभोगः परिपूर्णता तद्धात्रीतिस्थिते पुनः समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिरितिन्या-यादत्र नव रसपाकादितिहेतुपदेतान्वयः कर्त्तव्यः पाकः परिपाकःतत्परिपाकाद्धेतोस्तद्धर्त्रीत्यर्थः ।

(२) स्थलजानां जलजानां पद्मेपद्माख्यसंख्यायां । पक्षे स्थलजं च जलजं च यत्पद्मं कमलं तस्मिन् ।

(३) पक्षेसूर्य्ये ।　　(४) अयं श्रीकृष्णः ।

मया च पीतो म्रियते यदि त्वया,
किम्वा ममागः स्वयमेव कथ्यतां ॥

स्निग्धकण्ठ उवाच ॥

हन्त ! श्रीव्रजेश्वर्य्यादीनां दीनानां का मर्य्यादा धैर्य्याय जाता। किम्वा तत्परिजनैः समाधानमधायि ॥

मधुकण्ठ उवाच ॥

अथ व्रजे तु महाकोलाहलव्रजे जाते व्रजेशगृहिणीं दोहिणीश्च विहायं विहायमुपर्य्युपरि परिद्रुतासु वृद्धामध्यावधूसु तासु तदैव दैवनिश्चितदिशः काश्चित् पृथुनगपृतनामिव पतितां पूतनां दृष्ट्वापि विघटितभया निकटमटिता विधिघटितस्खलितवाहुघट्टमारूढ़ा वालभावादकुतोभयतया खेलन्तमिव तं वालगोपालमविलम्वितं गृहीत्वा तां हित्वा सम्वेग[१]जातवेगतया सर्व्वं चातिहाय गृहाय दुद्रुवुः ॥

ततश्च तदवलोकेनासङ्ख्यलोकेन सुखमग्नेन पश्चाल्लग्नेन परिप्लवतया[२] समुत्प्लवमानेन सह

(१) आवेग। (२) चञ्चलतया।

समहं[1] महान्तःपुरमागता नारीजना जनन्योर्निश्चेष्टतां दृष्ट्वा कर्त्तव्यमूढ़तामूढ़ा[2] बभूवुः ॥

अथ तथालक्षणातया क्षणकतिपये लब्धव्यत्यये यत्नान्तरपथे च वितथे काचिद्बुद्धिमती सकश्मलयो[3]रपि तयोरङ्के तं बालकमेवावलम्बयामास । अवलम्बिते च बाले तेनैवामृतेनेव कृतत्राणेषु प्राणेषु तं बालकमवलोकमाने ते पुनरन्यां मूर्च्छामानर्च्छतुः । ततः पुनः पुनरेवम्विधानाच्चिदा[4]धानेन प्रकृतिमासेदतुः । मुहुरेव जलसम्वलनेन निदाघदग्धभूमिवत् ॥

अथ बालकमप्यवलोकयन्त्या बालोकनवचनयोः काराभि[5]रिवाश्रुधाराभिरतीव व्यग्रतामग्रतः प्रापतुः ततश्चान्याभिरेव स्तन्याभिमुखीकृतेन तेन सुकुमारेण कुमारेण क्रमानुसारेण धीरतां धारयामासतुः ॥

ततश्च ॥

आश्लिष्टः प्रतिदृष्टिचुम्बितमुखः सुघ्रातमूर्द्धा दृगर्णैः[6]सिक्तः सुहृदां पुरोभुवि धृतः स्वेनापि निर्म्मञ्छितः ।

---

(१) सानन्दं ।　(२) ऊढवत्यः ।　(३) समोहयोः ।
(४) चैतन्य ।　(५) कारा शस्त्री ।　(६) अर्णो जलं ।

सत्यं सत्यमिदं नचान्यदिति स व्यक्तं विविक्तीकृतो
मातृभ्यां न तथापि संहृतभयं दृष्टो वकीमर्द्दनः ॥

अथ श्रीव्रजेश्वरी सचमत्कारमुवाच ।

हन्त ! विलोक्यतामसौ द्वितीयो वाल इति ।

तदेतदुक्त्वा च तां स्वयं धावितुमुद्यतां विवुद्धय प्रतिरुध्य श्रीलरोहिणी वहुलमहिलाभिः सह गृहान्तरमवगाहमाना तं मङ्गलसङ्गतं विलोकयन्ती सङ्गिनीभिरङ्गीकृतपालनं विधाय विहाय च तदागमनस्पृहिणीं व्रजमहेन्द्रगृहिणीं संहाय[१] सान्त्वितवती ॥

पूतनाहन्तुस्तु—

गोमूत्राद्यैः स्नानमाचर्य्य तस्य
प्रेम्णा चक्रुर्मन्त्ररक्षां जनन्यः ।
श्रुत्वा यस्मिन्[२] शास्त्रविज्ञत्वमासां
सर्व्वेऽप्युच्चैः कोविदा विस्मयन्ते ॥

अथ तादृशमहोत्पातदृश्वरी श्रीमती व्रजेश्वरी सर्व्वानर्व्वाचीनाः प्रति सगद्गदं जगाद ॥

पुत्रो भवेदेवमतिस्पृहा नौ,
नासीदभूदेष तु वः स्पृहातः ।

---

(१) मिलित्वा । (२) मन्त्ररक्षाकरणे

प्रत्यर्पि सोऽयं वतयुष्मकाभि-
रस्मासु युष्मासु तथास्मकाभिः ॥

इति तासां चरणपरिसरमनुबालं नमयन्ती बाष्पं मुमोच ॥

ताश्च धैर्य्यं हित्वा ससम्भ्रमं बालकं गृहीत्वा प्रोचुः ॥

अस्माकं यदखिलमस्ति पुण्यजातं,
यद्वास्मत्पितृजननीकुलानुयातम् ॥
तेनासौ वत भवतादहो ! यशोदे !
पुत्रस्ते निरवधिमङ्गलप्रमोदे ॥

इति सास्रमात्मना तं निर्म्मञ्छयाञ्चक्रुः ॥

तस्याः सान्त्वनार्थं समुदिता मुदितास्तत्रैव तस्थुश्च । तत्र पूतनया कृतमजन्यं[१] जनन्या-न्याश्च स्वस्वदृष्टमन्योन्यं निर्दिष्टवत्यः ॥

तथाहि ॥

यथा गता सा यदुवाच यच्च वा
चकार तद्ग्रस्त[२]ममू सम्मूचतुः ।
अमूः समूचुश्च यथा स्वयं गता
यथान्वपश्यंश्च तथा सगद्गदं ॥

---

(१) अजन्यं क्लीवमुत्पातः ।　　(२) लुप्तवर्णपदं ग्रस्तं ।

श्रीव्रजराजादयस्तु दूरतः किञ्चित् किञ्चिदीक्षित्वा मिथः कथया कथं[१]तया तदेतदुच्चावच[२]-वचनं रचयामासुः ॥

तथाहि ॥

समुड्डीयमानामानवायसाताायिसमुदायाविविक्त-महाघोररूपं[३] चण्डरश्मि-रश्मि-भस्मीकृत-सन्तमसा[४]वशिष्ट-महिष्ट-ग्रन्थिसन्ततितयोप-हसितं झटिति निविड़ित-वड्री[५]भूताटवि-खण्ड-मण्डित-प्रदेशतया निर्द्दिष्टं भूरि दूरतया भूलग्नवत् प्रतीयमानोऽयं तोयदसम्भार इति सम्भावितम्। श्रीवसुदेवसूचितोत्पातोचितम् किञ्चिन्निचितमिद-मिति चिन्तितं। पुनर्लब्धपक्षतयोत्पातमाचरन्नुत्-पत्य पतितोऽयमखर्व्वपर्व्वतविशेष इति वितर्कितं।

राक्षसाकार-साक्षात्कारविकल्पकल्पना-जनित-जनचय-भयहासकौतुकविसम्वादनादं क्षणातो

(१) सन्देहेन। (२) उच्चावचं नैकभेदं।

(३) समुड्डीयमाना ये चामाना अपरिमिता वायसा आतायिनश्च चिल्लास्तेषां समुदायेन अविविक्तं पृथक्कर्तुमशक्यं घोररूपं यस्मात्। डीधातुर्दिवादिरप्यस्ति। पूतनापुद्गलं पूतनादेहं उद्भावयामासुरिति परेणान्वयः।

(४) गाढान्धकार।

(५) वृद्धी। वड्रोरुविपूलं पीनपीव्नी तु स्थूलपीवरे।

राक्षसतालक्षणालक्षणा[1]विनिश्चितव्रजापचिति[2]प्रचयं स्वाभिमुखमागताया जनताया मुखान्नैकभेद[3]वेदन[4] विच्छेदकावधारणादवधारितवेदनं नैकव्यघट्यमानवैकव्यतया वित्रस्तसमस्तचित्तं परिव्रजात्[5] पतितं पूतनापुद्गलमुद्द्रावयामासुः ॥

श्रुत्वा पूतनया सुतस्य नयनं तस्यास्तु[6] तस्मान्मृतिं
मूर्च्छन्नेव तदा व्रजक्षितिपतिः सम्यक् प्रबोधं ययौ ।
लब्ध्वा दुर्द्धरकालनागदशनत्रोटं यथा तत्क्षणा-
द्दिव्यं मन्त्रमपि श्रयेत मनुजः कश्चिद्द्रुतं जीवितम् ॥

अथ व्रजराजस्तत्राश्चर्यपारम्पर्यमिदमशृणो-द्दर्शयदन्वभूदपि । तत्राशृणोद्यथा ॥

प्रथमं तावत् पूतनातनुरायामतस्त्रिगव्यूतिं[7] व्याप्य पतितवती विस्तारतस्तु गव्यूतिं। उच्छ्रायतश्च प्रायः क्रोशमिति ॥

साच यामद्वयगम्यायाम तदर्द्धविस्तार व्रजागार-व्रजाद्बहिरेव पपात ।

---

(१) दर्शन ।　　(२) हानि ।　　(३) उच्चावच ।
(४) ज्ञान ।　　(५) व्रजं वर्जयित्वा । व्रजात् बहिरित्यर्थः ।
(६) तु स्यात् भेदेऽवधारणे ।
(७) गव्यूतिः क्रोशयुग्मं स्यात् ।

तत्र च न प्राणिनः पीड़ितवती किन्तु द्रुमानेवेति ॥

अथादर्शयद्यथा।

तत्रहि कुलिश[१] तुल्यनिष्ठुरमहिष्ठकुल्य[२]कुलाकुला घना[३]स्तदपघनाः[४] स्वीयसमाज्ञया व्रजजनपृथक् पृथग्जन[५]व्रजेन झटित्येव कठिनकुठारैर्विपाटिताः। प्रचुरतरस्थानस्थापितास्ततोऽप्यतिविततानि निर्व्वन्धेनेन्धनानि सन्धाय सन्दग्धाश्चेति ॥

तदेवं तद्व्रजवहिर्धामपामरचर्म्मकारादिकर्म्मकार गणानामपि गणनाशक्तिसमतिरिक्तता च न व्यक्तीकर्त्तुं शक्यते किमुत गोपादीनामिति ॥

अथान्वभूद्यथा।

कंसारेः सुमधुरिमा प्रमाणचर्य्यां
न प्राप्स्यत्यधियुगकोटि[६]कूटितो[७]ऽपि।
सा रात्तस्यपि रुधिराशनापि यस्य
स्पर्शाशाद्वरसुरभित्वमाससाद ॥

---

(१) वज्र। (२) अस्थि। (३) निविडा।
(४) तदवयवाः।
(५) नीचजन। विवर्णःपामरो नीचः प्राकृतश्च पृथग्जनः।
(६) युगकोटी। (७) समूहात्।

यतः ।

तदा च दूता इव पूतनाङ्गतो
दग्धाद्गता धूमगणाः सुगन्धयः ।
ग्रामान्तरं यातवतां दिनान्तरे
केषाञ्चिदाह्वानकृतिं विनिर्म्ममुः ॥ इति ॥

अथात्मजं कलयितुमाशु गोकुल-
क्षितीशिता व्रजपुरमध्यमाययौ ।
गतेऽन्तिके पथि पतदश्रुविग्रहः
क्षणं स्थितः स्वजनगृहीतदोर्युगः ॥

अथ धीरतामेव धारयन् परमधीरधीरसौ द्विज-मित्रपरिवृततया बृहद्गृहालिन्दवेदीं विन्दमानः कनकासनकृतासनः स्वकुल-गोकुल-कुलपुरन्ध्रीभिः सार्द्धमर्द्धाङ्गेन(१) सानन्दमुपनन्दवधूहस्तविन्यस्तं वालं पुरस्कुर्व्वता पुरतः पतिरभिजग्मे । वालश्च तस्योत्सङ्गसङ्गीकारयाञ्चक्रे ॥

तत्रच ।

किं ग्रहार्द्दिततया स वालको
दूनतामगमदेकरात्रतः ।

---

(१) भार्य्यया ।

इत्यचिन्तयदमुं तदेन्दुवत्
स्फीतमैक्षत पुनर्व्रजाधिपः ॥

किञ्च ।

लीढं रूपमधु प्रकृष्य[१] रसितं वक्त्रप्रसादामृतं
सम्यक् स्वादित एव तुल्यरहित-
स्पर्शोत्सवः कोऽप्यसौ ।
तस्य श्यामलबालकोमलतनोर्मूर्द्धस्तु तातेन तां[२]
सौरभ्यसदनानुभूतिमभितो विश्वं मदाद्विस्मृतं ॥

निभाल्य च श्रीमन्मुखं सुखमूचे ।

यदि नारायणेन त्वं दत्तोऽसि कृपणाय मे ।
तेनैव सर्व्वं निर्व्वोढ़ा[३] सोढ़ा[४] च मम दुर्नयः ॥

अथ निर्व्वोढ़ा निर्व्वोढ़ेत्यनुवदन्त्यत्यन्ताभिनिवेशादेकेनाप्यकृतनिर्द्देशा पृष्ठदेशादित[५]प्रवेशा जटिलितकचा सत्यवचाः पौर्णमासी सर्व्वैरेव तूर्णमुत्थाय समनस्कारेण[६] नमस्कारेण पुरश्चक्रे अर्च्चयाञ्चक्रे चासनादिभिः ॥

---

(१) प्रकर्षपूर्व्वकं । (२) तस्या अभितः ।
(३) निर्वाहंकरिष्यते ।
(४) सहिष्यते । (५) प्राप्त ।
(६) चित्ताभोगो मनस्कारः । चित्तस्थैर्य्यमित्यर्थः ।

ततश्च ।

स्वप्रश्नोत्तरविषयीकृततद्विशेष[1]योषा वृत्तविशेषा राज्ञानुज्ञापयाम्बभूवे पूर्व्ववदपूर्व्वदानाद्यपूर्व्वाय । तच्च तामेव प्रधानं विधाय विधीयते स्मेति ॥

तदेवं पूतनां घातयित्वा[2] समापनाय पुनरपीदं मधुकण्ठः परमर्षि[3]सम्मतताव्यञ्जनया समुट्टङ्कितवान् ॥

ईदृशस्तनयो जातस्तव गोपपते ! यतः ।
सा वालराक्षसी जज्ञे निजसंसारराक्षसी ॥

चेतसि चेदं विविक्तवान् ।

अर्भासृग्भुगजनि यत् पुरा यदर्व्वाग्
धात्री चाभवदियमत्र नन्दसूनोः ।
तत् क्वाधस्पदमथ तच्छिरस्पदं वा
क्वेत्यन्तर्हृदि विमृशन् भृशं भ्रमामि ॥

तदेवं वृत्ते वृत्ते तद्दिनेऽपि पूर्व्ववदेव कथा रक्षिता ।
यथायथमपि स्वावसथादिपथानुगतिराचरिता ॥

इति श्रीगोपालचम्पूमनु पूतनावधावधारणं
नाम पञ्चमं पूरणम् ॥

---

(१) स्वप्रश्ने यदुत्तरं तेन विषयीकृता गोचरितः पूतनावृत्त-विशेषा यया । (२) पूतनावधमाख्यायेत्यर्थः । (३) शुक ।

# षष्ठं पूरणम् ।

अथ तथैवापरेद्युः सुभासमानायां सभायामनु-
मोदन [1] निदिग्धः स्निग्धकण्ठः सोत्कण्ठ उवाच
मधु-मधुरकण्ठ ! श्रीमन्मधुकण्ठ ! श्रूयतां !।
ततः समन्तादहरहरन्यदन्यल्लावण्यमुत्फुल्लयन्
विधुः स्वजन्मपक्षमुल्लासयामास ॥

तत्र दिग्दर्शनं यथा ॥

एका द्वित्राश्चतस्रो युतवियुततया पञ्चषाः सप्तचाष्टौ
पंक्ति(२)र्वा पंक्तिबद्धाः(३) शिशुयुवतिजर-
त्यर्द्धवृद्धाः समन्तात् ।
आयान्ति द्राग्विशन्ति व्रजनृपतिगृहं
तत्र पश्यन्ति बालं
कृत्वा चूचूकारमिश्रं बहुलविलसितं
स्मापयन्त्यो हसन्ति ॥

यथा च ।

मात्रा पित्राथ मातापितरकुलभवैराकुलैश्चित्रमित्रै-
र्नेत्राणामञ्जनाभं शिशुमनुभवितुं सन्ततं कञ्जनाभं ।

---

(१) प्रशंसा । (२) दश । (३) श्रेणीभूता ।

आगम्यागम्यरम्याकृतिपरिवृतिमुद्दास्य हास्यादिपूर्वं
स्पर्शं स्पर्शं तमुच्चैरहरहरहहो![1] द्रष्टुमहो लभ्यते स्म ॥

ततश्च ।

विगलदलकजालालोलदृक्खञ्जरीटः
प्रकटिततिलकश्रीरोचनाकुङ्कुमाभ्यां ।
स्मितविलसितवक्त्रः श्यामधामाचलाङ्घ्रिः
शिशुरभिशुशुभे स प्राप्य मासं तृतीयं ॥

तत्र च ।

स्निग्धाः पश्यति सेष्मयीति भुजयोर्युग्मं मुहुश्चालय-
त्यल्पं मधुरञ्च कूजति परिष्वङ्गाय चाकांक्षति ।
लाभालाभवशादमुष्य[2] लसति क्रन्दत्यपि क्वाप्यसौ
पीतस्तन्यतया स्वपित्यपि पुनर्जाग्रन्मुदं यच्छति ॥

अथ कदाचिन्नाक्षत्रमासत्रयान्ते नक्षत्रेश[3]कान्ते तज्जन्मनक्षत्रे श्रीमन्मात्रा पुत्राभिषेककौतुकयात्रा प्रवर्त्तिता ॥

तदा च ॥

भवनमनु सुयते रत्नपर्य्यङ्कवर्य्ये
सुरभिमृदुलतूलीशुभ्रवस्त्रप्रशस्ते ।

(१) आश्चर्य्ये ।
(२) कस्यचित् वस्तुनो लाभालाभवशात् हसति क्रन्दति च ।
(३) चन्द्र ।

हरिमणिरुचिवालः शोभते स्मासिताम्भो-
रुहमिव सुरसिन्धौ[१] क्षीरसिन्धौ हरिर्वा ॥

अथोत्तानशायी स सर्व्वातिशायी
निजाम्बा-यशोदः स्वतातप्रमोदः ।
स्वनक्षत्र[२]भाते वभूव प्रभाते
वलेनातिसाङ्गः[३] परावर्त्तिताङ्गः ॥

ततश्च ।

शयनं[४] पार्श्वेनोपपीडं[५] शयानममुं सुकुमार-कुमारापीड़[६]मकस्माद्विलोक्य तद्वृत्ते धात्रीभिर्मात्रे निवेदितमात्रे सातिमात्रा[७]नन्दकन्दलितानिज-नन्दनमङ्गलातिशयस्पृहिणी श्रीमन्नन्दक्षितीश-गृहिणी भर्त्तुराज्ञां सुज्ञातां सम्भूय भूयः सर्व्वाः समाहूय तमेव महोत्सवमहामहोत्सवं[८] चकार ॥

तत्र कासाञ्चिदपि गृहपालनाय स्थितानामाहूति-रेवमनुसन्धेया ॥

---

(१) गङ्गायां । (२) रोहिणी । (३) सम्पूर्णावयवः ।
(४) शय्यां । (५) उपपीड्य । (६) श्रेष्ठं ।
(७) अतिसम्पूर्णा ।
(८) उत्सेकामर्षयोरिच्छाप्रसरे मह उत्सवः ।

लालयस्याद्य तु जन्मभं विजयते तत्रापि चौत्थानिकं
सर्व्वा एव गता स्वमेव किल किं सद्भावितुं वर्त्तसे ।
आगृह्णाति मुहुर्व्रजेशगृहिणी किं वा व्रजे मोषकः[१]
कोऽप्यस्ति स्फुटमस्ति वा स तु शिशुर्मुष्णाति चेतः परं ॥

अथ तत्र चित्रवादित्र-शुभरीतिगीति-प्रशस्त-विप्रकुलशस्तस्वस्तिवाचनपूर्व्वकविधिमतिरिच्या-[२]भिषिच्य पीतवाससा परिकृत्यालङ्कृत्य मन्त्रादिभिरभिरक्ष्याभिलक्ष्य[३] तदुद्धर्ष[४]हर्षमयबहुतर कार्य्यचर्य्यामर्य्यादां पर्य्यापयितुमितस्ततश्चलन्ती परिजनानपि नियोजनया सप्रयोजनान् जनयन्ती जननी गेहायमानविसङ्कटघटन महाशकटाधः कल्य[५] एव पल्यङ्के बालमालोकाजिर एवाजिरे[६] शायितवती । तत्र कुमारयतः[७] कुमारांश्च स्थापितवती । तत्रावष्टम्भ[८]स्तम्भचतुष्टय-मध्यगदोलाकारः सपल्यङ्को यथा—॥

प्रवालाङ्घ्रिर्गारुत्मतघटितपट्टीपटुरुचि-
र्वहन्मध्ये पट्टारुणचिपिटडोरीपटवृतिं ।

(१) चौरः । (२) अतिशयं कृत्वा ।
(३) निरीक्ष्य । (४) उत्सव ।
(५) प्रातः । (६) अजिरं विषये कार्य्ये प्राङ्गणेऽपि ।
(७) क्रीडतः । (८) स्वर्णा ।

दुकूलान्तस्तूलस्फुरितवरतूलीवलयितो[१]
दरान्दोलो दोलो यदुपरि विरेजे शिशुहरिः ॥

तत्र च ॥

स्थविष्ठपट्टस्तवकं विचित्रं निबद्धमूर्द्धादभिलम्बमानं ।
स्पृशन् कराभ्यामसितः सकूजन्नुत्तानशायी
मुहुरुज्जहास ॥

ततश्च ॥

ब्राह्मणादि पूजायां पूर्य्यमाणायां कृतसमाहरणेन हरणेन[२] सार्द्धे सार्द्धप्रहरेऽत्यतियाते न कस्यचिदन्यत् किञ्चिदपि चिदमत्र[३] मत्रासीत् ॥

तदा च पूतनावन्नूतनार्भकाय कंसप्रहितः कश्चिद्दिविषदहितः समागम्य दिवि स्थित एवं चिन्तयामास । स पूतनापोथको[४]ऽयं पोतो[५] विसङ्कट शकटाधस्तादास्ते साक्षान्मन्तुं[६] विधातुं तु न कोऽपि जन्तुरमुष्य शक्यतीति लक्ष्यते । छद्मरूप सद्मतया च पूतनासंस्थिता[७] । तस्मादमूर्त्त एव

(१) दुकूलान्तस्तूलेन स्फुरिता या वरतूली तया वलयित आवृत इत्यर्थः ।

(२) यौतुकादिषु यद्देयं सुदायो हरणं च तत् ।

(३) ज्ञानपात्रं । (४) मारकः । (५) बालः ।

(६) अपराधं । (७) मृता ।

सन्नत्र पूर्त्तये[१] भवानीति । ततश्चासौ शकटम-प्रकटमाविष्टवान् ॥

तदावेशेन चासौ भूम्यां प्रविशच्चक्रतया वक्री भवदक्षतया चोपरिपात[२]-परीपाकप्रक्रमं यदा चक्रे तदैव तद्दैववशतः किल तस्य पोतस्य स्तन-निदिग्धदुग्धजग्धीच्छा[३] जाता । तदा च मातर-मनुपलभ्य कातर इव नवकमलदलकोमलचर-णास्फालनादुद्घट्टितं निकटसङ्घटितं निजशकटं पक्षविहीनमपि कुतुकादिव राक्षसपक्षिणीवदुड्डीनं विधाय विवृत्तपतनत्वमासादयामास स शावकः ॥

इदमेव साश्चर्य्यतयानूदितं[४] श्रीमदर्ज्जुनेन विष्णुधर्म्मे ॥

तालोच्छ्रिताग्रं गुरुभारसार-
मायामविस्तारवदद्य जातः ।
पादाग्रविक्षेपविभिन्नभाण्डं
चिक्षेप कोऽन्यः शकटं यथा त्वं ॥ इति ॥

सचासुरः स्वयमेवामूर्त्ततामुरीकृतवानितीव[५] तमप्यसावाकाशनीकाशतया[६] नाशयामास ॥

---

(१) पूर्णतां प्राप्तुं । (२) पतनस्य । (३) भोजनेच्छा । (४) अनुवादं कृतं । (५) इतिहेतोः । (६) तुल्य ।

तदिदमहो ! काकतालीयमेवजातं ॥

सोऽयमसुरावेश एव ब्रह्माण्डपुराणे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रे शकटासुरभञ्जन इति नाम्ना व्यञ्जितः ॥

अत्र देवाः श्रीलगोपालभावमुत्प्रेक्षाञ्चक्रिरे

यथा ॥

शकटमिदमिहास्ति मद्गृहस्य
स्वयमविशस्तदनेन चोत्प्लुतोऽसि ।
रुदितमनुपदं मया किकीर्णं
तदपि यदि म्रियसे न तन्ममागः ॥ इति ॥
आविर्भवत् कटकटे शकटेऽथ सर्व्वे
किं किं किमित्यभित एव भियाभियाताः ।
तस्यातिपातमवलोक्य विलोक्य तोकं
क्रन्दद्भिमूढमतितातितिमूढवन्तः ॥
माता च तं विवशितावयवापि देवा-
विष्टेव पश्यति जने जगृहे द्रवेण ।
पश्चात्तु कम्पमुखभावनिपीडिताङ्गी
तां विद्रुताः परपराः परितोऽप्यगृह्णन् ॥

तस्मिन्ननस्यब्द[१]बच्छब्दे जाते तु ॥

किन्तत् किन्तन्ननाद श्रुतिकटुशकटस्तत्कथं
स व्यलोठी[२]त्

कस्मात् कस्मादकस्मात् कुशलकुशलमों[३]
वासुदेव-प्रसादात् ।

इत्थं प्रश्नोत्तराभ्यां व्रजकुलपतयः प्रापुरन्तः पुरान्त-
र्दृष्ट्वा तत् पातमासन् दशनततिशिखा
दष्टजिह्वाश्चिराय ॥

ततश्च ॥

सहसा वहिः पुरादन्तःपुरपुरस्थलभाजं श्रीमद्-व्रजराजं निर्व्वर्ण्य[४] सर्व्वे पर्य्यायागता द्विधाभूताः पुरतो दूरतोऽवकाशं ददुः ॥

ततोऽसौ जनकस्तु जनकलकलतस्तद्वृत्तमव-कलयन्नम्वालागलावलम्वं वालकमेव स्वपाणि तलमवलम्वयामास विलोकयामास च तस्य सर्व्वा-वयवान् ॥

तदनु च सर्व्वे एव शान्ततामायान्तस्तदुदन्तं[५] समन्ततः शकट-निकट सम्वलकान्[६] वालकानेव

(१) मेघः । (२) विपरीतेन पतितः । (३) उमित्यभ्युपगमे ।
(४) दृष्ट्वा । (५) वृत्तान्तं । (६) स्थितान् ।

पप्रच्छुः । ते च तदेकनिर्देशिन्या प्रदेशिन्या [१] दर्शयन्तस्तमेव निर्दिदिशुः । तत्रैको लोहलो[२]ऽप्यग्रवादी निवारितकोलाहलः प्रललाप ॥

मम मम पापार्श्वतः श्रूयताम् ।
य य य यदा च च चरणा मुमुत्थापितवानयं ।
त त त तदा ते तेन स्पृष्टमात्रो डि डि डि डि
डीन इवोद्भ्रान्तः सोऽयं श श शकट इति ॥

ततश्च ॥

तद्विडम्बादिषु बालादिषु हसत्सु वीभत्सित वालिशभाषिताः परमवत्सला विचिकित्सां न धित्सां चक्रुः । पूतनावधावधारितानुवादितया कर्कशतर्क-चक्रानिरुद्धवुद्धयस्तु चक्रुः ॥

पिता तु पुनः स्वस्तिवाचनाभिषेचनादिना विप्र-कुलप्रतोषणादिना सर्व्वाशीराशिना च तं लङ्गिम-[३]वालं मङ्गलेन सङ्गमयामास । मातुरुत्सङ्गेन च ॥

तया च स्ववाललालनाकलापमय्या गृहान्तः शय्यायामेवायं शाय्यते स्म ॥

(१) तर्जन्या ।
(२) अस्फुटवाक् स्यात् । (३) मनोहर ।

गोपमहेन्द्रादिभिर्महितमहाशकटश्च यथास्थानं घटयामासे ॥

अथ मधुकण्ठ उवाच ॥

वत्स! वालकेन महाशकटसमुच्चाटनमसम्भाव्यमिति सम्भाव्य भण्यताम्?। अन्यथा हि कथैवान्यथात्वमापद्येत ॥

स्निग्धकण्ठ उवाच ।

आर्य्य! पूर्व्वमेवात्रापूर्व्वता[1] निवारितास्ति यतो योगमाया खल्वस्य सम्भावितयोगं निर्म्मापयतीति पुनर्म्मांप्राक्षीः ॥

मधुकण्ठः सस्मितमुवाच ॥

तदनन्तरमुदन्तः कः? ॥

स्निग्धकण्ठ उवाच ॥

अथाग्रजानुजाननु[2] व्रजस्य राजा विविवेच। वालकयुगलमिदमपृथगालपालम्वनतामेव नितरामर्हति यतस्तदीयजनन्योः स्वयमेव तल्लालनाय लालसाधन्ययोस्तत्र च परस्परतदासक्तयोर्नानास्पृहगृहकार्य्यपर्य्यापणाव्यसनयोर्युगपत्तद्युगलस्य पृथगवकलनं दुर्व्वलमिति केवलं सुदिनागमन-

(१) आश्चर्य्यता। (२) महार्थे।

विलम्वतामवलम्वे । यथा वा भवतामिच्छा भवतीति श्रुत्वा श्रुतज्ञाः श्रोत्रियानाश्राव्य तदैव दैवानुकूल्यं निभाल्य समसुद्यद्वाद्यपरीतगीतस्वस्तिवाचनादि प्रशस्तिपूर्व्वकं द्वयोरपूर्व्वमिलनमाशु कलयामासुः ॥

तच्च यथा ॥

मिथो लग्ना दृष्टिः समजनि[१] चिरं मूर्त्तिरचला
द्रवच्चित्तं नेत्रोदकमिषतयागादभिमुखम् ।
इति भ्रात्रोर्व्वाल्येऽप्यसितसितयोः सा प्रसितता[२]
नवे व्यत्यालोके कुतुकमिह किं वा न तनुते ॥
वाल्ये प्रथममन्योन्यं मिलतो रामकृष्णयोः ।
सितासितांशवः पृक्ता जज्ञिरे मृगलाञ्छनाः ॥

तदेवमेव सर्व्व एव पर्व्वविधाय निज निज नूतनतनूजान् गणकगणितगुणगणेऽहनि स्नेहं तेषां तेने[३]ह सहेहमानाः समङ्गलं सङ्गमयामासुः ॥

अथ युक्तिमत्या सदुक्तिसम्मत्या श्रीमद्भागवतकथनव्युत्क्रमेणाप्युपक्रम्यते ॥

---

(१) समजनीति सर्वत्रान्वयः ।
(२) आसक्तिता । तत्परे प्रसिताशक्तौ
(३) कृष्णेन ।

यतः ॥

सर्व्वैः कविभिरनुक्रम,शालि प्रोच्येत कृष्णलीलाद्यं ।
शुकमुख-वचसि प्रेम, प्रमदमये तद्विना तु चित्राय॥

तदेवं दिनशतपूरणा(१)मदूरतामनुजस्याग्रजस्य तु तस्मादप्यदूरतां लब्धम् ॥

तदाच ॥

सम्यग्मातुः परिचितिरभूत् यत्र किञ्चित् पितुश्च
प्राप्तःसोऽयं स्वसदनजनः किं नवेत्थं मतिश्च ।
तस्मिन् वाल्ये वलयति तयोः कापि शोभासुधाब्धि-
प्रख्या(२)गोष्ठं भुवनमपि सा वीचिभिः सिञ्चति स्म॥

तदेतदधिगत्य शीघ्रमेव नामकरणं कर्त्तव्यमिति सम्मत्य श्रीमन्तं वसुदेवं प्रति यदा श्रीव्रजनरदेवस्तन्निजमिष्टं(३) सन्दिष्टवान् तदापरमार्थविचारेण मित्रपुत्रताहंसमधिकृतवाहिर्व्यवहारेण चानुजस्य शततमं वासरमेव तदवसरं निश्चिन्वन् श्रीवसुदेवः श्रीव्रजराजं प्रति यथावसरं तन्निवेदयिष्याम इत्यनिश्चिन्वन्निव सन्दिदेश । अथ तपोधामानं गर्गनामानमात्मनः परमहितं कुलपुरोहितं मनसि

(१) कर्त्तुं ।　(२) तुल्या ।　(३) दूतं ।

सम्मत्य रहसि सङ्गत्य निजतनय-निर्णयमयं[१] वृत्तं वितत्य निवेदयामास। सच सहासमाहस्म। तदेतदपरमप्यहं नानावृत्तं जानाम्येव सम्प्रत्यत्र मत्कृत्यं त्वाज्ञाप्यताम् ॥

वसुदेव उवाच ॥

ततस्तत्र भवता नन्दव्रजभुवं व्राजं व्राजं मिथः संयुतौनव्यौ निजयजमानसुतौ द्विजाति जाति समुचितप्रकारेण संस्कारेण पुरस्कर्त्तव्यौ। किन्तूपनयनोपयमने[२] यथा तस्यां[३] न स्यातां तथा प्रयतनीयम् ॥

मुनिरुवाच ॥

युक्तमुक्तं। यतः स्वपक्ष एवास्माभिरपेक्षणीयः ॥

अथ तस्मिन्ननुजस्य शततम एव वासरे व्रजं प्रतिप्रस्थिते च मुनिवरे व्रजराजस्तु ज्यायसस्तद्विनाति क्रमात्पुण्यतरं दिनान्तरमेव द्वयोरपि नामकरणस्याधिकरणं भविष्यतीति निश्चित्य-प्रातरेव तर्णकानां कोटिभिर्नृत्यपरिपाटीभिराटीकमानाभि[४]र्विचित्रं स्थानं गोगोपानां वनप्रस्थाना-

(१) परिवर्त्ते। (२) विवाहे। (३) व्रजभुवि।
(४) इतस्ततो गच्छन्तीभिः।

न्निर्जनावस्थानं गोस्थानमनुसंस्कारालङ्कारसम्भालनार्थमेकसेवकमात्र कृतानुव्रजनतया कृतव्रजनः सकृपतया तान्[१] पश्यन्नासीत्। तत्रैव च सर्व्वतोऽप्यनिरिक्के विविक्ते[२] बाल्यत एव कृतसेवं निजदेवं सर्व्वसल्लक्षणानन्दिताखिलायां श्रीमल्लक्ष्मीनारायणाख्यशालग्रामशिलायामष्टाक्षरेणोपतिष्ठमानश्चिराद्विराजते स्म। कृतसमापने च सभाजने[३] सर्व्वसर्व्वज्ञ-गुरुर्मुनिपरिषदामुरुर्वाणीवासितसामा श्रीगर्गनामा वारं वारं निष्क्रमद्वारं विलोकमानेन गोपलोकप्रधानेन तस्मादकस्मात्तर्णकानामुत्कर्णता-निर्व्वर्णनया[४] कस्यचिदागमनं वितर्कयता तूर्णमभ्यर्णत एव निरवर्णि[५]॥

तदा च ॥

उन्मीलद्विधुवर्णमर्द्धपलितं वक्रादिरूपान्वितं
किञ्चित् स्थूलमखर्व्वमायतभुजं विष्वक्प्रसादाकरं।
शुभ्र श्रीवसनद्वयं श्रुतिकरालङ्कारदीप्यत् प्रभं
पुत्रप्रेमविलासिताखिलमृषिः श्रीनन्दमत्रैक्षत ॥

---

(१) तर्णकान्।　　(२) पवित्रे।
(३) पूजने।　　(४ दर्शनेन।
(५) अदर्शि।

अस्य च मुनेरनेन[१] चिराद्दीप्सयाभीप्सितमागमनमासीत्[२] ।

यतः प्रतीक्ष्य[३] एव सर्व्वत्रायं प्रतीक्ष्यतां[४] वा कथं न लभेत ॥

तदेवं प्रतीततया प्रतीतः[५] सोऽयमिति तं व्रजपतिरपि निपीतामृतवत् परमप्रीतः शीघ्रमासनप्रदेशमतीतः समतिरिक्तभक्तिपरीतः कृताञ्जलितयातिविनीतः साक्षादधोक्षजधीतः प्रणनाम । ब्रह्मवर्च्चसेन चर्च्चितमेनमानर्चाशेषेण देवार्च्चनद्रव्यशेषेण । प्रोवाच च ।

अलमिह कुशलं पृष्ट्वा, कुशलं कुशलं[६] भवेद्यस्मात् ।
किन्तु स्वककुशलार्थं, कुशलं तत्र च विपृच्छ्यते सद्भिः[७] ॥
स्वागत पृच्छाधाष्टर्यं, भवति महिष्ठे सदेति गीर्युक्ता ।
तदपि सुरार्च्चामनु सा[८], यद्वान्निर्मीयते तद्वत् ॥
केवलवचसा तोषो, वैभवसत्वे न युज्यते नूनम् ।
किन्त्विदमपूर्णविषयं, पूर्णे किञ्चिन्नमात्येव ॥

---

(१) नन्देन । (२) पौनःपुन्येनाभीप्सितं यदागमनं तदासीत् ।
(३) पूज्यः । (४) अपेक्षणीयतां ।
(५) प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ।
(६) पर्य्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु । (७) स्वागतपृच्छा ।
(८) अस्मिन्नुद्गीत्याख्यमार्य्यावृत्तं । तल्लक्षणं यथा-आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीते ।

न सतः[१] स्वार्थापेक्षा, किन्तु सदा सा परार्थैव ।
तस्माद्विहरति[२] तस्मिन्, परपरविज्ञापनं[३]
सुखदम् ॥
ज्योतिःशास्त्रं भवता, कृतमथ वेदेऽपि निष्णातम् ।
तत्तत् परसुखमात्रा,पेक्षं तदिदं निवेद्यं मे ॥
बालो यो मम जात,स्तस्मादधिकश्च वासुदेवो यः ।
निजदृक् सुधया तं तं, शीकितु[४]मास्तां भवान्
करुणः ॥

तदेतदाश्रुत्य गर्गः सगद्गदं जगाद ।

यन्मना[५] भिक्षुरायातस्तद्दाता दित्सति स्वयं ।
तदा भाग्यं कियद्वर्ण्यं भिक्षोर्दातुश्च कौशलम् ॥

तदेवमात्मने श्लाघमाने मुनिराजे श्रीव्रजराजः स्वनियोज्यस्य[६] कर्णे वर्णितवान् । एवमेवं कुर्विति ॥

प्रवर्त्तयामास च मुनिना कंसदुर्वृत्तविवर्त्तित[७] वसुदेव-वृत्तसम्वादम् ॥

सं प्रवदमानयोश्च तयोः सोऽपि तत्प्रयोजनं

---

(१) साधोः ।
(२) विहारस्तु परिक्रम इत्यमरः । क्रीडासञ्चार इति क्षीरः ।
(३) कर्तृकं ।　　(४) शीकसेचने ।　　(५) यस्मिन्मनाः ।
(६) दासस्य ।　　(७) प्रतिकूलित ।

परामृश्य शुद्धान्तं प्रविश्य निजनिजोत्सङ्गसङ्गती कृत बाले अम्बाले पुरो विधाय गन्धपुष्पादि-लसित चामीकरभाजनकरः परमकिङ्करः सहसा रहसा ससाद ॥

वीक्ष्याथ मात्रोरुरसि प्रसञ्जिता-
वत्यर्भकौ दूरत एव तावृषिः ।
जवादुदस्थान्मणिमन्त्रवत् प्रभोः
प्रभाव एवादृतये न विस्तृतिः ॥

ततश्च ॥

मातृयुग्मललिताङ्कलालितौ
वीक्ष्य कृष्णधवलौ स वालकौ ।
निर्निमेषदशया दृशोर्जलं
रोद्धुमैष्ट नितरां न तापसः ॥

अथ सङ्कोचं विधाय सन्निधाय मातृभ्यामात्मना(१)-त्मजाभ्याञ्च मौनेनैवानामि मुनिवरः ॥

सोयमुच्चकै राशीशिषञ्च(२) ॥

यथा ।

पित्रोः प्रति स्वंकुलयोस्तदीययोः
सम्वन्धिवन्धुप्रकरे जगत्यपि ।

(१) कर्त्ता । (२) आशिषमकरोत् ।

आनन्ददाता भव नन्दनन्दन !
त्वं तद्वदप्यानकदुन्दुभेः सुत ! ॥

ततश्च ॥

तदेकसर्गे[१] गर्गे व्रजेश्वर-याचनतः स्वासनमागते पुरतः किञ्चिद्दूरतः ॥

सितासितैकैकपुष्पविष्णुक्रान्ताद्वयप्रभे ।
ते रोहिणीयशोदाख्ये तनयाभ्यां विरेजतुः ॥

ततो मुनेरादेशतस्तेऽप्युपवेशमङ्गीकुर्वन्ति स्म । श्रीगर्गे च तयोरावेशितधीन्द्रियवर्गे व्रजक्षितिपतिः क्षणं प्रतीक्ष्य साञ्जलिगिराभिलषितं व्यञ्जितवान् ॥

योग्य एव परयोग्यताकर[२]-
स्तादृशत्व[३]मपि वेदवेदजम्[४] ।
त्वन्तु वेदविदुषां वरस्ततः
संस्कुरु द्विजजनुस्तमू अमू ॥

गर्ग उवाच ॥

न्तो यदुवीज्य[५] त्वेऽपि वैश्यतत्तोज्यमातृत्वं शान्वयि-
[६] तद्गुरुपदव्यागतैरेव कर्म्मकारयितव्या न तु मया ॥

---

(१) एकसर्गो अनन्यवृत्तिः ।

(२) योग्यो जनःपरयोग्यताकरो भवति ।

(३) योग्यत्वं ।　　(४) वेदज्ञानजं ।

व्रजराज उवाच ॥

भवेदेवं किन्तु क्वचिदुत्सर्गोऽप्यपवादवर्गं बाधते ऽधिकारिविशेषश्लेषमासाद्य। यथैवाहिंसा[१] निवृत्त-कर्म्मणि बहुश्रद्धं प्रति यज्ञेऽपि पशुहिंसा। तस्माद् भवतां ब्राह्मणभावादुत्सर्गसिद्धा गुरुता श्रद्धाविशेष-वतामस्माकं कुले कथंलघुतामाप्नोतु। तत्रापि भवतः सर्व्वप्रमाणतः समधिकृता समधिगता। तस्माद-न्यथा मास्म मन्यथाः। एतदुपरि निजपुरोहिता-नामपिहित[२]मपि हितमहसा[३] करिष्यामः ॥

गर्गः पुनरतिगोपनाय सविचारमुवाच। तथापि खलः स खलु देवकीतोक-हन्ता दुर्म्मन्ता देव्याः संशनेन नृशंसः कंसः पुनरागताशङ्कः स्यात्। यस्माद्यादवगुरुतया पुरु प्रसिद्धः सोऽयमन्यवर्ग-जममुं समस्कुरुत। तस्मादेव वसुदेवकृतोपासनया नूनमनया देव्या स्वेन विनिमितः स वालस्तत्र वर्त्तते गीर्व्वाणवाणीनाममृषाभावादिति। तदा निःषम[४]मिदमतिदुःषमं[५] स्यात् ॥

---

(१) मा हिंस्यात् सर्वभूतानि।

(२) अनाच्छन्नं। (३) महस्तूद्धवतेजसोरिति नानार्थः।

(४) अतुल्यं। (५) दुःषमं निःषमं गर्ह्यमित्यव्ययवर्गः।

तत्तन्मूलश्यामतैकात्म्ययोगा[१]-
ज्जन्मन्यस्मिन् कृष्णनामायमस्ति ॥
युष्मत्तो जन्मतः पूर्व्वं वसुदेवात्तवात्मजः ।
जातो यस्मात्ततो वासुदेव इत्यपि गीयते ॥
नामानि यानि गुणकर्म्मनिबन्धनानि
रूपाणि च प्रतिदिशं निखिलस्तुतानि ।
साकल्यतो नहि वयं यदि तानि विद्मो
जानन्ति तर्हि न परे त्विति पौनरुक्त्यम् ॥
सानन्दं नन्दराजेन तदा मुनिरगद्यत ।
लग्नं[२] हृदि न लग्नं[३] नः सर्व्वज्ञस्तद्भवान् गतिः ॥

पुनश्च ।

ईक्षतां[४] भगवन्नस्मै भवानिति निवेदितः ।
गर्गस्तस्मै राध्यति स्म[५] प्रहसन्महसान्वितः ॥

तद्वेतदस्माकं 'खमाणिक्य'नाम्नि ज्योतिर्ग्रन्थे प्रागेव निरूपितमस्ति ॥

---

(१) तत्तन्मूलश्यामो नारायणः तस्य भावस्तत्ता तया य एकात्म्ययोगस्तस्मात् । वस्तुतस्तु स्वयमेव श्यामतया हेतोर्यदैकात्म्यं केवलत्वं तस्य योगात् ।

(२) राशीनामुदयो लग्न । (३) ज्ञातं ।

(४) अस्य दैवं पर्य्यालोचयतु ।

(५) तस्य दैवं पर्य्यालोचयति स्म ।

उच्चस्थाः शशि भौम चान्द्रि शनयो लग्नं वृषो लाभगो-
जीवः[(१)] सिंहतुलालि[२] षु क्रमवशात् पूषोशनोराहवः
नैशीथः समयोऽष्टमी वुधदिनं ब्रह्मर्त्तमत्र त्तणे
श्रीकृष्णाभिधमम्वुजेक्षणमभूदाविः परं ब्रह्म तत्
इति ॥

वृष-कन्या-तुला-मीनराजेषु[(३)] स्फुटमुच्चगाः ।
सोम-सौम्य-शनि-त्तोणीसुतास्तज्जन्मनि स्थिताः
यस्माद्विश्वावसौ वर्षे जन्म त्वज्जन्मनः शिशोः ।
विश्वमेव वसुश्रीमद्भविताममुष्य तुष्यतः ॥
रोहिण्यां जन्मना रोहिण्य[(४)]युतानामसौ पतिः ।
वृषलग्नश्च तत्राशीद्वृषकोटीशिता ततः ॥
आयतिश्चा[(५)]स्य भविता सदैवायतिमत्यतः ।
आयत्यां[(६)] मुनयोऽप्यस्मिन् कुर्य्युर्मनस आयतिं[(७)]
एष वक्ष्यति[(८)] शास्त्राणि शास्त्राण्यप्यात्म-तेजसा
अनिष्टहृद[(९)]मित्राणां मित्राणाञ्च व्रजाधिप ! ॥

---

(१) वृहस्पतिः ।　　(२) वृश्चिकः ।
(३) मकरः ।　　(४) गो ।
(५) स्यात् प्रभावे चायतिः । चकारादागामिनि काले आयमने चेति क्षीरः ।
(६) उत्तरकाले ।　　(७) आयमनं ।　　(८) शास्त्रपक्षे वोढा ।
(९) अनिष्टं हृत् हृदयं यस्य । मित्रपक्षे अनिष्टं हरतीति ।

भवतोर्भविता भव्यमस्मादिति वृथा कथा ।
भावत्कानाञ्च तद्भव्यं भवस्य(१) च भवस्य(२) च ॥
अस्याश्चर्य्याचर्य्या, वहति वहूनां कुतूहलं वहुलम् ।
ससुरा(३)नसुरान् दुन्वन्, भवति(४) सुराणां
पुराप्यसाववितिा ॥
सहजप्रेम्णां भवता,ममुना किं तारणं चित्रम् ।
तानपि कृत्रिमहार्द्दान्(५), सर्व्वान्निस्तारयेदेषः ॥
तस्मान्नन्दात्मजस्ते यदपि हरिसमः
सर्व्वसाद्‌गुण्यवृत्या
सर्व्वत्रेमं तथापि स्वमहिम-विभव-
ख्यातिभिः पालय त्वम् ।
वश्यं कुर्व्वन् स्वदेवं हरिममुमपि तं
स्वाङ्गजं निर्म्मिमीषे
तद्वीर ! त्वां विना न स्वयमयमयते स्वैरतां स्वावनाय ॥
तदेवं भवद्भिः स्वदेवेन तुल्यगुणिण्यस्मिंस्तन्नामा-
न्येव कामं गणनीयानीति संक्षेपेणार्थनिक्षेपः ॥

---

(१) प्रपञ्चाप्रपञ्चस्य ।
(२) शिवस्य । (३) सुरासक्तान् ।
(४ पुरा-योगे भूते लट् । (५) असुरान् ।

तदेवमाकर्ण्य जोषं[१] जुषमाणे तु व्रजराजे मुनिः पुनरुवाच ।

व्रजराज ! भवदिच्छया वयमेवमेवागम्यचागम्य चानयोर्द्विजातिसंस्कारान् करिष्यामः; किन्तु कर्णवेधचूड़ाकरणे न सम्भवतः। पश्य ? चाभ्यर्णतः सूक्ष्मतया कर्णच्छिद्रमस्ति केशलवस्यापि लवः[२] स्फुटं न सम्भवतीति । ततश्चान्नप्राशनमात्रं भवद्भिराचर्य्यं । सावित्रसमावर्त्तन[३] विवाहवृत्तं तु न स्वयमुद्यमपात्रं कार्य्यं । किन्तु समयज्ञैरसम[४]-यज्ञैरस्माभिरेवेति ॥

ततश्च क्षणं मुनितामेव व्यवस्य[५]न्मुनिस्तौ पश्यन् वश्यमना बभूव ॥

ततश्च ॥

यद्यपि पित्रोः स्नेहा,न्वयमयबाल्यैकतानौ तौ ।
तदपि मुनिस्तज्ज्ञानं, शङ्कितवान् सङ्कुचन्नासीत् ॥
सङ्कोचादिव गोप,प्रभुमनु स मुनिर्विधायय[६]न्नाज्ञां ।
चलितोऽप्यलभत तस्मिन्, स्थित इव तत्तत्परिस्फूर्तिं ॥

---

(१) तूष्णीमर्थे सुखे जोषं । (२) छेदः ।
(३) वेदाध्ययनपूर्तिः । (४) अतुल्य ।
(५) कुर्व्वन् । (६) गच्छन् ।

चलनसमये तु श्रीमान् व्रजेशः स्वयमनुव्रज्य बालकाभ्यामभ्यवादयत् । स च भगवे सहपुत्राय "स्वस्ति तेऽस्तु व्रजाम्यह"मिति व्यक्तमुक्तवान् ॥

ततश्चात्मनो महता सुप्रजस्त्वेन व्रजराजः स्वान्तरेवमात्मानमामन्त्र्य वदन्ननन्द ।

पुत्रो लब्धः सुचिरा,दिष्टः स महद्भिरेवमादिष्टः ।
अस्मात् पूर्णानन्दा,न्मनुष्व ननु(१) नन्द! पूर्णोऽस्मि ॥

अथ मुनये सदाक्षिण्याय(२) दक्षिणाय(३) सदक्षिणानां गवामयुतं प्रयुतञ्च गोपैरिन्द्रगोपवर्णानां स्वर्णानां परोक्षं विहापयामास । यथेच्छं स्वीयपरकीययज्ञयोग्यं क्रियतामिदमिदमिति ॥

अथ निजद्विजस्वजनवर्गानाहूय च भूयः प्रकटमेव विशङ्कटतत्तन्नामकरणपर्व्वणा सर्व्वानानन्दितवानिति ॥

तदेवमवधारयन्मधुकण्ठः सह विस्मय गद्गदकण्ठमाह स्म ॥

नाम्ना प्रसिद्धिमन्यस्य प्रसाधयति नामकृत् ।
अहो कृष्णस्य तत्कर्त्ता गर्गस्तेन प्रसिद्ध्यति ॥

---

(१) हे नन्द ! पूर्णोऽस्मि इति मनुष्व ।
(२) दक्षिणो सरलोदारौ । (३) दक्षिणार्हाय ।

अथ मधुकण्ठश्चिन्तयामास । "तस्मान्नन्दात्मजस्ते यदपि हरिसम" इति यदुक्तं "नारायणसमो गुणै" रिति हि श्रीमद्भागवतस्थं तद्वाक्यमपीदृशं दृश्यते तत्पुरुषबहुव्रीहिभ्यां श्लिष्टत्वादस्याधिक्यं च लक्षत इति ॥

प्रकटं चोवाच ।

ननु नामकरणं विशिष्य न प्रोक्तमन्नप्राशनं तु न किञ्चिदपीति । तच्च तच्च स्तूयमानतया प्रस्तूयतां ॥

स्निग्धकण्ठः सहासमाह स्म ॥

तन्नामकरणं चान्नप्राशनं च व्रजे महः ।
यातमस्मन्मनोराज्यं न पृथक् स्तोतु मीश्महे ॥

तदिदं प्रोच्य पुनः सानन्दमुवाच ।

ततः श्रूयतामुत्तरवृत्तान्तः ॥

यदवधि गर्गः प्रययौ, व्रजसदनान्नाम निर्म्माय ।
क्रमतस्तदवधि पृथुका,वभिमान्येते स्म तेन[१] स्वैः[२] ॥

यथा ॥

उत्कर्णतानिशमनं नयनाभिमुख्यं
स्वभ्रातृनाम्नि च निजाह्वयभानरीतिः[३] ॥

---

(१) नाम्ना ।　　(२) जनैः ।　　(३) प्रतीतिः ।

तत्तद्विविक्तिमतिरुङ्कृति माधुरी च
स्वा[१]नत्र[२] कृष्णवलयोर्वलवत्पुपोष ॥
उदीक्ष्य मधुरं मुखं सुखचरिष्णु कृष्णाख्यया
तदा जनकदिष्टया तनयमिष्टमाहूय तं ।
तदीय-कलहुङ्कृतीरपि निशम्य रम्याकृतीः
प्रसूरमृतभृत्प्रभा जगति शर्म्म सा निर्म्ममे ॥
अथाव्रजद्[३]द्रुतमिव रिङ्गरङ्गतां
तयोर्व्रजेश्वर-सदनाङ्गन-क्षितिः ।
समेत्य तौ चरणचरा[४]र्भका मुहु-
र्विलेभिरे[५] सुखमभिलेभिरे ततः ॥

अत्र गायन्ति चाद्यापि ।

रिङ्गणकेलिकुले जननी-सुखकारी ।
व्रजदृशि सुकृतस्फुरदवतारी ।
वलयित[६]वाल्यविलास ! जय वलवलित ! हरे ! ॥ ध्रु
किङ्किणिगण-रणने हृदि रुचिधारी । पदयुग-चालनकुतुकविहारी । गोरसकीर्णभवे पङ्के लघु-चारी । वारणकारणवागतिचारी । अकलित[७]-जनमिलने तस्मादपसारी । जननीं प्रतिगति

(१) जनान् । (२) व्रजे । (३) प्राप । (४) किंकराः
(५) ददुः । (६) पुष्ट । (७) अपरिचित ।

चापलभारी। जननी-स्तनवसने भयभागनुहारी[१] ।
तत्र पयोरस-बिसराहारी । वपुषि मृदामलिने
मृदुतापरिहारी। जननीकरकृतमृजयाहारी। अपि-
तन्द्रावलने स्तनपा[२] मनुकारी । जननी स्मित-
पतदमृतासारी ॥ इति ॥

ततश्च ॥

वर्षपञ्चकमनुस्खलेद्वयस्तत्तु तत्र यमनुद्वयोस्तयोः ।
किन्नु न स्खलति तत् किशोरताया
गतागमि दशातिरस्करी ॥

यथानन्तरमाह ॥

"कालेनाल्पेन राजर्षे ! रामः कृष्णश्च गोकुले ।
अघृष्टजानुभिः पद्भिर्विचक्रमतुरोजसा" ।

यथा च शम्वर-गृहात् प्रथमवयसः प्रद्युम्नस्या-
गमनसमये प्राह ॥

"कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्र तत्र ह"॥इति॥

तत्र च ॥

न नव्याद्यौवनादन्यावस्था तस्येति यन्मतम् ।
वर्जयत्यङ्गवृद्धिं तन्न माधुर्य्यसमर्जनं ॥

---

(१) सारी ।  (२) पानं ।

यतः प्रियजनभावभावित एव तस्याविर्भाव इत्यवादि स्म

तत्र तद्भावो यथा ॥

उत्कण्ठावष्टितृप्तिं स्थवयितुमभितः
सा(१)तु शश्वत्कृशन्ती
ता(२)मेवोच्चैर्वकारैः स्थवयति झटिति
प्रेमभाजां जनानाम् ।
यद्यप्येवं तथापि प्रथमज-वयस(३)-
स्तूर्द्धगां तत्तदीहां
नोष्ट(४)स्ते(५) सुष्टु किन्तु प्रसृमरमधुरि-
म्न्येव तां(६) निर्म्मिमाते ॥

अथ "कालेनाल्पेने"त्यादौ लीलायाः साधुरीति-मधुरता स्वाद्यताम् ॥

तत्र गतिशिक्षा यथा—

हस्तत्यागमये नव्ये संस्तव्ये(७) गतिशिक्षणे ।
पुत्रे स्खलति सा जीयान्मातुः पुत्रस्य चत्वरा ॥
छित्रक्रमं गतः कृष्णाश्चालितः स्खलने रुदन् ।
पुत्र पुत्रेति चुम्बन्तीमम्बामालोलयन्मुहुः ॥

---

(१ तृप्तिः। (२ उत्कण्ठां। (३) नवयौवनात्।
(४) नकामयतः। (५) उत्कण्ठातृप्ती।
(६) तत्तदीहां। (७) परिचयं।

किञ्चिद्दूरं यदानञ्च स्वकृतेजःप्रपञ्चकः ।
स्थिरीभूयप्रसूवक्त्रं सस्मितं स व्यलोकत ॥
दूरं मातुर्यदा याति तदासौ मन्थरायते ।
समीपं तु यदा तर्हि स्मयमानो द्रुतायते ॥

गौःशिक्षा यथा—

प्रथममग्रजस्य तुण्डपुण्डरीके क्षरदक्षरमधुमधुरे जाते तमनुजातमपि धात्र्या लापयामास ॥

यत्र च ॥

मा मा ता ता इति वचः पठन्नन्दतनूजनुः ।
आनन्दार्थमभूत्पित्रोर्व्रजस्य निखिलस्य च ॥
अर्द्धोदितानां दन्तानामक्षराणां तथा ततिः ।
चित्रीयामास(१) कृष्णस्य यत्राचित्रीयत(२) प्रसूः ॥
ईशीथाः किं जगत्यामोम्बन्धून् पास्यसि नः किमोम् ।
इत्यादि मातृसुतयोः सम्वादवदभूदिह ॥

अज्ञातवाचं शुकवत् पठन्तं
विशेषपृच्छाकृततर्जनीकम्(३) ।
धात्रीजनाध्यापितवाक्प्रचारं
व्रजस्य भाग्यं परितः स्मरामि ॥

---

(१) आश्चर्यं चकार ।　　(२) चित्रवदाचरत् ।
(३) विशेषपृच्छायां कृतिनी कुशला तर्जनी यस्य तं ।

नामग्राहं तदा प्राह रामः कृष्णं शनैः शनैः ।
कृष्णो राममथार्य्येति मातृणां परिशिक्षया ॥

तदा च ॥

पृच्छन्त्या वृद्धयाङ्गानि यदा किमपि पृच्छ्यते ।
तदाम्बा-शिक्षया बालः स तां मुहुरताडयत्[1] ॥

अथ भ्रातृद्वयमपि मिथः किञ्चिद्वदति स्म ।

यथा—

आगच्छ खेलां गच्छाव ? माता कोपं करिष्यति ।
न कुर्य्यादिति तौ बालौ कृष्णरामौ समूचतुः ॥

अथ बाल्यचापल्यश्चावकल्प्यतां ॥

दंष्ट्रां धित्सति दंष्ट्रिणः फणिपतेरुद्यत्फणां शृङ्गिणः
शृङ्गं प्रज्वलदर्च्चिषं हुतभुजः कोटिञ्च खड्गादिनः ।
इत्थं भ्रातृयुगं निवर्त्तितमपि प्रागल्भ्यमेवासद-
न्मात्रोस्तेन समस्तविस्मृतिरभूद्गेहेऽपि देहेऽपि च ॥

दूरमञ्च न हि चञ्चल स्फुटं
तत्र कोऽपि वरिवर्त्ति भीषणः ।
एवमेष जननी-गिरा पुन-
स्तत्कृते[2] कुतुकितां दधे शिशुः ॥

---

(१) अर्थात् यद्यदङ्गं पृच्छति तत्तदङ्गेषु ताडयति ।

(२) तद्दर्शनार्थं ।

शिशुना भीष्म-ग्रहणे, स्थाने[1] मातुर्भयं यतो माता ।
कत्यस्त्विदमनुमिमते, तेजस्वित्वस्य वीजं तत् ॥

यं यं पदार्थ[2]मतितीव्रमियं प्रयाति
भ्रातृद्वयो सच सच प्रतिभातिसौम्यः ।
अत्रानुमानविदुरा[3]निरनैषुरेत-
द्युग्मं भविष्यति सदा कलिनाशनाय ॥

अथ क्रमेण मातृवञ्चनी बुद्धिरप्युद्बुद्धा । यत्र स च स च ।

नैव नैव चल चञ्चल ! रे रे
वाक्यमेतदवकर्ण्य जनन्याः ।
मायया स्म परिवृत्य हसित्वा
तां निवर्त्य लषिते[4] वरिवर्त्ति[5] ॥

अल्पहीनहायनवयस्त्वे तु जाते यत्र कुत्रचित् क्रीड़नाय निर्गच्छन्तौ न सम्भालयितुं शक्येते । सम्भालितौ च तौ कुतो लीयेते इति नावधारयितुं पार्य्येते ॥

अथ जननी-द्वयमुभयतो वर्त्मावृत्य परितश्च धात्रीरवधानविधात्रीर्वितत्य द्रवन्तौ तत्र भवन्तौ[6] गृह्णाति ॥

---

(१) युक्तं ।　(२) दंष्ट्र्यादिकं ।　(३) पण्डिताः ।
(४) वाञ्छितकर्म्माणि ।　(५) मुहुर्वर्त्तते स्म ।　(६) पूज्यौ ।

ततो रुदन्तौ हसन्तौ च तौ गृहान्तरानीतावुद्वर्त्तनादिना वेषपरिवर्त्तनादिना च स्तनपायनादिना शायनादिना च रोचयति ॥

तदेवं वर्णनमाकर्णयत्सु सभासत्सु प्रहसत्सु श्रीमद्व्रजपुरन्दर-कुलधुरन्धरकिशोरवरे चानवरजेन सह दरस्मितसुन्दरतररदनतया नेत्रादरणीये सति समापनाय पुनरुवाच स्निग्धकण्ठः ॥

ईदृशस्तनयो जातस्तव गोपाधिनायक ! ।
बाल्यावलितचापल्यादपि यो मुनिमोहनः ॥

अथ कृतसुखप्रथायां कथायां वृत्तायामन्यदिनवत् कथकान् सप्रसाधनं(१) सेधयामास(२) शुभचरित्रीव्रजधरित्रीशः ॥

इति श्रीगोपालचम्पूमनु विशङ्कटशकट-
निघट्टनादिविचित्रबाल्यचरित्रं नाम
षष्ठं पूरणम् ॥

———

(१) सालङ्कारं । (२) सिधुगत्यां । गमयामास ।

# सप्तमं पूरणम् ।

अथ दिनान्तरवत्प्रभातान्तः[१] प्रभातायां सभायां मधुकण्ठ उवाच । स्निग्धकण्ठ! लीलान्तरेण निदिग्ध[२] चित्तो भव ।

अथ वर्षजाते जाते[३] नभस्ये[४] मासि सर्व्वसम्पन्मयं जन्म दिनमायातं । तत्र च गर्गोपदेशवर्गोपाश्रया कृष्णस्य जन्मतिथिपूजा पूर्य्यते स्म । यत्र च व्रजक्षितिपतिना प्रशस्तस्वस्तिवाचनपूर्व्वकमपूर्व्वं पर्व्व प्रवर्त्तयामासे ॥

यथा—

वेदैर्वाद्यैः प्रगीतैर्नटनपटिमभिर्मन्त्रपूर्व्वाभिषेकैः
सप्रीत्यादानदानैः प्रमद-कलकलैर्यज्ञविज्ञप्रयोगैः ।
षट्तिल्यादि-प्रकारै[५]र्मृदगुरु-रस-धा-
न्यादिभव्याभिमर्शै-
र्मत्स्यादीनां प्रमोकै[६]र्जनितिथिरुदगा-
द्गोपराजाङ्गजस्य ॥

---

(१) प्रातः । (२) उपचय ।
(३) जातस्य वर्षे । (४) भाद्रे ।
(५) तिलदानतिलहोमादिप्रकारैः । (६) त्यागैः ।

किन्तु ॥

क्रमेण वृद्धिर्वर्षाणां यथा नन्दात्म-जन्मनः ।
तथा तत्पर्व्वणोऽप्यासीत्स्फुटं यदभिदाद्द्वयोः(१) ॥
कृष्ण-भोजनमन्नं यत् कृष्णाच्छादनमंशुकम् ।
तत्तन्नाम्ना प्रचारोऽभूत्तस्य तस्य व्रजे ततः ॥

तदेवं हर्षेण वर्षे गणिते(२) कदाचिद्वर्षीयः(३) प्रभृतिषु स्त्रीपुंसेषु तत्तत्कृतिव्यापृतेषु निजोत्सङ्गेन बालगोपालः स्वमन्दिरालिन्दे जनन्या लाल्यते स्म ॥

यथा—

मुखे मुखं लगयति चुम्बति स्म त(४)-
द्वृथाकथाः कथयति तेन दुर्गमाः ।
हसन्त्यथो हसति च तत्र बालके
व्रजेश्वरी सुख-शतसिक्ततामगात् ॥

ततश्च ॥

पूर्व्वपूर्व्वानि हिंसनात्(५) प्रजातमतिभ्रंशेन धैर्य्य-रहिततया कंसेन प्रहितः सुमनसा(६) महितः सुर-वर्त्मनि दूरतः स्थितस्तृणावर्त्तस्तं तथा वर्त्तमानं

(१) वर्षपर्वणोः । (२) सङ्ख्याते ।
(३) वृद्ध । (४) मुखं ।
(५) मारणात् । (६) देवानां ।

ददर्श विममर्श च । सोऽयमेव तोयदवर्णः पृथुकः पृथु[1]गृहालिन्दं विन्दमानाया मातुरङ्के वर्त्तत इति शङ्के ॥

तदेनमधुना सर्व्वं धुनानः साम्बालमेव बालं सुरवर्त्मनि वर्त्तयानि । किन्तु पूतना नूतनतनू-कलनया[2] शकटश्च शकटाविष्टामूर्त्ततावलनया छलयितुमिष्टमाप्यनेन दिष्टान्त[3]माप्यते स्म । तस्मादहं तदुभयेतरवातरूपेण प्रविशामीति ॥

तदा च सदा तदवसरमनुसरन्ती तु योगमाया तदुपयोग[4]मायाता मातुः पृथग्भावाय स्ववैभव-माविर्भावयामास । येन च तदम्बा कोमलनील-कमलायमानकलेवरस्यापि तस्य भारमसहमाना विस्मयमाना चान्यस्य तद्भारासहतया सहसा भूमावेव तं धृतवती ध्यातवती च जगतामन्तर्य्यामि पुरुषम् । अतिभीता च तदुपद्रवबाधनाय तदा-राधनाय व्यग्रचित्ता बभूव ॥

तृणावर्त्तस्तु वातावर्त्तेन वर्त्तमानः सुरवर्त्मनि तं वर्त्तयन् गलग्रहपाशमिव संजग्राह । गोष्ठमपि

---

(१) विस्तृतं ।　　(२) रचनया ।
(३) मृत्युं ।　　(४) संयोगं ।

कण्टककर्कराादिवृष्टिभिर्नष्टप्रायतया घट्टयामास ।
यत्र च त्रस[1]मत्रस[2]मपि सर्व्वं वित्रस्तमस्ति स्म ॥

ततश्च ॥

तमोभिरावृतं सर्व्वं वहिरेव न केवलं ।
जनानामन्तरश्चासीत्तृणावर्त्तप्रवर्त्तने ॥

तेन तु दुर्ज्जनेन तदैवमन्यूनानां[3] जन्यूना[4]मजन्ये[5] जन्यमाने तत्र वित्रस्ताः प्रजाः प्रजजल्पुः ॥

यथा—

उत्सर्पत्कर्परांशव्रणजनकजवः श्रोत्रहृत्कूतर्जगर्ज-
ध्वानस्त्रुट्यत् कुठेषु प्रकटकटकटेष्वर्द्दयन् वायुरायुः ।
गोष्ठं कोष्ठं[6] च भिन्दन्नटति वत हहाहन्त किं तत्र वृत्तं
यत्रास्ते नीलपङ्केरुह-दलतुलनालालिताङ्गः सवालः ॥

श्रीमन्नन्ददेवमन्दिरे तु ।

उपद्रवेऽस्मिन्नधि[7] यद्दधे सुतं
तं तत्र नापश्यदसौ व्रजेश्वरी ।
गवाधिकस्निग्धतरापि या तदा
विचारलोपाद्वलते स्म गोतुलां ॥

---

(१) जङ्गमं । (२ स्थावरं । (३) पूर्णानां ।
(४) जन्तूनां । (५) अजन्यं क्लीवमुत्पातः ।
(६) अन्तर्गृहं । (७) यत्राधि ।

उपप्लव[१]मरुत्प्लवे[२] भजति तत्र पुत्रास्तिता-
मवीक्ष्य पशुपेश्वरी वत जगाम यां व्यग्रतां ।
हहा विगततर्णकाऽवुधितलोकभाषादिका
यदि स्फुरति नैचिकी क्वचन काचिदूहेत तां[३] ॥

तदा च ता[४]मारभ्य जनरोदनपरम्परया परितः प्रसर्पणादमन्देन तदाक्रन्देन[५] सर्व्वगोकुलमाकुलं बभूव ॥

अविगणय्य च तादृशं विसदृशमुपद्रवं सद्रवमेवागम्यागम्यापारदुःखवारवारांनिधौ सर्व्वे ममज्जुः ॥

तत्र च ॥

तृणावर्त्तहृते कृष्णे मातुर्भारायिता तनुः ।
तदीयानां[६] यथा सा[७]सीदुभयेषां यथा त्रुटिः[८] ॥

ततश्च ॥

सर्व्वासु निर्विशेषं रोदनवशतां विशन्तीषु हा रोहिणि! द्रोहिणि![९] किं करिष्यामि कथं तमनवलोक्य मरिष्यामि कथं वा व्रजराज-दिशि मुखं

(१) उपद्रव । (२) व्याप्तौ ।
(३) व्यग्रतां । (४) व्रजेश्वरीं ।
(५) आर्त्ते रुदिते त्रातर्य्याक्रन्दो दारुणे रणे ।
(६) व्रजेश्वर्य्याः सम्वन्धिनां । (७ माता ।
(८) कालो यथा दीर्घायते ।
(९) अतिदुःखेन तद्दर्शनजेनाह ।

वितरिष्यामीतिपर्य्यन्तं पर्य्यन्तदशावसानमनु यः खल्वशेषविलापनः प्रसू-विलापः स पुनरवकलितः(१) सहसा घृतमिव विलालयति हृदयं कथं कथयितुमीश्यत इत्यलमतिप्रसङ्गेन । इति मधुकण्ठः स्वस्य सर्व्वस्य च वैवश्यवश्यतामाशङ्क्य मङ्क्षु(२) सङ्कथयामास ॥

नभसा हृतस्य सुजातस्य श्रीमन्नन्दजातस्य वन्धूनामवगाढ़दुःसह-साद(३)सिन्धूनां सहसानुकूलं कूलमासन्नं ॥

तथाहि ॥

वाल्यस्वभावेन वलानुजन्मा
वलान्निजग्राह गलं तदीयं ।
तदातिगाढ़ं स च पीडितस्तौ
मेने भुजौ पाशि(४)भुजङ्गपाशौ ॥

भुजापीडनवत्तस्य भारश्च ववृधे शिशोः ।
वोढुं त्यक्तुञ्च वोढुञ्च नाशकद्दानवाधमः ॥
तदा च माल्यहरतानर्हावस्थेन चामुना ।
सभारहारतां प्राप्तः स्वप्राणहरतां गतः ॥

---

(१) स्मृतः सन् । (२) द्रुतं ।
(३) दुःख । (४) वरुण ।

यथा—

माल्यबुद्ध्याहिवल्लोमपटभ्रान्त्या तमृत्तवत् ।
कृष्णावबेष्टदात्माङ्गं वातूलः[1] कथमुज्झतु ॥

यथा च ॥

तृणावर्त्ते रुद्धकण्ठे तच्छ्वासा रुद्धतां गताः ।
तदेव च वहिर्वातास्तत् किं तस्य त[2] एव ते[3] ॥

अथाकाशावकाशात् प्रस्तरकृतास्तरणाया-मङ्गनस्थल्यामतिविस्तीर्णं महाघोष[4]बधिरीकृतघोषं तद्वपुर्निपपात, निपत्य च मूर्त्तिम[5]न्मूर्त्तिकमपि श्लथसन्धिबन्धीभूतमदृश्यत ॥

ततश्च तत्तु ॥

किमिदमहहहा पपात कस्मा-
दिति परिवव्रुरुपेत्य गोपरामाः ।
भयमधुरथ कं[6] निरीक्ष्य रक्त-
स्तदुपरि बालहरिश्च मृग्यमाणः ॥
दनुसुतमल्लमुद्विवर्त्तितात्तं
शिशुमथ वीक्ष्य निरीक्षमाणनेत्रम् ।

---

(१) वातूलः पुंसि वात्यायामपि वातासहे त्रिषु । उन्मत्ते ऽपीति क्षीरः ।
(२) श्वासाः ।　(३) वहिर्वाताः ।　(४) शब्द ।
(५) काठिन्यं ।　(६) सुखं ।

तदुपरि सहसा निधाय लन्ता[१]-
ममुमुपजह्रुरमूर्मुदा जनन्यां ॥

अथ मन्त्रवत् किञ्चिद्वचनात् पुनरमूरमुष्याश्वेत-
नमाचिन्वते स्म ॥

यथा—

मृत्युर्मृतो मृत्युहृतस्तु जीवित-
स्तदेतमादत्स्व तनूजवत्सले ! ।
इत्युक्तिमन्त्रान्वितवालकौषधं
विन्यस्य तां प्रत्युदजीजिवन्नमूः ॥

शिशुमुपसद्य यशोदा, दनुजहृतं द्राक् चिचेत लीनापि ।
वर्षाजलमुपलभ्य, प्राणिति जातिर्यथेन्द्रगोपाणां ॥

अथागमन् व्रजपतिसङ्गता जनाः
सविस्मयं सभयमदभ्रसम्भ्रमम् ।
गृहान्तरव्रजनविचारणान्यदा
न तर्ह्यभूद्यदभवदेकभावता ॥

पश्यन्नपि तृणावर्त्तमपश्यन्निव तं जनः ।
कृष्णमेवागमद्द्रष्टुं तत्प्रेमा ह्यद्भुतादिजित् ॥

स्पृष्टः कम्प्रेण हस्तेन दृष्टः सास्रेण चक्षुषा ।
पित्राथ मातुरुत्सङ्गादवित्रा शिशुराददे ॥

---

(१) पादप्रहारं ।

ततश्च ॥

राक्षसस्पर्शजक्षतजादि-शङ्कया ।
निरीक्षितावयवगणोऽपि मातृभि-
र्विलोकितः स तु जनकेन कृत्स्नशः ।
ममेति धीः पृथुममतास्पदं दृशा
स्वयापरं न तु परया परीक्ष्यते ॥

अथ व्यग्रेहिता वृषभाण्वग्रेसराः परमहिताः परस्परमपरस्परं[१] कथयाञ्चक्रुः ॥

क्वायं हतस्तीव्रबलः पलाशनः
क्व तीर्णवान् सोऽयमतीव बालकः ।
किम्वा स्वपापेन विहिंस्यते खलः
साधुः समत्येन भयात् प्रमुच्यते ॥

अथवास्माकमेव भाग्यमिदमिति योग्यं ॥

तथाहि ॥

किं नस्तपः पूर्त[२]मशेषसौहृदं
दत्तं तथेष्टं हरितुष्टयेऽजनि ।
रक्षोगृहीतं पुनरेष बालकः
स्वयं स्वबन्धून् सुखयन् यदागतः ॥

---

(१) क्रियासातत्ये । (२) पूर्त्तं खातादिकर्मणि ।

समस्तार्थकरी विष्णुभक्तिः साक्षाद्व्रजेश्वरे ।
दृश्यतां मृश्यतामन्यत् किं वा बालकमङ्गलं ॥

यतः ॥

सर्व्वदा क्रमते[१] यस्य वुद्धिः सद्भक्तये हरेः ।
स सदा क्रमते[२] तस्य लक्ष्मीश्च क्रमते[३] तरां ॥ इति ॥

देवाश्च सकौतुकमिमं श्रीकृष्णाभिप्रायमुत्प्रेक्षां चक्रिरे ।

वालोऽहं न परिचिनोम्यभद्रभद्रं
यः क्रोड़े कलयति[४] दद्भलं दधामि ।
तेन त्वं यदि मरणं प्रयासि कः स्वि-
द्दोषः स्यान्मम तमथ त्वमेव जल्प ॥

ततश्च सर्व्वानर्व्वाचीनाभीरवीराणां सेयं मन्त्रणा जाता। गोष्ठमिदं दुष्टानामधिष्ठानं वृत्तम्। तस्माद्-गृह एव गोपनीयमिदं वालयुगलमिति ॥

ततः शङ्कातिशयमयं दिनकतिपयं नानाक्रीड़न-केन क्रीड़यमाना मातृसमाना गोपिका गोपिका[५] वभूवुः। यत्र च वालवालिका कुलपालिकादयः सदयं समागम्य रम्यं तत्केलि-कुतूहलं कलयन्ति ॥

---

(१) उत्सहते । (२) वर्त्तते न प्रतिहन्यते इत्यर्थः ।
(३) वर्द्धते । (४) करोति । (५) रक्षिकाः ।

यथा ॥

क्रीड़नानि विविधानि तं सदा दर्शयन्ति च
मुदा हसन्ति च खेलयन्ति च वलेन ता इति
स्वान्तरे[(१)] परममू अरक्षिषुः ॥

ततश्च ॥

वलेन सममन्योन्यं प्रावल्यं दर्शयन्निव ।
ऊर्द्धाधोभावमासाद्य सर्व्वा हासयति स्म सः ॥
मातॄणामग्रतो वाहू विक्षिपन् धावति स्म सः ।
दर्शयन्निव तेजः स्वं हसन् पाते रुरोद च ॥
वलं वा ज्ञानं वा कियदभवदस्येति विमृशन्
यदा गोपीसङ्घः किमपि मुहुरानेतुमदिशत् ।
तदा शक्तिं व्यञ्जन् क्वच पुनरशक्तिं क्वच शिशुः
स पश्यंस्तद्वक्तूं हसति च पुरा हासयति च ॥
नामादेशं यदा माता दिशते नयनादिकं ।
कृष्णश्च कुरुते वाढं चक्रे तस्या न किं तदा ॥
रुदन्तमिन्दवे मन्थगर्गर्य्यां प्रतिरूपिणे ।
पिण्डेन नावनीतेन वृद्धा गर्द्धयता[(२)]भंकं ॥

---

(१) स्वीयानामध्ये ।
(२) अर्धधयत ।

स्वस्य स्वल्पापहारे[१]ऽपि चक्रन्द मणिहानिवत् ।
कृत्वान्यमणिहानिञ्च प्राहसीद्वालकृष्णकः ॥

निर्म्मञ्छनं तव भजाम कुलेश-लाल्य !
वाल्यातिमोहन ! वलानुज ! नृत्य नृत्य ।
इत्यङ्गनाभिरुदितस्थि थि थि त्थि थीति
क्लृप्तेन[२] तालवलयेन हरिर्ननर्त्त ॥

मां नर्त्तयत भो वृद्धा ! इति तासां पुरोगतः ।
भद्रं नृत्यसि भद्रस्त्वमिति स्तोत्रान्ननर्त्त सः ॥

विहसन्तीषु सर्व्वासु सौष्टवात् प्रत्यवादपि ।
नृत्यन् व्रीड़ितवत् कृष्णो मातुरङ्के ऽपलायत ॥

त्वणं विरम्य च रम्याननस्तनधयनमपि तत्रारब्धवान् । यद्दर्शनमनु सङ्कर्षणः सेर्ष्यामिव निजमुत्कर्षं वाञ्छन् निजजननी-स्तनपानमारब्धवान् ॥

तदेव च तौ लीलाभिः प्रमीला[३]मागतौ यातृभ्या मातृभ्यां शनैः शनैः शय्यामधिशाय्येते स्म ॥

तदेवं सरामस्य तस्य निरोधे विधीयमाने वहिर्विजिहीर्षिते[४] चातीव तदुपजीवनता-

---

(१) अपहारस्त्वपचयः । (२) रचितेन ।
(३) तन्द्रां । (४) विहर्त्तुमीष्टे ।

मासन्ने योगमाया तदानुकूल्याय किञ्चित् प्रपञ्चितवती ॥

यथा—

एकदार्भकमादाय स्वाङ्कमारोप्य भाविनी ।
प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥
पीतप्रायस्य जननी सुतस्य रुचिरस्मितम् ।
लालयन्ती मुखं विश्वं जृम्भतो ददृशे इदं ॥ इति ।

तेन च सन्ततं विस्मयमानायां निजजायायां तस्यां कदाचिच्छ्रीमान् ब्रजराजः पप्रच्छ ॥

मया यदनिष्टभयाद्बालरोधनमुपदिष्टं तत् किं निर्वहति ? ॥

सा प्राह ।—निर्वहत्येव किन्तु वृथेति लक्ष्यते ।

ब्रजराज उवाच ।

हन्त कथमिव ? ।

साप्राह ।—ब्रजमात्रब्रजनं वर्ज्यते । दृष्टन्तु मृष्टस्मितं जृम्भमाणस्य बालकस्य वदन द्वारा जगदेवेति ।

अथ ब्रजराजः स वैलक्ष्य(१)मालक्ष्य(२) लक्ष्मीजानिलक्ष्यतया(३) मौनमालम्ब्य विलम्ब्य चोवाच ॥

---

(१) सविस्मयं । (२) विचार्य्य ।
(३) नारायणाश्रयतया ।

यद्येवं तदा स्वजन-परायणस्य श्रीनारायणस्य विधित्सितमेव[१] सर्व्वं विचिकित्सित[२]मपि चिकित्सितं करिष्यति । तस्यैव खल्विदं वैभवमिति ॥

एवं तदवधि तद्विधिना[३] नातिनिरोधे विधीयमाने क्वचिदपि समये संयमनं[४] समया सरामः स रामानुजः श्रीदाम-सुदाम-वसुदामादिभिः समं रमते स्म ॥

तत्र विनोदेन मृदद्नं चक्राणे चक्राङ्कितचरणे सङ्कर्षणादयः खेलायां कलित[५]कलहा रहस्तन्मातरं निवेदयामासुः । ये खलु तया[६] तद्विधविधानेऽवधापिता[७] विधीयन्ते स्म ॥

माता च प्रच्छन्नमागच्छन्ती वाहुं गृहीत्वा प्रपच्छ । चपल ! किमिदं दुश्चरितमाचरितम् ? ।

स तु सहसा सङ्कलिता[८]ननकमलः कातरमतिर्मातरमुवाच ।—मात ! न किमपि ॥

---

(१) कर्तुमिष्टमेव । (२) पीड़ारहितं ।
(३) तस्याज्ञया । (४) चतुःशालं ।
(५) कृत । (६) व्रजेश्वर्य्या ।
(८) कृतसावधाना । (९) सङ्कटःस्यात् सङ्कलितः ।

माता प्राह ।—मृत्तिकामत्ति स्म भवान् ? ।

सुत उवाच ।—क इदं वदति ? ।

माता प्राह ।—सर्व्वे एव तव सवयसः ।

सुत उवाच ।—एते खलु निज-निज-वसत्या(१)-न्मधुरवस्तूनि मुष्णान्तः सतृष्णामत्रपमत्र परस्परमश्नन्ति । तदनङ्गीकृतवतः कपाटितरदने मम वदने प्रथमं समं बलाच्छलादपि समर्पयन्ति । तच्च त्वयि सनिर्वेदं निवेदयितुमिच्छोर्म्मम तुच्छं सविवादं दुर्व्वादमेतमवादिषुः ।

माता सुविस्मितमूर्द्ध्वमधोमूर्द्धानमाधूय सास्मितमुवाच ।

सव्याजराज ! तवाप्यग्रजः सोऽयं व्यञ्जयति; तत्र किं वदिष्यसि ? ॥

सुत उवाच ।—एते सर्व्वे एव वीथ्यां वीथ्यां मिथ्याभिशंसिनः ।

माता प्राह ।—सच्छलप्रलपित ! भो ! मत्पित ! बलभद्रः किमिति प्रमिति-रहितमभद्रं वदतु ।

सुत उवाच ।—अयमप्येतद्गणपातीति । तथान्येद्युर्मृत्तिकामत्ति स्म ।

---

(१) गृहात् ।

तदवद्यं निवेदयितुमुद्यतं मद्वचनं मृष्टोद्यतामा-सादयितुमिति ।

माता; तन्मुखं धृत्वा सहासमाह स्म ।—किमिदं चिरं निगिरन्नसि ? ।

सुत उवाच ।—उक्तमेव मम लपने बलाद्वलान्तः प्रवेशाय किमपि न्यस्तं समस्तैरिति ।

माता प्राह ।—धूर्त्त ! कथं जानीयाम् ? ।

सुत उवाच ।—साम्प्रतं मम मुखमेव निरीक्ष्यतां ? ।

माता ससंरम्भस्मितमुवाच । व्यादेहि पश्यामः ।

ततश्च भयेन स एष मृच्चिह्नितमप्यज्ञाय वदनं व्याददौ ॥

ततस्तद्वयमवदधाना समादधाना च रसान्तरेण मातुः कोपशान्तये तदन्तर्योगमायाता सा योग-माया पुनर्विश्वं दर्शितवती ॥

यत्र चेदं व्रजेश्वरी परामममर्श ॥

अहो ! वहिरिवेक्ष्यते जगदिदं मुखाभ्यन्तरे
शिशोस्तदनुभूरियं भुवि च माथुरं मण्डलम् ।
इह व्रजकुलं यदन्वपि मया धृतो वालकः
स एव तदहो ! कथं किमिव हन्त ! किं सिद्ध्यति ॥

अथ पुनः स्वप्नादिकमनल्पं कल्पयित्वा पश्चिम[1]मिदं निश्चिकाय ॥

अहं यशोदास्मि पतिर्व्रजाधिपः
सुतः स एष स्वमिदञ्च गोकुलं ।
प्रतीयतेऽथापि शिशोर्मुखे जगद्
यन्माययेत्थं कुमतिः स मे गतिः ॥

तदेवं स च नारायस्तद्भाव[2]परायणातां ता[3]मनुनितान्तां विचारयन्नात्मनः परमाभिरुचिपरिचिताविर्भावे तस्मि[4]न्नेव विस्मिति निचितं[5] जनन्युचितस्नेहमेव देहयामास[6]। यं[7] खलु "नेमं विरिञ्च" इति वक्ष्यमाणानुसारेण समस्तानि शास्त्राणि सदा प्रशस्ततया गायन्ति ॥

अथ कौतुकान्तरञ्चान्तरमानीयतां। तदेवं सर्व्वानन्दनः श्रीमान्नन्दनन्दनः; "क्रीणीहि भोः फलानी"ति गीतिरीतिरोचनवचनं कर्णयोराचयन्नेव[8] चपललोचनः किञ्चनाप्यशोचन्नेव च लघुनापि पाणियुगलेन लघुतया पुरः पतितधान्यपुञ्जतः

(१) उत्तरकालं। (२) पुत्रभावः।
(३) ब्रजेश्वरीं। (४) कृष्णे। (५) विस्मित्या व्याप्तं।
(६) वर्द्धयामास। (७) स्नेहं। (८) शृण्वन्नेव।

पूर्णामञ्जलिमादाय तदभिमुखं जगाम। किन्तु द्रव[१]वशादल्पकाञ्जलितः स्खलितमिदमिति भिदां न विदाञ्चकार केवलमेव करयुगलं क्रय्यफलपूरित[२] त[३]त्पत्रपात्रोपरि परिवृत्त्या[४] च चालयामास॥

ततश्च सा स्मितवती स्मितदिग्धतन्मुखमाधुरी साधुरीतिभिः स्निग्धहृदया व्यञ्जितस्पृहावलिं तदञ्जलिं फलवलयेन[५] भिक्षयन्ती[६] दूरत एव सङ्कलन[७]मुद्रामपि शिक्षयन्ती सकलेन[८] तु पूरयितुं शशाक॥

निजभाजनं फलरिक्तं बभूव वा न वा किमिति तु न विविक्तं चकार। गृहाभ्यन्तरेणान्तरिते तु तस्मि[९]न्निजं पत्रजममत्र[१०]मयत्नतया रत्नपूरितमप्यनिभाल्य भारमप्यसम्भाल्य तन्माधुर्य्यावेशाभिनिवेशवती स्वजनानामपि शर्म्मजननाय बहुलफलावलिबलिसमानयनाय च निज-निलयमेव जगाम। किन्तु गृहं गत्वा ज्ञातमणितत्वाप्यकुण्ठा-

(१) वेग। (२) क्रयार्थप्रसारित।
(३) तस्याः। (४) मुहुर्मुहुः। (५) मण्डलेन।
(६) भिक्षुकी। सा फलविक्रयिणी। (७) फलनयन।
(८) फलविक्रयेणेत्यन्वयः। (९) कृष्णे। (१०) पात्रं।

सकृदुत्कण्ठावेहन तन्मुखशोभाभरविरहेण सा धन्या हारितमहाधनम्मन्या वभूव । यत एव सा कृष्णादृश्वरी विश्वमपि विसस्मार ॥

स तु विविधदुर्विध[१] शर्म्मविधानसन्निधानः स्वयं लब्धनिधानव[२]दतिसावधानपाणिर्नृत्यन्निव चञ्चन्मातुः समीपमञ्चन्मधुरचञ्चलेहितस्तस्या निचोलाञ्चले निर्व्वन्धतः सकलानि फलानि ववन्ध ॥

माता चोवाच ।—पुत्र ! कुत्र लब्धानि तानीमानि ।

सुतस्तु वाल्यभावादर्द्धार्द्धवर्णं वर्णयामास ।

काचिदाचितफला धान्यानि मूल्यमादाय धन्या मयि चानुकूल्यमाधाय समर्पितवती ॥

मातोवाच ।

वत्स ! गृहजनवत् सर्व्वतः प्रतीतिं मा कृथा इति । सुतस्तु का खल्वप्रतीतिरिति च न विदाञ्चकार ॥ क्षणातश्च तां गतां निरीक्ष्य पुनरागतः सत्क्षणतया[३] जनाय तत् फलविभजनाय जननीं नियोजयामास ॥

माता चामन्देनानन्देन कृतस्पन्देन करद्वन्देन तानि बिभजन्ती तदन्तीकृतिं नाससाद ॥

(१) दरिद्र ।　(२) निधिवत् ।　(३) सानन्दतया ।

दिनकतिपयं विस्मयवशा स्मयमाना वसति स्म ।
तदास्वादकाराश्च लब्धचमत्कारा न विस्मरन्ति स्म ॥

अथ लीलान्तरमुद्भावयितुमेवं विभाव्यते ॥

गोकुलेषु किल शीलमीदृशं
यद्दिवा वनमयन्ति गोनराः ।
योषितः प्रचुरगव्यसंस्क्रियां
क्रीडनं रहसि बालतर्णकाः ॥ इति ॥

तदा चैकदा गृहव्ययपयःकृते समीपकृते वत्स सद्मनि रुद्धद्वारान् सकृत्करि[१]सारान् बालहरिः परितः स्थितबालकजालः कलयामास ॥

तत्र च ॥

वत्सीर्मत्वा तदा धेनूश्छाग-तोकानि वत्सकान्
आत्मानं गोदुहं बाला गोदोहमनु निर्म्ममुः ॥
वत्सीषु यर्हि गव्यन्तो[२] गोदुहन्ति[३] स्म तेऽर्भकाः ।
तेषां प्रहासजाभासः पयस्यन्ते स्म तास्तदा ॥
इयेष च यदा धेनुचारणानुकृतिं प्रति ।
मन्त्रयित्वा तदा कृष्णः प्रामुञ्चन्नवनत्सकान् ॥

---

(१ वत्स । (२) गा इव आचरन्तः ।
(३) गोधुक् इवाचरन्ति ।

रक्षामिच्छू वत्सपुच्छं गृह्णानौ रामकेशवौ ।
तदाकृष्टतया गोष्ठे बालैर्वभ्रमतुस्तराम् ॥

तच्च तर्णाकानुगतया तयोः प्रथममभ्यर्णागमनमाकर्ण्य निर्वर्ण्य[१] च वरवर्णिन्यः स्खलद्वर्णं वर्णयामासुः ॥

तथाहि गीतं ॥

वलकृष्णौ कलवलितविलासौ
खेलत इह सखि ! सखिकृतहासौ ॥ ध्रु ॥

तर्णकपुच्छधृतिव्यापृतिनौ[२] । प्रणयकलितकलिकलने[३] कृतिनौ । गृहगृहवीक्षणसक्षण[४]-नेत्रौ । धेनुपालतुलया धृतवेत्रौ । द्रुततर्णकमनु विद्रुतवन्तौ । श्रेणीयितचलवेणीमन्त्रौ । शारद-वार्षिकवारिदवपुषौ । चललोचन-रुचिचपलांश्रुजुषौ । स्खलदलकद्युतिवलयितलपनौ । अलिललिता-मलकमलग्लपनौ । नीलकनकरुचिशुचिलघुवसनौ । चञ्चलचरणस्फुटरटरसनौ । इति ॥

तदेवमङ्गनादङ्गनाद्व्रजाङ्गनाभिरहंपूर्विकयानुगम्य-मानौ विहिताकस्मिकपर्व्व-सुखदोहन-सर्व्वमोहन-

(१) दृष्ट्वा ।　　(२) व्यापारयुक्तौ ।
(३) रचने ।　　(४) सोत्सव ।

तयाधिगम्यमानौ[१] सम्वाद - विवाद - परीवाद-वन्धुर[२]वन्धूनामभ्यर्णतया निर्व्वर्ण्यमानौ[३] तादृशाकर्णननिवर्णनमनु परस्परमपरस्परं[४]वर्ण्यमानौ तासु च काभिश्चिदमृतमनृतं[५] कुर्व्वता प्रति चर्व्वनं सरसेन रसविसरेण भोज्यमानौ तद्वदेकाभिर्निजगृहाजीव्यदीव्यमणिहारमुपहारमुपहारं हारितयोपयोज्यमानौ तद्वत् काभिरपि प्रेमानुगम्यरम्यवचन-प्रचयरचनया कञ्चन कालं वरिवस्यमानौ किञ्चान्याभिः समुत्तम्भितकर्णतर्णककृताकृष्टि दृष्टितः शस्य[६]मानवत् परिहस्यमानौ तद्वदन्यतराभिस्तन्मधुर-चकुर[७]चिकुरचञ्चुरता[८] प्रचुर-चञ्चलतां निचाय्य चातुर्य्यतश्चरितमिदं भवन्मातृचरणेषु गोचरयाम इति सूचनया तस्माद्वर्ज्यमानौ। ताभिरेव मातर-पितरावारभ्य गणनालभ्यकुलालि-गालिपालिमुपलभ्य कलितव्यलीकमिव सकोलाहल - प्रणयकलित[९] - कलितया

(१) अनुभूयमानौ। (२) मनोहर।
(३) दृश्यमानौ। (४) क्रियासातत्ये।
(५) व्यर्थं। (६) श्लाघ्य।
(७) चपल। (८) कुटिलगति।
(९) रचित।

तर्ज्यमानौ वलगोपालनामानौ वल्गुवाल्यवयसा समानौ खेलां कलयामासतुः ॥

अथ मातरावपि जाता[१]वमू कुत्र याताविति कातरायमाणनयने निर्जनता[२]जनित-स्वैरता-भागयने[३] व्रजनीवृदयने[४] रुषा निन्दिताभि-रुपमातृभिर्मुदा वन्दिताभिरपि तदभिधातृयातृभिः सममेव गृहतः कृतनिर्याणे स्वयमेव सम्यग्मृगय-माणे दर[५]सरसिजनिजचिह्नविगतनिह्नवचरण-लक्षणविलक्षणवर्त्मवलनेन[६]महिलानां कुतू-हलकोलाहलावकलनेन च समया समयाश्वक्राते। तदा च निजागमनवर्जनीं तर्जनीमभिचाल्य प्रच्छन्नतया निभाल्य तस्मादकस्मादनयोर्वाहू जगृहतुः। वालकास्तु सर्व्वतः सर्व्व एव दुद्रुवुः। महिलाश्च काश्चानुकूल्यतः काश्चित् प्रातिकूल्यत इव च तयोश्चापल्यं लपन्त्यः सममेव मातृभ्या-मभ्याययुः। धात्र्यस्तु वालयोरतीव स्नेहपात्र्यस्तण-कानादाय तदभ्यर्णमाजग्मुः ॥

---

(१) सुतौ । (२) सर्वेषां वनगमनात् ।
(३) गमने । (४) मार्गे ।
(५) शङ्ख। (६) भजनेन।

अथ तदारभ्य वीथीं वीथीमुपलभ्य कुतुककर्म्मा वलानुजन्मा सहसहचरः कोलाहलं कलयामास। तदा च कदाचिन्निजतनूजलभ्य प्रागल्भ्यस्पृहिणी व्रजेश—गृहिणी तदानन्दबृंहिणीभिर्विवदमानाभिरिव दीयमान-तदीयमान-समानाभिरूपालम्भसमाधानलम्भनवाकोवाक्यव्यङ्ग्यमव्यङ्ग[1]मभ्यधायि ॥

तत्र सभायां सा[2]यथा ।—

आसीना कनकासने सुतयुता श्रीमद्व्रजाधीश्वरी
पीठश्रेणिमुपाश्रिता व्रजवधूर्नानात्मभावश्रियः ।
कृष्णप्रेमसुधामहोर्म्मिगिरामास्वादनाद्धिन्वती
ताभिश्च प्रतिधिन्वताखिलसभा शोभाङ्गयष्टिर्व्वभौ ॥

वाकोवाक्यं यथा ।—

तव सूनुर्मुहुरनयं कुरुते[3] ।
अकुरुत किम्वा व्यजितकुरुते ॥ ध्रु ॥
मुञ्चति वत्सान् भ्रामं भ्रामम् ।
साचिव्यं[4] वः कुरुते कामम् ॥
असमयमोचनमसुखनिधानम् ।
कः किं कुरुते न यदि निदानम् ॥

---

(१) पूर्णं । (२) यशोदा ।
(३) प्रकटितकुत्सितशब्दे । (४) सहायं ।

विना निदानं कुरुते स्वामिनि ! ।
क्रोशं न किमिव कुरुषे भामिनि ! ॥
क्रोशे हसति प्रत्युत सोऽयम् ।
दत्त्वा वशय स्फुटमपि तोयम् ॥
अस्ति स्तेयं परमिह रुचितम् ।
अङ्ग ! भानं कथमिदमुचितम् ॥
स्तेयोपाये गुरुरयमखिले ।
नार्हति सर्वं मिथ्या निखिले ॥
रचयति पीठादिकमारोहम् ।
तदगम्यं कुरु सर्वं दोहम् ॥
दूराच्छिद्रं कलयति पात्रे ।
अस्य कथं धीः सति[1]तन्मात्रे ॥
अन्तर्धियमनु स इह विशालः ।
वच्मि यथासौ न तथा बालः ॥
वेत्ति सकृत्स्नं गोपनरीतिं ।
गेहगुहा नहि दवयति भीतिं ॥
गेहगुहात्र[2]वृथा तनुदीपे ।
तनुरनुलिप्ता कलय समीपे ॥

---

(१) सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ।
(२) कृष्णे ।

मणिगणमहसा गणयति न तमः ।
भूषणरहितस्तिष्ठेत् कतमः ॥
अपि चाशयति बलादपि कीशम् ।
मनुषे कियदमुमत्तुमधीशम् ॥
तदशक्तौ पात्रं भेदयते ।
तस्या[१]शौचं वा वेदयते ॥
गमसमये रोदयति च बालां ।
प्रक्ष्यामो वरमहिलामालां ॥
अपि बालान्मेहयते गेहे ।
नहि नहि चूर्णं पतितं स्नेहे ॥
तव पुरतोऽयं स्थिरवन्मूर्त्तिः ।
आश्चर्य्योऽयं तव वाक्पूर्त्तिः ॥ इति ॥

पुनश्च । प्रतीतिमासादयन्त्य इवेदं वदन्ति स्म ।

नाश्चर्य्यमत्राचर्य्यतां ॥

यतः ॥

इन्द्रियकुलमति गूढं, नेत्राद्यन्तर्निरूढमेवास्ति ।
तन्मध्यादपि चित्तं, हरतो नृहरेर्न हार्य्यं किं ॥

तदेवमभीषङ्ग[२]भङ्गीभिर्वरवर्णिनीभिर्वर्णमान-

---

(१) द्रव्यस्य ।
(२) आक्रोशनमभीषङ्गः । पराभिमुख्येन वाग्योजनमिति क्षीरः ।

माकर्ण्य चपलदृष्टिपरामृष्ट[1]कर्णा झटिति जात-विलक्षणावर्णा श्रीकृष्णमुखश्रीपर्णा[2] निर्वर्ण्य[3] विहसन्तीं तामनु विहसन्तीभिस्ताभिः शपन्तीभिरिव भणितम् । यदि च वयं साधुचरिताचरितार्थतां गतास्तदा भवत्या भवनेऽपि शीघ्रमेतत्[4] पतिष्यति ।

हसन्ती सा चोवाच ॥

भद्रं भद्रं तदैव वो भद्रत्वमनुभविष्याम इति । वस्तुतस्तु तस्याः कोमलतायामवकलितायां मुहुरयमस्मदालयं वलिष्यत इति विचार्यैव चर्य्येयममूभिराचर्य्यते स्म ॥

अथ समापनमिदं मधुकण्ठवचनम् ॥

अद्भुतं बाल्यचरितं तव सूनोर्व्रजेश्वर ! ।
क्व तृणावर्त्तदलनं क्व मातुर्भयभावनं ॥

तदेवं तद्विवावृत्ते पूर्ववदेव तल्लीलापर्वणि साक्षादिव वृत्ते सर्वे पुरस्कृतव्रजेशाः सम्भृततत्तदावेशा यथायथमात्म-पथं प्रतस्थिरे ॥

इति श्रीगोपालचम्पूमनु बाल्यलीलाचौर्य्यशौर्य्यं नाम सप्तमं पूरणम् ॥

(१) स्पष्ट । (२) श्रीपर्णी कमलेऽपि च । (३) दृष्ट्वा । (४) चौर्य्यं ।

# अष्टम पूरणम् ।

अथेतरद्युरपि प्रभात एव सभामुपाविश्य विभातेषु वैश्यजातेषु स्निग्धकण्ठ उवाच ॥

कदाचिद्दामोदरमासि दरावयसाने सामोदा यशोदा प्रातर्बालगोपालं शयानमुन्मीलन्निभ-नेत्र-नीलनलिन-युगलं निभाल्य शनैरेव करकिसलयेन पल्यङ्कादुपरितल्प एव परिलाल्य पुनरसूषुपत् कल्पं[1] । तस्मादल्पमल्पं निष्क्रामन्ती चालिन्दं विन्दमाना प्राह्णेतरा[2] मङ्क्षु[3] निजालयव्यय-सम्बन्धि दधि कतिपयं निचितनिचय[4] ग्रथि-र्मन्थितुमारेभे । यस्मिन्नहनि सह्यनन्दनामन्द[5]-स्यन्दनारोहिणी रोहिणी प्रणयभययन्त्रणया निमन्त्रणया श्रीमदुपनन्दमन्दिरं विन्दमानासीत् । परिजननाट्यश्च स्वस्वकार्य्यातिशय-पर्य्याय[6]पर्य्यापनाय गताः । कार्य्यातिशयश्चायम् । हायनशीर्षायमाण-मार्गशीर्षागमे जनवर्गमहित[7]

---

(१) ईषदर्थे । (२) अतिप्रातःकाले । (३) शीघ्रं ।
(४) वस्त्रः । (५) मूढाल्पापटुनिर्भाग्या मन्दा ।
(६) अवसरसमाप्तये । (७) पूजित ।

महेन्द्रमहामहः कुलपरम्पराविहितः सन्निहित आसीदिति ॥

तदेवं स्वयमेव मयलीभूय व्रजराजपत्नी दधि-चयमसकृदधिमथ्नती तस्य निद्राया द्राघीयस्त्वाय[१] गायन्ती तदेकतानलया तदाननमेव निचायन्ती परितस्तदीय-चरितमेव जगौ ॥

यदुक्तं श्रीवादरायणिना ॥

"यानि यानीह गीतानि तद्बालचरितानि च ।
दधि-निर्म्मन्थने काले स्मरन्ती तान्यगायत" ॥इति॥

तत्र मन्थनं यथा ।—

श्यामा[२] लोलदुकूलरत्नविलसत्काञ्ची-चयेनाश्रिता
तज्झङ्कारकरम्बितध्वनिधरश्रीकङ्कणालङ्कृता ।
पश्यन्ती तनयाननं लघुलघून्मीलन्निभाल्लिद्वयं
श्रीमद्गोपमहेश्वरी चलभुजामथ्नादभीक्ष्णं दधि ॥

गानं यथा ।—

गोकुलपति-कुलतिलकं त्वमसीह[३] ।
कृतसुकृतव्रज-चरित-सुखव्रज-
नयनानन्दिसमीह ! ॥ ध्रु ॥

---

(१) अतिशयेन दीर्घत्वाय ।
(२) गौरी वा । गौराऽरुणो सिते पीते । मूलपाठः क्रमदीपिकायां द्वितीयपाठस्तु गौतमीयहृष्टचवगतः ।    (३) व्रजे ।

आनन्दोद्भव-जन्ममहोत्सव-नन्दितगोपसमाज ! ।
पूतनिकामृतिनवमङ्गलकृतिवलयितगोकुलराज ! ।
धैर्य्यनिवर्त्तन-शकटविवर्त्तन मनुभव्येन परीत ! ।
सतृणावर्त्तक-वायुनिवर्त्तक-परमेशेनानीत ! ।
मधुरप्राङ्गण-विरचितरिङ्गण-जलजनयन-सुपुण्य ! ।
नानाकेलिषु नृत्यकलालिषु दर्शितवरनैपुण्य ! ।
तर्णकवालधिशवलिततन्वधि वलयित मञ्जुलशोभ(१)! ।
जरतीनिवहे कौतुककलहे प्रवलित-मिथ्यालोभ ! ।
मां मातरमनु सुखमुद्दितनु प्रततं सततं कृष्ण ! ।
द्रुतमुररीकुरु तनुवृद्धिं पुरु खलावलिकृततृष्ण ! ।
त्रिभुवनदर्शन-विस्मयमर्शन-निश्चितवैष्णवमाय ! ।
हरिवरिवस्या(२)-सुखदमतः स्याः(३)
विगतजरामरकाय ! ॥ इति ॥

अथ लब्धजागरः स नित्यताशालिलालित्य-सागरः सपदि रुदन्निव समुत्थितवान् ॥

मातरमितवांश्च यथा ।—

दीर्घश्वासं गात्रमोटप्रयुक्तं
नेत्रे मार्जन् जाग्रदम्बेति जल्पन् ।

---

(१) तर्णकवालधिनाशवलिता या तनुस्तया अधि अधिकं वलयिता प्राप्ता मञ्जुला शोभा येन । (२) सेवा (३) भव ।

क्रन्दन्मन्थ-ध्वानमाकर्ण्य बालः
श्रीगोपालः प्रस्खलंस्तां जगाम ॥

ततश्च ॥

माता बाल्यताघटितलाल्यताजटितप्रणाया[१]कुल-काकु-लवसङ्कुलतया तेन सुभगाखण्डलेन विघटिते क्षुब्धदण्डस्य[२] गतिमण्डले स्वयं पयस्तननयोः[३]स्तनयोः प्रस्रवं नवकं तं शावकं पाययामास ॥

पयो वर्षति धाराभिर्वर्षावन्मेदुराश्रियः ।
तस्याः पयोधरे सुष्ठु कृष्णाश्वातकतां गतः[४] ॥

सा तत्र गर्द्धना[५]द्धं तेन पीते धन्ये स्तन्ये नेत्रानन्तरगृहान्तरसन्ताप्यमानपयःसन्तानाना[६]मुत्सेकं प्रति निर्विवेकतां प्रतिपद्य सद्य एव तं विहाय द्रुतवती । द्रवगमने तस्य पतन-भीत्या च न तं गृहीत्वा गतवती ॥

मधुकण्ठ उवाच ।　किमित्थमात्थ ॥

तावन्मात्राय तस्याः कथं क्षुत्क्षामगात्राद्बाल-

(१) प्रसरप्रणायौ समावित्यमरः । प्रीत्या प्रार्थनामति क्षीरः ।
(२) मन्थदण्डस्य ।　(३) विस्तारणयोः ।
(४) तस्याः पयोधरे धाराभिः पयो वर्षति सति कृष्णाश्वातकतां गतः ।　(५) आकाङ्क्षया ।　(६) विस्तार ।

पुत्रादन्यत्र यात्रायुक्तिपात्रायतां। सा हि वत्स-वत्सलानामद्भुताभागुपमा।

स्निग्धकण्ठः सहासमाह स्म ॥

गुरो! पुरोऽवधीयतां यद्वात्सल्य-विलास एव खल्व-यमस्याः।

मधुकण्ठ उवाच। कथमिव? ॥

स्निग्धकण्ठ उवाच। तथाहि।—

ये गेहदेहादयस्तं विनाऽस्त[(१)]मितप्राया मन्यन्ते स्म। ते तु तज्जन्मारभ्य तन्ममतामयममता एव ताभ्यां पितृभ्यामभ्यमन्यन्त। "यद्धामार्थसुहृत्-प्रियात्मतनयप्राणाशयास्त्वत्कृते" इति ब्रह्मवाक्ये व्रजमात्रस्यापि तथा श्रूयते किमुत तयोरिति। इदश्च मुग्धं दुग्धं दधि च तदधिकतत्प्रधानतावधि-क[(२)]मेवेति सविशेषतयावगम्यते ॥

तदेवं सति तस्याः सेयं भावना क्लेशमपि विषह्य स्पृह्यमाणां नाना निज-गृह्य[(३)]क्रियां साम्प्रतं न जानाति सोऽयं बालक इति। दयनीयतयास्मदीय-

---

(१) अस्तं अदर्शने। अव्ययमिदम्।

(२) तस्मात्सर्वस्मादधिका या तत्प्रधानता कृष्णप्रधानता सैवावधिर्यत्र।

(३) गृहार्हं।

मेव खल्वेतदीयकृत्यं कृत्यमिति । सोऽयमेवंविधः स्नेहविविधविधिस्तैरेव बोद्धुमध्यवस्यते । यैः कृतं तर्ज्जनताडनादिकमपि लालनामयतां कलयति किमुतान्यत् ॥

यतः ॥

स्नेहतः क्वचन रुट् प्रजायते
तस्य[१] वर्द्धनकरी च दृश्यते ।
मेदुरेऽपि मुदिरे तथा तथा
विद्युदग्निरसकृद्विवर्त्तते[२] ॥

तथाहि ॥

तयोर्मिथो हितयो[३]रुभयोरपि चरितम् । दुग्धाय गमनसमये सा खलु तन्मुदितता-निबन्धनमिद-मुदितवती । वत्स ! निर्म्मञ्छनं भजामि, त्वया तावन्मन्थनगर्गरी रक्ष्यतां त्वदीयं पयो वीक्ष्य यावद्द्रुतमायामीति ॥

ततश्च ॥

यावद्विहाय पृथुकं वत मन्थनान्ता-
दम्बा ययौ द्रुतमसौ तत आययौ च ।

(१) स्नेहस्य ।　　　　(२) जायते ।
(३) यशोदाकृष्णयोः ।

तावत् पयोधर-युगं हृदयस्थवस्त्र-
क्रोपं ववर्ष पथि पिच्छिलिता यथासीत् ॥

तदेवमपि स तु निजार्थिते प्रत्यर्थिते[१] भृशमाविजते स्म ।

यथा—

तेनाथ कोपस्फुरितारुणाधरं
सन्दश्य दध्नामुदसर्जि रोदनम् ।
दण्डाहता[२]मत्रमखण्डि चाश्मना
नालम्भि तस्मिन्नवनीतमण्वपि ॥

अत्र तु वर्णयन्ति ॥

दन्तेन्दुलेखाविशदाधरारुणं[३]
चक्षुश्चकोर-द्वयमश्रु चादधे ।
तदा शिशोरस्य कराम्बुजन्मना-
प्यरिष्ट[४]मुद्धूय वलाद्विजृम्भितम्[५] ॥

तदेवं कलशान्तरीणे कालशेये[६] सर्वतो रीणे[७] पर्वान्तरमपि जातं ॥

---

(१) प्रत्याख्याते ।

(२) दण्डाहतं कालशेयमरिष्टमपि गोरसमित्यमरः ।

(३) दन्तेन्दुलेखाधरसम्बन्धि अरुणवर्णमाविशत् ।
पक्षे अरुणोदयं ।

(४) तक्रं पक्षे दुःखम् ।

(५) चर्वितं पक्षे प्रकाशितम् । (६) तक्रे । (७) गमने ।

यथा—

ततो गृहाभ्यन्तरशिक्यलक्षितं
हैयङ्गवीनं परिगृह्य यत्नतः ।
जघास तत्रोर्वरितं तु पक्षक-
द्वारेण निह्नुत्य जहार केशवः ॥

स च यत्नो यथा—

कुञ्चीक्षेपादर्गलामन्तरङ्गा-
मल्पां मुञ्चन् सद्म गत्वा युयोज ।
कृत्वा खट्वां तत्र निश्रेणिकाभां
हृत्वा सर्पिर्गुप्तमश्नन्नपागात् ॥

ततः क्षणाद्दुग्धमितं[१] तु मुग्धता-
माधाय माता सुतमागमद्द्रुतम् ।
अप्राप्य तं तस्य तु कर्म्म तद्विधं
बुद्ध्वा सकोपं समुखं जहास सा ॥

तत्र ॥

प्रथमं शङ्कासङ्कसुकायां[२] तस्यां योगमायाप्रकाशिताकाशवागेव हासप्रकाशनस्य बोधस्य कारणं जातम् ॥

---

(१) प्राप्तं　　(२) सङ्कसुकोऽस्थिरे ।

सा यथा—

शिशुमधुकृदितक्षुन्मध्वसिद्धं पिपासन्
सरसिजमुकुलाधश्छेदमाश्चर्य्य पश्यन् ।
द्रवविगलनमात्रं तत्र निर्विद्य मध्ये
कमलमपरमश्नन् प्राप तस्मिन् मधूनि ॥

किञ्च ॥

शमयाश्चकृषे दुग्धं, क्षुभितं तत्तत्र सुदक्षता कलिता ।
शमयसि यदि शिशु-कोपं,तादृशमुच्चैस्तदा प्रशस्येथाः॥

तदेवं श्रुत्वा हसित्वा कालशेय(१)-लेशाध्यवसेयता (२)नपह्नवचरण-चिह्नमीक्षित्वा साधकतमान्तरेण द्वारयन्त्रं मोचयित्वा च सा पुनरेव माचचार ॥

गत्वा गृहाभ्यन्तरमन्यदप्यसौ
दृष्ट्वा सुतस्यातुलचापलं प्रसूः ।
तदीयवर्त्मानुगमेन च क्रमा-
दालोकयल्लोलविलोचनश्च तम् ॥

तत्र लोलविलोचनत्वं यथा—

हरि(३)रभिहृतवानिहास्मि दृश्यः
कथमथ मातरमीक्षणं नयानि ।

---

(१) तक्र (२)निश्चयता (३) चूत ।

इति नयनयुगं श्रुतिद्वयान्त-
र्मुहुरिव वेशयति स्म बालकृष्णः ॥
अधोमुखीकृत्य बलादुलूखलं
निविश्य तस्योपरि चञ्चलेक्षणः ।
कीशाय सर्पिर्ददतं प्रसूः सुतं
वीक्ष्य स्मितं प्राप तथा च विस्मितं ॥
गूढं प्रतस्थे कृतमोषमात्मजं
धर्त्तुं प्रसूरेष निरीक्ष्य चाद्रवत् ।
प्रसिद्धिरेषा खलु लोकतः शतं
दृशोर्म्मतं हर्त्तरिभर्त्तरि द्वयं ॥

स खलु दृप्तः शाखामृगस्तु नवनीतानां तृप्तः पटवेष्टितयष्टिमेतां दृष्ट्वा द्रुतमेव शाखामारूढः ॥

अथाद्रवन्तं सुतमन्वगात् प्रसूः
प्रसूनवृष्टिप्रथकेशबन्धना ।
"क्व यासि रे ! चोरवरे"ति जल्पिता-
नातिस्फुटक्रन्दनहाससुन्दरम् ॥
तोकं धर्त्तुं सा समीपेऽपि शीघ्रं
धावन्ती तत् प्राप धावन्न माता ।
प्रागञ्चन्तं वायुवेगात् प्रतीची-
स्तोकाम्भोदं यद्वदम्भोदवीथी ॥

अथ पुर द्वारं न मातुर्गमनद्वार मिति मत्वा पलायनग्रहिलस्तद्दिशमेव जग्राह । जननी तु तदानीं तत्राजनतां जानती तमेवानुयातवती ॥

ततश्च ॥

यदाद्रवत् पृष्ठमनीक्षमाण-
स्तदा न लेभे पृथुको जनन्या ।
यदा भयाद्वीक्षितवान् स पश्चा-
त्तदा तयासौ जगृहे करेण ॥

स च तथापि ॥

अक्षिणी द्रवगमाय साक्षिणी[१]
रोदनं क्रु[२]दुदयप्रणोदनम् ।
चालनं वपुषि धार्ष्ट्यपालनं
सृष्टवानविनयं न मृष्टवान् ॥
निर्म्ममे प्रसभमम्बया मुखं
सम्मुखं निज-शिशोर्यदा यदा ।
सर्पिरर्पितविलेपनं तदा
रूक्षणाय तदघुक्ष[३]देष च ॥

---

(१) ज्ञापिके (२ क्रोध ।
(३) गुहसम्वरणं ।

ततश्च ॥

वष्टि चेद्धत भवान् गृहमुष्टिं
यष्टिमाकलय मत्करमृष्टाम् ।
इत्थमुच्चाकितिते[१] कमलाक्षे
तां जहौ निज-जहौ[२] व्रजराज्ञी ॥

मामेति वदता तेन चोरचोरेति गीः-कलिं[३] ।
रहसा[४] सहसा[५] राज्ञी सहसा सहसा[६]-तनोत् ॥
अहो! राजासि चोराणां चोरास्त्वत्पितृ-गोत्रजाः ।
इत्याद्यचकलन्माता शिशुना गव्यचोरिणा ॥

किञ्च ॥

दधिमण्डः कथं खण्डो दण्डोऽयं परमेशितुः ।
घृतं कोशाय कः प्रादादसौ येन विनिर्म्मितः ॥ इति ॥

शङ्के स्वादुङ्कारमित्थं सदा त्वं
यज्ञाङ्गीयं लेक्षि हैयङ्गवीनम् ।
एवं चोरङ्कारमम्बा शिशुं प्र-
त्याक्रोशन्त्यप्यार्द्रचित्ता बभूव ॥

ततः ससंरम्भं विहस्य स्वरहस्यमुच्यतां दम्भश्च मुच्यतां । इति ॥

---

(१) भीषिते　　(२) शिशौ　　(३) वाक्कलहं ।
(४) एकान्ते　　(५) सहास्या　　( ) बलेन ।

मात्रा पृष्टः सृष्टरोदननेत्रः पुत्र उवाच ॥

त्वय्युद्रुटं प्रद्रवन्त्यामङ्घ्र्योः कटकघट्टनात् ।
अस्फुटद्दधिमण्डस्य घटः का मम दुष्टता ? ॥
कीशः स ईशनिर्दिष्टः प्रविष्टः सद्म मुष्टये ।
कृष्णसर्पिः परामृष्टो[1] मया का मम दुष्टता ? ॥
तथापि त्वामात्तयष्टिं दृष्ट्वा दुद्रुव चोरवत् ।
त्वं पुनर्मां वृथा भीतमपि दुद्रोथ निर्दयं ॥

अथ सानुतापमिव माता प्राह ।

रे वाचोयुक्तिसत्तम ! चोरोत्तम ! त्वं नरोत्तमजातोऽपि वानरप्रियो वानर-प्रकृतिरेवासि ॥

सुतस्तु सभयं सभयप्रदानमप्युवाच ।—

ततो वनमेव प्रविश्य स्थास्यामि ॥

अथ माता सभयं चिन्तितवती ।—

को जानीयात् कुर्य्यादपीदं मानी । तर्हि तन्निवन्धनं वन्धनमेव सन्धेयं । यदेकयामयालयवालयोरवधानं दुर्धानं[2] भविता ॥

स्पष्टन्त्विदमुक्तवती ॥

रे चोर ! चञ्चलविलोलविलोचनश्री-
निक्षिप्तमोह ! मनुषे विनिवारणं न ।

---

(१) स्पष्टः । (२) दुर्धरं ।

वद्धा भवन्तमहमाशु चलामि गेहं
शक्तिर्यदि प्रथयतां कुरु चौर्य्यमन्यत् ॥

वन्धोद्यमे तु रुषिततारूषितः[१] पुत्रः फूत्कुर्व्वन्निव सास्रमुच्चैरुवाच । अम्ब ! रोहिणि ! सहजेन क्व गतासि ? त्वया रहितं मामियं वन्धाति, तद्द्रुतमिह समेहि ॥

तदेतद्दूरगतया तया नावधार्य्यते स्म । किन्तु पराः पारम्पर्य्येणावधार्य्य कृतोपालम्भचर्य्याः काश्चिन्निकटनिकाय्या[२] नार्य्यः परिवार्य्य मिलिताः । स्ववाचमिह स्मारयितुमैकागारिकः[३] सोऽयं भवदगारेऽपि काङ्गारिमकार्षीदिति सूचयन्त्य इव सह जहसुश्च ॥

ततस्तदनवदधती कुन्तलसन्तानवन्धाद्विघटितां पट्टडोरीमेकामुपसद्य सद्यः सद्म-द्वारान्तरुपसद्य-मानमुदूखलमनु वत्स-गलवन्धवदलग्नमेवावलग्न[४] सन्निर्वन्धं वन्धुमुद्यतवती स्तनन्धयं शिक्षाजननी जननी । सा[५] तु द्व्यङ्गुलाङ्ग[६] न्यूनाजनि ॥

---

(१) गुण्ठित रूषिते । रोषेणावृत इत्यर्थः ।
(२) गृह । (३) स्यादेकागारिकश्चौरः ।
(४) मध्यमश्चावलग्नश्च । (५) पट्टडोरिका ।
(६) द्यङ्गलाद्ङ्गात् ।

ततश्च तस्या धम्मिल्लादुद्धास्यान्यस्या विन्यस्तत्वेऽपि तदनस्थतायां दृश्यमानायां साश्चर्य्यमिव नार्य्यर्पितैर्म्मन्थननेत्रै[१]र्वहुभिरपि पारं न वव्राज व्रजेश्वरी ॥

ततश्च ॥

तदङ्के द्व्यङ्गुलाभासे सर्वे लब्धावकाशकाः ।
दृश्यन्ते स्म वटा[२]स्तत्र विदूराद्रौ घना इव ॥

तदेतत् पश्यन्तीभिः परिहसन्तीभिरुक्तम् ।—
व्रजदेवि! निवेदितमेवास्माभिः। स एष समुन्नतया मोहनतया कफल्लकमपि[३] हेल्लयन्[४] लोप्त्र[५]मात्र सुकल[६]तानन्दी परास्कन्दी[७] सन्दीप्यत इति ॥

सा प्राह ।—किं जानात्यसावद्य जातः। किन्तु भवतीनामेव कापीयमवद्या विद्या। यदन्तरस्य पक्षपातिन्यः समीक्ष्यध्वे वहिरेवान्यथा व्यवहारतया विहरन्त्यः स्थ ।

सर्व्वाः सहासमूचुः ।

तत्र भवति! भवच्चरणेभ्यः शपथमाचरामः। नास्माकं

---

(१) रज्जुभिः। (२) रज्जवः।
(३) आदिचौरस्यैकस्य नामेदम्।• आद्यचौरः कफल्लकः।
(४) तिरस्कुर्व्वन्। (५) चौर्य्यार्जितः।
(६) सुफलो दातभोक्तरि। (७) चौरः।

विस्मापिकेयं विद्या विद्यत इति ॥

सा[१] च चेतसि विचारमाचचार । तर्हि गर्ग-वचनवर्गवत् कापि भागवती शक्तिरेवामुमवरुणाद्धि[२] नचायं किञ्चिदपि जानाति ॥

अथेयमस्याश्चर्य्यस्य पर्य्यन्तं पर्य्यालोचयितुं ताभिरेव गृहादन्यान्यपि मन्थन-दामानि मुहुर्मुहुरानाय्य सनिर्व्वन्धं वन्धमादधत्यपि गत्यन्तरं[३] न प्राप ॥

ततश्च ॥

वध्नती नतु सुतं व्रजेश्वरी
पारमाप तदपारकर्म्मणः[४] ।
घर्म्मवारिवरिमाणा[५]मावज-
द्धारवारमलकावृतीरपि ॥

ततो यावदेव यादवदेवकुलजस्य तस्य हठवत्तायां प्रयत्नाधीरासीत् । तावत्तदाग्रहोऽपि गृह-

---

(१) विद्या ।
(२) प्राप्नोत्यवरुणाद्धि अपि इत्याख्यानचन्द्रिका ।
(३) गतिर्मार्गे दशायां च ज्ञाने यात्राभ्युपाययोरिति विश्वः । प्रकाशादवस्थान्तरमित्यर्थः ।
(४) तस्य वन्धलक्षणस्यापारकर्म्मणः ।
(५) आधिक्यं ।

निगृहीत इवाभूत्। मातृ-वैकल्येन कल्यमान[१]-मनस्त्वे तु प्रथमडोरिका-द्वयमात्रसम्बद्धगात्रतया बद्ध एव सोऽयमवुध्यत। अन्यानि तु सर्व्वाणि दामानि तस्मिन्नुर्व्वरितान्येवादृश्यन्त ॥

योगमाया-नाम्नी तत् कर्म्मकारिणी हि तन्मनोऽनुसारिणी। यया तन्निष्पाद्य मातरं प्रत्यपि भ्रम-एवायमिति प्रत्ययः प्रत्यहमासाद्यत ॥

अथ लब्धसन्धं[२] तं वन्धं दीर्घतमयान्यया रज्ज्वावध्य च तया तदुदूखल-मध्यं ववन्ध ॥

बद्धा च माता शिक्षां घटयन्ती निजकठिनता-तामेव तस्मिन् हठानि[३] प्रकटयन्ती ताभिर्वि-हसन्तीभिः सह सनर्म्मगेहकर्म्मणे गच्छन्ती तत्-परिपालनाय वालकान् परितः स्थापितवती ॥

ततश्च गतासु तासु क्षणं कृतरोदनविनोदः पश्चाद्दहलखलं[४] प्रत्युदूखलनोदनाय लब्धमोदः स तु बद्ध एव केवलवालवलिततया प्रवलितचापल-श्रद्धस्तैः सह प्रहसन् खेलन्नुलूखलमेतं लघु लघु-चालयामास। हारयामास च तैरेवोल्लणहासतया

(१) ध्याप्यमान। (२) सन्धा प्रतिज्ञा मर्य्यादा।
(३) कृष्णे। (४) प्राङ्गणं।

शुल्व[1]हारिणीनां लब्धशून्यसाधर्म्यहर्म्यश्रेण्या हारिशिक्यित[2] नवनवनीतादिकमाहारयामास च । किन्तु तत्-कर्षणामयहर्षप्रदलीलया न च करेण न चापरेण तदुद्दान[3]मोचनरोचनतामवाप ॥

तत्र तु पुर द्वारपुरस्ताद्वर्त्तिवातावर्त्तवर्त्तित-नर्त्तनमिव यमलमर्जुनद्वयमस्य नेत्र-वर्त्मनि वर्त्तते स्म । क्रमेण चासौ तयोरन्तर एव विक्रमते स्मेति ॥

एतावन्मुक्तकण्ठमुट्टङ्कयन् स्निग्धकण्ठस्तद्भञ्जने कारणं हरेरैश्वर्य्यप्रचारणमिति तत् प्रतारयन् कारणान्तरमेव व्याजहार ॥

ततः स्फुटं झटिति परतः पर्य्यटितुमुत्कण्ठया तन्मध्यसम्बद्धेनैवाध्वना निश्चक्राम । तदध्वनस्तु संक्षिप्तताक्षिप्ततया तदुदूखलं प्रतितष्टम्भे ॥

अथ स्फुटमसौ वटी-[4]त्रोटनेच्छया तत् कृष्टवान् । हठादाकृष्टे च तस्मिन् ॥

कुठद्वयं कटकटशब्दमुग्जटं[5]
विघट्टितं स्फुटमकुठद्वयोर्दिशोः ।

(१) रज्जु ।
(२) काचितशिक्यिते द्व शिक्यवद्धे ।
(३) समे नूद्दानबन्धने ।　(४) रज्जु ।　(५) मूलं ।

न धीधृतिं वधिरविमुग्धता[१]मधि
व्रजन्नविव्रजमदधात् प्रजा-व्रजः ॥
चित्रं तुत्रोट तत्तत्र वज्रमज्जार्जुनद्वयं ।
न पुनर्म्मातृ-वात्सल्यनिर्व्वन्धमयवन्धनम् ॥

श्लोकयन्ति चात्र ॥

श्यामाङ्गद्युति किङ्किणीध्वनिधरं रिङ्गालिरङ्गप्रदं
कर्षच्छश्वदुदूखलं खरखरत्कारप्रकारप्रथं ।
विस्फूर्जप्रतिमार्जुनद्वयकटत्काराजितात् कौतुकात्
पर्य्यावृत्तनिरीक्षणं व्रजवधू-लाल्यस्य वाल्यं स्तुवे ॥

अथ तयोरत्यूर्जितेन विस्फूर्जितेन मुहूर्त्तार्द्ध-मात्रतया गोष्ठाधिष्ठाना मूर्च्छामृच्छन्तः स्थिताः । तन्निकटसङ्घट्टिनीमर्भकघटां विना । सा तु तल्लीला माधुरीधुरीणतया चित्राकृतिरिव मित्रावली न वित्रासमाससाद ॥

दूरादपि तदूर्जितं[२] विस्फूर्जितं सम्भ्रमकार्य्य-वधार्य्य तु व्रजपतिमुखास्तार्किता सुखास्त[३] देवाभि प्रतस्थिरे । सत्रा[४]सत्रासमत्राभिदधिरे[५] च ॥

---

(१) वधिरेण विमुग्धता ।　　(२) वलवत्तरं
(३) स्थानं ।　　(४) सह ।　　(५ ऊचुः ।

विना वातं विना वर्षं विद्युत्प्रपतनं विना ।
विना हस्तिकृतं दोषं केनेमौ पातितौ द्रुमौ ॥
अजन्य[1]-जन्य[2]-मेतावज्ज्ञाता निर्जनता कुतः ।
तस्मात्तस्मान्महागर्जान्मूर्च्छामार्च्छन् व्रजे जनाः ॥
इति ॥

अवदधिरे च तन्निकटतटस्थं भासमानहास-विलासमुखमुलूखलं कर्षन्तं लीलासुखं वर्षन्तं बालगोपालं। तेन च कथं कथमिति कथयन्तस्तमावृण्वन्त एवावतस्थिरे ॥

स तु पितरमनुविन्दमानमनुचक्रन्द ॥

पिताचान्तःसम्भ्रान्तः सन्नपि तस्य सान्त्वनाय मुखमात्रं हसितपात्रमाचरन्नचिरादेव तं विपाशयामास[3] ॥

सरोदनवदनं वदनं चुम्बन् विदन्नपि मुहुः पप्रच्छ च । पुत्र ! कुत्रत्यः स खलु खलबुद्धिर्येन चोलूखले निर्बन्धजनितबन्धस्त्वमसीति । स तु पितरि रतश्चिरतः श्लिष्टकण्ठतयाभ्यर्णमागतः कर्णौ वर्णयामास ।—तात ! मातैवेति ॥

(१) जातं ।　　　　(२) उत्पातः ।
(३) पाशान्मोचयामास ।

पिता तु तां पूर्व्वं विगतसम्वेदतयानन्तरन्तु स्वत एव जातनिर्व्वेदतया दूनां वेद स्म । तत एव न सहसा रहसापि परिभाषितु[१] मियेष । अज्ञतया वज्ञया न च पप्रच्छ वालकान् किमिदं वृत्तमिति ।

ते तु स्वयमेव प्रोचुः ।—

स्फुटमनेन कृतमध्यगमनेन विस्तीर्णाखले[२] पुरःस्थले क्रीड़ितुं निष्क्रम्य विकृष्टतले तिर्य्यग्भावादचले चास्मिन्नुलूखले खटिति त्रुटिततामृच्छत् कुठ-[३]द्वयं झटिति लुठद्भावमानर्च्छ ।

ततश्च खण्डिताभ्यामाभ्यां निर्गत्य कटकमुकुटकुण्डलादि मण्डितौ रोचिस्मद्वपुष्मन्तौ शुष्माणौ[४] प्रणमन्तौ समन्तादेतं किमपि सन्तोषयामासतुः । तदुत्तरमुत्तरस्यां दिशि प्रास्थिषाताम् । तदेतदाकल्य[५] वालानां प्रलापोऽयमिति वत्सलाः कलयाम्बभूवुः । अन्ये तु सांशयिकता[६]नपेतचेतसः प्रजाताः ॥

ततश्च क्रमादेकद्वयादि प्रक्रमान्मिलितेन व्रज-

---

(१) यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणं ।
(२) अङ्गने । (३) वृक्ष । (४) बलवन्तौ ।
(५) श्रुत्वा । (६) संशयापन्नतया ।

जनेन समं व्रजभूपालः स्ववालकेनाङ्कं सदलङ्कृत्य नित्यकृत्य-कृते कालिन्दीमनुविन्दमानस्तेनानुषज्य निमज्ज्य तत्रैव विप्रैः स्वस्तिवाचनादिकमाचर्य्य महादानादिकं विसर्ज्य निकाय्य[1] मासज्य च पूर्व्वाह्णभोजनाय ससज्ज ।

तज्जाया तु तज्जाभ्यां दुःखलज्जाभ्यां सज्जन्ती गृहाद्गृहान्न न निष्क्रान्तवती न च गृहागताः सम्भाषितवतीति । सर्व्वास्वर्व्वागेव निवृत्तासु समाधानोहिनी रोहिणी गौरवपात्रीभिः पौरोभवीभिः[2] परिवेशयामास ।

श्रीव्रजराजस्त्ववरजात्मजं राममपि समानीय तेन[3] सुतेन च सार्द्धं तयोः स्निग्धकलकोलाहलनिदिग्धः सग्धि[4]माचरितवान् । ताभ्यां मूर्तपरमानन्दपूर्त्ताभ्यां[5] मुहूर्त्तमेकं विश्रम्य च सम्यगीदृगौशीर-[6] सुखधीरचेता गवागमनरम्यसमये गोस्थानमागम्य गोदोहनादि कार्य्यञ्च कारयति स्म ।

---

(१) गृहं ।　　(२) रसवत्यध्यक्षीभिः ।
(३) रामेण ।　　(४) सहभोजनम् ।
(५) वापीकूपतडागादिदेवतायतनानि च । अन्नप्रदानमारामः पूर्त्तमार्य्याः प्रचक्षते ।
(६ औशीरं शयनासनं । एते समुदिते औशीरमिति क्षीरः ।

उद्वसिता[१]दतिसितां सितामानाय्य तया सहितं सुहितं[२] सह सवयोभिस्तनयौ स्तनपान-प्रतिनिधितया धारोष्णं पयः पाययामास च । शिक्षयामास च तत्र पत्रपुटीघटनां ।

अथ पुनरपि हर्म्यमागम्य ताभ्यामाचरितसायं-भोजनसुखसमाजे व्रजराजे सह रोहिणीका-स्तदीयसन्ततसुखाभीकाः[३] स्वकुलमाणिक्यलक्ष्य सर्व्वाः प्रामाणिक्यः समासाद्य निवेदितवत्यः ।—

राजन् ! कृष्ण-जनन्यद्य न भुक्तवती न केन-चिदुक्तवती च वर्त्तते । तामनु सर्व्वाश्च तथा वर्त्तन्ते ॥

व्रजराजः सहदुःखहासमुवाच ।—

वयं किं कूर्म्मः ? रोषमनुवर्त्तमाना स्वयमेव स्व-दोषं पश्यतु ॥

सर्व्वाः सास्रमूचुः ।—

हन्त ! सा खल्वन्तर्व्वहिरप्यतिकोमला तवेदृशा-लापेन तापेनातिम्लास्यति ।

---

(१) गृहात् । (२) सुतृप्तं ।
(३) लुब्धाः ।

व्रजराजस्तु सस्मितः सुतमपृच्छत् ।—

तात ! स्व-मातरं यास्यसि ? ।

कृष्ण उवाच ।—

नहि नहि; किन्तु त्वामेव समया समयान् गमयिष्यामि ।

अथ राज-ज्यायःप्रजावत्यः[१] सहासमूचुः ।—

स्तनं कस्य पास्यसि ? ।

कृष्ण उवाच ।—

सितासम्भविष्णु धारोष्णं पयः पास्यामि ।

सर्व्वा ऊचुः ।— केन क्रीड़िष्यसि ? ।

कृष्ण उवाच ।—

तातेनैव समं। तथा भ्रातरमपि सङ्गं गमयिष्यामि।

व्रजराज उवाच ।—

भ्रातुर्मातरं कथं नानुगच्छसि ? ।

कृष्णःसरोषास्रमुवाच ।—

मां विहायेयमपीयायेति ।

तदेतदाकर्ण्य सास्रा रोहिणी नीचैरुवाच ।—

पुत्र ! कथं कठोरायसे ? माता तव दुःखायते[२]।

कृष्णस्तदेतदशृण्वन्निव सास्रं पितृ-मुखमीक्षते स्म ।

---

(१) वृद्धा प्रजावत्यः इत्यर्थः। (२) दुःखं वेदयते।

रोहिणी तु सङ्कर्षणं तस्य सङ्कर्षणाय संज्ञया ज्ञापयामास ।

तेन गृहीतहस्तः पुनरसौ निरस्ततद्धस्ततया विद्रुत्य पितुरुत्सङ्गसङ्गी वभूव ।

तथाभवंश्च भुजाभ्यामवगुण्ठिततत्कण्ठः कृत-वाष्पवृष्टिं तद्दृष्टिमेव पश्यंस्तमतीव वश्यमाच-रन्नासीत् ।

व्रजराजस्तु मातर्य्यन्तःस्नेहमस्य पर्य्यालोच्य तदभिव्यक्तये हस्तं किञ्चिदुदस्तं विधायाभिदधे । पुत्र ! यदि वच्मि तर्हि वाढं तां ताडयामि । कृष्णस्तु तदसहमानस्तस्य हस्तं स्तम्भयामास ।

ततो व्रजराजः पुनर्विहस्य निजवत्सलतयातीव सदयं तदीयमातुरपि हृदयमाधियन्[१];-पुत्र ! तव माता यद्येवं भविष्यति तदा किं करिष्यसीत्य-नधातोर्विरुद्धार्थं प्रयुज्य सपरिहासमाह स्म ।

कृष्णस्तु वालकभावेनाजस्रं मातरि सतृष्णः सास्रं,—कुत्र मे माता तत्र गम्यतामिति सशङ्कं रोहिण्यङ्कं गतवान् ।

ततश्च प्रहसितकलकलेषु सकलेषु परमसुखा-

---

(१) स्मरन् ।

रोहिण्या रोहिण्यानीतः सोऽपि वेश्म प्रविश्य सरोदनमोदमम्बाला-गलं लग्नवान् ॥

ततश्च ।

वत्स-मूर्द्ध्नि चिवुकं दधती सा
धेनुवद्दलितघर्घरशब्दा ।
रोदनप्रथनया द्रवदात्मा
रोदयत् परिकरानपि सर्व्वान् ॥

अथ तासां त्वनेकसान्त्वनया लब्धशान्तिःकिञ्चि-द्व्यञ्जितमुख-कान्तिः श्रीसुमुख-कन्येयं स्तन्येन तनयं प्रीणयामास । बुभुजे च सहाग्रजातेन तेन परमहिताभिः सहिता ।

तदारभ्य तु सङ्कोचमुपलभ्य व्रजराज-लोचन-गोचरतां वासर-त्रयं नासादितवती । दिनान्तरे तु पितृनिदेशपालबालगोपालेनैव चेलाञ्चले गृहीत्वा नीता । तद्दिनतश्च सनर्मामोदं दामोदर इति व्रजवधूभिराहूयते स्म सोऽयं श्याममनोहर इति ॥

व्रजेश्वरीं स्तोतुमपीह कोविदः
को वा भवेल्लोकगलोकसंग्रहे ।
ब्रह्मापि सर्व्वोऽपि रमापि यत्-कला
कलाश्च नाश्नीदिति बादरायणिः ॥

सोऽयमस्या वादरायणिना घटितसम्यगुद्धट्टनः श्रीमान् यशःपटहशब्दस्त्रैलोक्यमेव श्लोक्यतया पर्य्यटन्नस्ति ॥

तथाहि "नेमं विरिञ्च" इत्यादि ॥

श्रीरामस्तु निजानुजं सतृष्णामाह स्म ।—

स्मरसि भ्रातर्वृहद्वने वत्स्यावः ॥

अनुजोऽपि सस्मितमाह ।—

आं आं तत्र क्रीड़ामपि करिष्याव इति ॥

अथ कथकः समापनमाह ।—

ईदृशस्तनयो जातस्तव गोपमहेश्वर ! ।
यो वृत्तावपि तौ स्वस्य दिव्यभक्तौ विनिर्ममे ॥

तदेवं वृत्ते वृत्ते सर्व्वे तत्तत् कथामपि तत्तत्पर्व्वेवानुभूय स्व-स्व-वासमेवासन्नवन्तः ॥

इति श्रीगोपालचम्पूमनु दामोदरानुमोदो नामाष्टमं पूरणम् ॥

———

# नवमं पूरणम् ।

अथ दिनान्तरे भासमानायां सभायां श्रीव्रजराजः पर्य्यनुयुक्तवान्(१) वत्स ! स्निग्धककण्ठ ! तौ खलु वृक्षौ व्रजे सङ्कल्पप्रदतया देवतासदृक्षौ ततः प्राग्जन्मनि कीदृशावत्र(२) वा कस्मादागतौ सम्प्रति च कीदृशतया क गतौ ॥

स्निग्धकण्ठ उवाच ।—

पूर्व्वं धूर्जटिमित्रा(३)दुत्पन्नवन्तौ । कदाचित्तु श्रीदेवर्षिवर्य्ये धार्ष्ट्यमनुष्ठितवन्तौ सन्तौ परिणामतः परमानुग्रहेण श्रीदेवर्षिवर्य्यकृतनिग्रहेण वृक्षतायामपि भवद्भक्ततामागतवन्तौ प्रति भवदवतारमुद्भवतस्तस्य बृहद्वनस्थभवद्गृहस्य तु सदेशे देशे यमलार्जुनवेशेन स्थितवन्तौ । एतदनन्तरञ्च निजगतिमागतवन्तौ परमभगवद्भक्तिमन्तौ च जातवन्तौ । सम्प्रति तु तद्भक्तिफलव्यक्तिमप्याकलयन्तौ वर्त्तेते ॥

---

(१) पृष्टवान् ।   (२) व्रजे ।   (३) कुबेरात् ।

व्रजराजः सकौतुकमुवाच ।—

कथ्यतां तथ्यं सम्प्रति कुत्र प्रतियातौ ? ।

अथ स्निग्धकण्ठः स्वमुखकमलं नमयित्वा तूष्णीमिव स्थित्वा च मधुकण्ठं कटाक्षेणोक्षाञ्चक्रे ।

व्रजराज उवाच ।—

सङ्कुचन्निव कथं नोचिवानसि ।

स्निग्धकण्ठः ससम्भ्रममुवाच ।—

देव ! वयं किं ब्रूमहे, श्रीचरणाः स्वयमेव वेत्स्यन्ति ।

व्रजराजः सस्मितमुवाच ।—

सत्यं भवदुक्तं पुनरुक्तमेव भवेत् । यतो भवतो मौनमेवात्र ब्रवीतीति रीतिवशाज्ज्ञातवन्त एव च वयं । तथापि स्वमुखेन सुखेन योजयतु भवानस्मान् ।

स्निग्धकण्ठ उवाच ।

सर्व्वसुखवर्षिश्रीदेवर्षिचरणानां कृपणविषय कृपाक्लृप्त तदेतद्गती[१] लब्धमती तावेव स्फुटमावामिति ॥

तदेतदाकर्ण्य निर्व्वर्णित[२] तन्मुखाः श्रीव्रजराजप्रमुखाः समाहूय भूयः सकौतुकं ससुखं

(१) कृपणविषयेषु या कृपा तया क्लृप्ता सिद्धा तदेतद्गतिर्ययोः ।
(२) दृष्ट ।

तौ मिलितवन्तः । मध्ये समुपवेश्य निरीक्षित-
वन्तश्च ॥

पुनस्तु तत् प्रश्नानन्तरं क्रमप्राप्तां कथां मधुकण्ठः
प्राह ॥—

तदेवं विचित्रात्पूर्वचरित्राद्दिवसपञ्चकानन्तरं
श्रीमानुपनन्दः स्वमन्दिरं विन्दमानः स्वपत्नीं
पप्रच्छ ।

अद्य स्वदेवरनरदेव-गृहे किं गमनमङ्गलं न गृहे
भवत्या ? ।

पत्नी प्राह ।—

अथ किं ! को वा तद्गमनं विना मनो मानयितुं
शक्नोति । किमुत भवद्विधसविधसम्बन्धिनस्ते वयं ।

पतिराह ।—विशेषश्चेत् कथ्यतां ? ॥

पत्नी प्राह ।—

यस्मिन् प्रेमप्रचुरं; भयमपि तस्मिन् विभाव्यते प्रचुरं ।
यद्वन्नेत्रं शङ्काविषयस्तद्वन्न कर्णादि ॥

तथाहि ॥

यद्यपि निरवद्याधानविधातृ-मातृप्रभृतिभीरक्ष्येते
सभीभिरेव तौ तथापि खेलावेलायां सम्भालयि-
तुमपारणीयतया सुकलमेव विकलयतः ।

तत्र चाद्यतनं वृत्तं प्रतिपद्यतां ॥

तौ भवद्भ्रातृजौ सनिजव्रज-व्रजेश्वरभोज्यसज्जनाय जनितामोदायां यशोदायां तदीयसाहाय्यकारोहिरण्यामपि रोहिण्यामाशङ्कापात्रीर्धात्रीर्वञ्चयित्वा विदूरं चञ्चितवन्तौ ॥

यथा—

धात्रीणामपरत्र कर्म्मणि मनाग्दत्तात्मनामग्रतः
सव्यासव्यदिशोर्दृशोरविषये सान्तर्धिदेशे च तौ ।
क्रीडादम्भवशात् क्रमादपगतौ विद्रुत्य दूरस्थितौ
तत्राथ स्वसुहृद्भिरुद्धतगणैः कोलाहलं चक्रतुः ॥

अथ तथा निकृत(१)स्तत्पालनाधिकृतधात्रीवर्गः क्षणात् कृतावधानसर्गः शीघ्रमेव कृतानुमार्गः क्रमेण स्वस्यांकारण(२)मकारणातामासादितमवधार्य्य निजेश्वर्य्योरावेदयमास ॥

तावच्च ततोऽप्यतिदूरं गम्भीरसरित्तीरं गतावाकर्ण्य पूतनासूदनप्रसू रामाम्बालामेव तयोः सङ्कलनाय चालयामास । हन्त ! न जाने खल्वर्जुनयुगलवद्दुर्जनप्रेर्य्यमाणतया कश्चिदनोकहो (३) वा

(१) वञ्चितः । (२) आह्वानं । (३) वृक्षः ।

नद्यवरोहो[1] वा स्खलतीति मयि पाककर्मविपाका-
वरुद्धायां सत्वरं त्वमेव स्वयं याहीति ॥

सा च तत्र गता शीघ्रं व्यग्रीभूताङ्गमानसा ।
सरित्तीरगतं कृष्णां भग्नार्जुनमथाह्वयत् ॥

ततश्च क्रीडारङ्गाकुलतया तदनङ्गीकर्त्तरि सङ्गीशितरि कृष्णे कृष्णाग्रजे च तदनुगतृष्णो सा परिवृत्य सद्मागत्य तस्य किञ्चिद्वयस्थानं प्रभवस्थानमेव प्रस्थापयामास ॥

ततश्च तन्माता च गत्वा ।—

क्रीडन्तं तनयं वालैरतिवेलं सहाग्रजं ।
वीक्ष्य स्तनमिषात् स्नेहं वर्षन्ती हूतिमातनोत् ।
न तु सहसा समीपमाप तत्पलायनशङ्कया ॥
आहूतिमाधुरीचेयमास्वादधुरीणतां नीयतां ॥
"कृष्ण ! कृष्णारविन्दाक्ष ! तात ! एहि स्तनं पिव ।
अलं विहारैः क्षुत्क्लान्तस्तद्भवान् भोक्तुमर्हति" ॥

तथापि मिथः सङ्घर्षतः[2] क्रीडातर्षवन्तं तमनागच्छन्तं धर्षयन्ती विच्छिदुरता-विधुरसजातीयस्नेहस्य द्वितीयपात्रमादृत-स्ववचनमात्रतया-वश्यमेव वश्यं श्रीवलभद्रमेव सानुक्रोशं[3] चुक्रोश ॥

---

(१ तटं ।　　(२) स्पर्द्धातः ।　　(३) सदयं ।

"हे रामागच्छ ताताशु सानुजः कुलनन्दन ! ।
प्रातरेव कृताहारः क्रीडाश्रान्तोऽसि पुत्रक ! ।
प्रतीक्षते त्वां दाशार्ह ! भोक्ष्यमाणो व्रजाधिपः ।
एह्यावयोः प्रियं धेहि स्वगृहं यात वालकाः" ! ॥

ततो मातृहर्षणाय निवर्त्तयितुं कृष्णं कर्षति सङ्कर्षणे सच्छलप्रोत्साहनं तमेव भणति स्म ।—

"धूलीधूसरिताङ्गस्त्वं तात ! मज्जनमावह ।
जन्मर्क्षं तऽद्य भवति विप्रेभ्यो देहि गाः शुचिः" ।

पुनस्तदानीमेव गृहादागतान् वालानालोकय्य स्पृहां वृंहयन्ती वभाषे ।—

"पश्य पश्य वयस्यां स्ते मातृमृष्टस्वलङ्कृतान् ।
त्वञ्च स्नातः कृताहारो विहरस्व स्वलङ्कृतः" ॥

तदेवं वाल्यमेवारभ्य विप्रपोषणादात्मनस्तोष इति तदारम्भाय स्तम्भमानमाह्वानादिलक्ष्येण लघुलघु समीपमासन्ना सरामं रामानुजं भुजयो-र्गृहीत्वा गृहमानिनाय ।

"ततश्च जन्मर्क्षं त" इति मिथ्याकथ्यमानमपि तेनागृहीतं नितरामेव गृहीतवती व्रजराजगृहिणी तत् पर्व्व। यत्र दुष्टदृष्टिनिवारणाय सयन्त्रा मन्त्रा मुहुर्विन्यासमूहुः[१] ॥

(१) प्रापुः ।

तदेवमवधाय स सर्व्वदर्शः श्रीमानुपनन्दः परामम‍र्श । सत्यमाशङ्कितं प्रजां प्रति प्रजा(१)वत्योरनयोः प्रजावत्योः(२) । यदिदं गोष्ठप्रकोष्ठमवदुष्ट(३)मिव दृश्यते । भवतु; व्रजराज-समाजमनुविचारयिष्यामः ॥

तत्पत्नी प्राह ।—

विचारः पुनस्तत्र भवत्येव स्थास्यते(४)॥

अथ प्रातरेव गोव्रजव्रजान्तःस्थायां सर्व्वास्था(५)स्पद - व्रजराज - समाजराजमानायामास्थायां(६) मिलिता गोपाला गोपालनादि-सौकर्य्यं नात्रेति पर्य्यालोचयामासुः ।

चिरवासेनोत्सन्नतासन्नवनतया बृहद्वनस्य । तत्र तु वयोज्ञानाभ्यां वृद्धः श्रीरामकृष्ण-प्रेम्णा समृद्धः स्वाङ्क-पल्यङ्क-सदलङ्करिष्णुना मध्ये मध्ये च चिवुकं गृहीत्वा वितथप्रश्नमाचरिष्णुना तत्तदाक्रीडनकयाश्वासतृष्णेन कृष्णेन लभ्यमानानन्दः श्रीमानुपनन्दः प्रावोचदखिलरोचनमिह(७)च

(१) पुत्र ।　　(२) भ्रातृजाययोः ।　　(३) दुष्टैरवव्याप्तं ।

(४) निर्णये आत्मनेपदं ।　　(५) आदरे ।

(६) आस्थानी श्रद्धयांरास्था अवलम्बनेऽपि क्षीरः ।

(७) वचने ।

व्रजराजराजस्य सङ्कोचमवलोचयन् बालप्रजा-
मात्रस्य हितपक्षमुपलक्षयामास ॥

यथा ।—

इह न स्थेयमितीत्थं, व्रजहितमुक्तं भवद्भिर्यत् ।
तत् पुनरतिबालानां, हितप्रधानं मम स्फुरति ॥
सहजनि[१]जनिते[२]यन्मम,परपरयत्नेन रक्षितेऽप्यत्र।
जातं विप्लवजातं[३],तस्मात् किं स्यादिहोर्व्वरितं[४]॥
तत्तदुपद्रवजाते, केवलपरमेशितूरक्षा ।
तस्मिन् भारं दद्या,दिति च न खलु तत्परै[५]रिष्टं ॥
चलता द्वयमनुचिन्त्यं, त्याज्यं गम्यञ्च यद्धाम ।
त्याज्यं दुःखनिदानं, गम्यं सुखितानिधानन्तु ॥
स्थानं तदपादेयं[६], यदिह परत्र च घटेत दुःखाय।
वृहदाख्यं वनमनुपद,मैहिकदुःखाय साम्प्रतं जातं॥
स्थानं तदुपादेयं,यदिह परत्र च घटेत सौख्याय ।
वृन्दारण्यञ्चादः, समस्तसुखतममतीव पुण्यञ्च ॥
गोवर्द्धन इति नामा, यत्रारण्ये गिरिः स्फुरति ।
तत् खलु गोजातीनां, गोपानाञ्चास्ति सर्व्वस्वं ॥

---

(१) नन्दे। (२) कृष्णे।
(३) अरिष्टसमूहं। (४) तर्हि किमवशिष्टं।
(५) वैष्णवैः। (६) त्याज्यं।

गोपाः काननकरदा, ग्रामादीनां विनिश्चयाभावात् ।
तदपरकाननगमने, राज्ञां चाज्ञा स्वतः सिद्धा ॥
सुखतो भयतो वा य,त्कृत्यं कर्त्तव्यतां याति ।
शीघ्रं तत् खलु कार्य्यं, वलयति शङ्कामलं विलम्बस्तु ॥
उत्थातव्यं तस्मा,दस्मात् सद्यो न कार्य्यमालस्यं ।
तुलिताह्युद्यमकलना, कृत्यं यद्यद्यदा क्रियते ॥
इयमस्माकमुदीक्षा[1], युष्मभ्यं यदि तु चोरमाना स्यात् ।
परवीक्षितेऽपि वस्तुनि, बहुसन्मतिरुत्सवं दुग्धे ॥
भवति तु चेदिह भवतां, समर्थना[2] तर्हि गावः प्राक् ।
सम्यक् पायितवत्सा,श्चरन्तु वृन्दाटवी-वर्त्म ॥
पश्चात् पटगृहशकटा,न्यटन्तु गृह्यं समस्तमादाय ।
विधि-विधि[3]सिद्धा सेयं, व्रजनाद्व्रजताहि गोदुहां सदने ॥

ततश्च ॥

तद्वाक्यं पशुपसमूहमूहशून्यं
स्वार्थाय स्वयमनुगम्य कल्पते स्म ।
साधर्म्यस्पृशि मृदि पश्य वीजभेदः
स्फीतः स्यात् फलति च तत्र नापरत्र ॥

---

(१)विचारः । (२)सम्प्रधारणा । निश्चयः । (३)आज्ञा ।

तदेवं पौर्णमासीमपि विज्ञाप्य समनुज्ञाप्य पुरतः प्रस्थाप्य च शीघ्रमुत्थाप्यतां व्रज इति दुन्दुभि-निर्घोषणाया कृतघोषः सोऽयं घोषः स्वनिरुक्ति-मेवातिरिक्ततया व्यक्तवान् । गव्यानां मानुष्य-काणामपि कोलाहलान्महाघोषास्पदता हि घोषता निर्दिष्टा ॥

यथा ॥—

तदा व्रजे कलकल-कोटिरुत्थिता
हिही हिही जिहि जिहि(१) कारमिश्रिता ।
घड्ड घड्ड धड्डदिति शाकटारवः
सवाद्यकः पुनरखिलाङ्गिलः स्थितः ॥

आरोप्यानसि वृद्धादीन् स्वयमूढशरासनाः ।
गौरवेण गवां गोपा ययुर्विक्रममाणताम्(२) ॥

ततश्च सङ्क्रीडति(३) शकटवर्गे सङ्क्रीडमाने सति ॥
शकटगृहाटनचर्य्यां, पर्य्याकलयन् विदूरगो लोकः ।
व्यतिषज्या(४) वददेतद्, ग्रामः कश्चिच्चरिष्णुरस्तीति ॥

(१) सम्बोधने हिहीत्युचुः क्षेपे जिहिजिहीति तु ।
(२) पादचारितां ।
(३) कूजगुञ्जअव्यक्तशब्दे । समोकूजनईष्यते । शब्दायमाने । अत्रैव परस्मैपदं ।
(४) मिलित्वा ।

पथि तु ।—

एको धावति कश्चन ह्वयति कोऽप्यत्रोत्तरं भाषते
कश्चित्तत्र निवृत्य गच्छति निजं सम्भालयत्यन्यकः ।
सर्व्वो गायति कृष्ण-बाल्यचरितं बाष्पायते स्तम्भते
स्विद्यत्येजति रोमहर्षमयते वैवर्ण्यमासीदिति ॥

आरूढशकटा गोप्यो व्यूढनव्यपरिष्क्रियाः ।
अमन्दं जगुरानन्दादानन्दान्नन्द-नन्दनम् ॥

यथा ।—

नन्दमहीपतिजात ! । नन्द यशोदामात(१) ! ॥ ध्रु ॥
जन्ममहामहदिग्ध ! । रमितसमस्तास्निग्ध ! ॥
स्पर्शार्द्दितविषयोष ! । अपरिचितापरदोष ! ।
शकटविघट्टनशेष ! । गोकुलपुण्यविशेष ! ॥
कृतनामभिरभिराम ! । सन्ततरामाराम ! ।
रिङ्गभृताङ्गनरङ्ग ! । अङ्गीकृतसखि-सङ्ग ! ॥
लङ्घितमारुतचक्र ! । नन्दितगोकुलशक्र ! ।
वत्सविमोचनमोद ! । व्रजजनशर्म्मयशोद ! ॥
सर्व्वानन्दनचौर्य्य ! । तस्मिन् दर्शितशौर्य्य ! ।
अयि ! दामोदरलील ! । अखिलसुखप्रदशील ! । इति ॥

---

(१) अर्हतपुत्रार्थे मातुर्मातःआमन्त्रणे । समासान्तो ऽयमदन्त-निर्द्देशः ।

तदेवं गायन्त्यस्तद्दर्शनस्य(१) नाथमाना(२)-अ्य-त्यतिक्रामन्ति स्म(३) ॥

"तदा यशोदारोहिण्यावेकं शकटमास्थिते ।
रेजतुः कृष्णरामाभ्यां तत्कथा-श्रवणोत्सुके" ॥

तत्र स्थितिर्यथा ।—

मणिखचितसुवर्णचित्रवर्णे
शुचिमृदुतूलिकयानुकूलमध्ये ।
गृह-निभशकटे विरेजतुस्ते
सुतरुचिरोचिषि रोहिणीयशोदे ॥

तत्कथा तु द्विविधा; तत्सम्बन्धिनी तत्कर्तृका च पूर्व्वा यथा ।—

स्निग्धा नार्य्यः शकटमभितो भातरौ पुत्रयोस्तै-
र्ज्ञाताज्ञातैरखिलचरितैर्धिन्वते स्माविशेषात् ।
प्रेम्णः सेयं प्रकृतिरखिलाश्चर्य्यरूपा यदुच्चैः
सर्व्वं स्वीयं विषयममनःस्पृष्टतुल्यं(४) करोति ॥

उत्तरा यथा । कृष्ण उवाच ।—

मातः क्व नु खलु गच्छन्तः स्मः ? ॥

माता प्राह ।—

पुत्र ! वृन्दावननामनि वनधामनि ॥

(१) कर्मणि षष्ठी। (२) कामयमानाः। (३) परस्परमित्यर्थः।
(४) नमनःस्पष्टं अमनःस्पष्टं तत्तुल्यं।

कृष्ण उवाच ।—

कदा सदनमायास्यामः ?॥

माता सस्मितमाह ।—

वत्साऽस्मदनुषङ्गत एव सङ्गच्छमानं तदास्ते ॥

कृष्ण उवाच ।—

क्वनु निरूप्यताम् ? ॥

रामः प्रहसन्नाह ।—

कृष्ण ! पाकादिनित्यकृत्यसन्निवेशदेशाधः-प्रदेशान्महाशकटवेशान् गृहान्निकटत एवाटतः पश्य ॥

कृष्णः साश्चर्यमिव दृष्ट्वा श्रीरामं स्पृष्ट्वा जहास पुनरुवाच च ।—

तथ्यमिदं कथ्यते स्म । यस्माद्विदूरक्षितिगा अपि क्षितिरुहास्तथा लक्ष्यन्ते ॥

माता तु रोहिण्या सह सहासमाह स्म ।—

पुत्र ! त एते तु न कुत्रचन च गच्छन्ति किन्तु सम्प्रति तथा प्रतीयन्ते मात्रम् ॥

कृष्णः सतृष्णमुवाच ।—

भवतु, तद्वृन्दावनं कुत्र ? ॥

रोहिण्याह ।—पुत्र ! यमुनायाः पारे ॥

राम उवाच ।—

एका यमुना दूरतः पश्चान्न्यस्ता(१)पुरतः किमन्याप्यस्ति ? ॥

माता सहासमाह ।—

पुत्र ! कुत्रचिदपि मनागपि न विच्छिन्नागमना सा ॥

रामस्तु मातृ-मुखं साश्चर्य्यतया ससुखचर्य्यं पश्यति स्म ॥

कृष्ण उवाच ।—

तत्र भवता किल न तर्कितम् । यत्स्खलित इव तत्राच्छ[२] गच्छन्ती सा दृश्यते स्म ॥

तदेवं तयोः सोल्लासं हासं बिभ्रतोः पुनः कृष्णः सतृष्णमुवाच ।—

लघुमातः ! का तत्र शात(३)सम्पदस्ति ? यदेतावता प्रयासेन प्रयास्यामः ॥

रोहिण्याह ।—

पुत्र ! क्रीड़ास्थानानि क्रीडनकानि च बहूनि सन्ति ।

कृष्णः सहर्षं सङ्कर्षणं निष्कलङ्कविधोरङ्कं निज श्यामधाम्नालङ्कुर्वन्नेव साङ्गप्रणायतया समुत्तानिताङ्ग-

(१) त्यक्ता । (२) अव्ययमाभिमुख्ये ।
(३) सुख ।

स्तन्मुखं पश्यन् विहसन् विलसन् मुहुर्लुठति स्म ॥

सङ्कर्षणस्तु तन्मुखमनुमुखं निधाय मुहुर्विहसितलीलां विधाय चिराय तं हासयति स्म ॥

अथ यमुनातरङ्गसङ्गसङ्गतमारुतदिग्धस्निग्धवनलेखेयमासन्नेति मातृयुगल-संलापं निशम्य सम्यगुत्थितः कृष्णः सङ्कर्षणसङ्करः[१] प्रागज्ञातान् ज्ञातानपि नग-मृग-खगान् हसन्तीभिः स्खलितदन्तीभिर्विवादतः सर्व्वानपूर्व्वानिव मातरं पृच्छन्नुचरमायच्छंश्च तत्कूलानुकूलवनमाससाद ॥

तत्र प्रश्नोत्तरं यथा ।—

कोऽसौ वृक्षः समन्तादनिशचलदलः ?
पिप्पलः कोऽण्डकोटिं,
सूते ? सोदुम्वराख्यः[२] क इह घनजटा-
व्याप्तमूर्त्ति ? वटः सः ।
इत्थं नव्यां वनान्तर्गतिमनु जननी
डिम्भ[३]सम्वादजातं,
लोकं पीयूषवर्षैरसुखयदखिलं
तत्र तत्रातिचित्रम् ॥

(१) मिलितः । (२) उदुम्वराख्यया सह वर्त्तते ।
(३) शिशु ।

किञ्च ।—

गौराः कृष्णाप्रधामाप्लुतगतिपशवः
के रमन्ते ? हरिण्यः,
के वामी सैरिभा[1]-श्वप्रतिमतनुधरा ?
रोहिषाख्या प्रसिद्धाः ।
के शृङ्गानेकशाखा शवलितवपुषः ?
शम्वराख्यास्तदेवं,
मातुर्गीर्ज्ञातनामा स जयति सवलो
नन्दगोपालवालः, ॥

अपिच ।—

चित्रः कोऽयं ? मयूरः क इह मृदुकुहू-
गायकः ? कोकिलाख्यः,
को वक्तुं वष्टि वाणीं नरवदपि ? शुकः
पुष्पपः कश्च ? भृङ्गः ।
इत्थं मातृद्वयेन प्रथमवनगमे
संलपन्तौ हसन्तौ,
वालौ गोपालरामौ व्रजकुल-महिलाः
शर्म्मभिः सिञ्चतः स्म ॥

---

(१) महिष ।

अथागतास्तरणिसुता-तटं व्रज-
प्रजाव्रजाः सशकटधेनुसङ्कटम् ।
ससम्भ्रमं तरितुमनस्तया च ते
परस्परं कलकलकीर्णमभ्रमन् ॥

ततश्च द्वावपि भ्रातरौ मातरौ विहाय परममुन्न-
ततमं व्रजेशितुः पितुः शकटमागतावूर्द्धस्थित्या-
दलादिन्दीवरसुन्दरताशालिकालिन्दीं प्राणिवृन्द-
प्रीणि(१)वृन्दावनमपि फुल्लदृशा ददृशतुः ॥

श्रीव्रजेश्वरादयस्तु परस्परमूचुः ।—

अहो ! रूपमिह पारीणवन्यासम्बन्धिन्या भास्वत्कन्यायाः(२) । या खलु प्रतिबिम्बसम्बल-नया वृन्दावनान्तमन्तर्वहन्ती विचित्रचित्रपट्टपट-वदाचरति ॥

अहो ! माधुरीणां साधुरीतिरस्य च वृन्दावनस्य यत्खलु नीलाभं सितपीतलोहितप्रसूनालिभिर्निः-सरद्वासारविद्योतमानविद्युत्कान्तिरोहित(३)रोहित (४)नीरवदाभासमानं दूरतोऽप्यमृतपूरमर्पयति ।

---

(१) प्रीं प्रीतिं नयति इति प्रीणि ।
(२) पारवर्त्तिवनसम्बन्धियमुनाया रूपं ।
(३) रोहितो लोहितो रक्तः ।
(४) सुरेन्द्रचाप ।

यस्य चाकृष्टत्रिपिष्टपपदषट्पदपदतया व्यक्त-दौर्लभ्यं समाकर्षिसौरभ्यं प्राणाभ्यागतानां दूर-मारभ्य प्रत्युद्गमिसभाजकसभ्यवृन्दमिव लभ्यते ॥

यस्य च विचित्रपत्रिकृत्रिमकलकलिलकाकली(१) सङ्कुलकोलाहलकुलमाकर्षणमन्त्र इवार्थग्रहणं विनापि सकर्णकं जन्युं निजाश्रयाभ्यर्णमाकर्षति ॥

तदेवं पश्यतोः शृण्वतोरपि सतृष्णयोराम-कृष्णयोर्गोपा गाः पारयितुं व्यापारं कारयामासुः ॥

नीरं तरणिकन्यायास्तीरं च तरणे तदा ।
गोमयं गोमयमयं क्षणादजनि सर्व्वतः ॥

तीर्णासु गोषु तथा कर्णीरथा(२) दवतीर्णासु परि-जनपरिच्छदसहितासु गोपवनितासु काशकुशशर-वंशवैरैरलङ्कर्मीणनिर्मितपरस्परनद्धप्लवराजी राज-पद्धतिरिवासम्बाधतया साधिता ॥

ततश्च पारावारीणभूम्योरेकतायां कृतायामवा-रीणामिव पारीणां मधुपुरी-कालीयहृदयोरन्तरालं तद्वनभागं सर्व्व एव गायन्तः प्रहसन्तः क्रीडन्तश्च शकटघटयापि प्रविविशुः ।

---

(१) मधुरास्फुटसूक्ष्म । (२) क्षुद्रसकटात् ।

तदेवमेवोक्तम् । वृन्दावनं सम्प्रविश्येति ।

रामकृष्णौ च वद्धतृष्णावासादिततोरोपकण्ठा-वुत्कण्ठया भुवि शकटादुत्प्लुतौ प्लुत[१]सम्प्लुता ह्वानतः सुखसमान्वितं सखीनन्वाग्निधाय प्रत्यग्रमपि प्रत्यग्रायमाणा[२] वैचित्रीगहनं गहन[३]मवगाह्यमानौ सव्यापसव्ययोः पश्यन्तौ चरणचारितामेवा-चरितवन्तौ ॥

तदा च किमन्यद्वर्णनीयं समस्तं वृन्दावनमपि कृष्णेन स्पृष्टं दृष्टमेव निर्णीयपरामृष्टम् ॥

यतः ॥

यन्नानं विपिनस्य कोकिल-कले नृत्यं लता-विभ्रमे
राम्भणामुत्थितमंकुरे च कवितं[४] योग्यान्निदानाद्धृते ।
तन्मिथ्या यदि कृष्णसङ्गति-वशात्तस्मिंस्तथा वर्ण्यते,
सत्यं तर्हि सदापि तत्तदखिलं यस्माद्धरीदृश्यते ॥

ततश्च तौ क्वचिद्विक्रमणेन क्वचित्तु स्निग्धजन-स्कन्धाद्याक्रमणेन वन्धुभिरास्वाद्यमानाऽनवद्य-लालित्यामृतौ शुभशकुनसम्भृतौ वत्सक्रीडनाभिध यमुना-घट्टतः सट्टीकराख्यं प्रदेशमासेदतुः ॥

---

(१) महापरुष । (२ नवायमान । (३) वनं ।
(४) कविभिर्वर्णितं ।

अथावतरणतूर्य्यघोषजाते राज्ञा समनुज्ञाते तं(१) पश्चान्निधाय दक्षिणपश्चिमामग्रे विधाय सर्व्वे समाकीर्णविस्तीर्णदेशतयावतीर्णाः ॥

लोकहूतिव्यक्तचर्यं तदा नन्दादिवेष्टितम् ।
वृन्दावनमिदं रेजे सुप्तजागरितप्रभं ॥
तत्र चक्रुर्व्रजावासं शकटैरर्द्धचन्द्रवत् ।
यदन्तः पूरितं गोभिः क्रमेण घनरीतिभिः ॥

श्रीहरिवंशे च ।—

निवेशं विपुलं चक्रे गवाञ्चैव हिताय च ।
शकटावर्त्तपर्य्यन्तं चन्द्रार्द्धाकारसंस्थितं ॥ इति ॥

एवं तद्दिने शकटैरेव चक्रुः दिनान्तरे तु ।—

कण्टकीभिः प्रवृद्धाभिस्तथा कण्टकिभिर्द्रुमैः ।
निखातोच्छ्रितशाखाभिरभिगुप्तं समन्ततः ॥ इति ॥
गोपुरस्य(२) पुरः कृत्वा गोवर्द्धनधराधरम् ।
गोपवासः स तत्रासीन्निगोप(३) वसतिर्यतः ॥
पौरस्त्य(४)वस्त्य(५)त्यागेऽपि तत्तन्मर्य्यादयाचितः ।
व्रजाकारस्तथैवासीत्कृष्णा-पारे यथा स्थितः ॥

---

(१) स्फटिकगवाक्षं । (२) पुरद्वारस्य ।
(३) वृक्षसमीप । (४) पूर्व्व । (५) गृह ।

अष्टक्रोशीमायतं गोष्ठमेत-
न्मध्ये तस्मिन् विस्तृतं चार्द्धमस्याः ।
एतन्मानं चात्र लोकस्य दृष्ट्या
शक्त्यानन्ताचिन्त्यधाम त्वमेव ॥

मध्येराज्ञः सद्म तत् पार्श्वतस्त-
द्भ्रातॄणां तद्बाह्यतस्तत्परेषाम् ।
यद्वत्प्रेमगण्यन्तरङ्गादिरीति-
र्वासेऽपि स्यादौचिती तद्वदेव ॥

अथ तत्र परमशर्म्मणागम्यमानसमयव्रजे पूर्व्ववद्व्रजे क्रीडारतयोरपि तयोर्वनदिदृक्षा पुनरतीव विलक्षणा जाता ।

ततश्च प्रतिदिनमपि गवावनाय वनाय प्रयातेन तातेन समं समन्तत एव व्रजतः स्म ॥

यत्र ।—

वृन्दावनं गोवर्द्धनं यमुना पुलिनानि च ।
वीक्ष्यासीदुत्तमा प्रीती रामरामानुजातयोः ॥

यथा ।—

प्राधान्यादतिदिव्यवृक्षविततेर्वृन्दावनं रत्नभू-
पल्यङ्कान्वितपीठजेतृदृशदां वृन्दस्य गोवर्द्धनः ।

————

ग्लौचूर्णो[१]द्भवरङ्गभूमिविजयिस्थल्यावलेरंशुमत्-
कन्यायाः पुलिनालिरुत्सव-शतं दुग्धे स्म मुग्धं तयोः ॥

इति ॥

अथ मधुकण्ठः समापनमिदं साञ्जलितया व्यानञ्ज।—

ईदृशस्तनयोजातस्तव गोपाधिनायक !।
पाल्यङ्करोति यो विश्वं बाल्यस्य चरितादपि ॥

तदेवं तल्लीलानां साक्षात्प्रथायां कथायां कृतायां पूर्व्ववृत्तवत्तद्दिनेऽपि सर्व्वे ऽप्यानन्दानामखर्व्वाणां खर्व्वेण कर्व्वुरिता निज निजालयं कलयामासुः ॥

इति श्रीगोपालचम्पूमनु वृन्दावनदेशे
प्रवेशोनाम नवमं पूरणम् ॥

---

(१) चन्द्रपर्य्यायकर्पूर।

# दशमं पूरणम् ।

अथ प्रातरपि पूर्व्ववत्कथा प्रथते स्म[1] ॥

यथा ।—

स्निग्धकण्ठ उवाच ।—

अथानयोरतिबाल्यादूर्द्धविलासमारभमाणां सुकुमारं कुमारताशेषं वर्णयिष्यामः ॥

यथा ।—

मुक्तस्तन्यमुदश्चदङ्ग-वलयं चाञ्चल्यपर्य्याकुलं
खेलाचञ्चदखर्व्वनेत्र-युगलं शश्वत्प्रहासाननम् ॥
नानाकौतुकभावितं सखिजनक्रीडाविलासास्पदं
वत्सेच्छास्पृहि रामकृष्णकलितं[2] कौमारमन्तर्भजे ॥

अपि च ।—

शुभ्रश्यामौ नीलपीताभ-वस्त्रौ
शृङ्गी-पावी-ध्वानशिक्षासु दक्षौ ।
क्रीडालोलौ मित्रवर्गे विचित्रं
चित्रीयेते[3] रामकृष्णौ कुमारौ ॥

---

(१) प्रख्याता भवति स्म । (२) प्राप्तं ।
(३) आश्चर्य्यं कुरुतः ।

एतदवधि च वस्त्रपरिधानं क्रमेण निश्चितं जातम् ॥

यथा ।—

वस्त्रं दधाति जननी-निहितं प्रयत्नात्
क्षिप्रं च बन्धन-भिया स्वयमुज्जहाति ।
भूयस्तदर्दति बिभर्त्ति च यस्य चोर्द्ध्वं
व्रीडां विकल्प्य लघु नित्ययति(१) स्म कृष्णः ॥

तत्र नित्यमेव गोजातमनुयातेन तातेन सह यातवन्तौ समन्तादलं तौ भ्रमतः ॥

यथा ।—

अगच्छतां तत्र वने जनानां
स्नेहार्थिनां क्रोडगतौ पितुश्च ।
अपृच्छतां तत्प्रतिवस्तु वाला-
वयच्छतां शर्म्म च रामकृष्णौ ॥

तत्र च निवार्य्यमाणावपि विस्फार्य्यऽहंपूर्व्विकलया गोगोयुगं(२) गोगोयुगयुगं(३) गोषड्गवमपि (४)युगपद्दशयन्तावक्रीडतां ।

---

(१) नित्यं परिदधाति ।
(२) गोद्वयमित्यर्थः द्वित्वे पशूनां गोयुगप्रत्ययात् ।
(३) चतुष्कं ।
(४) पशूनां षट्के षड्गवप्रत्ययात् ।

अनन्तरमपि परस्परमपस्परं सद्रव[1]मेव द्रवन्तौ विघटित[2] धेन्वनडुहसङ्घट्टाबुद्धताधेनूर्वृषभानपि शृङ्गग्राहं[3] निवर्त्तयतः स्म ॥

किञ्च पञ्चकेना[4]पि पशून् गृह्णीतः स्म ।

दिनकतिपये पुनरेवं गतसमये तदेतदुपधार्य्य व्रजेश्वर्य्या पतिं प्रति प्रणयस्फुरदुपालम्भं भणितम् ।

किमिदमपूर्व्वमिव कुर्व्वन्ति तत्र भवन्त इति ।

तेन च लज्जातङ्कौ सज्जता तौ[5] वञ्चयता वनं चञ्चतामुनानुमता तं च तं च सा च सा च तन्मातावनगमनतस्तनयमातिप्रणाययान्निरुद्धवती ।

निरुद्धौ च तावुत्कण्ठाविष्टावरोदिष्टां । तत्र च कदाचिदह्नाय निह्नवमारभ्य पितुरभ्यर्णं गच्छन्तौ सवयोभ्यः सुखं यच्छन्तौ वर्त्मापरिकल्य व्रजवहिरुपशल्यस्थै[6]र्वत्सपालैर्वालैः कृतमेलन्तौ खेलन्तौ तत्पालायमानौ मुमुदाते ॥

तदेवं तयोरसकृत्कृतिमनुभूय भूयः श्रीव्रजभूपती[7] दम्पती सुखसम्भूयमानतायामपि भयदूयमानमनस्तया मन्त्रयामासतुः ।

---

(१) सनर्म्म ।　　(२) नियोग ।　　(३) शृङ्गं गृहीत्वा ।

(४) पञ्चपञ्च इत्यर्थः ।　　(५) रामकृष्णौ ।

(६) ग्रामान्तमुपशल्यं स्यात् ।　　(७) नन्दयशोदे ।

यदि गोसङ्गावस्थानं विना न स्थातुं पारयतस्तर्हि व्रजसदेशदेशे वत्सानेव तावत्सञ्चारयतामिति ।

तदेतदेव व्रजराजः सहजादिभिर्मन्त्रविद्भिः सह मन्त्रसहतया विचार्य्य तन्त्रविद्भिः पुण्यदिनमवधार्य्य पुण्याहवाचनादिकमपि सञ्चार्य्य ताभ्यां गोवालपालनारम्भमाचारयाम्वभूव ॥

ताभ्यामेव सह महागोपाला महं[१] विधाय मनसि च सुखं निधाय निज-निज-वालान् वत्स-पालान् कलयामासुः ॥

यस्य[२] चादौ जननीजनितेन मज्जनसज्जनेन[३] भोजनभजनेन वसनवसनेन सदलङ्करणधरणेन वेत्र-नेत्र[४]-मुरली-गवलीनां[५] वलनेन च वल-कृष्णौ शोभां लेभाते ।

कृष्णस्त्वानीते उपानहौ नहि नहि कारेण वहिश्चकार । कुलपरम्परागतधनगोधनसमाराधनधर्म्म मर्म्मवाधनं हि त[६]त्प्रसाधनवशाद्भवतीति ॥

---

(१) उत्सवं । (२) वत्सपालनस्य ।
(३) प्रापया । (४) रज्जु ।
(५) गवलं माहिषं स्वल्पत्वादेव गवली वादनार्था च सा शृङ्गा ।
(६) उपानह ।

ततः कृष्णाभावमनुभवता रामेणापि तथानुमतम् । दुष्करगणनानि गोधनानि तु नूनं कृततदवधानानि तदानुकूल्याय प्रखरखरखुरखननखुरलीभिर्मृणमयरेणूनपि पुष्परेणूनिव विधाय कर्कराकण्टकादिकमपि खण्डशस्तथा सन्धाय तदीयचरणप्रचारभूमिं सुखसञ्चारतया कारयामासुः ॥

वसुधा च सुधासेकमेव तदीयचरणसञ्चारणेन मन्वाना वृन्दया सह च योगं तन्वाना तदानुकूल्यावशेषं निरवशेषं चकार ।

यथा च खदिरवनादिकमपि सुखसञ्चाराय सम्यगधिकं भवति ।

यथा च सर्व्वत्र तदीयचरणकिसलया-लयसूक्ष्मरेखालेखानामुदयः सर्व्वमुदयनं(१) भवतीति प्रकृतमनुसरामः ॥

तदेवं महामङ्गलसङ्गततया वत्सचारणोत्सवमनुक्रियमाणे(२) प्रयाणे समुद्गतशोभसमुद्गकविचित्रच्छत्र-चामर-पट्टपटादि(३)नानासामग्री-संग्रहव्यग्रीभूतकरा भुवनशुभङ्करा जितवृन्दारकाः किङ्करदारकास्तावनुसरन्तः किमप्यन्तः सुखमनुबभूवुः ॥

---

(१) आनन्दः । (२) अनुलक्षीक्रियमाणे । (३) उष्णीषादि ।

तत्र च मातरपितरावारभ्य प्रत्यागार-द्वारं सर्व्वाभिरनर्व्वाचीनाभिर्वरवर्णिनीभिर्महाधनैर्निर्मञ्छ्यमानौ दीपायमानमणिभिर्नीराज्यमानौ प्रफुल्लसुरभिप्रसूनैरभिवृष्यमाणौ मङ्गलसङ्गसङ्गतगीतैः सङ्गीयमानौ यथार्हं तदन्तिकवचनकान्तिसन्ततिभिः सन्तोष्यमाणौ पुरस्ताद्विकीर्णविस्तीर्णनयनैर्निवर्ण्यमानौ गुरूनभिवाद्य निरवद्यवाद्यप्रसाद्यमानकौतुकप्रततं प्रतस्थाते ।

यत्र दिव्यगणाश्च तद्वदेव दीव्यन्ति स्म ॥

ततश्च ।—

वेणु-वेत्र-दल-शृङ्ग-वटीभिः(१),
कन्दुक-भ्रमर-दारु-नटीभिः ।
क्रीडिनौ सशिशुगोसुतजाते(२),
नीलपीतवसनौ रुरुचाते(३) ॥

तदनु दूरतः सूरततया(४) पुरतः पश्यद्दृशः पितृतत्सदृशास्ते कांश्चित्प्रौटानूढावधानान् विधाय चार(५)प्रदेशविचारमभिधाय च क्रमत एव व्युत्क्रमतः क्रममाणाः सुकृतिनः कृतिनः पराववृतिरे ॥

---

(१) रज्जुभिः । (२) समूहे । (३) रुचदीप्तौ ।
(४) कृपालुतया । (५) गोचारणा ।

राम-रामानुजादयश्च किञ्चिदञ्चित्वा ।—

विसार्य्य वत्सानावार्य्य परितः शाद्वले स्थले ।
खेलां चक्रुर्मिथो मेलादावेलां[१] भोजनागतेः ॥

यथा ।—

वेणुं वादयतोः फलादि किरतोः शिञ्जन्तुलाकोटिभा-
गङ्घ्रिभ्यां क्षिपतोर्वृषानुकरणैः संयुध्यतोरेतयोः ।
भ्रात्रोर्निर्जयिनोर्मिथो द्रववशा[२]दुच्चैः सखायश्च ते
पार्ष्णिग्राहतया युधं विदधतः कोलाहलं चक्रिरे ॥

ततश्च तौ वत्सांस्तृणैराप्याय्य जलमापाय्य सर्व्वान् विलोकितवन्तौ ॥

श्रीकृष्णस्तु तेषु[३] कस्यचिद्गण्डादिकण्डूति-खण्डनेन वाहुदण्डकृतकण्ठावगुण्ठनेन मातरं मिलितुमिच्छसि ? मेलयिष्यामीति तत्कर्णे मिथः कपोलमेलनपूर्व्वकवृथावर्णनेन च तमुपचर्य्य[४] सुखमुपलब्धवान् ॥

अथ भ्रातरौ सखिभिर्जलाप्लवनकेलिमाचर्य्य वन्यवेषविशेषमप्यासज्ज्य चरणचर्य्यया चरन्ताव-पूर्व्वमृग-पक्षिणः समन्ताल्लक्षयन्तौ वैलक्ष्यमासेदतुः ॥

---

(१) वेलापर्य्यन्तं । भोजनागतेः ।　　(२) स्नेहवशात् ।
(३) वत्सेषु ।　　(४) सुखयित्वा ।

तत्र च ।—

रुत[१]मनु कुरुतस्तौ लीलया यस्य जन्तोः
समुदयति तदीयं जातिमात्रं तदाशु ।
भणितमथ विधत्तस्तद्विरुद्धस्य तस्मिन्
यदिभयमनु तस्माल्लीयते त[२]ज्जवेन ॥

ततश्चाह्नाय मध्याह्नाशनमादाय स्व-स्व-धामतः समागताभिस्तदुचिताभिर्वनिताभिर्जनितानन्दनः श्रीमान्नन्दनन्दनः सखि-वृन्दमानन्दयन् वाणीय-मान[३]वेणुरणितेनाकारणया मंक्षु सङ्कलयामास । सङ्कलितांश्च सखीनेणीदृशः श्रेणीकृत्य चाहृत्य च समुपवेशितान् सुवेशितान् मध्यमध्यासित-श्यामरामान् भोजनकामान् क्रमनिशामनया[४] यामनया[५] जेमयामासुः ।

यत्र नर्म्मणा शर्म्मदानाय किञ्चित्कश्चित् किञ्चि-त्कश्चिद्विशश्लाघे[६] शश्लाघे च ।

यत्र च तैर्विवदमानानां सम्वदमानानां चान्यासां वचनप्रतिवचनश्रवणकौतुकानन्तरं धात्रीगण-

(१) रुशब्दे । (२) जातिमात्रं ।
(३) कथां कथयमान इव । (४) क्रमावलोकनेन ।
(५) परिवेषणेन । यमपरिवेषणे । (६) निनिन्द ।

पात्री[१] काचित्तु दासेर[२] वालकान् प्रति फेला[३] विसर्जनरञ्जनाय पूर्त्तिव्यञ्जनया भोजनवितृष्णाता-मनुचरिष्णुं कृष्णं प्रति सकाकु जगाद ।—

मया यत्नादेतद्द्रवमधुरमारादुपहृतं
जनन्या रामस्य प्रयतनयुजा साधितमिदम् ।
भवन्मात्रा चास्य स्वदनविधये दत्तसपथं[४]
मुहुः सन्दिष्टं तन्निखिलमुपयुंक्ष्व त्रयमपि ॥

तदेवं कौतुकविशेषेण जाते भोजनशेषे रचिता-चमनं तमनन्तगुणकमनं रामदामादिभिः सहितं साहितं[५] सा पुनः कर्पूररसपूरपूर्णखपुर[६] पूरित-सचूर्णस्वर्णवर्णपर्णपुट-दानपुरःसरमेवमवादीत् । लाल्यपाल्यमानमातृ-सन्देशतया वाल्यमपहाय-तूर्णमेव व्रजसदनं पूर्णमाचरणीयम् ॥

अथ किञ्चिद्दूरं गत्वा तस्य तेषां च खेलामेला[७]-भिनिवेशं मत्वा ग्रीवां परावर्त्त्य नर्त्त्यमाननयनतया समर्था[८]स्तत्पालकान् वालकान् प्रत्युवाच ॥—

(१) पालयित्री । (२) दासीपुत्र
(३) फेलाभुक्तोज्झितं । (४) क्रियाविशेषणं ।
(५) हितसहितं । (६) गुवाक ।
(७) मिलनं ।
(८) समर्थस्त्रिषु शक्तिस्थे सम्बद्धार्थे हिते ऽपि च ।

अरे ! रे ! शीघ्रमेवायं प्रानयनीयो व्रजधरणीश-प्रणयिन्याः प्राणस्य प्राण इति ॥

तदेवं गतासु तासु साग्रजः स तु दुष्परिहरवाष्प-च्छेद्य(१) सपुष्पतृणमुखान् वत्सान् व्रजाभि-मुखान् विधाय शनैश्चारयन् गायन्नृत्यन् हसन् क्रीडन् दिविचरैर्ब्राह्मणैर्ब्राह्मणै(२)स्तूयमानः सुम-नोभि(३)श्च सुमनोभिर्वृष्यमाणः स्वगृहाय वर्त्म जगृहे ॥

ततश्च वत्सावासं यावत्साग्रजामित्रव्रजतया यथा-क्रमं विक्रममाण(४)स्तत्र च वत्सान् सङ्कृत्य(५)कृत-कृत्यतया रमभाणस्तल्लावण्यदर्शनेन हर्षमाण(६)स्तत्प्रागेव सर्वैर्व्रजवासिभिरुपव्रज्यमानः प्रातर्वदेव मङ्गलेनासज्जमानः स्वमातरपितरादीन् वन्दमान-स्तेभ्यो लब्धमहानन्दमानः स्वालयं कलयमानः स्नानादिपूर्व्वकं दिव्यमम्वरं वलयमानः(७) शीघ्रमेव भोजनं भजमानः पुनरपि गोदोहभूमिगमनेन सुखं यजमान(८)स्तत्तन्मातृ-नामभिर्वत्सान् ह्वयमानः

---

(१) मुखवायुनाच्छेद्य । (२) वेदविशेषैः । (३) देवैः ।
(४) चरणाभ्यां विहरन् अत्रात्मनेपदं विधातरि ।
(५)मेलयित्वा । (६)हर्षमाणो विकुर्व्वाणः प्रमत्तो हृष्टमानसः ।
(७) परिदधानः । (८) ददानः ।

सम्भ्रमतस्तद्गमनव्यतिक्रमात् प्रहासमयमानः प्रदुग्धानि दुग्धानि च तानि किङ्कर-निकरेण गृहं हारयमाणः पुनरालयमागम्य क्षण-कतिपयं मातरमानन्द्य तामनु विन्दमानश्चन्द्रशालिकां विश्रमायश्रयमाणः सर्व्वेषामतिहर्षं ववर्ष । प्रस्वाप्य च तत्र तत्र साच साच माता परितः परिजनकुमारान् सन्निधाप्य गृहव्यवहाराय बृहद्धाम जगाम ॥

तदेवं दिनकतिपये परमरमणेन गमितसमये स तु नृशंसः कंशनामा यथार्हवर्णाकृतवर्णनतः समाकर्णितवृन्दावनागमनादिवृत्तान्तः स्वान्तश्चिन्तयामास ॥

हन्त ! सत्यतासारेण देव्या वचनानुसारेण नन्द-गोप-डिम्भतादम्भ(१) एव स कोऽपि गोपितः सम्भाव्यते । येन नूतनावयवेनापि दुःसहमहसः पूतनादयः सहसा गाम्भीर्य्यावृत्तेन वीर्य्यातिशयेनालम्भनीयतां(२) लम्भिताः । त्रस्यति च तस्य नामधामवशान्मम हृदयं । तस्मादसौ छलत एवोत्कलनीयः ॥

---

(१) वध्यतां ।　　(२) छल ।

हन्त! छलानप्युत्तरमुत्तरमतिरिक्तं युक्तमेव ते प्रयुक्तवन्तः। तथापि कदर्थितीभूय व्यर्थीभूताः। इति विचार्य्यपुनरपि तं प्रणिधिं[1] सन्निधिं निकाय्यतः[2] समानाय्य पप्रच्छ।

अये! त्वयेदमप्यवकलितं जातौ कस्यां तस्या[3]-दरः स्नेहभरश्च परमः परामृश्यते?।

स उवाच।—

देव! गोवत्सेषु तदुत्सेकः प्रतीयते॥

कंस उवाच।—

सम्यग्गम्यतां निजमेव हर्म्यं॥

पुनश्चान्यमुवाच।—

आकार्य्यतां पुरतः स वत्सासुरः।

सच शचीपतेरपि क्लमनः ससम्भ्रमविक्रमक्रमतया तेनानीय समर्पितः पानीयलववद्द्रवप्रवणा-तावस्थ[4] एव तस्थौ।

तेन च सम्बद्धतामाशंसन् पांशुसङ्कवल्लवधध्वंसः कंसस्तूपांशु[5] तं सुतमिव शशंस॥

---

(१) चरं। (२) गृहात्। (३) कृष्णस्य।

(४) द्रवरूपता प्रवणरूपता चावस्था यस्येत्यर्थः।

(५) रहस्यंपांशुत्वालिङ्ग।

वत्स ? वत्सासुर ! गच्छ नन्दस्य व्रजं ।

गत्वा च वत्सांश्चारयतः कुमारयतस्तत्कुमारस्य सदेशमासाद्य निजं वत्सवेशमुत्पाद्य तस्यापकारमारभस्व ॥

ततः स च यथा ज्ञापयन्ति राज्ञामाज्ञापका इति तद्वचनरचनानुपथात्मा तत्प्रतिशासना(१)दत्रासमेव तत्राजगाम ।

यत्र स्वच्छे वत्सक्रीडननामनि यामुनकच्छे तद्विधमारककर्म्मा व्रजराजजन्मा वत्सान्मानयन्नयनविषयं विषधरमिव तं चकार ॥

अथ मत्सरतस्तत इतः सरतस्तस्य गन्धानुसन्धानतः कृत्स्नान् खट(२)देशमटतः शकृत्करीन् व्यग्रं पश्यतः पश्यन्नग्रजं व्रजराजतनूजनूरहः सव्याजं व्याजहार ॥—

वृहद्भ्रातः ! भ्रातरनायातः परिचीयते वा कोयमुपतोयं प्रतीयते वत्सः ॥

राम उवाच —

भ्रातर्नहि नहि, ॥

---

(१) प्रेषणं यत् समाहूय तत्र स्यात् पतिशासनं ।
(२ तृण ।

कृष्ण उवाच ।—निरूप्यताम् ? ॥

राम उवाच ।—

भीषणप्रकृतिरिव प्रतीयते ॥

कृष्ण उवाच ।—

पूर्व्वज ! पूर्व्वदेवोऽयं ? ॥

राम उवाच ।—

सत्यं; यस्मादस्मासु वत्सेसु चाकस्मादद्दृष्टि[१]-जातदृष्टिरस्य दृश्यते ॥

कृष्ण उवाच ।—

यदि भवदादिष्टं स्यात्तर्ह्येतं दिष्टान्त[२]मासादयामि ॥

राम उवाच ।—

लोकतः कलङ्कतः शङ्के ॥

कृष्ण उवाच ।—

मरणो दित्यपत्यतापरमागत्य प्रत्यक्षीभविष्यत्यस्य । ततः कोऽपिनापवदेत् रामः सहर्षमुवाच ।—

द्विषन्तप ! सच्छलमेतं सच्छलमेव मन्दं मन्दमभ्यवस्कन्द[३] ॥

(१) अदृष्टिःस्यादसौम्येऽक्षिण । (२) मरणं ।

(३) आभिमुख्येन गच्छेत्यर्थः ।

अथ श्रीवत्सवक्षाश्च वत्सानन्यांश्चुचुकारेण सन्निदधानः कण्ठगण्डपिचिण्डादौ कण्डूमुपनयमानः सर्व्वतः क्रीडन् गायन् पर्व्व तन्वन्निवासीत् ।

ततस्तस्यापि लब्धच्छिद्रंमन्यस्य कूट[१]मय्या स्वकण्डूतिविघटनेच्छया निकटमटतस्तदकर्कशमुद्रया सहसा तान् हित्वा तं सपुच्छपादं गृहीत्वा भ्रमयामास ॥

यावच्छः[२] परिवर्त्तनं भ्रमयता वत्सस्य चक्रेऽमुना
तावच्छः[३] प्रतिप[४]त्क्रमान्निरगमद्दूरान्तरं चागमत् ।
क्रीडायाः फलपातनार्थमिव च क्षिप्ते कपित्थोपरि
ज्ञातृत्वं नटवत्कलाश्च पृथुकास्ते तस्य शश्लाघिरे ॥

अथ देवैः प्रसूनानि वृष्टानि हसितानि च ।
न नासया न च दृशा भिन्नतां नेतुमीशिरे ॥

तदनु च परिहासभासमानहासं दिव्यसभासदस्तदिदमवदंश्च ॥

नूनमेतदेव देववैरिवैरिणस्तात्पर्य्यं पर्य्यवस्यति ॥
वयं गां गोपालाः परिचिनुमहे तद्विषमपि
प्रतिच्छन्ने रूपेऽप्यनुमिति[५] निदान[६] व्यतिकरात्[७] ।

---

(१) छल । (२) यावत् । (३) तावत् ।
(४) प्रतिपज्ज्ञप्तिचेतना इत्यमरः ।
(५) अनुमान । (६) कारण (७) आसङ्गात् ।

अतो रे ! रे ! वत्साकृतिसुररिपो ! मद्विधकरा-
त्कथं ते मोक्षः स्यादिह[१]लपसि चेत्प्रेत्य भवतु ॥
इति ॥

तदेवं ।—

तौ वत्सानपि रक्षन्तौ सर्व्वं लोकं ररक्षतुः ।
यदर्थं प्रातराशादि[२] यस्मिन् दैत्यवधादि च ॥

ततश्च तद्दिनेऽपि श्रीकृष्णरामयोः स्वधामसमागमनं पूर्व्ववदेव जातं किन्तु तद्वृत्तमनिष्टमिति तदिष्टगणाः सर्व्व एवावरिष्ट ।

तच्च न जाने किम्वदन्ती किम्वदन्ती स्यादिति[३] सचित्तीभूय । कंसस्तु तस्माद्वत्सपादपि वत्सासुरनिर्वासन[४]मपसर्प[५]मुखाद्विषमिव कर्णरन्ध्रस्पर्शमात्रेणान्तः सम्भूय भृशं दृशौ निमीलयामास ।

तेन दशमीमिव दशां प्रापितः स तु मन्त्रिभिः कथञ्चिद्वहिरवधापितः सार्द्धमेव तैरिदमचारु विचारयामास ।

---

(१) मोक्षे । (२) भोजनादि ।
(३) किम्वदन्ती जनश्रुतिः सैव किम्वदन्ती स्यात् किं वदेत्-इति न जाने ।
(४) मरणं । (५) अपसर्पश्चरस्पशः ।

हन्त सम्भाविता दम्भान्विता बहवः प्रस्थापिता न तु तैर्भद्रं किञ्चिदपि सञ्चितम् ॥

तेषां धीप्सावीप्सा[१] हि न हीप्सां त्रातवती प्रत्युत तानेव प्सातवती[२]। ततः किं कुर्मः ? ।

मन्त्रिण उवाच ।—

देव ! केवलं बकमत्र बलमवलम्बामहे । यतस्तज्ज्ञातावेव दम्भसम्भारा गम्भीरायन्ते ॥

कंस उवाच ।—

आं आं मम सुहृत्तमः स एव केवलस्तत्र प्रस्थापनाय स्थाप्यतामित्यानाय्य तथादिष्टः सदनिष्टः सदुष्टः कंसपुष्टः सम्प्रति वकस्थलनामानं नन्दीश्वरगिरिसमीपधामानमुपसरसं प्रदेशं भाविकृष्णप्रवेशमधिगम्याभिगम्य गिरिशृङ्गभ्रमारम्भं दम्भं दधमान[३]स्तथौ ।

यत्र तुल्यपर्य्यायतया दम्भ एव गह्वरायते[४] स्म ॥

तदा च श्रीगोपालवलिता गोपालवाला गोवालान् पालयन्तः पानीयं पाययन्तः कूलमनुस्थापयन्तः

---

(१) दम्भेच्छा धीप्सा तस्या वीप्सा व्याप्तुमिच्छा ।
(२) भक्षितवती । (३) दधद्धारयन् ।
(४) गुहादम्भौ गह्वरे ।

स्वयमपि पयः-पानमयन्तः परस्परं प्लावयन्तः स्नपयन्तः समुत्थाय च कलापयन्ताश्चिक्रीडुः ॥

कलापयन्तश्च[१] पुष्पाहरणाय परतः प्रचारमाचेरुः। त[२]माचरन्तश्च तं वकमीक्षामासुरुत्प्रेक्षामासुश्च ।

अहो ! गिरिरयं दूरत एव कुतः पुरस्तस्य शृङ्गं ।

ततः सद्य एवादः शतमन्युना मन्युना शतकोटि-त्रोटित[३]मिति घटते ॥

पुनर्निचार्य्य[४] च प्रोचुः ।—

नेदं गिरि-शृङ्गं सङ्गच्छते ।

किन्तु जन्तुविशेषः सोऽयं मन्तुमिव चिकीर्षन्न-मितशीर्षं वर्त्तते ।

यत उग्रंपश्यतया खरताचञ्चुचुञ्चुतया च वक इव परामृश्यते ॥

श्रीकृष्ण उवाच ।—

आकारात्पक्षितुल्यः स्याद्व्यापारान्न च पक्षिवत् ।
वकः किं नवकः साक्षात् कूटवत् स्थितिरीक्ष्यते ॥

अत्र[५] तत्र जिगमिषन्नेव समिषश्लिष्टता विशिष्टं[६] कूटशब्दं पठितवान् ॥

---

(१) भूषयन्तः । (२ प्रचारं । (३) त्रोटिविख्यात ।
(४) बिचार्य्य । (५) वचने । (६) सव्याजश्लेषयुक्तं ।

अथ समुद्दण्डदण्डवरण्ड[1]सखि-मण्डलमण्डितः पुण्डरीकलोचनस्तं जानन्नप्यजानन्निव तस्य तुण्ड-सन्निधिमेव गमने ऽवधिश्चकार ।

स्पर्शविषविषधरविशेषकुमारः कौतुकातिरेकवशा-द्धेकस्येव ॥

ततश्च गण्डूपदं[2] मन्यमानः स च मण्डूक इव कुण्डलियोगण्डं[3] तं निजगार ॥—

न तु किञ्चित् कुञ्चयितुमपि शशाक ।

किन्तु हन्त ! हन्त ! स्फूर्तिं प्रति सन्तमस[4] धर्म्मणा तेन कर्म्मणा श्रीराम-दामादीन् प्राणैर्वि-कलितां कलयामास ॥

स्व-भ्रातृवीर्यं जनुषा विदन्नपि
प्रलम्बकारिर्वकचेष्टितार्द्दितः ।
भैष्मीकृते तस्य गतौ यथैव स
प्रेमा हि सर्व्वंगिलभावमृच्छति ॥

अथ वकः स्वककण्ठावटे[5] कृपीटयोनिवत्[6] प्रकटतेजस्कं तं झटित्युज्जगार ।

---

(१) समूह ।　　(२) केँचुया इति ख्यातं ।
(३) वालं ।　　(४) विष्वक् सन्तमसं तमः ।
(५) गर्त्ते ।　　(६) अग्निवत् ।

ततश्च सोऽयं मम हृदयमभ्राक्षीदिति विभाव्य पुनस्तन्निगरणायोगं नाद्राक्षीत् किन्तु ततः पराङ्-मुखः स पुनर्वक इव मूर्खः सुर-शात्रववकस्तेजो-मात्रगात्रतयावगतमपि तं त्रोटि-कोटिभ्यां त्रोट-यितुमुदयुंक्त ॥

स तु शौटीर्य्यकोटीश्वरस्तत्त्रोटीकराभ्यां विघट-यंस्तं सपाटवं पाटयामास भीमो जरासन्धमिव वालो वीरणमिव वा ॥

यदा मुरारिं निजगार कह्न[1]-
स्तदा सखायः सवला मुमूर्च्छुः ।
उद्गीर्णवान् यर्हि तदान्वचेतन्
स्वभावजं प्रेम परानपेक्षि ॥

यत्र वृन्दारका दारकाश्च मुमुदिरे ॥

यथा ।—

वकासुरे वत्समुरारिघातिना
हते सुरा नर्त्तन-वाद्यवर्त्तनाः ।
ते नन्दनादप्यतिसेतुतां[2] गता
मल्ल्याद्यमुल्लूय मुदा वरीवृषुः ॥

---

(१) वकः । (२) मर्य्यादतां ।

श्रीकृष्णाभिप्रायमुत्प्रेक्षमाणाः साद्भुतं प्रेक्ष-
माणा वकमुपजहसुश्च ॥

यथा ।—

प्रसारयंस्त्वं ग्रसनाय चञ्चुं
साहायकं तत्र मयाप्यकारि ।
विदीर्णमासीद्यदि सर्वमङ्गं
ममास्ति दोषः क नु मूढ ! कङ्क ! ॥ इति ॥

तत्र च ।—

यस्मिन् वकास्यादुदितेऽपि तेऽर्भका
जिजीवुरस्मिन् मिलिते वकान्तके ।
तेष्वश्रु-कम्प-स्वरभङ्ग-सङ्गतं
वैवर्ण्यमृच्छेत् किमु वर्णनीयताम् ॥

अथ सर्वे समयव्यग्रतया शीघ्रमेव तस्मिन्
सरसि मिलित्वा स्नात्वा तं प्रदेशं हित्वा कृष्णं-
गृहीत्वा गृहाय प्रतस्थिरे ॥

कृतगृहागमना व्रजवालका-
स्तदखिलं खलु वृत्तमवर्णयन् ।
वकखगस्य तथाकृतिता तथा
शिशुकृता मृतिरेवमभूदिति ॥

———

तद्वार्त्तायुगलेन गोकुलभुवां दग्धश्च सिक्तं च य-
त्प्रत्यङ्गं तदिदं लयाय भवितेत्येवं जनैः शङ्कितम् ।
पश्चात् प्रत्युत रोमहर्षमदधाद्यत्तु युक्तं परा
वार्त्ता तत्र वरामृतादपि परा तैरेव मास्वाद्यत ॥

ततश्च ते सर्व्वे समुद्विग्नमुदिताः समुदिता[(१)] वित्रासानन्दनिस्पदं[(२)] श्रीमन्नन्द-मन्दिरजनवृन्द-मनुविन्दमानाः श्रीगोविन्द-वदनारविन्दमस्र-सन्दिताः[(३)] सुन्दरीहृदय परामृश्य च वकान्ताना-मशान्तानां मरणे कारणं परस्परमूचुः ॥

अस्य वालस्य किं पूर्व्वं किमपूर्व्वं[(४)] व्रजेशितुः ।
किमर्थं वा पूर्व्वमागस्ते चक्रुस्ते हता यतः ॥

तदेवं प्रपञ्चे ऽवतीर्णानामपि श्रीमन्नन्दादीनां तद्दर्शनानन्दाददीनामां प्रपञ्चधर्मेण सङ्कीर्णतां न वर्णयाभासुः ।

ऊचुश्च श्रीवादरायणिचरणाः ॥—

"इति नन्दादयो गोपाः कृष्णराम-कथां मुदा ।
कुर्व्वन्तो रममाणाश्च नाविन्दन् भववेदनां"॥ इति ॥

---

(१) मिलिताः । (२) स्तब्धं ।
(३) युक्ताः । (४) पुण्यं ।

तदेतद्वकनिर्ग्रन्थन[१]मुग्रमुग्रसेन-दुष्पुत्रः श्रोत्रेणा-पीय व्यग्रचेता वभूव भावयामास च ।—

हन्त ! सर्व्वे एव मायातिरिक्तता-प्रयोक्तारस्तत्र रिक्तीकृताः ।

सर्व्वे लुम्पन्तस्ते चुलुम्प्या[२]मासिरे च ।

तर्हि व्योमाभिधानदानवमात्रमत्रपात्रं पश्यामः ।

सर्व्वमायामयमय-तनयः प्रख्यातवलवलयः स हि महीयान् । इति पद्मावती-जरठ[३]जठरजन्मा सन्माननया तमानाय्य तत्कार्य्याय पर्य्यापयामास ॥

स चागम्य व्योमनामा कृतव्योमा[४]वलम्वतया न्यक्षेण[५] वीक्षमाणः काम्यकारण्यधरणीधर-सन्निधानतः सममत्यर्भकवृन्देनात्यर्भकतया निर्व्वीडक्रीडासन्दर्भे श्रीयशोदा-गर्भजातं श्रीरोहिण्यर्भकं विना समायातं ददर्श विममर्श च ॥

एते खलु भो ! दास्याः[६] पुत्र ! चौरस्य कुल ! पश्यतो हर ! देवानां प्रियेति परस्परं सम्बोधयन्तः क्रीडन्ति । ते चैते मेषतत्पोषकतन्मोषकायमाणा रममाणा

---

(१) निर्हिंसनं ।

(२) छेदने चुलुम्पधातुः सौत्रः छिन्दन्तस्ते छिन्ना इत्यर्थः ।

(३) कठिन ।　　(४) आकाश ।

(५) न्यक्षं कात्स्न्यं निकृष्टयोः । (६) निन्दायामेते अलुक् समासाः ।

लक्ष्लन्ते। यत्र च मेषा मोष्षमाणा अपि न भाषन्ते। पोषकाश्च तैषां वहलानां[१] सम्भालनाय दुर्ब्बलायन्ते। मोषकास्तु निर्घोषतया प्रच्छन्नमेवागच्छन्ति। अयं तु तत्पोषकायमाणः श्यामधामा कुमारः प्रभाकर-सहस्रप्रभावभावितत्तया नास्मद्विधसन्निधेय सन्निधानस्तर्क्यते। तथाप्यस्माकमयमेवावसरो वरो नावरो वरणीयतामनुसरति। अत्र हि तस्य निरवधानस्य वहिश्चरप्राणतुलां वलमाना वालका विनैवार्त्तिं[२] हर्त्तव्या भवेयुः॥

ततो व्यग्रीभूतः सोऽयमग्रीय[३]श्च विना विग्रहं ग्रहीतव्यतामृच्छेत्। सामि[४]कृतं तु न स्वामिने[५] रोचिष्यते॥

तदेतद्विचारयंश्चोरवदाचारगोप-दारकप्रकारस्तदीय निविडक्रीडायां प्रविवेश। प्रविश्य च निविडकाननकृतप्रवेशतया पोषकाभिनिवेशमतिक्रामतस्तान्मेषायमाणान् क्रमशश्चतुःपञ्चावशेषमपक्रमयामास। अपक्रम्यापक्रम्य च गिरिगुहायां निगूहयमानः

---

(१) मिलितानां। (२) अनायासेन इत्यर्थः।
(३) श्रेष्ठः। (४) अर्द्धं। (५) कंसाय।

पुनः पुनरयमानः पेशस्कारि[१]तानुसारी प्रस्तरास्तरणात[२]स्तद्द्वारमाववार ॥

एतज्ज्ञात्वा निर्जरारिप्रहारी शिष्टान् कष्टं तं हरन्तं कुमारान् व्यग्रीभूतः सिंहवद्ग्रामसिंहं विद्रुत्याराद्ग्रहीन्न्यग्रहीच्च ॥

स्वाङ्गव्यङ्गा[३]त्स्पष्टभूयिष्टमानं
कृष्ट्वा डिम्भांस्तं ततः क्षौणिपृष्ठे ।
आपात्याथ प्राणवर्त्मानिरुन्धन्
व्यग्रीकृत्यालभ्य[४] कल्पं चकार ॥

तदेवं संहतसंहनन[५]मप्येतं निःसन्धिवन्धनं विसृज्य तत्पदपद्धतिं संसृज्य तद्गुप्ति[६]द्वारमनुससार ॥

ततश्च ॥

सद्यो निर्भिद्यापिधानं गुहाया-
स्तत्राविश्य द्योतमाविश्चकार ।
तस्या[७] स्तेषां चार्भकाणां समन्ता-
दात्मालाभाद्यत्तम[८]स्तज्जहार ॥

---

(१) कीटभेदः ।　　(२) आच्छादनतः ।
(३) व्यञ्जनात् ।　　(४) यज्ञघात्य ।　　(५) दृढदेह ।
(६) गुप्तिः कारा च रक्षा च जीर्यं च विवरं भुव इति शाश्वतः ।
(७) गुहायाः ।　　(८) तमोऽत्र दुःखं तिमिरञ्च ।

येषां दुःखं तद्गुहागर्त्तरोधे
तद्वन्नासीद्यद्वदेतद्वियोगे ।
दृष्ट्वा कस्मादेनमेते वकारिं
प्राणान् प्रान्ताकर्षणेनैव जग्मुः[१] ॥
सर्व्वे तस्मादुत्थिता रोदनार्त्ता-
स्तद्वद्वार्तं[२] कृष्णमह्नाय चक्रुः ।
सोऽपि क्ष्माभृत्तत्प्रतिध्वानदम्भात्
क्रन्दन्नासीदित्यमीभिर्व्यभावि ॥
तस्मात् कृष्टास्तेन तं[३] वेष्टयन्तः
शश्वत्तस्य स्पृष्टितो नष्टदुःखाः ।
दृष्ट्वा द्विष्टप्राण[४]मत्यन्तभीष्मं[५]
व्योमं हृष्टा मित्र-गोष्ठीमुपेयुः ॥
अथ परिमिलितैर्विचित्रमित्रै-
र्भुवि दिवि देवगणै स्तदोपलम्भ्यः[६] ।
अपहृतिचरितं निजं क्रमात्तैः
कथितमसौ कलयन् व्रजे विवेश ॥

अत्र व्योमं दिष्टान्तदष्टं दृष्ट्वा कुसुमवृष्टिकृद्धि-दानव-द्वेष्टृभिरयं श्रीकृष्णाभिप्रायः स्पष्टं परामृष्टः ॥

---

(१) प्रापुः । (२) रोदनार्त्तबद्धार्त्ता यस्य तादृशं ।
(३) कृष्णेन । कृष्णं । (४) मृतं । (५) भयानकं । (६) स्तुत्यः ।

क्रीडायामत्र चोराणां श्वास-रोधो विधीयते ।
व्योमस्त्वं व्योमतां प्राप्तस्तस्माच्चेत् करवाणि किम् ॥
इति ॥

अथ कथकः कथासमापनमुवाच ।—
ईदृक् कौतुकवान् पुत्रस्तव गोपनराधिप ! ।
वत्सादित्रयमानिन्ये लीलया यस्तु पञ्चताम् ॥

तदेवममी साक्षादिव व्योम-वधमनुभूय भूयसा सुखेन विलसन्मुखेन ललिता गृहाय चलिता बभूवुः ॥

इति श्रीगोपालचम्पूमनु वत्सासुराद्युत्-
सादनं नाम दशमं पूरणम् ॥

———

# एकादशं पूरणम्।

अथ पूर्व्ववत् प्रभाततः प्रभातायां सभायां मधुकण्ठः सोत्कण्ठमुवाच ।—

तदेवं पूर्व्ववदेव देवन[१]कुतुकतः पूर्व्वदेवमारयोः कुमारयोरनयोः कौमारमतिवृत्तकल्प[२]मासीत् ॥

यौ खलु ।—

शुभ्रश्यामरुची रुची[३]मकुरुतां पौगण्डलक्ष्मी-कृते
चापल्येन मुनेरपि स्म कुरुतश्चित्तं मिलच्चापलम् ।
नाना क्रीडित-माधुरीवरकलाशिक्षा-कलापं गतौ
वेणूद्गान-सुधां सुधांशुवदनावातत्य चिक्रीडतुः ॥

अथ कदाचिदतिप्रातरग्रतो जाग्रतो निजविहारतो जगदेवपातुः श्रीरामभ्रातुर्य्यादृच्छिकीयमिच्छा जाता, प्रातर्भोजनमप्यद्य निर्जनवन एव योजनीयमिति ॥

ततश्च कृतप्रातःक्रियस्तत्प्रार्थनाय रचितमातृप्रियस्तदनुज्ञया गच्छन् शृङ्गरव-संज्ञया साग्रजं सखिव्रजं जागरयामास। झटिति चाटित्वा शृङ्गाटक[४]

(१) क्रीडन। (२) ईषत् समाप्तिः।
(३) अभिलाषं। (४) शृङ्गाटकं चतुष्पथे।

मध्यमध्यास्य क्षणकतिपयं तत्प्रतीक्षणं[1] प्रतीक्षणं[2] व्यापारयामास । शय्योत्थायं[3] विद्रुत्य-मिलितेषु सवयः-समवायेषु राममागमयितुमूर्द्ध्वं वर्त्तमानस्तन्मानवेन वार्त्तानुवर्त्तयामास ॥

यथा च प्रोवाच तद्वाचिकमसौ ।—

हन्तभोः ! कृष्ण ! त्वया सह क्रीडातृष्णागप्यहं विरुद्धविधिना निरुद्ध एवास्मि । यदकस्मात् कस्मादपि पूरुकुलजन्मा मन्मातुलः परमातुल निर्वन्धान्मामवलोकयितुमागम्य हर्म्ये एव स्थावर-साधर्म्यमासादितवानस्ति ॥

अद्य च तवातीव प्रातरात्तजागरतया समोहित विशेषमूहितवानस्मि । तस्माद्भवता या लीला भावयितुं[4] भाविता[5]सावश्यं भावयितव्या[6] । नव्यारम्भे विष्कम्भः[7] खल्वप्रतिवद्धसिद्धिसम्भावनां स्तम्भयतीति ॥

अथ वर्ण्यमानं तदाकर्ण्य स च कमलसवर्णता-विलसदाकर्णलोचनः प्रतिपन्न[8]क्रीडारोचनः सखीनुवाच ।—

---

(१) प्रतीक्षां ।　(२) प्रतिर्दक्षणं ।　(३) त्वरायां णमुल् ।
(४) जनयितुं ।　(५) चिन्तिता ।　(६) जनयितव्या ।
(७) प्रतिबन्धः ।　(८) अङ्गीकृत ।

भवतु भवन्त एव स्व-स्व-भवनाद्विहङ्गिकायां[१] काच[२]मायोज्य भोज्यभक्त[३]भक्त[४]नियोज्यजनं प्रयोज्य तत्तदुपयोज्य[५]मानाय्य वनाय गमनाय त्वरयन्तु । अस्मज्जननी च भव्यानां भाजनभृत-भोजनद्रव्याणां द्रुतमेव सज्जन-वर्गेणाऽस्मभ्यं विसर्जनमर्जयिष्यति ॥

इति निजेहिते तथा विहिते हितेप्सुवालक-समुदाय-मुदामुदारचेष्टः[६] पुरस्कृतवत्स-चयेष्टः काननं प्रविष्टवान् । यत्र च वत्सपालवालकाः प्रतिघस्रं[७]सहस्रश एव तेन मिश्रतया विश्रूयन्ते । तेषां वत्साश्चायुतप्रयुत[८]नियुतादि[९] सङ्ख्यायुता वर्ण्यन्ते । कृष्ण-वत्सानां सङ्ख्या पुनरसङ्ख्य-संज्ञा सङ्गीयते ॥

ततश्च ॥

आपूर्णशृङ्गमुरलीनियुतं सवत्स
यूथायुतारवमुदीरितहूतिमिश्रम् ।
कृष्णश्चलन्नथ वनाय वलस्य चित्तं
लोलं चकार जगता सह कौतुकाय ॥

---

(१) विहङ्गिका भारयष्टिः । (२) शिक्यं । (३) अन्न ।
(४) प्रपञ्च । (५) भोज्यं । (६) आनन्दानां दातृचेष्टः ।
(७) दिनं । (८) लक्ष । (९) दशलक्ष ।

अथ गहनं गाहमाना मणि-जातरूपा[(१)]भ्यां सुष्ठु जातरूपा अपि वालाः फल-प्रवालादिभिरलंकृतमात्मानं कृतवन्तः। यथा निकाय्ये[(२)]दुर्य्याघ[(३)] काच-गुञ्जा-पुञ्जमप्युपयुञ्जते स्म नहि विलास-वहुलताकुलानामिदं वहुमूल्यमिदं न तत्तुल्यमिति विचारः सञ्चरति ॥

कार्प्पण्यमेव खलु पण्यं[(४)] गण्यतां नयति
विलासिता पुनर्द्दश्यतामेव परामृश्य हृष्यतीति ॥

अथ ते शिक्यितान्न-पात्राणि वृक्ष-शाखास्ववलम्वितगात्राणि विधाय कृष्ण-भ्रूभङ्ग-तरङ्गसङ्गतरङ्गतया चापल्यविशेषं श्लेषयामासुः ॥

तत्र चौर्य्यादिकं यथा।—

यष्ट्यादेर्नर्मणासन्नपहरणकरा ये हृतस्वास्तथा ये
दूरे ये क्षेपका ये प्रतिहरणकृतस्ते च ते चाशु सर्व्वे।
श्रीकृष्ण-भ्रूविधूतिप्रतिलवलघुताशालितत्तद्विलासैः
प्रत्येकं स्वीययोग्यं निगमनमविदुस्तत्र नैवान्यदन्यत् ॥

तदेवमेव संयोगाद्यथा तदेकसुखयोग एव तेषां भोगस्तद्वदयोगादपि ॥

---

(१) सुवर्ण। (२) शरीरे। (३) दुर्लभ।
(४) मुल्यं।

यथा ॥

"यदि दूरं गतः कृष्णो वन-शोभेक्षणाय तं ।
अहं पूर्व्वमहं पूर्व्वमिति संस्पृश्य रेमिरे ॥

अस्य चार्थः समस्य[1] दश्र्यते तत्र स्पर्शनं यथा ।—

वत्सेभ्यः प्रेष्य सर्व्वां सखि-ततिमघजि-
वीक्षितुं वन्य-लक्ष्मीं
दूरेऽगात् कृष्टदृष्टिः क्रमश इह तदा
सा[2] निवृत्ता विदूरात् ।
सौरभ्याघ्राणनेत्रा मधुप-कुलतुला
सङ्घशस्तं द्रवन्ती
स्पृष्ट्वाहंपूर्व्विकायामहमहमिकया
पृच्छती चाननन्द ॥

रमणं यथा ।—

मिथोऽपि स्निग्धभावानां कृष्णकौतुकदत्तये ।
आहो पुरुषिका तेषामालोकि स्पर्द्धिनामिव ॥
जगुरेके वेणुना तत् प्रच्छादनपराः परे ।
वादयन्तो विषाणानि हासयामासुरच्युतम् ॥
व्यञ्जयन्तस्तत्र केचित् पूर्व्वेषां ग्राम्यरीतिताम् ।
तान्निवार्य्य स्वयं भृङ्गैर्जगुस्तद्वत् पिकैःपरे ॥

---

(१) संक्षिप्य । (२) सखिततिः ।

गोपालानां जवः श्लाघ्यो गानाद्यं भिक्षुतापरम् ।
इत्थं केचिद्व्यञ्जयन्तः पत्ति-च्छायेन दुद्रुवुः ॥
केऽपि सर्व्वानुकर्तृत्वस्वगुणाधिक्य-सूचकाः ।
हंस-कङ्क-मयूराणां गोष्ठी-मध्यं प्रपेदिरे ॥
केचिद्वांशनटीं विद्यामात्मनो व्यञ्जितुं मुदा ।
विडम्बितैः कीश-डिम्भैः सह शाखासु वभ्रमुः ॥
तत्र सर्व्व-कनिष्ठास्तु स्व-मिष्ठामात्रतत्पराः ।
साकं भेकैर्विलङ्घन्तः सरितः स्त्रवसम्प्लुताः ॥
विहसन्तः प्रतिच्छायां शपन्तश्च प्रतिस्वनान् ।
हसन्तः कृष्ण-सन्तोषं लसन्तः सन्ततं दधुः ॥
कर्त्तुं प्रतिध्वनौ शापं प्रतिविम्वे विडम्वनम् ।
नुदन् वालान् मुदं लेभे प्रतिशापादितो हरिः॥इति॥

एषा गतिर्मायिक-दृग्विमोहनी
ज्ञातात्मनां भक्तिमतां च दूरगा ।
या सादिता(१) कृष्णमनुव्रजार्भकै-
रिति स्फुटं श्रीशुकदेव-निश्चितिः ॥

तदेवं लीलामन्यामपि तितंसति(२) कंसद्विषि दीव्यत्सु च सर्व्वकलाविद्वत्सु विसरज्जालेषु(३)

---

(१) प्रापिता ।　　(२) विस्तारयितुमिच्छति सति ।
(३) विस्तीर्णीभवत्सुहृत्सु ।

वत्सपालेषु वकी-वकयोरनुजः कश्चिदघनामादनुजस्तद्वर्त्म निवर्त्तते स्म। ज्योतिर्मण्डलेषु प्रचण्डकालजलद इव यं खलु कंसः शशंस ॥—

अये! मदीयमहासहाय! विस्मयमपहाय श्रूयतां? त्वमजगरभावेन सदा जागररहित एव शाशय्यमानतानिष्ठं तिष्ठन्न जानासीति हि त्वं जागरयामासिषे ॥

अघ उवाच।—

जगदीश! काममादिश्यताम्?।

अथ देवकीविवाहगताहनभःसभ्य-वाणीमारभ्य सर्व्वकथाशंसनपूर्व्वकं ॥

कंस उवाच।—

तदेवं प्रत्येकं नूतननूतनारब्धमिष[1] विषमयपूतनादिषु धूतफलप्रयासालिषु सर्व्वङ्किललीलतया भवानद्यानवद्यागतिः। इह च रावणस्य कुम्भेत्यर्द्धोक्तमशकुनभियाच्छाद्य पूर्व्वेषां पूर्व्वदेवानां वृत्र इवेत्यपि प्रत्याख्यायेदमाख्यत्। ध्रुवं[2] ध्रुवस्येव तव चात्र भ्रात्रमित्र-निर्य्यातन[3]-मवश्यवश्यतामर्हतीति ॥

---

(१) छल। (२) निश्चितं। (३) वैरप्रतीकारं।

तदेवं भव्य[१] प्रसव्य[२] मप्युपलभ्य स्फुटमसभ्यतया शीघ्रमसौ वक-भ्रातृकः[३] कृष्णाभ्रातृकाणां तेषां पुरतः प्रचरन् प्रचुरतराङ्गमुरङ्गमरूपमास्थायस्थितः । किं त्वथासौ तथासीद्यथात्मपथाऽधिकृतप्रथाचलतया प्रथयामासे नर्मणानागधर्मतामुपदिशद्भिरमीभिः ॥

ऊचे च ।

उद्यद्भरतया जाग्रद्वर्त्मन्यजगरः पुरः ।
समग्रं ग्रसिता तस्मादस्मान् यदि वकिष्यति[४] ॥

तदेतदभिधाय श्रीकृष्ण-मुखकमलं निध्याय वाढं करताडनाल्लसन्तो हसन्तो महागिरि-गुहान्तर्वत्तद्वक्त्रान्तरं प्रविविशुः । ज्योतिर्वलयः पश्चिमाचलमिव । यतो मयूख[५] वत्समग्रा[६]वत्साश्च तद्वर्त्मायच्छन्ति स्म[७] । यत्र निषिषित्स[८]न्नपि श्रीवत्सलक्ष्मा नावसरमवाप । किन्तु भाविनिज लीलानिश्चलतया विस्मयमाप । पश्चात्तापमाप[९]दप्यसौ येन[१०] हि तेषां वर्त्माप्यनुवर्त्तमानस्तत्र प्रविवेश ॥

---

(१) मङ्गल । (२) प्रतिकूल । (३) निन्दायां कन् ।
(४) वकवदाचरिष्यति । (५) किरण । (६) समस्ताः ।
(७) जगृहुः । (८) निषेद्धुमिच्छन् ।
(९) आप । (१०) तापेन ।

नीहारकुज्झटिकाघटिततमश्चक्रवाले[१] प्रचण्ड-मार्त्तण्डमण्डलमिव। यत्र मुरारिप्रभावा चतुराः सुराः सुरारयश्च मुहुरारा[२]दारा[३]दपि हन्त![४] हन्तकारं चक्रुः। यत्र च तेषामुभयेषां तत्तद्वर्णतः[५] समानमाननकुलयुगलं[६] तत्तद्वर्णतः[७] क्रमाद्द्वयं विजयमुद्रावयामास॥

वक-चेष्टामनुतिष्ठतस्तस्य तु पापिष्ठस्य कण्ठे सोऽयमकुण्ठधामा कृष्णनामा व्रजनृपतपः प्रताप-मययोगमाया-सहायतया केशिप्रवेशिस्व-भुजदिव्य भुजङ्गमवद्ववृधे। स तु जातश्वासरोधः परित्यक्त-बोधश्च क्षणकतिपयमासीत्॥

तदूर्द्धं पाटितमूर्द्धानं प्राणमपहाय पूतनाशमयितुः सङ्गतः पूतः पूतनाभ्रातुरात्मा नित्यनूतनां सङ्गति-मवाप्तुमस्य वहिरागमनं प्रतीक्षते स्म॥

स श्रीवत्सवत्सस्तु तमन्तर्हृत्य[८] वत्सवत्सपान् मूर्च्छितानमृतवृष्टिमयदृष्टिप्रचारेण सञ्चरित चेत-

---

(१) चक्रवालं तु मण्डलं। (२) दूरात्।
(३) निकटात्।
(४) हन्त हर्षे ऽनुकम्पायां वाक्यारम्भविषादयोः।
(५) हन्त हन्तेति वर्णद्वयतः। (६) कर्त्तृ।
(७) मालिन्यौज्ज्वल्यतः। (८) अन्तरे निहत्य इत्यर्थः।

नानाचरन्नमीभिः समं गमभवर्त्मना तस्मान्नि-र्जगाम स्वर्भानु[1]-मुखादमृतभानु[2]रिव ॥

ततश्च हिमाचलाद्गाङ्गप्रवाहाणामिव तेषां प्रवहे[3] जाते तस्यात्मज्योतिरजितस्याङ्गसङ्गान्निःसज्जति तेजसि निमज्जदेव जगज्जनेन ददृशे चण्डज्योति-र्ज्योतिषि ज्योति[4]रिव । यत्र ब्रह्मपुरःसराः सुराः सुरवर्त्मनि पुरतः स्थिताः सुरतरु-पुष्पस्तवकवृष्टिभिः स्तवकृतसंस्तव[5]तौर्य्यत्रिकादिप्रस्तावसृष्टिभिस्तव-व्रजराज ! तनूजं पूजयामासुरुपजहसुरप्यघा-सुरम् ॥

मम स्पर्श-मात्राद्भवज्ज्ञाति मात्रं-
विनश्यत्यकस्मात्तमस्तेजसो वा[6] ।
इदं ज्ञातवानप्यघाख्यासुर ! त्वं
कथं मामयासीरितीवाह कृष्णः ॥

अथवा ॥

सर्व्वांस्त्वं खर्व्वकोटीः पशु-पशुप-शिशून्
ग्रस्तवान्मां तथापि

---

(१) राहु ।　　　(२) चन्द्रः ।
(३) प्रवहो निर्गमो वहिः ।　　　(४) नक्षत्रं ।
(५) संस्तवः स्यात् परिचयः ।　　　(६) इव ।

ग्रस्तं निर्मातुमैषीरिति सुखदतया-
प्रापमन्तस्त्वदीयम् ।
सङ्कोचाद्गन्तुमिच्छन् वहिरथ भुजग !
प्राणवर्गस्तवाद्धा-
मन्निर्वद्धोऽपि मूर्द्धस्पुटनकृतितया
श्निग्गतः किं विदध्यां[१] ॥

इत्येवं ॥

ततश्च तस्मात् कलितगणतया तरुनिचयादाचितकाचित[२]दिव्यदीदिवि[३]तया चातिचपलं चलितस्य तस्य काचनातिदूरा भूरायतवनकलापविमलापसरोवरान्तरतया वराप्यवरतामाससाद[४]।

या[५]मुपसद्य च सद्यः सुखविकसितमुखपङ्कजः पङ्कजलोचनः स्वं रोचनं[६] वचनगोचरमाचचार ॥

यथा ॥—

भास्वन्महो योगविकासहृद्गत
प्रभाम्वुजातं मधुसूदनप्रभम् ।

---

(१) करवै । (२) शिक्यित । (३) ओदन ।
(४) प्राप । ५ भुवं । (६) रुचिकारकं ।

पश्यन्तु मित्राणि सुजीवनालयं
महन्मनस्तुल्यतरं सरोवरम्(१) ॥
एषा वनाली सरसी तथा मिथो
गुणेन पुष्टा गुणितेन सर्व्वदा ।
आद्या(२) रसेन द्वय(३)पूरणी(४)यतः
प्रसूनसौरभ्यशतेन पुष्पते ॥
स्फुरति पुलिनमच्छं कोमलं वालुकाभिः
कुसुमफलवनक्ष्मा प्रावृतं सूक्ष्मदूर्वम् ।
यदिह मृगजनानां वृक्षलक्षालयाना-
मुपविमलजलान्तं भाति शय्यायमानम् ॥
अत्र भोक्तव्यमस्माभिर्दिवारूढं क्षुधार्द्दिताः ।
वत्साः समीपेऽपः पीत्वा चरन्तु शनकैस्तृणम् ॥
अथ समं भूमिस्थितं(५) संयुज्य भोजनजननार्थं रचितमज्जनेषु कृतमिथः सज्जनेषु तेषु सुहृज्जनेषु प्रथमतस्तावदेवं जातम् ॥

---

(१) सरः पक्षे । भास्वतो यन्महस्तेजस्तेन यो विकाशस्तेन हृद्गता हृद्या प्रभा येषां तादृशानि अम्बुजातानि यत्र तत् । मुधुसूदनैः भ्रमरैः प्रभातीति तत् जीवनं जलं । महन्मनः पक्षे भास्व-त्तेजास्वि यन्महः पर्व तेन यो योगो भक्तियोगस्तेन विकाशस्तेन हृद्गतप्रभमम्बुजातं यस्य तत् मधुसूदनः श्रीभगवान् । प्राणनं । (२) वनाली । (३) द्वितीया । (४) सरसी ।
(५) अव्ययीभावात् समाभूमिर्यस्यां स्थितिक्रियायां ।

कृष्णां मध्ये लब्धवन्तः सखायः
सर्व्वे तत्तद्विस्मरन्तः स्व-दुःखं ।
तत्कान्तीनां सन्ततं पातु[१]कामा-
स्तस्थुर्यद्वत्पूर्णचन्द्रं चकोराः ॥

ततश्च ॥

तत्पालनतृष्णेन कृष्णेन यत्नेन योजितभोजनेषु ससवयोजनेषु काचिदन्या शोभाधन्या तां वन्यां शोभयामास ॥

यथा ॥

अन्तरान्तरमिलद्वलयानां
वल्गुवाल्यवयसामधिमध्यं ।
सर्व्वतोऽभिमुखतां हरिरागा-
ल्लीलया भ्रमदपूर्व्वनटाभः ॥

विभ्रद्वेणुं जठर-पटयोः शृङ्ग-वेत्रे च कक्षे
वामे पाणौ मसृणकवलं व्यञ्जनान्यंगुलीषु ।
तिष्ठन्मध्ये प्रियसवयसां हासयन् हासितस्तै-
र्दिव्ये लोके कलयति मुदा भुक्तवान् वालकृष्णः ॥

तदेवं परमोत्सवरतेषु तेषु वत्साः कच्छदेशादनच्छं[२] तार्णप्रदेशं प्रविश्य प्रच्छन्ना वभूवुः ।

---

(१) पा पाने । (२) कलुषोऽनच्छ आविलः ।

प्रच्छन्नेषु च तेषु विच्छिन्नभोजनरतीर्मित्रततीः स्वस्थयंस्तदवस्थ एव स्वयं नीरन्ध्र[१]वनावनीध्र[२]मध्यमध्यासितानवीध्र[३]दुर्गमार्गान् विचित्य कृत-कृत्यताराहित्यं प्रतीत्य च निवृत्य तत्र च मित्रवर्गान-परिचित्य वैचित्यवशादुभयानपि सभयान् मत्वा विचिकित्सन्[४] विचिकाय[५] काय-क्लेशतः केशवः सोऽयं किन्तया[६]चिन्तयामास च ।

अहो मातॄणां यच्छिशुकुलमसुभ्योऽपि दयितं
स्थितिं वत्सत्वेन प्रसजति तथा वत्सपतया ।
तदेतन्मत्प्राणप्रतिकृति[७] शरीरं क्व नु गतं
यदर्थं दुष्टाहेर्जठरमविशं हा ! विषमयम् ॥

तदेतदगुण[८] गुणगणनिधानस्य तस्य निरव-धानमपि[९] न चित्रमध्यस्यति ।

एष हि प्रेममयलीलावेश-वश्यतामापन्नः कदा-चिदवश्यं पश्यन्नप्यपश्यन्निव भवति । तदा हि सद्य एवेदं प्रत्यपद्यत[१०] ॥

---

(१) निविड । (२) गिरि । (३) अनिर्मल ।
(४) सन्देहं कुर्वन् । (५) अन्विष्येष ।
(६) किमिदमिति । (७) प्रतिमा । (८) अगौण ।
(९) अवधानाभावोऽपि । (१०) ज्ञातवान् ।

अां ब्रह्मणः खल्विदं कर्म्म। मम पुनरेतावन्तं कालं संजङ्घन्यमान[१] सखि-सङ्ग-प्रणायासङ्गवशाच्छादितज्ञानतया न तदनु सन्धानं जातम्।

नच तेन विरोधितयेदमाचरितम्।

किन्तु मयि प्रेमस्थेम[२] संहितस्य[३] तस्य व्रजहितस्य सम्प्रति मद्वैभवं प्रति विशेषवीक्षाप्रतीक्ष्या-जातेत्येवमेवाचरितम्।

यत एव खलु माया-वैभवतस्तदनन्यस्थानस्थितंम्मन्य[४]मेवान्यत्र वन्यभूमावाकृष्य पुनस्तत्रैव पुलिने प्रतिकृष्य तत्तद्वृन्दमनेना[५]गोपायि। ततो न विरोधिबुद्धिरसौ। विरोधिषु मद्बुद्धिवीर्य्ययोर्निद्रागमेऽपि जागरूकताकलिता[६]। ततो वयं भक्ते तस्मिन्नर्म्मकर्म्मठतामेव घटयिष्यामः।

तत्र च प्रायः श्रीमत्पितृचरणाभिप्रायमयतया या मम योगमाया साहायकमायाति, यदितामेव सम्प्रति चावलम्बेय। तदा स्वयमेव तत्तद्रूपतां लभेय नान्यद्भिमद्भितानां तेषां साम्यं भजेदिति॥

---

(१) पुनःपुनर्मिलितीभवत्। (२) स्थिरता।
(३) युक्तस्य। (४) पण्डितम्मन्यवत्।
(५) ब्रह्मणा। (६) प्रापिता ब्रह्मणा इति शेषः।

येन च शतानन्दस्य[१]व्रजानन्दस्य च मन्दता[२] मन्दतां विन्देत ॥

तदेवं चिन्तयन्नेव सह सुहृल्लोकशोकं चिन्तयामास ।—

हन्त ! हन्त ! कथं तान् मां विना तान्तान्[३] विना समयं गमयिष्यामीति ॥

ततश्च ।—

यस्य यस्य च शुचा गुणरूपं
चिन्तयन्नभजत स्वतया[४]-थ ।
तस्य सुष्ठु धुतभेदतया[५]ऽसौ
जज्ञिवान् प्रयतनं व्यतिरिच्य[६] ॥

इति तथानुसन्धाय स्वतस्तत्तद्वाल-वत्सादिरूपाणि सन्धाय सर्व्वसमाधाननिर्वन्धाय दिनान्तरवदेव व्रजागमनदेवनेन गेहं गेहं प्रवेश[७]-मासीनस्तां सन्ध्यामवन्ध्यां चकार ॥

तन्मातरस्तु दिनान्तरादप्यन्तरङ्गतरमानन्दं विन्दन्ति स्म ॥

(१ तन्नामब्राह्मणस्य ।　(२) अल्पता ।
(३) तमुग्लानौ ।　(४) आत्मतया ।
(५) अभेदतया ।　(६) विना ।　(७) प्रविश्य ।

तथाहि ।—

सुते गोपैश्वर्य्या निज-निज-सुतप्रत्यय[1]मुदा
तथा तन्मित्रत्वस्फुरणसुख-लक्ष्म्या द्विगुणितम् ।
पुरावद्वात्सल्यं व्रजपुर-पुरन्ध्री[2]र्विदधती-
स्तदीया[3]संसिद्धिर्यदधिनुत[4]तद्भाति तदिव ॥

यद्यप्येकस्वरूपा व्रज-नृपतिसुतस्यापरे वालवत्सा
जातास्तर्ह्यप्यमी तत्प्रतिम[5]पदमधुस्तत्र नेत्येव युक्तं
तद्रूपं तद्गुणालिस्तदमितविहृतिश्चाश्रयः खल्वमीषां
तस्यापि स्वस्य चित्रस्थितिकृदिति यत-
स्तत्र तत्रा[6]भ्यधायि ॥

तदेवं ह्रानप्रायस्य[7] तस्य हायनस्य पूरणाय-पञ्चषाण्यहानि यदा हीनानि तदा तु कृष्णविषयक स्नेहजातीय[8]स्नेहमनु स्वपरतत्परतायास्तेषु वालादिषु सम्यगवगम्यमानतया रामोऽपि[9] विस्मित्य तेन सह प्रश्नोत्तरे विनिर्मित्य विनिश्चित्य च स्थितवान् ।

(१) प्रतीति । (२) कर्मभूताः । (३) कृष्णस्य स्वभाव ।
(४) अभिगायत् । (५) तत्तुल्य ।
(६) स्वस्यापि विस्मापनमित्यादौ ।
(७) गतप्रायस्य । (८) प्रकार ।
(९) स्वस्य परेषां च या तत्परता तस्याः सम्यगवगम्यमानतया हेतुना रामोऽपि ।

किन्तु तेषां सखीनामखिलानां विप्रलम्भलम्भित-कष्टेन निजानुजे रुष्टतया पञ्चषाण्यहानि तेन सह वनं नाजिघाय । ब्रह्मा तु तत्र गुप्तमागतः श्रीकृष्णेन तर्क्यते स्म ॥

यथा ॥

यस्मादेति परैति पश्यति पुरः पश्चात्तथा पार्श्वतः
स्वात्मानं परितस्तृणो[१]त्यनुपदं
　　　　सम्भ्राम्यति भ्राम्यति ।
लोप्त्रा[२]लोप्त्रसवत्सवत्सप-गणं सन्दिग्धमालोकते
तस्मान्मे प्रतिभात्यसावनुदिशं वक्त्रं दधत्स्तेनकः[३] ॥

अथ ब्रह्मा तेषामर्वाचीनानां प्राचीनानां च वालादीनां रूपादिभिः परस्परभेदमाकलय्य चेतसा-श्चर्यमाचर्य्य चार्वाचः[४] परिविन्दन् सर्वतोऽप्य-दृष्टमहिष्ठता भूयिष्ठान् दृष्टवान् ॥

ब्रह्माणं पश्यति श्रीदामादि-मित्रे[५] तु स्वमित्रा-णामेवानयनेच्छा जातेति यदृच्छया तदन्वेषणा-वस्था प्रादुर्भूता साम्प्रतिकाश्चान्तर्भूताः ॥

(१) आच्छादयति ।
(२) लोप्त्रं चौर्य्यार्ज्जितं धनं ।　　(३) चौरः ।
(४) आधुनिकान् ।　　(५) कृष्णे ।

तदेवं नाना वैभवमनुभवतः कमलभवस्य त्रप-तया[१]नुतप्ततया च या रचितावाचीनता[२] सा स्वयं प्रणामाय परिणमति स्म ॥

तत्र च ।—

एकमेकमधःकृत्वा मुखं तत्र चतर्मुखः ।
नमन्नन्यमुखस्योर्द्ध्वीभावात्पूर्त्तिं जगाम न ॥
यद्यपि न नमन्मुमुदे,विधिरेकास्यानवाग्भावात्[३] ।
तदपि हरेर्मुखचन्द्रा,लोकालोपान्मुदं लेभे ॥

अथापकृष्टम्मन्यः सन्ननन्यगतितया सुमेधा वेधाः स्तवके[४]नेव स्तवके[५]नेष्टवां[६]श्च कृष्णाम् । यत्र च चतुर्भिर्वक्त्रैरानुवान[७] इव नुव[८]न्नसौ सर्व्व-महानपि यत्किञ्चिद्गोकुलानुगतानुगतिमेव प्रति-निजानुमतिमाततान ।

यथा चाह स्म ।—

तद्भूरि भाग्यमिह जन्म किमप्यटव्या
यद्गोकुले ऽपि कतमाङ्घ्रिरजोऽभिषेकम् ।

(१) लज्जिततया । (२) अधोमुखता ।
(३) एकस्य आस्यस्य य अधःकृतत्वाभावस्तस्मात् ।
(४) स्तव एव स्तवकः । (५) गुच्छेन ।
(६) पूजितवान् । (७) उच्चैः शब्दायमानः ।
(८) नुस्तुतौ ।

"यज्जीवितं तु निखिलं भगवान् मुकुन्द-
स्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव ॥ इति ॥

तदेवं व्रजमहिमहिमकर-कर-निकरजडीभूता वयं नोपपत्ति[1] प्रत्यासत्तिं लभामह इत्यलमति विस्तरेण ॥

अथ स्निग्धकण्ठ उवाच ।—

श्रीमद्व्रजयुवराजेन तत्र किमुक्तम् ? ॥

मधुकण्ठः सस्मितमुवाच ।—

न किमपि; किन्तु तत्र स्तुतिसमये तावत् ॥

गोविन्दः स्मितमतनोत् स्तुवानमेनं
दृष्ट्वा यत् किमपि ददर्श तत्र चित्रम् ।
एकस्मिन् वदति चतुर्मुखे हि तस्मिं-
श्चत्वारो[2] दधति रुतीरितिभ्रमः स्यात् ॥

स्तुत्युत्तरकालतस्तु ।—

वयं गोपाश्चार्थवन्तो[3] ब्रह्मा च त्वमनर्थवान् ।
ब्रूमस्त्वां किमितीवायमवदन् स्मितमातनोत् ॥

स्निग्धकण्ठ उवाच ।—

परिसेधत्यपि[4] वेधसि किं किञ्चिदप्युक्तम् ॥

---

(१) युक्ति ।　　(२) जनाः ।　　(३) अर्थवाननपेतोऽर्थात् ।
(४) गच्छत्यपि सेधतेर्गतौ षत्वाभावः ।

मधुकण्ठ उवाच।—

स्तव-पर्य्यवसाने खलु निजरूप[१]रूपतया[२]सर्व्व-पर्य्याप्तिमद्भिरपि पश्चादाविर्भूतवद्भिर्बालादिभिः परितोषपोषममन्यमानः स धन्यः स्वजनप्रेमाजितः श्रीमानजितस्तान् व्रजबालादीनेवानेतुं यदा वाञ्छामानश्च[३] तदाञ्जलिबन्धव्यञ्जितां संज्ञा[४]-मनुसमनुज्ञां याचमानं विरिञ्चिं खल्वेवं लम्भित-तदुपालम्भनर्म्मास्मितमनुज्ञापयामास ॥

यदि तत्र भवतामाज्ञा विज्ञायते तदा तान् पूर्व्व-मेवानुसंहितान्[५] संनिहितानानयामीति ॥

ततश्च विरिञ्चिः किञ्चिन्नम्रनिटिलताघटितमुनि-व्रतसुनिरूपितनिज-दुर्नीतितयानुज्ञायाः कर्म्म-कर्तृत्वं व्यक्तीकुर्व्वन् भक्तिभरासक्तिपृक्तीकृत[६]-पुलकसङ्कुलतया स्वापराधमयबाधाव्याकुलतया च त्रिः परिक्रम्य बहुशः प्रणम्य च निजहर्म्यमेव जगाम ॥

श्रीकृष्णश्च मनसि तस्यापराधं मनागप्यनागम-यन्नागमयमानः प्राग्दिष्ट[७]सदिष्ट[८]देशवेशाङ्किया-

(१) स्वरूप। (२) तद्रूपतया।
(३) प्राप्तवान्। (४) सङ्केतं। (५) अनुसन्धानविषयान्।
(६) मिलित पृक्तसम्पर्के। (७) कथित। (८) काल।

नतिक्रमिक्रमतयावास्थितांस्तान् वत्सांस्तत्सद्दगवस्थै-
र्वत्सपालैर्मेलयामास ॥

तथैव हि तेषां कालदेशविपर्य्ययया पर्य्यालोचनाय द्रुहिणदेवेन स्नेहदेह[1]न्यनवद्यविद्येयमुद्भाविता ॥

एतदेवोक्तम् ।—

"ततोऽनुज्ञाप्य भगवान् स्वभुवं प्रागवस्थितान् ।
वत्सान् पुलिनमानिन्ये यथा पूर्व्वसखं स्वकं" ॥ इति ॥

अथ ते ।—

"ऊचुश्च सुहृदं कृष्णं स्वागतं तेऽतिरंहसा ।
नैकोऽप्यभोजि कवल एहीतः साधु भुज्यतां" ॥ इति ॥

"ततो हसन् हृषीकेशोऽभ्यवहृत्य सहार्भकैः ।
दर्शयंश्चर्माजगरं न्यवर्त्तत वनाद्व्रजम्" ॥

चर्म्म चेदमेतावन्तं समयं यथावदेव योगमायया-
न्तर्धापितमिति गम्यम् ॥

ततश्च सम्वत्सरप्रसर[2] वत्स-वत्सपालवाल-विरहविरहा[3]न्महतानन्देन महितस्तैरेव सहितः संहित[4]सम्पद्व्रजं व्रजं प्रविशन् तत्तदुन्मर्य्याद

---

(१) स्नेहोपचयकर्त्री दिहउपचये ।

(२) सम्वत्सरं व्याप्य प्रसरति ।　　(३) राहित्यात् ।

(४) मिलित ।

वत्सपरावर्त्तनाय निर्द्दिशन् पूर्व्वपूर्व्वतोऽप्यपूर्व्वं-पर्व्व पर्व्वति स्म ॥

तथा ह्युक्तम् ।—

"वर्ह-प्रसून-वनधातु-विचित्रिताङ्गः
प्रोद्दामवेणु-दल-शृङ्गरवोत्सवाढ्यः ।
वत्सान् गृणन्ननुगगीतपवित्रकीर्त्ति-
र्गोपी-दृगुत्सवदृशिः प्रविवेश गोष्ठम्" ॥

ततश्च पितृ-सम्वन्धिभिर्नन्दसूनुरिति मातृ-सम्व-न्धिभिर्यशोदासूनुरिति तस्य नामानूद्य सद्य एव-सिद्धमिति चिरन्तनमपि तच्चरितं जगे ॥

तद्यथा ।—

नन्द-तनूजनुरद्य व्यालम् । हतवान् हृतवानस्म-त्कालं ॥ इति ध्रुवं ॥

अद्य यशोदा-सूनुर्व्यालम् । हतवान् हृतवानस्म-त्कालं ॥ इति वा ॥

ओष्ठाधरमिह(१) जलदतटालिः ।
दन्तावलिरपि दन्तकपालिः ॥
श्वासभरः खरदावजवातः ।
जिह्वायुगमपि वर्त्मनिपातः ॥

(१) व्याले ।

इत्युत्प्रेक्षिततमविविधाङ्गान् ।
व्यतिहासानाचरतः साङ्गान्[1] ॥
अहिमन्वहितां कल्पयमानान् ।
गिरिरिति तं विशतः कृतमानान् ॥
तदुदरमध्यकृतान्वनु वेशान् ।
निजविरहादि[2] विमूर्च्छितवेशान्[3] ॥
स्नेह-भरेण स्वेन समेतान् ।
स्वकनेत्रामृतवृष्टिसचेतान् ॥
तस्माद्बहिरथ निष्कासितवान् ।
पुनरिह निखिलं वत दर्शितवान् ॥
प्राणादधिकः सोऽयं प्राणान् ।
रक्षन्नस्मान् कुरुते त्राणान्[4] ॥

इति श्रुत्वा च ते व्रजस्थाः चिन्तयामासुः । साधु घातुकानां पातुकाना[5]ममीषां कथमिव जातु[6]कामाः सिद्ध्येयुरिति ॥

तदेवं सिद्धे सुखानुविद्धे तेषां समे समागमे प्रातस्तु वृहद्भ्रातरमनुगम्य प्रणयमयरम्यरोषमनुनीय

(१) सकलान् । (२) आदिनाब्रजठरप्रवेशादि ।
(३) तुल्यान् । (४) त्रातान् ।
(५) पतनशीलानां । (६) कदाचित् ।

दीयमानविस्मयतया तानानीयते न चैकत्रप्रणीय श्रीवत्सवत्सः पूर्व्ववदेव वत्सपालनमारेभे ॥

अथ पुनर्मधुकण्ठः समापनाय सविस्मयमिवाह स्म।—

ईदृशस्तनयो जातस्तव गोष्ठाधिनायकः!।
ब्रह्माण्डग्रामणी[1]र्यस्य ब्रह्मापि ग्रामणीरिव ॥

तदेवं कथकयोः कथां प्रथयित्वा सभ्येषु साक्षादिव कलिततत्तत्केलिसन्धयोः[2] कृताञ्जलिबन्धयोस्तद्दिनेऽपि पूर्व्ववदेव सर्व्वे गृहवर्त्मनि वर्त्तमाना निज-निज-स्पृहणीयं कर्म्मनिर्मिमाणा अपि तामेव लीलां बृंहितां जगृहिरे ॥

इति श्रीगोपालचम्पूमन्वघब्रह्माधमोचनं
नाम एकादशं पूरणम् ॥

———

(१) पूज्य। (२) सन्धा प्रतिज्ञा।

# द्वादश पूरणम् ।

अथ परेद्यवि[1] च कथा प्रथते स्म
यथा स्निग्धकण्ठ उवाच ।—

यद्यपि "कालेनाल्पेने"त्यादिरीत्या वर्षत्रय-त्रय-पर्य्ययेण[2] तयोर्वयोगणना निर्णीता तथापि कौमारं तु वर्षमेकमधिकमधिरूढं । बालवत्सानां श्रीवत्सवत्सस्य च मिथो वत्सरविरहमयानुल्लासेन व्यतीतक्षणमयसम्वत्सरकालबालवत्सानुरोधेन वा तस्य[3] स्तब्धीभावात् ॥

ततस्तद्भावानुगामितया रामस्य च तथा वृत्तं सुतरामेव वृत्तम् । तदनन्तरमखण्डं पौगण्डं तु वर्षद्वयेनैवापूर्य्यत । चिराल्लब्धबन्धुसम्वासेन सम्यगुल्लासेन झटिति कैशोरघटनात् ॥

तथा च प्रथां करवाम धेनुकवधावम[4]धामगमनान्ते । तदेवमेव सङ्गच्छते "कालेनाल्पेने"त्यादि ॥

"तावदेवात्मभूरात्ममानेन त्रुट्यनेहसा ।
पुरोवदाब्दं क्रीडन्तं ददृशे सकलं हरिं ॥ इति ॥

---

(१) परे त्वह्नि परेद्यवि ।
(२) पर्य्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ।
(३) कौमारस्य । (४) अनन्तर ।

"ततश्च पौगण्डवयः श्रिता"वित्यादि च ।

अथ प्रकृतमनुसरामः ॥

तदेवं विहरतोः सर्व्वेषां मनोहरतोरनयोः पञ्चमं वर्षमञ्चत् कौमारतः पारभूतं वयः समयाञ्चक्रे ॥

यथा ।—

ऐषमो(१) भवदसौ परु(२)त्परा-
र्य्ये(३)वमादिनिखिलैर्य्यदागणि ।
हन्त ! तर्हि सहसा वकान्तकः
प्राप्तकान्ति विजहौ कुमारतां ॥

उदकु(४)द्दुद्धिशक्तिप्रथमरुचिजयि
श्यामता-शुभ्रतायुक्
किञ्चिद्विस्तीर्णवक्षःप्रभृति वलयिता(५)-
याम(६) नेत्रादि गात्रम् ।
केशं वेशं च पूर्व्वादधिकमितिमय(७)-
त्केलिशिक्षाप्रवीणं
पौ गण्डं प्राग(८)चण्डं(९) स्फुरदलमनयो
र्मां दिदृक्षुं करोति ॥

---

(१) अस्मिन् वर्षे । (२) पूर्व्वाब्दे ।
(३) पूर्व्वेतराब्दे । (४) उदय । (५) बर्द्धित ।
(६) दैर्घ्य । (७) परिमाणं प्राप्नुवत् ।
(८) प्राचीन । (९) कोमलं ।

तदा च कदाचिच्छ्रीव्रजराज्ञी-सभान्तः प्रातरायाता श्रीमदभिनन्द-पत्नी सपत्नीभवन्ती तां पप्रच्छ ।—

यातः ! कृष्णमातरद्य सद्यः प्रातरेव कुत्र वा भवज्जातः प्रयातः ॥

व्रजराज्ञी तु सहासमाह स्म ।—

हन्त ! तदेतद्वर्त्तमानसमयपर्य्यन्तं तस्योद्वर्त्तनस्नानपरिधानमयानि कर्म्माणि मया निर्म्मीयन्ते स्म ॥

सम्प्रति मदपि लज्जामासज्जन् स्वकसवयः सेवकप्रियः पृथगेव कृततत्तत्क्रियः स मा[१]समया समायाति । आगत्य च प्रत्यहं मां पितरं यथायथमितरं च गुरुजनं पुरुगौरवं नमस्कारेण पुरस्करोति ॥

किञ्च तदवधि यदा सन्ध्यायां मया ध्यायमानागमनः सहवत्सः समागच्छति तदा तदुपरि वारि वारत्रयं भ्रमयित्वा पिवन्ती जीवन्ती भवामि स्म । सम्प्रति तु सशपथमेधमानयत्नवता तत्प्रतिषेधता तेन मम हस्तौ विहस्तौ[२] क्रियेते । एवमेव रौहिणेयश्चेति ॥

(१) मां । (२) कर्त्तुमक्षमौ ।

तदेतदर्वाचीनं तद्दर्शनमपूर्व्वतयाकर्ण्य तन्मुखं निर्व्वर्ण्य सर्व्वा हसन्ति स्म ॥

सा पुनरुवाच ।—

तदेतदबाल्यमिव च तस्यासमयमयत्वा[१]द्बाल्यमेव मत्वा सुखमुपलभामहे । अनेन तु दुःखाक्रियामहे ॥

सर्व्वाः साशङ्कमूचुः ।—

हन्त ! किन्तत् ? ॥

सा प्राह ।—

स्वयमचिरादेव गवां विचारमन्तरा[२] चिचारयिषितं यत् ॥

सर्व्वा ऊचुः ।—

नात्राप्यन्यथा मन्यस्व । गोपकुलतिलकायमान वालकानां स एष एव स्वभावः सर्वत्र नाभावमासीदिति । किमुत तेष्वपि परमचित्रचरित्रस्य तस्येति ॥

अथ व्रजराजस्य सदस्यपि तस्य वृत्त[३]मिदं वृत्तमासीत् ॥

---

(१) असमयजातत्वात् । (२) विना । (३) चरित्रं ।

यथाह स्म सस्मितं समासन्नौ सन्नन्दनन्दनौ नन्दितसमाजः श्रीमन्नन्दराजः ।—

भो ! आयुष्मन्तावद्य जात इव युष्मद्भ्रातृजातः स यथा सम्प्रति युवां प्रति वर्त्तते न तथा मामिति लक्ष्यते । यतः किञ्चित्सङ्कुचितविलोचनेन मामवलोचन्नालोच्यते । युवाभ्यां सह तु मधुरवार्त्तां वर्त्तयन्नेव दृश्यते ॥

सन्नन्द उवाच ।

साम्प्रत(१)मेवेदम् । यतः साम्प्रतं(२) तत्र भवता तत्र शिक्षामयवीक्षा(२ गाम्भीर्य्यमाचर्य्यते ।

आवाभ्यां तु कौमारकालीनेऽपि तस्मिन्नतिशालीने(४) विधेयतया(५) पर्य्यालोचितुं न पार्य्यते ।

पश्य पश्य ।—

प्रथमं नम(६)मिह मातर-
मथ पितरं त्वा तथैवास्मान् ।
प्रत्यूषः(७ प्रतिसुहृदं
सत्कुरुते ऽसावतीव बाल्ये ऽपि ॥

---

(१) युक्तं ।　(२) अधुना ।　(३) विचार ।
(४) स्यादधृष्टस्तु शालीनः ।
(५) शिक्षणीयतया विधेयो वचनग्राही ।
(६) नत्वा ।　(७) अतिप्रातः ।

अथ क्रमागतेषु वत्सलतया समानमतेषु तदाकर्णनार्थमकिञ्चिद्धादिषु श्रीमदुपनन्दाभिनन्दादिषु तद्वर्ण्यमानमन्य-मुखादाकर्ण्य सानन्दविकसित मन्दहसितभ्राजिषु पुनः सन्नन्द-नन्दनौ प्रति श्रीव्रजराज उवाच।—

भवन्तावेकान्तमनुभवन्तावनुगम्य तौ रम्यकातराक्षि-प्रान्तावसकृत्प्रातरारभ्य प्रार्थितवन्ताविव ह्यःपूर्वेऽहनि समन्ताद्भ्रातरावतिदूरादद्दृत्तातम्; तत्किमुच्यताम् ?।

नन्दन उवाच।—

तदानीमेवेति किं वक्तव्यम्।

किन्तु चिरादेव तयोस्तदभिरुचितमुपचितमस्ति।

सङ्कुचितभावाभ्यामावाभ्यां तु भवत्सु न श्रावितम्॥

व्रजराज उवाच।—किन्तत् ?।

सन्नन्दः सस्मितमुवाच।—

स्वयमेव गवां सेवनमिति यत्॥

उपनन्द उवाच।—किमूचतुस्तौ ?।

सन्नन्द उवाच।—

आवयोः प्रथमवयोतीतयोस्तातचरणानां स्वयं गोचारणमनाचारतामाचरतीति॥

तदेतद्वर्ण्यमानमाकर्ण्य तयोर्मुखं निर्वर्ण्य सविस्मयं तूष्णींभूष्णुतया विराजमाने व्रजेशाने सर्व्वेऽपि तमूचुः ।—

यद्यप्यद्य जाताविव सुजाता[१]वमू तथापि क्रमं विना बुद्धिनिष्क्रमस्य[२] बलसम्बलनस्य च सद्भावादस्माकं विस्मायकावेव भवतः । इतस्तु न विस्मायकौ भवतस्तपः-प्रभाव एव खल्वेवं भाव-मावहतीति ॥

न खलु तत्तत्खलानां यत्परिमलनं[३] जातं तत्र सहायतानां सहायता[४] काचिदपि परिचिता तस्मान्मङ्गलमेव सङ्गतं भविष्यतीति ॥

अथ तदा च कदाचिन्निजगृहिण्यापि सह रहसि श्रीव्रजराजस्य स एष प्रस्तावविशेष आसीत् । यत्र[५] च तौ पुत्र-प्रेमयन्त्रिततया तदेतन्मन्त्रित-वन्तौ । पश्यामः समयविशेषमिति ॥

तदा च दिनकतिपयानन्तरं सभायां भासमानायां श्रीव्रजराजस्य वैलक्ष्यमालक्ष्य सर्व्वे ऽनर्व्वाचीन

(१) कुमारौ ।　　(२) धीशक्तिर्निष्क्रमःउत्पत्तिः ।
(३) परिमलनं विमर्दनं ।
(४) सहायानां समूहः । सहायता साहाय्यं ।
(५) प्रस्तावविशेषे ।

गोपा मिथो निरीक्ष्य हसन्ति स्म ।

तत्र च श्रीव्रजराजे कथं कथमिति सस्मित-मुक्तवति वदन्ति स्म ।—

यदस्माभिरकस्माद्विस्मायनमनुभूतं तदेव भव-द्भिरपीति सम्भाव्यते ॥

व्रजराज उवाच ।—

कथ्यतां तावत्तथ्यं भवद्भिः ? ॥

सर्व्वे ऊचुः ।—

यद्यपि चिरत एवेदं चरितं तथापि भवतापि गोचरितेन[१] गोचरिते[२]नातीव रचितं । यत्खलु सर्व्वं गोजातं न तु भवज्जातमन्तरापदमपि[३] पदः[४] प्रददाति । कथञ्चित्तेनैवाग्रावस्थितेनाद्य ताःप्रस्थापिताः सन्ति ॥

व्रजराज उवाच ।—

तदिदमकस्मात् कथं जातम् ? ।

सर्व्वे ऊचुः ।—

भवत्पुत्रः कुत्रचिद्यत्र स्नेहं व्यञ्जयति तत्र सर्व्वत्र चैवं दृश्यते ॥

---

(१) विषयीकृतेन । (२) गवाञ्चरितेन ।
(३) पदाक्रमणीयभूमिं पदः व्याप्यापि पादान् ।

व्रजराज उवाच ।—

तर्हि किमगर्हितमार्हितं स्यात् ? ॥

सर्व्वे ऊचुः ।—

यत्र गत्यन्तरं नास्ति तत्खल्वनन्तरमेव(१) विधातुं युक्तं । यत्तु तत्र भवन्तस्तत्र भीतायन्ते तत्पुनर्वत्सपालने ऽपि न तुच्छायते । किन्तु भवत्तप एव प्रतपति प्रतीपानिति प्रतीयते । तस्माद्भवताद्भवतामनुज्ञा । या(२) परम्परयापि परम्परमप्यमङ्गलं तारयिष्यति ॥

अथेदमाकर्ण्य निर्वर्णनत एव(३) ज्ञपितानुज्ञानिजसमाजे श्रीमन्नन्दराजे सर्व्वानुमतिलब्धानन्दः श्रीमानुपनन्दः प्रथितसमज्ञान्(४) समयज्ञान्(५) जिज्ञासामास ॥

तैरपि बुधश्रवण(६)सुखप्रदमङ्गलश्रवण(७)सङ्गत बुध(८)श्रवण(९)विशिष्टायामवहुल(१०)वाहुलाष्टम्यां(११) वहुला(१२)पालनं वहुलमेतदिष्टमित्यादिष्टम् ॥

---

(१) तत्कालमेव । (२) अनुज्ञा । (३) दृष्टित एव ।
(४) विस्तृतकीर्त्तीन् । (५) ज्योतिर्विदः ।
(६) पण्डितकर्ण । (७) शुभाकर्णन । (८) वार ।
(९) नक्षत्र । (१०) अकृष्णपक्ष ।
(११) कार्त्तिकाष्टम्यां । (१२) गो ।

श्रीमन्नन्दादयश्च सर्व्वे दुन्दुभिनिर्घोषेण घोषे तस्मिन्निर्विशेष मह[१]स्त्रितयमहमहमिकया महः प्रचारयन्तस्तद्वत्सचारणावृहदुत्सवमप्यतिचरन्त-स्त[२]त्समाचरन्ति स्म ॥

एकस्यैकस्य चेद्वक्त्रुर्वक्त्राणि स्युः सदाऽयुतम् ।
तदा तद्वक्तुमिच्छन्तु यद्यायुः सर्व्वदायुतम् ॥

दिग्दर्शनं तु यथा ।—

गोपालोचितनव्यवेषवलनै रक्षाविधानैर्द्विजा-
द्याशीर्भिः सुदिनाह्वलभ्य[३]रचनैर्व्रज्यार्हनीराजनैः ।
सङ्गानान्वितवाद्य-नृत्य-निकरैः शश्वज्जयाद्यारवैः
श्रीमान् गोपमहेन्द्रसूनुरगमद्रामेण धेनूरनु ॥

तदनुगतिरीतिरितीव च गन्तव्या । वाद्यगीत-मङ्गलपरीतं पुरोधसः पुरोधाय धेनूः सन्निधाय ताश्च पाद्यादिभिरर्चिता विधाय मधुरग्रासैस्तासां समग्राणां तृप्तिमाधाय तासु नतिप्रभृतिभिर्मान-मुपधाय पुनश्च प्रदानदक्षिणाभिः पुरोहितादीन-क्षीणानन्दान् सन्धाय श्रीमत्पितृचरणादीन् मञ्जुलाञ्जलिवलितमग्रतो निधाय स्थितवति

(१) त्रय,त्रय । (२) कृष्णकर्तृक गोचारणं ।
(३) पुण्याह । योग्य ।

साग्रजे तस्मिन्ननवरजे श्रीमास्तत्पिता व्रजराजस्तावन्मणिमयलकुटीं तत्करे घटयामास। श्रीमती तन्माता च व्रजराज्ञी भाले तिलकं निदधे निधाय च सा ॥

राम ! प्रागस्य पश्चाद्भवसुबलयुवां
श्रीलदामन् ! सुदामन् !
दोःपार्श्वस्थो भवेतं दिशि विदिशि परे[१]
सन्तु चात्मीयबन्धोः।
इत्थं हस्ते विधृत्य प्रतिशिशु दिशती
तत्र कृष्णस्य माता
तत्तत्कर्माधिकाराश्रयमपि ददती नेत्र-नीरैरसिक्त ॥

अथ रोहिणीबृंहितरुचिसम्पदुपनन्द-गृहिणी[२] संहित[३]महितमहिलाभिः सहितं[४] यथायथं सङ्गमिते नानामङ्गले भुवि दिवि च महामहवहु-बहुलकुशलकुतूहलकोलाहलमनुमातरं पितरं कांश्चिदन्यांश्च नमस्कृत्य कृतकृत्यतया जिहिजिहिकारेणेरिताश्च गावः स्वाभिमुखमेव स्थिता न प्रस्थितवत्य इत्यनुपपत्त्या प्रत्यासन्नान् गुरून् परावर्त्य तासां

(१) बालकाः।
(२) रोहिण्या बृंहिता रुचिसम्पद्यस्या उपनन्दगृहिण्याः।
(३) मिलित। (४) हितसहितं यथास्यात्।

पुरत एव सबलसखः स प्रस्थितवान् । प्रस्थितवति च तत्र श्यामवर्णो तर्णकाग्रिमतानिर्वर्णनेनेव मन्दं मन्दं गच्छन्तं गावस्तमन्वगच्छन् ॥

तदेवं श्रीकृष्णरामावेतावथ स्वानुगमनकमन[1]-मनस्कान् जननीजनकप्रधानप्रवयस्कान् जनान् कथं कथमपि ततः पथः श्लथयित्वा स्वात्मानमपि तल्लोचनशृङ्खलामोचना[2]न्मोचयित्वा सखिभिरप्यखिलविलम्बिललितैर्नवगोपमहसोपवलितैः सह सहसा हसन्तौ लसन्तौ चाराय मध्ये मध्ये स्तब्धनिखिलगवीकौ लब्धमनोगवीकौ[3] सुवलितचलितं गोवर्द्धन-दिशमुद्दिश्य चलतः स्म ।

यत्र गावः सङ्केतितस्वरादिविशेषेणैव मिथः सङ्कीर्णाविकीर्णाश्च भवन्ति स्म ।

न तु दण्डेनोपघातं[4] विशीर्णाः क्रियन्ते स्म ॥

यत्र च सखिषु ताभ्यां सह परस्परं मण्डयन्तेषु[5] नन्दयन्तेषु क्रीडाजनयन्तेषु च परमकौतुकमाविर्भवति स्म ॥

---

(१) इच्छा । (२) आमोचनात् बन्धनात् ।

(३) मनोरथौ । (४) उपहत्य ।

(५) उणादेर्बाहुलयात् जृचिशिभ्यादच् गण्डिमण्डिजनिनंदिभ्यश्चेतिदोऽन्त ।

तदेतन्निर्वर्ण्य देवैर्वर्णितं यथा ।—

प्रत्येकं गाव एता वहिरपि च हरेः
प्राणरूपा यदासां
शश्वत्तृप्तौ च तृप्तिं क्षुधि च कलयति
क्षुद्विकारं स एषः ।
आनीयानीय चैता निज-हृदि विदध-
द्धाणसौख्यं दधानः
श्लिष्यन्नुच्चैर्विचिन्वन्नशनमुपददत्
पालयन् स्वेन भाति ॥
उस्राणां(१) प्राणसाम्यं वहति हरिरमू-
स्तं विना रिक्तचित्ता-
श्चित्रप्रायाः समन्ताद्यदिह वनतति
श्रीनिभा विस्फुरन्ति ।
तल्लाभाद्घ्राणदृष्टिश्रवणसरसन-
स्पर्शयोगान् वलन्ते ।
किन्तु स्याच्चित्रमेतद्वहिरुपवलितं
तेषु तं स्वादयन्ति(२) ॥

---

(१) गवां ।

(२) प्राणानां वहिःस्थितत्वं घ्राणादिषु आस्वाद्यत्वं च न सम्भवतीति ।

आहूतं कुरुते हरिः सखिजनं
सो[१]ऽप्येनमेवं तथा
वक्ति श्लिष्यति जिघ्रति प्रहसति
स्कन्धं स्पृशन् कर्षति ।
आस्तां तच्च महाद्भुतं शृणुत भो !
यद्यन्तरं तर्क्यते
नैवात्मा पृथगस्य[२] तस्य[३] च भवे-
दित्येव विज्ञायते ॥

वदति सखिसमूहः कृष्णरामावितीदं
क्वचिदपि विनिमाय[४] प्राह तत्तच्च युक्तम् ।
कलयत यदिमावप्यात्मनः स्थान एव
स्फुटमिह विदधाते यन्मिथ[५]स्तत्र तत्र ॥

अथ तदेवं च स्थिते पूर्व्वत एव तदीयविमल-परिमलमाधुरीधारानन्दितविदूरगवृन्दावनास्थिर-चरजीवावलीभिर्जीवातुतया[६] जीव्यमानौ ॥

सम्प्रति तु सर्व्वा एव ता[७] देवता पूर्व्वाः परमा पूर्व्वदर्शनस्पर्शनादिभिर्लब्धपर्व्वणाः[८] कुर्व्वाते स्म[९]।

---

(१) सखिजनः । (२) सखिजनस्य ।
(३) श्रीकृष्णस्य । (४) रामकृष्णाविति ।
(५) कर्मभूत । (६) जीवनहेतुतया । (७) जीवावली ।
(८) लब्धोत्सवाः । (९) तौ रामकृष्णौ ।

याःखलु सर्व्वातियायिसुखदायितयान्येषामपि पुण्याय[1] पुण्यफलाय नैपुण्यमासेदुः ॥

तत्रैव च सर्व्वसुखशंसिनी वंशी सर्व्वमात्मानं च कृतार्थतां प्रापितवती ॥

यतः ॥

नतद्वनं यत्र विहारमङ्गलं
नायं विहारः शुभगीतभृन्न यः ।
गीतं न तद्यन्न हि वंशिकाकृतं
वंशी न सा कृष्ण-मुखानुगा न या ॥

तद्दिने तु कान्तः सोऽयं वृत्तान्तः कर्णान्तःक्रियताम् ॥

उदीर्णमुरलीकलः स्वगुणगातृगोपावृति-
र्वलेन सहितः स्फुरद्विविधमाधुरीविस्तृतिः ।
रसार्द्रमनिशस्मितं त[2]दतिहार्दभाजां गवां
हितं स्वजनचित्तवद्वनमथाविशन्माधवः ॥

स च नितान्तप्रियजनभानः[3] काननान्तः[4] सारसरसगन्धसरससुगन्धगन्धवाह[5]वाहितनव-

---

(१) पुण्यं तु चार्व्वपि ।　(२) वनं ।　(३)भानं प्रतीतिः ।
(४) अन्तोऽत्र स्वरूपे ।　(५) सारसानां रससुगन्धाभ्यां सरससुगन्धो यो गन्धवाहः ।

पल्लवपाणिभिः स्फुरन्मधुरसखि-ततिं मधुपतिमालिङ्गन्नुत्सङ्गसङ्गिनं विधाय स्वानुव्रतमधुव्रत-खग-मृग-मञ्जुगुञ्जिताद्व्यञ्जनया खेलितुमिव प्रोत्साहयामास ॥

ततश्च कौतुकविशेषलम्भनाय व्रजराजतनूजः सस्मितमीक्षमाणः सविस्मयवदुत्प्रेक्षमाणश्च निजाग्रजं प्रति सादरनर्मगन्धप्रबन्धि वनवर्णनं निर्ममे ॥

यथा ॥

नूनं भवान् विश्वपतिर्नमन्ति य-
द्वलिं गृहीत्वा तरवः पदं तव ।
पश्य प्रसूनादिशतेन त(१)न्नत
प्रवालशाखाशिखया स्पृशन्ति ते ॥
त्वं राजसे देव ! वनेऽत्र साम्प्रतं
वयं न पश्याम तथापि तामसाः ।
इतीव चक्षुष्मति जन्मलम्भनं
वृक्षा वृणानाश्चरणं तवाश्रिताः ॥
गायन्ति त्वां षट्पदाश्चानुयान्तः
श्रीरोहिण्याः पुत्रमन्तर्हितश्च ।

(१) तस्मात् ।

इत्थं मित्राण्याहुरूहे ऽहमेवं
सर्व्वेशस्त्वं नत्वमी सन्मुनीशाः ॥
सुरम्यं नृत्यन्ति प्रमदशिखिनः स्नेहवलितं
हरिण्यः पश्यन्ति स्फुटमृदुकलं बिभ्रति पिकाः ।
नटा(१)रामाः(२) सूक्तप्रपठनविदः(३) काननसदा(४)-
ममी धन्या यस्माद्विदधति तवारादतिथिताम् ॥
अङ्घ्रिस्पर्शैर्धरित्री-गिरि-तृण-सरितस्ते नखश्रेणिलेख
श्रीमच्चित्रैर्विचित्रद्रुमसमुदयगद्योतवीरुद्विभेदाः ।
स्निग्धेक्षाभिश्च धन्या मृग-विहग-
गणा वत्सरः सङ्कलाभा-
देषा तत्रापि गोपीव्रतति(५)रतितरां
यत्स्पृहा सापि लक्ष्मीः ॥
पितृव्यान्मे क्षत्रादवतरणमाप्तः स तु भवान्
पितुर्गोपेशस्यात्मजपदमगाद्धर्मविधिना ।
अतस्त्वं गोपीनां परिणयनमाप्तासि तदियं
लता गोपीनाम्नी तव हृदयलग्ना प्रथयति ॥

---

(१) मयूराः ।  (२) हरिण्यः ।
(३) पिकाः ।  (४) काननौकसां ।
(५) गोपी श्यामा शारिवा स्यात् । विस्तारवल्ल्योर्व्रततिः ।
तस्मात् शारिवालता गोपीनां विस्तारो वेत्यर्थः ।

अथाग्रजश्चानुजवाचममृतमिवाचम्य स्मितमाचरन्नुवाच ।—

भवादृश एव तादृशगुणगणभागीश्वरः कथमन्यं तत्र गण्यं करोतीति ॥

तदेवमखिलसखिभिः सह हसन्नर्मणा तेषां शर्म स्फुटमुत्तम्भयन् श्रीमद्वृन्दावनवनशोभामपि स्वमिव तानुपलम्भयन् पशूनपि मानसगङ्गा-रोधांसि लम्भयन् स्वयमप्ययमतितरां रेमे। तच्च प्रात्यहिक प्रायमेवं प्रथयिष्यामः ॥

यथा ।—

रमते रामं परितः कृष्णः ।
सखिगणगीतगुणेषु सतृष्णः ॥
अनुगायति पिकषट्पद-गानम् ।
परिजल्पति शुक-हंस-समानम् ॥
एवं चक्र-चकोर-वकादि ।
अनुरौति स्फुटहासविवादि ॥
द्वीपिमुखार्पितभीति(१)पशूनाम् ।
रुतिमिव सृजति भयाय शिशूनाम् ॥

---

(१) द्वीपिमुखेभ्योऽर्पिताभीतिर्यस्यां क्रियायां तत् यथाभवति तथा । द्वीपी व्याघ्र ।

पक्षिमृगादिकमहरहरचलम् ।
विरचितनामभिराह च सकलम् ॥
भ्रमति सखा यदि तस्मिन् कोऽपि ।
कर्षति विहसन् पणामुतोऽपि ॥
दूरगपशुमाह्वयति च नाम्ना ।
कृतगो-गोप-मनोरमसाम्ना ॥
गव्याहूतौ शिखिनां हूतिः ।
जाता यदसौ घनरुतिभूतिः(१) ॥
व्यतियुञ्जानो भ्रात्रा स्वकरम् ।
शंसति हसति सखीहितनिकरम्(२) ॥
सखिभिर्विश्रमयन्नय(३)मार्य्यम् ।
प्रणयति तत्पदलालनकार्य्यम् ॥
सुललितपल्लवतल्पविधानः ।
सुहृदूरुस्थिरमूर्द्धनिधानः ॥
केलिश्रममनुकृतशयनेहः ।
पुण्यतमैरुपवीजितदेहः ॥
अत्र च कैरपि लालितचरणाः ।
अस्मत्तृणमात्रदपरिचरणाः(४) ॥

---

(१) घनस्य रुतेर्भूतिरिव भूतिर्यस्याःसा हूतिः ।
(२) सखीनामीहितनिकरं ।　　(३) कृष्णः ।
(४) अस्माकं तृणमात्रं ददाति ईदृक् परिचरणं यस्य ।

यः स्निग्धानां गानविनोदैः ।
निद्रामितवान् स्वरकृतमोदैः ॥
स्मरतां त[१]न्नः किमपि मनःस्थम् ।
समयं सहते नान्यावस्थम् ॥
वयमिह के वा लुब्धं मन्याः ।
लुब्धा यस्मिन् शुकमुखधन्याः ॥

तदेवमेव वल्गुवलयिते लीलावलये पूर्ववन्निलया[२]दाकलितामिष्टामिष्टान्नादिकं रसनया श्लिष्टं विधाय गवां जालं चालयन् पालयन् साग्रजव्रजराजतनूजः सवयोभिरायतीगवमवसरमवगत्य[३] गोत्रामात्राणां[४] ततिं शनैरुपव्रजमनैषीत् ॥

नीत्वा च तार्णक[५]वात्सकभेदानां तथा स्त्रीगवीणां तास्वप्युपसर्यासन्धिनीप्रष्ठौहीधेनुवष्कयणी गृष्टिपरेष्टुकासमांसमीनानैचिकीकपिलावशागोपतिप्रभृतीनां तत्र च गवादिनाम्नाम् । तथा पुङ्गवानां तेषु चार्षभ्यदम्यजातककुत्पूर्णककुज्जातोक्ष महोक्ष-

---

(१) तस्य । (२) गृहात् ।

(३) आयान्ति गावो यस्मिन् तं समयं ज्ञात्वा । अवसरशब्दप्रयोगस्त्वत्र प्रातःकालशब्दवत् ।

(४) गोत्रायाः पृथ्व्याः मात्राणां अंशभूतानां गवामित्यर्थः ।

(५) तर्णकादीनां वृन्दे तार्णकादयः ।

वृद्धोत्त युग्यप्रासङ्ग्यशाकटप्रष्ठवाट्प्रमुखानां* तत्र च हंसादिनाम्नां परःकोटीनां कूटान् पृथक् पृथगवीवसत् ॥

तत्र तत्र नस्तितान्[1]नपि शिवक[2]वद्वानचीकरत् ॥

ततश्च पूर्व्वपूर्व्वस्मादप्यपूर्व्वतया मङ्गलवस्तुनिकरकरैः पुरस्कृतं क्षितिदेव-नरदेवपुरःसरैर्व्रजवासिवरैरुपव्रज्य नीराज्य च सपशुपालबलः स गोपालः सदनं सादरमासादयामासे। प्रसादयामासे च सुललितलालनया जनितमुखजननीमुखपुरन्ध्रीजनेन ॥

अथ क्षणमात्रं तत्र विश्रम्य गोदोहनाय निर्गम्य रम्यदोहपात्रसन्दोहं किङ्करनिकरकराहृतं विधाय

---

* तर्णकस्तत्कालप्रसूतः। उपसर्य्या गर्भग्रहणे प्राप्तकाला। सन्धिनी वृषभेणाक्रान्ता। प्रष्ठौही बालगर्भिणी। धेनुःनवप्रसूतिका। बस्कयनी चिरप्रसूतिका। सकृत्प्रसूता गृष्टि बहुसूतिः परेष्टुका। समांसमीनासायैवं प्रतिवर्षं प्रसूयते। उत्तमा गोषु नैचिकी। वशा वन्ध्या। षण्डो गोपतिः। आर्षभ्यः षण्डतायोग्यः। दम्यवत्सतरौ समौ। उत्पन्नउक्षा जातोक्षः। युगादीनां बोढारो युग्य। प्रासङ्ग्यशाकटाः। प्रष्ठवाट युगपार्श्वगः।

---

(१) विद्धनासान्। (२) शङ्कु।

गवास्थानीमभिनिधाय महामहिमगोपसमूह-मनुकृतोपवेशं श्रीव्रजनरेशमनुज्ञाप्य वत्समोचन माज्ञाप्य धेनुकमध्यस्थितः स्वस्तिवाचनादिप्रशस्तं समस्तचित्तमोहनं गोदोहनं नाम कर्म्म प्रथमं निर्म्ममे ॥

तत्र च गृहान्निर्गमनं यथा ।—

हाटकलकुटीपाणि-
र्मणिचितनिर्य्योगराजदुष्णीषः ।
जितगजराजविलासः
सवलः कृष्णो ययौ गोष्ठम् ॥

दोहनं यथा ।—

श्रीमत्पट्टवटा[१]न्तमौक्तिकलसन्निर्योगराजत्कचौ
गाढानद्धवरान्तरीयरुचिभिश्चित्राधराङ्गश्रियौ ।
ऊर्द्ध्वज्ञू[२]क्षिति संहिताग्रचरणौ जानुद्वयान्तःस्थित
स्वर्णामत्र[३]धरौ सितासिततनू धेनूर्दुहाते स्म तौ ॥

ततश्च ।—

घटोध्नीनां[४] तासां नातिदुग्धानामपि दुग्धानि-

---

(१) रज्जुष्विषु वटीगुणः ।
(२) ऊर्द्ध्वक्षूरूर्द्ध्वजानुः । (३) पात्र ।
(४) घट इव उधो यासां ।

तु प्रचुरं दुग्धानि[१] विधाय गवादिसम्भालनमनु गोपान् सम्विधाय तानि च पितुः पुरस्तान्निधाय कराभ्यामञ्जलिं सन्धाय स्थितवन्तौ सन्तौ तेन दूरतस्तदीयतुरीयकक्षापूरितचातुरीनिरीक्षण[२] सुखस्थगितेन भूयोभूय आहूय सव्यापसव्ययोरुप-वेशितौ ॥

यत्र च ॥

अक्ष्णा तस्यापसव्येन सव्यं[३] तच्चकृषे बलात् ।
अपि सव्येनापसव्यं[४] रामं कृष्णं दिदृक्षुणा ॥

किञ्च ।—

एकहेतुमयमेव लोचने
द्वे च बाष्पमपरत्र[५] विन्दतः ।
रामकृष्णयुगपद्विलोकने
ते तु गोपनृपतेर्यथायथं ॥

तथा हि ।—

सव्यमक्षितनुजाद्व्रजेशितु-
र्भ्रातृजात्पुनरसव्यमस्रवत् ।

(१) यथास्यात् ।
(२) कृष्णस्य परिपूर्णा या चातुरी तस्या निरीक्षणं ।
(३) वामाक्षि । (४) दक्षिणाक्षि । (५) जलं ।

यत्र मानसमपि स्वयं द्विधा-
भिद्यताश्रुमिषमित्यवुध्यत ॥

ततश्च ।—

अग्रिमानग्रिमान् कुर्व्वन्नन्त्यानन्त्यान् समैः समम् ।
सोऽभितो रामकृष्णाभ्यां शोभितो गृहमाययौ ॥

तौर्य्यत्रिकचर्य्यापर्य्याकुलतयेति शेषः ॥

गृहमागत्य च सर्व्वामात्मगोष्ठीं मिष्टान्नादिभिः सुष्ठु तुष्टामकार्षीत् ॥

ततश्चानन्दविशिष्टेषु विसृष्टेषु शिष्टेषु रामकृष्णौ निज-निज-धामसभागम्य रम्यतमशय्यामधिशय्य मातृभ्यामुपचर्य्यमाणौ परिचारकैः परिचर्य्यमाणौ सुखं निदद्रतुः ॥

अथ स्निग्धकण्ठः समापनदिग्धं तदिदं साञ्जलि व्यानञ्ज ।—

ईदृशस्तनयो जातस्तव गोपधरा-पते ! ।
आत्मारामाश्च यत्कीर्त्या यान्ति द्रागात्मविस्मृतिम् ॥

अथ श्रीदामादि-चमत्कारसारप्रदप्रथनस्य तदेतत् कथनस्य श्रवणान्ते सैवेयं लीलेति भ्रान्ते तत एव वहिर्वृत्तित उपशान्ते गोलोकधरित्रीकान्ते

जने च श्रेणीप्रान्ते तौ सूतसुतौ यथावद्बद्धाञ्जलि तयावस्थितौ चिरत एव पूर्व्वपूर्व्ववत्प्रीतिदानेन वासं प्रस्थापितौ विधाय ते सर्व्वे यथा स्व-मावासादिकमासादितवन्तः ॥

इति श्रीगोपालचम्पूमनु गोचार-
प्रचारणं नाम द्वादशं
पूरणम् ॥

— ——

# त्रयोदशं पूरणम्।

अथ प्रतिपातरिव श्रीमद्व्रजराजसमाजे विराजमाने कथां कथयितुं समुत्कण्ठो मधुकण्ठो निजान्तश्चिन्तयामास ॥

धेनुचारणारम्भलम्भकदिने धेनुकालम्भः[1] खलु श्रीवादरायणिना तदीयचारणावसरसाम्यानुसारिणा पूर्व्वमेव वर्णितः। वस्तुतस्तु पौगण्डप्रान्त एव पण्डया[2] निर्णीतः। तद्दिवसावसान वेश्मप्रवेशे कैशोरांशावेशवर्णनात्। अतः श्रीपराशरेणापि कालियदमनानन्तरावसर एव सोऽयं मावसरः[3] कृतः श्रीहरिवंशे च स्पष्टमेव ॥

"दमिते सर्पराजे तु कृष्णेन यमुनाह्रद" इत्युक्त्वा धेनुकवधः समारब्धः। तदेव युक्त्यापि व्यक्तीभवति। कार्त्तिकवर्त्तमानशुक्लाष्टम्यां गोचारारम्भसम्भवदिनतया पाद्मे स्पष्टतयोक्तिर्दृष्टा पक्वतालफलकालभाद्र एव च धेनुकनिर्धूननप्रसिद्धिः।

---

(१) वधः। (२) सदसद्विवेचकया बुद्ध्या

(३) प्रस्तावः स्यादवसरः।

तस्मात् कालियदमनमेव प्रथमं प्रथयिष्याम इति ।
स्पष्टं त्विदमभ्याचष्ट ।—

कवयो ये भुवि ख्यातास्त एवाकवयो मताः ।
सुखमायास्यतीत्येवं सुदुःखं वर्णयन्त्यमी ॥

इति तूष्णीकामासज्य पुनराहस्म ।—

अथवा ॥

सुखं वा वीर्य्यं वा तदिह परमं यत्प्रतिमुखं(१)
प्रतीपं निर्जित्यानवरतमतुल्यं विजयते(२) ।
कविश्च श्रेयान् स स्फुरति खलु यस्तद्विधतया(३)
सदा तत्तद्गायन्नपि न परितस्तृप्यतितराम् ॥

अतः कालियनिर्य्यापन(४)फलं तदिदं वृत्तमापाततः सुदुःसहमप्यायत्यां प्रत्यासन्नवहलसुखसहचरतया वर्णनीयमस्माभिराकर्णनीयमेव च युष्माभिरिति याचित्वा सकम्पमुवाच ॥

तदेवमर्ज्जुनीषु(५) पर्य्यगेव(६) चिराय चार्य्यमाणासु परिकालियालयजलाशयाश(७)मेव

---

(१) अभिमुखं । अभिप्रतीआभिमुख्ये इत्यव्ययीभावात् ।
(२) प्रकर्षं प्राप्नोति । (३) सुदुःखसदृशतया ।
(४) दुरीकरणम् । (५) गोषु । (६) सर्व्वत्र ।
(७) वर्जयित्वा अव्ययीभावोऽयं । आशा दिक् ।

चलितुं खलु श्रीवलरामः समनुज्ञां कलयाञ्चक्रे श्रीव्रजेश्वर्य्या शिक्षितचर्य्यानुगमात् ॥

श्रीवलावरजस्य तु तस्य चिरत एवाविरतं तद्दिदृक्षा न क्षीणासीत् । वहलेन कुतूहलेन जन्मत एव दुर्जनतेजसामसहनतायामविकलेन तेजस्विता-वलेन च ॥

तदेवं स्थिते सदावदेव कदापि कृष्णाग्रजन्मनः श्रवणाख्यं मासिकं जन्मर्क्षमतिथिवत्प्राथितिं व्रज-सदसि समाससाद ॥

तदा च सङ्कर्षणः स खलु हर्षणमङ्गलस्नपना-द्यासङ्गतः स्वगृह एव सङ्गत आसीत् ॥

तदा च कासाञ्चनाभिनवानां गवामतिप्रत्यासन्न-प्रसवानामवश्यमेव स्वावनीयतया विनापि तं[१] वनीमनुगतसखः श्रीदामसखः प्रस्थितवान् । किन्तु सम्भोजनसमयसमयने[२] समयं[३] विधाय ॥

तदा च लब्धे विप्रलब्धे[४] रवसरे तदितरं[५] प्रति यः कालकूटतुल्यः[६] कालकूट[७]स्तन्मय

(१) रामं । (२) सङ्गमने । (३) प्रतिज्ञां ।
(४) वञ्चने । (५) कृष्णादितरं ।
(६) कालस्य कूटं तत्तुल्यः । (७) विषं ।

कालिन्दीयकालीयहृदहरितमेव त्वरितं हरिसुधा-वारिधिरवजगाहे ॥

तत्र गवामग्रेसरा ये गोपकुमारवरास्तेषु चानाशितं गवीननवीनवनविभागावकलनकलितवहलकुतूहलजातरभसतः(१)किञ्चिद्विलम्वमालम्वमानेषु निदाघद्राघीयस्तृष्णाव्याकुलमग्रिमगोकुलं कालियविषाकुलं कृष्णा-जलं पिवति स्म । पानमात्राच्च विचेतनतया निपपात ॥

चणातस्ते चाग्रेसरास्तदवलोकशोकधरा देह जिहासया सहसा स्वयमपि धयन्तः पतन्ति स्म । इयं पुनर्योगमायाया एवानपाया गतिः । या खलु खलानामुत्कलनायासम्भवमपि सम्भावयति ॥

अथ मुहूर्त्तपूर्त्तावागतोऽयं तोयदश्यामलमूर्त्तिर्मूर्त्तानेव(२) तान् पश्यन्नन्याहृशश्यामलतामाजगाम ॥

विललाप च ।—

या गावः खलु देवता व्रजसदामस्माकमुच्चैस्तरां
ये वालाश्च सदैव जीवतुलितास्ते ऽमी विपन्नाः पुरः ।

(१) पौर्वापर्य्या विचाराभावात् । तदिदं लिङ्गादिसंग्रहे हि क्षीरस्वामिनां मतं ।　　(२) मूर्च्छितानेव ।

हा ! हन्त ! स्वयमस्मि तत्सहचरः किं भ्रातरं मातरं तातं सर्वजनञ्च वच्मि मम धिक् चापल्यतः साहसम् ॥

ततश्च ॥

विप्रतीसार[१] सारानुसाराद्रुत[२]विद्रुततर[३]चेतसः श्रीव्रजकुलचन्द्रमसः क्रमशः सर्व्वेषां मुखमभिदत्तदृशः स्तिमितीकृतनिजाधारा नेत्राम्बुधारा निपेतुः । या एवाङ्कुरितीकृतवसुधाः सुधायमाना यथाक्रमं सर्व्वं चेतयामासुः ॥

किन्तु मुरशत्रुः पुरः पुरःस्थगमनावेशादपुरःस्थदेशाश्रितानां चेतनां तदा न चिचेत चिरादेव त्वचेतीत् ॥

ते च चेतिताः सर्व्वे चिराय विचारप्रचारं नानुचरन्ति स्म । यस्मादात्मान[४]-मघनामघरविषधरविषमविषमोहाद्रक्षितवन्तमघाद्विषमेव तत्र तत्र भ्रमन्तमनुभूय भूयः स एव चेतनामूलमिति निश्चितवन्तः ॥

कृष्णास्तु तान् विलुलितवेशान् लब्धोपवेशान् दृष्ट्वा युगपदेव सर्व्वान् कृष्ट्वा पृथक् पृथगेवाश्लिष्टवान् ॥

---

(१) अनुताप । (२) शीघ्र । (३) द्रवभावप्राप्त ।
(४) सलिलसमूहरूपं ।

तदुक्तमेव ॥

यदस्य खल्वौत्पत्तिक एवायमुपपत्ति[१] मतीतवान् गुणः । य[२]द्भावभावनः स्यात्तत्रानुरूपरूपाविर्भावमसौ यौगपद्यमुपसद्य वहुत्रापि सद्य एवापद्यत इति ॥

तत्र वालैर्मिलनं यथा ।—

दृष्टिर्वाष्पमिता तनुस्तिमितिता[३]-
मन्तर्मतिर्लीनता-
मित्थं सङ्गतिसाधने तु निखिले-
ऽभीक्ष्णं गते व्यर्थताम् ।
किं सौख्यं किमसौख्यमेतदिति च
स्फूर्त्तिं विनावस्थितौ
कश्चित्कोऽपि न किञ्चिदुज्झितुमभू-
च्छक्तिप्रयुक्तश्चिरम् ॥

गोभिर्यथा ।—

गावो हुङ्कृतिघोषणा वलयिताः
कृष्णं लिहन्त्यश्चिरा-
त्तद्बाहुद्वयवेष्टनेन विलसत्कण्ठ्यः
समुत्कण्ठिताः ।

(१) युक्तिं ।　　(२) यस्य ।　　(३) स्तब्धता ।

यन्नास्त्याजिततद्ग्रहा[1]श्च पशुपैः
क्लिष्टाश्च तस्थुश्चिरं
तास्तद्वक्त्रसुधाकरद्युतिसुधा
पीतावतृप्तेक्षणाः ॥

तदेवं सति तस्य भावविशेषोद्भवः समुद्भाव्यते । पूर्व्वमेवायं श्रीयुतकृष्णः पारावारभविष्णुस्थास्नु चरिष्णुदुःखदानधृष्णोः[2] कृष्णाधिष्ण्यस्य[3] कालियस्य निराकरिष्णुतृष्णोऽपि तत्पत्नीभ्यो ऽपत्रपिष्णुतया चिराय तूष्णींबभूव ॥

सम्प्रति तु गोगोपालकालधर्म्मापातजाता-सहिष्णुतया[4] वर्द्धिष्णुक्रोधः सुष्ठु जातः ॥

ततश्च सावहित्थमित्थमुवाच ।—

अहो वयस्याः ! पश्यत अत्रोदकस्तम्भविद्या-कृताऽवकाशप्रकाशमानह्रदिनी-ह्रदस्थितस्वसदने कालियाख्यमन्ददन्दशूकस्तिष्ठति । तेन च दुष्टु-निष्ठ्यूतया[5] सर्व्व एवाखर्व्वविषज्वालया ज्वलिताः पर्य्यग्देशा दृश्यन्ते । उपर्य्यप्युत्पतिताः पतत्रिण-श्चात्र पतिता इत्यात्मनेत्राभ्यां प्रतीयताम् ।

(१) वांछा । (२) प्रागल्भस्य । (३) यमुनाश्रयस्य ।
(४) कालधर्मस्य य आपातनं प्राप्तिस्तया जाता या असहिष्णुता । (५) थूत्कृतया ।

येभ्य[१]स्तु प्राणाजगत्प्राणाशन[२]भयतः सद्य एव विप्रतिपद्येव[३] स्वयमुत्पतन्तः कदापि न न्यवर्त्तन्त ॥

सोऽयं पुनर्गरुत्मत्कृतामृत-सेक एक एव कालकूट-ज्वालयापि कृतालम्बः कदम्बः सुललितदलादितया लालसीति ॥

तस्मादस्योपरिगकोटरपिठरे[४]स्फुटं तदनवद्यममृतमद्यापि विद्यत इति प्रसह्या[५]हमारुह्य पश्यामि । भवन्तस्तु गाः किञ्चिद्दूरचरतया चारयन्तश्चरन्तु ॥

तदेतद्वदन् विगतकदनः कञ्जवदनः कदम्बमधिरुह्य परिकरं समुह्य स्वयं किरणगणामृतघनाघनः[६] सान्निध्यमात्रनिर्मितसाधर्म्ये तस्मिन् कालियहृर्म्ये निर्म्मलजलक्रीडाकुतुकाय पपात । यत्र च तत्र सर्पहृदगतजलं धनुःशतमुदसर्पत् । तच्च श्रीव्रजराजतपः प्रताप-फलस्य सङ्ख्यातीतबलस्य तस्य न चित्रमित्येव मन्तव्यम् । येन[७] हि पौगण्डतयानातिप्रचण्डमपि तदेव तद्वपुश्चण्डांशुकोटिवदुद्दण्डतया तत्र कुण्डलिनां भाति स्म ॥

(१) पक्षिभ्यः । (२) सर्प । (३) विरुद्धस्येव ।
(४) भाजने । (५) बलात् ।
(६) वेणुकमधः । (७) तपः प्रतापफलेन।

ततश्च तस्या[१] मरवारणवारण[२] विक्रमक्रम[३] तया घूर्णद्भुजापूर्णवार्घोषसङ्घर्षणया धर्षितस्त[४]-दुत्कर्षासहनसमाजः सहसा तनूनपान्महसा[५]-हिराजः स्वीयलीलान्तरीपान्तः[६] स्वयं क्रीडा-हर्षतः स्मितं वर्षन्तं पीतांशुकाविद्युद्धरं करचरणाधररोहिता[७]करं वनमालाशचीपतिचापधरं सु-ललितनीलघनवरं तमेवाससाद ॥

स्वम्प्रति तु कृतयवक्षारसारसन्धगन्धकेन्धन[८] वर्द्धीयमानमेतमात्मना चक्षाद ननाद च । केवल-वलिमानितामया सहिष्णुतया धृष्ण[९]गसौ नाग-जिष्णु[१०]रार्तोऽपि न निवर्त्तते स्म ॥

अथ कालीयस्य वरुणपासपाली[११]यमानभोगा[१२]-शनीय[१३]मानाशी[१४]राशिभ्यां याहंकृतिपूर्णा-कृतिस्तस्याश्चूर्णीकृतिकौतुकाय योगमायामय-

---

(१) कृष्णस्य । (२) ऐरावतस्य निवारण ।
(३) परिपाटी । (४) कृष्ण ।
(५) अग्नितुल्यमहसा ।
(६) अन्तराप अस्य अन्तरीपं द्वीपस्तस्यान्तर्मध्ये । (७) रक्त ।
(८) कृतयवक्षारसारं सन्धत्ते योगंधकः सएवेन्धनं यस्य ।
(९) प्रगल्भ । (१०) नागेन्द्र । (११) श्रेणी ।
(१२) शरीर । (१३) वज्रतुल्यं ।
(१४)स्त्रीत्वाशीर्हिताशंसा हि दंष्ट्रयोरिति नानार्थे । आशीस्तालु-गतादंष्ट्रायया बिद्धो न जीवति ।

कङ्कट[१] सङ्कटितां गताङ्गतस्तृणावर्त्तवर्त्तन[२] समुद्वर्त्तनः स मुहूर्त्तं तथैव वर्त्तते स्म ॥

यत्र हि तस्य सदाहितस्य भोगिनः शतमेकातिरेकाभोगा[३] मर्कटिकाजालवद्विघटितशक्तयः सन्ति स्म। आशिषश्च तुलवर्त्तितुलां कलयामासुः ॥

किन्तु यदाकदम्बादसौ कदम्बमाली कालीयालयकालिन्दीशम्वर[४] मपप्त[५] त्तदाऽतितप्तहृदय तया हाहाकारकृतमिथः क्रेङ्कारः सखिन्नः सखिवारः स्खलच्चरणाचारः सहसा तस्मिन्नेव ससार। गावश्च शावसहिताः सहितास्तमेवानुद्रावकता[६]-मवापुः ॥

ततश्च स्वेषु विश्वेषु[७] तमेव हृदं सावेगगदं[८] प्रविशत्सु प्रतिदिशं गावश्च प्रविशन्तीत्येवं दृष्ट्वा परमकष्टं स्पृष्ट्वानुपायाः पशुपा नष्टप्राया भ्रष्टकाया यमुनायाः प्रह्वा[९] इव कह्वासुर[१०]जठरादिव तत्-प्रत्यागत्याशया परं प्राणन्ति स्म ॥

---

(१) कवच। (२) जीवन। (३) फणाः।
(४) नीरक्षीराम्बुशम्वरं।
(५) पपात पतेः पुगागमात्। (६) द्रुतगमनता।
(७) सर्वेषु। (८) आवेग एव गदः पीडा तत् सहितं यथास्यात्
(९) नम्रा। (१०) वकासुर।

तत्र च ॥

किं ज्ञप्तिः[१] स्वपनं सुषुप्तिरथवा मूर्च्छा मृतिर्जीवनं।
भात्येवं नहि निश्चिकाय निखिलः सोऽयं सखीनां गणः॥

उस्राणां[२] ततिरस्त्रवृष्टिकलितैः
सा[३] च प्रवाहैः पुन-
स्तर्हि स्वं हृदयं हृदं च तमथ
क्ष्वेडै[४]रिवापूपुरत् ॥

तेषु च वहिरीदृगवस्थेषु तथान्तरनवस्थेषु न कोऽपि प्रकोपि तद्वृतं व्रजे वृत्तं कुर्य्यादिति विचार्य्य दिविषद्वर्य्य-व्रजेन मुहुरुत्पात-व्रातं प्रत्यापय्य तं तमनुसञ्चार्य्यते स्म ॥

तत्र व्रज-प्रजावचनं यथा ।—

दिवि भुवि खेचोत्पाताः
कथमिव तत्कालमुद्भूताः ।
आं नः सर्व्वेषां यः
प्राणोऽवधि तत्कृते त इमे ॥

इति व्यग्रीभूय समग्राः प्रजाः सग्रामण्य[५]-

(१) चेतना । (२) गवां ।
(३) अस्रवृष्टिः । (४) विषैः ।
(५) साग्रगण्याः ।

स्तं व्रजाग्रगण्यसमाजं कृष्णाग्रजन्म-जन्मर्त्त-महसि सम्भोजनाय जनायतनतामाप्तवत्यः ॥

किम्वहुना ? व्रजमहीपति-पत्नी च व्रजमहिला-भिरपत्रपा(१) मपहाय तत्राजिघाय(२)सन्दिदेश-च दूरदेशतः ॥

दुर्निमित्तमुदभूद्वलं विना
हा ! ययौ विषदिशं वलानुजः ।
हन्त ! पूर्णसमयः स नाययौ
गोष्ठराट् कथमिहास्ति निर्वृतः ॥

ततश्च ॥

गेहं देहं तत्तदर्थश्च सर्व्वं
धिक् कुर्व्वन्तस्त्यक्ततत्पर्व्व-भोगाः ।
ते गच्छन्तः कालियानच्छकच्छं
वातव्रातक्षिप्तचित्ता इवास्थुः ॥

भ्रातृप्रभावज्ञानारामश्रीरामस्तु तेषां शङ्कायामं-निशामयन्नपि न तदानीं तद्भावमवाप । किन्तु रिरक्षिषामेव । अन्यथा ह्यन्यथापत्तिरेव स्यादिति समुचित एव भावः स्वयमेव योगमाययाचितः ॥

---

(१) अन्यस्मात् या लज्जा । (२) अगच्छत् ।

अथ स्वमनस्येवं स[१]विविवेच ॥

वयमिदं मुहुरुन्नीय नियमत एव जानीमः। यत् खलु तस्य खलवंशदवहुतवहस्य निरस्यमानता न केनाप्यकेना[२]पि कर्त्तुं शक्येत। तथाप्येते केवलस्नेहवलदेहा[३]विद्युत्पातायमानदुर्निमित्तलब्धजीवनसन्देहा निजजीवनमूलं पीतदुकूलं प्रतिगमनाय दुर्मदेहा वर्त्तन्ते ॥

तस्मादरण्यारण्य[४]कुजदहन-सन्दहन[५] सहनतामन्द[६]समुद्दिष्ट[७]हिमद्रवसन्द्रवसमुत्कटता[८] गलत्कट[९]वारणादुर्गणागणावदापाततस्तु मम वारणामपि न मंस्यन्ते। यत्खल्वेतेषां तद्विश्लेषातिशयशङ्किता दुःखमनु मय्यपि दुःखं दुःखनन मूलं जातमस्ति। तदपि न व्यञ्जनाय प्राञ्जलता[१०]मर्हति। प्रज्वलितज्वलनवनमनुज्वलना-

(१) वलः। (२) दुःखेन।

(३) स्नेह एव वलं यत्र तादृशो देहो यासां।

(४) अरण्यमेवारणिर्मथनकाष्ठं। (५) ज्वाला।

(६) मूढाल्पापटुनिर्भाग्या मन्दाः।

(७) समुद्दिष्टो हिमद्रवो यत्र तादृशः सम्यक् द्रवो द्रवणं यस्य वारणस्य।

(८) मत्ते शौण्डोत्कटक्षीवः। (९) मद।

(१०) सरलता।

न्तरसन्ताननवत् । तस्मात् केवल मङ्गलव्यङ्गव्यङ्ग सङ्गमिसन्दिङ्गितविशेषसङ्गितया त एते सम्भावित त[१]द्रव्या भावनीया[२]। न तु निराकरिष्णुतया । आवयोरावयो[३]ह्येकप्राणतां खल्वेते मन्यन्त इति ॥

अथ स एवं विविच्य सहसा जहास । तदनु किञ्चिल्लब्धाश्वासतया चलन्तश्च ते ।—

दुःखाघ्रात[४] प्राध्वता[५] मन्दनेत्राः
कृष्णाङ्घ्रिश्रीलक्ष्मलब्धावलोकाः ।
वर्त्मन्यस्मिन् पिच्छिलेप्यश्रुभिस्ते
रामप्रासन्यस्तहस्ता विचेलुः ॥
यथा यथा विदधुरतीव शीघ्रतां
तथा तथाप्ययदधुरलं विलम्बिताम् ।
कथं कथश्चन वत तं ह्रदं गता-
दशां तु कां समधुरमी न वेद्मि ताम् ॥

तत्र तु ॥

दृष्ट्वा कालिय-भोगसङ्घ[६]वलितं गोपालकं गोपका
नन्दाद्या वत गोपिकाश्च विदलच्चित्ता यशोदामुखाः ॥

---

(१) कृष्ण ।                (२) कर्त्तव्याः ।
(३) वयआरभ्य ।             (४) आक्रान्त ।
(५) पथिकता ।              (६) समूह ।

हा ! शुष्काङ्गदशां महामलिनतामप्यूहु[१]रित्थं यथ
तेषामान्तरवह्निनैषि[२] वहिरप्युद्यातुमित्यूह्यते ॥

तत्र च ॥

मानुषान् वुद्धिराहित्यात् पशूनिव निरीक्ष्यते[३] ।
पशूंश्च क्रन्दनान्मानुषानिव क्लेशमैयरुः[४] ॥

ततश्च ॥

तेषां सदा स्नेहमयात्मनां तदा
त्रासात्तु शुष्कीभवतां हिमादिव ।
मिथः समीक्षा भवतापसङ्गमा-
द्भूयो वभूव द्रवता रवेरिव ॥
स्नेहात्प्रवाहावलितुल्यतां यतां[५]
व्रजौकसां द्राग्विशतां विषह्रदम् ।
वालोऽप्ययथावेशवलद्वलो वलो
द्रुतं महासेतुदशां ससाद सः ॥

उवाच च ॥

प्रीतिः किं त्वनुजेन मे व्रजपते ! तात ! व्रजाधीश्वरि !
श्रीरोहिण्ययि मातरस्य तु सदा तत्त्वं परं वेद्म्यहम् ॥

---

(१) ऊढवन्तः । (२) वाञ्छितं । (३) कर्तृ ।
(४) प्राप्नुवन्तः । (५) गच्छतां ।

सत्यं[1]वः पदपङ्कजाश्रयरुचां कुर्य्याममुष्य क्वचि-
न्नैकस्मिन्नपि मूर्द्धजे क्षतिलवो भावी यथा गर्ग-गीः ॥

तदेवं प्रशस्तेन स्वहस्तेन श्रीरामेण हस्त वारणे[2] कृते ॥

विषह्रदान्ताद्विनिवर्त्तिताश्च ते
प्रतीयुरेवाधित[3]दात्मनः स्थितिम् ।
यत्कालकूटज्वलनान्तरङ्गतं
स्वं मेनिरे वीक्ष्य तदन्तरे हरिम् ॥

कालियह्रदमिते वक-शत्रौ
गोकुलस्य रुदतः प्रतिशब्दात् ।
रोदसी च रुदती स्वनिरुक्तिं
वाढमज्ञपयतां रुदसिभ्याम्[4] ॥

गोप्यो मिथः कण्ठविलग्नकण्ठा-
स्तारो रुदामासुरलं विलप्य ।
स्मृतिं नयत् पूतनिकादिनाशं
य[5]न्मातृसान्वाय मुहुर्वभूव ॥

---

(१) सत्यं शपथतथ्ययोः ।
(२) पर्य्याप्तिः स्यात् परित्राणं हस्तवारणमित्यपि इति क्षीरः ।
(३) तस्मिन् ।　　　(४) धातुप्रत्ययरूपाभ्यां ।
(५) स्मृतिनयनपूर्वकरोदनं ।

एवं स्वगोष्ठमहिवेष्टविविक्षु[१]वीक्ष्य
सस्त्रीकुमारमतिदुःखितमात्महेतोः ।
कृष्णः सरोषविततानङ्गतया तदङ्गं
छिन्दन् श्लथं विदधदाशु वलादुदस्थात् ॥

तदेवं कृष्णस्योत्थानमेव कालियस्य व्युत्थानं[२] जातमिति सर्वोऽपि जहर्ष ॥

यथा ॥

तदा मुदा कलकलगर्जितैर्जितं[३]
व्रजौकसां शिशुसवयोजराजुषाम् ।
दिवौकसां कुसुमजवृष्टिसृष्टियु-
ग्जयध्वनिध्वनियुततूर्यलङ्घिभिः ॥

ततश्च समुत्तेजितत[४]त्तेजोभिरुद्वेजितचित्तः कुण्ठतावगुण्ठितोत्कण्ठतया दूरत एवोत्कण्ठतया[५] तिष्ठन्मूढधीरसौ गूढपात् प्ररूढक्रोधः स्वबोधरोधतस्तं प्रतिद्रोग्धुमुद्यतः सन्नुद्धतवुद्धिस्थूत्कार-फुत्कारदृष्टिवार[६] कृतकूटं कालकूटं प्रकटीकुर्व्वन्

(१) अहिवेष्टे प्रवेष्टुमिच्छुः ।
(२) उत्थानं पौरुषे तन्त्रे सन्निविष्टो समेऽपि च । व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च ।
(३) सर्वोत्कर्षेण वृत्तं । (४) कृष्ण ।
(५) उत्ग्रीवतया । (६) समूहः । विषानल ।

गिरिकूटायमानः कर्त्तव्यविह्वलतया जिह्वाद्वयसमुदयेन मुहुः क्ष्वेडवाडव[1]पक्कसृक्किणीद्वयसमुदयलेहमाह्विजिह्वलेलिहानाद्याह्वयोऽस्मीत्युट्टङ्कनेन घटयितुकामः सर्व्वतो दृष्टवपुर्बभूव ॥

ततश्चाखण्डाहितुण्डिक[2] विद्यापण्डितवदुच्चण्डतया[3] स कण्ठतुण्डावगुण्ठनाय सदर्पमभितः सर्पति सर्पाशन[4]वाहने सर्पोऽयमपि शिरोभिः कृतपरिसर्पः सर्प[5]वदेवापसर्पन्नुपसर्पंश्च जिह्मगवदेव जिह्मं गच्छंश्च परितो बभ्राम शश्राम च ॥

तदेव महीन[6] महिनं[7] प्रतिसांयुगीनता[8]रतोऽपि चिरतो लब्धच्छिद्रतयाभिद्रवन्नेव तदीयसमग्रग्रीवाग्रगण्यमूलनालमेव बलानुजन्मावलादवजग्राह निजग्राह च ॥

ततश्च ॥

विवशाङ्गसङ्गे तस्मिन्नुरङ्गमे तु ॥

उद्यद्रत्नचितेषु पुष्टनिटिल[9] प्रस्थेषु रङ्गश्रिया
शस्तेषु स्फुटनृत्यकृत्यकलनालोभेन शोभेक्षणः ।

(१) विषानल ।  (२) व्यालग्राह्यहितुण्डिकः ।
(३) उच्चण्डं च विलम्बितं ।  (४) गरुड ।
(५) परिसर्पः परिक्रियेत्यमरः समन्तात् परिसर्पणमितिक्षीरः ।
(६) अनल्पं ।  (७) अहीश्वरं ।
(८) सांयुगीनो रणे साधुः ।  (९) शिरः ।

द्योविद्योतनवाद्यगीतकलया संहाय[१] साहायकं
श्रीकृष्णास्तदुपर्य्युदप्लुतमुदामुच्चैरुदारच्छविः ॥

ततश्च ॥

पुनर्व्रजः स्फुटमुखविस्मयारव-
प्लवश्रिया स्पृशदमरव्रजं दिवि ।
असौ[२]च तं[३]भुवि वत यत्र चोभयोः
प्रतिध्वनिध्वनिविभिदा न तर्किता ॥

ततश्च ॥

शश्वद्दर्वदपर्वशर्वडमरुस्वर्वाद्यसर्वाद्यतां
विन्दन् कुण्डलि-दण्डनाय रभसादुद्दण्डसत्ताण्डवः ।
आराद्घूर्णितमूर्द्धितं भुजगराड्मूर्द्धानमुन्मर्दयन्
क्रोध[४] द्रोधकुतूहलाद्धरिरिहानर्त्ते[५]ननर्त्त स्फुटम् ॥

अथ ॥

जयज्जयजयारवाः कुसुमवृष्टिसृष्टिप्रथाः
स्फुरत्पुलकपालयः प्रथितशर्मघर्माश्रवः ।
भुजङ्गशिरसीशितुस्तदनुकृत्यनृत्यं सुरा
भवाम्वुजभवादयः प्रमदगर्जमार्जन्मुहुः[६]

---

(१) सङ्गत्य । (२) अमरव्रजः । (३) व्रजं ।
(४) क्रोधइवाचरत् ।
(५) आनर्त्तः समरे नृत्ये स्थाननीवृद्विशेषयोः ।
(६) उपार्जितवन्तः ।

सर्पस्थाननजालकूटघटनादुत्थानमात्मायुषा
निर्मञ्छयाग्रनखस्य तस्य नटनं तन्मूर्द्धि चात्यद्भुतम् ।
दृष्ट्वा श्रीव्रजराजतत्प्रणयिणीमुख्या व्रजप्राणिनो
नेत्रं गात्रमपि प्रफुल्लमभजन्मन्ये जगद्व्याप्तये ॥

मूर्द्धश्रेण्यां तस्य शून्ये च कृष्णो
नृत्यं कुर्व्वाणे तु चित्रं तदासीत् ।
तेन क्रोधान्मस्तकं यद्युदस्तं(१)
तत्रानेन प्रापिता ताललत्ता(२) ॥

मुखैरुधिरमुद्वमन् गरलमुद्गिरन्नर्च्चिभिः
स्खलन्मणिकमस्तकस्थिततदङ्घ्रिचिह्नव्रणः ॥
श्लथाङ्गकतया जहद्दनुजसङ्घजिद्रङ्गतां(३)
अलोकयत निजाङ्गनावलिभिरेष कालीयकः ॥

ततश्चासावुपस्कीर्ण(४) विकीर्णमूर्त्या(५) स्वपौरुषा
पूर्त्यानन्यगतितास्फूर्त्या तत्कारणककारण(६)-
निवारणाय तं नारायणमेव मत्वा शरणममन्यत ॥

तदङ्गनाश्च ।—

न तावदार्द्रत्वमभूदमूषां वहिर्मुखत्वं यदघध्यमुष्य ।

---

(१) ऊर्द्धीकृत्य ।　(२) लत्तापादप्रहारः स्यात् ।
(३) नृत्यभूमितां ।　(४) छिन्न ।　(५) विक्षिप्त ।
(६) कारणातीव्रयातना ।

दृष्टे तु भक्त्यङ्कुरजन्मनि स्फुटं कृष्णां गतिं जग्मु-
रमूस्तदर्थम् ॥

काश्चित्कुमारानत्यर्थवालान् काश्चन तास्तदा
काश्चिदण्डानि पुरतस्तस्य न्यस्य व्यनंसिषुः[(१)] ।

हसति च भक्तसान्त्वनतृष्णो कृष्णो तास्तु वहुधा-
स्तववुधा मुदाकुला पृदाकु[(२)]पत्न्यः सकाकु विज्ञा-
पयामासुः । तत्र संक्षेपनिपेक्षपश्चायम् ॥

अस्त्येष स्फुरदमतिः सदर्प[(३)]सर्प-
स्त्वं विष्वग्विदसि तथा कृताम्बुराशिः ।
अस्मासु त्वदनुगतास्त्वमुष्य पत्नी
भावश्चेदजनि यथायथं विधेहि ॥

दण्डन्ते विदधतु ये स्वसङ्गमात्राद्
दुष्टत्वं प्रशमयितुं न शक्नुवन्ति ।
त्वत्स्पर्शाज्झटिति हृदोऽपि सोऽयमौज्झत्
क्ष्वेडत्वं वलवदितीह नः समक्षम् ॥

मूर्खत्वं न इदमनुग्रहेऽपि यस्मा-
त्वत्सृष्टे स्फुटमिह भाति दण्डबुद्धिः ।
दण्ड्यश्चेदममुपरै[(४)]रदण्डयिष्य-
स्तं[(५)] कर्त्तुं कथमदधाः पदारविन्दम् ॥

---

(१) प्रणामं चक्रुः । (२) नाग । (३) दर्पेण सह ।
(४) पदारविन्दात् अन्यैः । (५) दण्डं ।

सत्पुण्यैरिह खलु कैस्तवाङ्घ्रिपद्म-
स्पर्शो यं परिवलते भुजङ्गराज ।
दुष्पापैरपि बत कैरमुष्य देहः
स्तद्वारं द्रुतमृतिलम्भनाय वेत्ति ॥

तस्मात् ॥—

शीर्षच्छेद्यस्य[1] यः कृष्णः शीर्ष्णा कालीयभोगिनः ॥
अन्वगृह्णात्पदन्यासाच्चिह्नश्रेणयामतिः स नः ॥

अथ हीने तस्मिन्नहीने[2] सदयं तदनुमोदमानः क्रोधं विनयमानः[3] कृतयशोदायशोदानः स्वाङ्घ्रि-सङ्घट्टनत्रुटितात्कालीय-किरीटिलाद्भवतीर्य नाति प्रकटितवीर्यस्तस्यावास्त्रक्रान्तया[4] स्थितस्तस्मि न्गणाकतिपयं करुणाम्रेड्रणात्तयावतस्थे ॥

अथ वनमालीं कालिन्दीसमुद्रामिव कालीयो हृदयं दायति[5] स्म । तदा सोऽपि लीयमानकोपतया तदीयरोषं शोषितमकरोत् । वलिताञ्जलिकरो दर्वीकरो विज्ञापयामासच । यद्यपि वृजिन[6] गामिनो मम वृजिन[7] मेव स्वभावस्तथापि तु ॥

---

(१) वध्यः। शीर्षच्छेद इमौ। शीर्षच्छेद मर्हतीति।
(२) अहीश्वरे। (३) खण्डयन्। (४) मन्दमुखतया।
(५) दृष्ट्वान्।
(६) कुटिल। (७) अपराधं।

गुणो वा दोषो वा भवति मयि यः कृष्ण ! स भव-
द्वशस्थायी नित्यं मम तु कृतिसाध्यं किमपरं ।
त्वदङ्घ्रिद्वन्द्वस्याश्रयणमिति चेत्तच्च शिरसि
त्वया मे विन्यस्तं मम तु कृतिसाध्यं किमपरम् ॥

तस्मात्कामपि दिशं स्वयमेव मामादिश ।

अथ स च सदेश[१] रूपमिदमादिदेश । अहि-
पते ! त्यक्तदौर्जन्यतया धन्यस्यापि तव यस्माद-
हिता[२] स्वयं जगदहिता तस्मात् ॥

नात्र स्थेयं त्वया सर्प ! समुद्रं याहि मा चिरम् ।
त्वं ज्ञात्यपत्यदाराढ्यो गोनृभिर्भुज्यतां नदी ॥

द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः ।
यद्भयात्स सुपर्णस्त्वां नाद्यान्मत्पादलाञ्छितम् ॥

रेफं विसृष्टं[३] निर्मायादवसाने पदान्तगम् ।
इति शासनविज्ञानां मतमेव मतं मम ॥

अधुना कालिय ! यस्मा,न्मत्पदकृतलक्षणस्त्वमसि ।
तदमुत्र च सम्भाविता मत्पदकृतलक्षणः[४]सभवान् ॥

---

(१) न्याय्य । (२) सर्पत्वं ।

(३) रवर्णो पुंसि रेफः स्यात् कुत्सिते वाच्यलिङ्गकः । पक्षे विसर्गं । पक्षे परवर्णाभावं । पक्षे सुप्तिङन्तं पदं । पक्षे शास्त्रं ।

(४) गुणः प्रतीते तु कृतलक्षणौ हेतुलक्षणौ । मत्पादेमदीयपरम-धाम्नि कृतलक्षणो यः तथाभूतस्त्वमागन्तासि ।

अथ दण्डवदेव पतितः कुण्डलिपतिस्तेन[१] नखरसुधाकराकरकरसरसिरुहं शिरसि निधाय सुधासिक्ततनुतया नीरुग्निरमायि ॥

एतदनन्तरलीला "तं पूजयामासे"त्यादिकं श्रीशुक-वचनमनूद्य "महत्वं चे"त्यादिना विशद्यते ।

"तं पूजयामास मुदा नागपत्न्यश्च सादरम् ।
दिव्याम्वरस्रङ्मणिभिः परार्ध्यैरपि भूषणैः ॥
दिव्यगन्धानुलेपैश्च महत्योत्पलमालया ।
पूजयित्वा जगन्नाथं प्रसाद्य गरुड़ध्वजम् ॥
ततः प्रीतोऽभ्यनुज्ञातः परिक्रम्याभिवन्द्य तम् ।
सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह ।
तदैव सामृतजला यमुना निर्विषाभवत् ॥
कृष्णं ह्रदाद्विनिष्क्रान्तं दिव्यस्रग्गन्धवाससम् ॥
महामणिगणाकीर्णं जाम्बूनदपरिष्कृतम् ।
उपलभ्योत्थिताः सर्व्वे लब्धप्राणा इवासवः" ॥इति॥

"महत्त्वं च परार्द्ध्यत्वं चात्र दिव्यत्वमुच्यते ।
दिव्यत्वं तेषु कृष्णस्याप्यङ्गे देदीप्यमानता ॥
अतोऽस्यामूनि नित्यानि स्थितान्यरुणजा-ह्रदे ।
तेषु कौस्तुभनामा तु मणिः कृष्णे विराजते ॥

---

(१) कृष्णेन ।

नक्षत्रेषु सदा पूर्णाचन्द्रवत्पूर्वपर्व्वते ।
जगन्नाथं च यत्प्राह तथा तं मकरध्वजम् ॥
तत्राश्चर्य्यं न चाचर्य्यं द्वारकायां हि विश्रुतम् ।
काद्रवेयस्य देवाभनानाशक्तिविधारिणः ॥
वर्त्मास्य सुखकर्म्मस्यादिति युक्त्यावगम्यते ।
अन्यत्तु जीवपीडाय तत्कथं कृष्णसम्मतम् ॥
वारिलीलापरामर्शः स्पर्शश्चाघरिपोर्यदा ।
तदैषामृततुल्यासीद्यमुनेत्यवगम्यते ॥
कृष्णस्याक्लिन्नवेशत्वं कालीयेनोपवाहनः ।
अकस्मादर्शनं यत्तन्नागालिपरिवारितः ॥
तस्मात् "कृष्णं हृदा" दित्याद्युक्तं युक्तं प्रकाशते" ॥ इति ॥

तन्निर्वर्णने विशेषस्तु वर्ण्यते ॥

कोलाहलस्वरितता विवशाङ्गचर्य्या
कम्पस्खलद्वचनता स्रवदस्रता च ।
वीत्त्वादितृप्तिपरिहानिरिति व्रजस्थाः
सौख्येऽपि दुःखमगमन् प्रतिलभ्य कृष्णम् ॥
आगतोऽयमिति केवलं मुदा
स्फूर्त्तिपूर्त्तिरभवद्व्रजौकसाम् ।
हन्त ! येन न वपुर्न वा मनः
किञ्चिदञ्चितुमवाप शक्तताम् ॥

अहो ! यदि सत्यवचस[1]स्तेनावदिष्यंस्तदा तदिदं वा कः प्रतीयात् ? । यत्खलु गावश्च मृगाश्च तदागमनं मृगयमाणा व्रजजने चाभेदमाययुः । यच्च नगा अपि तद्दुःखतः शुष्कचराः सम्प्रति पुष्कल[2]सुखात्तत्कालकलितपल्लवादिभिः प्रफुल्ला वभूवुरिति ॥

तत्र च ॥

सुहृल्लोका ये ये सुररिपुजिता यर्हि मिलिता-
स्तदा सत्यं सर्व्वे समयुरभितः प्रीतिमतुलाम् ।
यदा तु श्रीमाता सपदि मिलिता प्रेमविवशा
तदास्तां तद्वार्त्ता सकलजनतागाद्द्रवदशाम् ॥

अथ रामं स्वीयप्रभावभावनारामतायामप्यन्तर्व्रजजनदुःखतः शुष्कं तादृशतायामपि वहिर्लम्भितगम्भीरताभृदुपालम्भसम्भवद्विकाशहासं हसन्नेव नमस्कुर्व्वन्नात्मन्यालिङ्गनं लम्भयंश्च चिरं तदुत्सङ्गसङ्गी वभूव ॥

अथ तत्र जनानां विमर्शः ।—

हरेरेषा प्राप्तिर्य्यदि भवति निद्रावकलिता
तदा शोकोऽप्येषः स्वयमयति तत्रैव तुलनाम् ।

(१) ऋषयः सत्यवचसः ।　　(२) प्रचुर ।

असौ जाग्रद्भूता स्फुरति यदि वा तर्हि नितरा-
मभीष्टं सम्पन्नं कथमपि न शर्म्मप्रतिहृतिः ॥

अथ सर्व्वत एव निध्यानाय(१) नष्टनिध्या(२)-मिवत् कृष्णां मध्ये निधाय परितश्चरितनिवेशेषु परिधिवेशेषु खर्व्वितव्रीडेषु व्योमचारिणां लोचना-क्रोडेषु सर्व्वेषु स्त्रीपुंसानां खर्व्वेषु प्रथमप्रथित-भाविभविका(३) ब्रह्मविदः सम्प्रत्यपि तं प्रत्याशिषां कृतदाना व्रजपतिं प्रत्युपालम्भमानाः प्रत्याययामासुः ॥

यथा ॥

श्रीनन्दराजतनयस्तव सर्व्वशत्रु-
मर्द्दीत्यभाषि मुहुरप्यलमस्मकाभिः ।
प्रेम्णा तथापि निखिलं वत हन्तुमैच्छः
पुण्येन केवलमसौ द्रुतमाजगाम ॥ इति ॥

तदेवं शोकेन हर्षेण कालमजानाति व्रजलोके रजनिरजनीति तत्रैव क्षुत्तृष्णातिक्रमिकृष्णाति-क्रमखेदेन कृशतां गताः प्रत्यूषं यावदूषुः । तत्र च सर्व्वामेव शर्वरीं व्रजोर्वीश-पत्नी सपत्नशङ्कया सुत-मङ्क एव निवेशयन्ती परमावेशेन मुहुरपि

---

(१) दर्शनाय ।　　(२) धन ।　　(३) मङ्गल ।

मेव च मन्यामहे । यतो वयमपि निर्व्वासनतां[१] गताः । तस्मादधुना तथाविधेयं यथास्मदीयानां नापचारस्तस्य चापकारः स्यादिति ॥

तदानीमेव चान्यतः[२] स व्रजराजात्मजव्रजवासिनां तरणिजातीर एव वासमाकर्णयन्नभ्यर्णं गतानाज्ञापयामास ॥

भवन्तस्तत्र प्रविशन्तः समन्ततः प्रवलतया ज्वलनं प्रज्वलनमाचरन्तः स्वयमन्तर्धानमाचरन्तु ॥

ततश्च तेषु तथाकृतचरितेषु विपोलति[३] तु दवानले शीघ्रं पलायितेषु तेषु च सर्व्व एव व्रजभवना स्नेहवृत्तलब्धसम्भावनाः साग्रजं व्रजराजतनूजमेवाव्रज्य विज्ञापयामासुः ॥

शङ्कामहे न मृत्योश्च न च कृच्छ्र-प्रवाहतः ।
किन्तु त्वन्मुखचन्द्रांशु-दर्शनाभाववैशसात् ॥

ततश्च ॥

हरेः फूत्कारमात्रेण निर्व्ववौ दवदीपकः ।
उत्प्रेक्षन्ते तु मुनयस्तस्य तत्पानकर्त्तृताम् ॥

---

(१) वासनाराहित्यं । (२) दूतात् ।
(३) पुलमहत्वे ।

तदेवमाहितेन य उपाहित[१] उपाहित[२]स्तस्मिन्नपवाहिते[३] सर्व्व एव त्राण[४]प्राणाः प्रभाते च प्रभाते तत्प्रभावत एव यथावास्थितं व्रजं व्रजवासिनः सानन्दं तमन्वाविन्दत । किन्तु तस्मिन्नेव मधुरताकलिले कालिन्दी-ह्रदसलिले सङ्कर्षणेन कृतकृष्णाकर्षणेन विहरता सखिभिरखिलं सह-धवलाव्रजं व्रजमपि समाहरता यदा वहलं कुतूहलं जातं तदा तेन गृहाय गमनमनुज्ञातं ॥

तथा च गमनं यथा ।—

वाद्यैर्नृत्यैः प्रगीतैः श्रुतिशिवपठनै-
र्दिव्यभौमप्रसून-
प्रावृट्कल्पाभिवर्षैर्जय-जय-निनदैः
शर्म्मकोलाहलैश्च ।
कृष्णं मध्ये विधाय प्रकटतरमहा-
नन्दनिर्व्रीडभावा-
न्नृत्यन्तस्ते व्रजस्था व्रजमभिविविशुः
खं यथा ज्योतिरोघाः[५] ॥

(१) अग्न्युत्पात उपाहितः । (२) अर्पितः ।
(३) दूरीकृते । (४) त्रात ।
(५) समूहाः ।

तदनन्तरञ्च धवलाः परतश्चालयित्वा तत्पूर्व्व-कालपालकासद्भावेऽपि श्रीमतां तत्र भवतामेषां प्रभावेण तत्रोदपात्रमात्रं न विकल्पमागादिति स्वल्प परिभवायाप्यकल्पमाने समस्तव्रजे यात-याममपि[१]यातयामतां[२]नागतं तद्घृतपक्वप्रचु-रान्नमिति सद्यस्तनमिव राम-पर्व्वणि पूर्व्वाह्नेतनं गृहान्तः संगृहीतजेमनसामग्री-समुदयं सर्व्व एव तावग्रजानुजाग्रतो निधायाव्यग्रं सम्यगग्रसया मासुः॥

तदेव मुद्घटितगीःकण्ठः स मधुकण्ठः समाप-यामास॥

ईदृशस्तनयो जातस्तव व्रजनराधिप!।
कंसादीन् दमयामास कालीय-दमनेन यः॥

तदेवं तरीयमाणेन[३] हरिणा वरीयसा व्रजपरी-वारेण सरिताविवातरीषातां ते आपदाविति सुख-दवृत्ते वृत्ते सभ्यानां तल्लीलासमाधेरभ्यवकर्षणाय स्तवनामृतवर्षणाय च साञ्जलिस्थितयोस्तयो-

---

(१) याता यामा यस्य तद्रूपमपि।
(२) शीर्णं च परिमुक्तं च यातयाममिदं द्वयं।
(३) तरी नौका।

श्चिराद्बहिरवहितत्तदुपसेवाः पूर्व्ववदेव सव्रजदेवाः सर्व्वे स्वं स्वं कार्य्यमासेदुः ॥

इति श्रीगोपालचम्पूमनु कालीयदवचण्डता-
दण्डनं नाम त्रयोदशं पूरणम् ॥
बाल्यविलासश्च पूर्णः ।

ॐ श्रीगोपीजनवल्लभाय नमः ॥

# चतुर्दशं पूरणम् ।

श्रीकृष्ण ! कृष्णचैतन्य ! ससनातनरूपक ! ।
गोपाल ! रघुनाथाप्त ! व्रजवल्लभ ! पाहि माम् ॥

तदेवं गोलोकविलासे श्रीगोपालपाल्यमान गोपालानां नित्यलोकः श्रीगोलोकः कथितः ॥

तत्र(१) च श्रीगोपराजसभायामपूर्व्ववीक्षित कविक्षितिपति(२)-कुमारसुकुमारकुमार(३)युगलावकलनमुद्रावितम् तदनन्तरमपि वाल्यविलासे ॥

तद्युगलकृतकृष्णवाल्यचरितवर्णनं कालियदलनलीलावसानमाचरितम् ॥

सम्प्रति तु तत्प्रथितं कैशोरचरितमाख्यायते ॥

तद्यथा ॥

अथ दिनान्तरे च पूर्व्ववदेव व्रजनरदेव-सभान्तरे तयोरेकतरः समुत्कण्ठतया स्निग्धकण्ठः स्वगतमिदमुवाच ।—

---

(१) गोलोके । (२) भूपतिः । (३) कौमारवयस्क ।

अथ कैशोरं वर्णनीयम् ॥

किन्तु रहस्यरसहारिप्रसभायां[१] सभायामस्यां यथालज्जा न सज्जा स्यात् तथा युज्यते ॥

यदि च जातु निज-माधुरीबुभुक्षितकुक्षिम्भरिणा हरिणा स्वकसुखावहमिति । रहस्तदनु युज्येवहि तदा तदुचितमेव तदुपचितमाचरिष्याव इति ॥

अथस्पष्टं तु व्याचष्ट ॥—

ततश्च स्पष्टं कृतगमायां षष्ठसमायां समुल्लासित-सन्मतिमये जन्मतिथिसमये हर्षसमृद्धिप्रदवर्ष वृद्धिपर्व्वणि सर्व्वनिःश्रेयसमाविस्तरां[२] विस्तार-यतः समस्तं निस्तारयतस्तस्य श्रीमद्व्रजराजसुतस्य विश्वेषामेव मनश्चोरं कैशोरमुदयाश्चक्रे ॥

तथाहि ॥

राज्यं सम्यगुपेत्य कृष्ण-वपुषि त्रैलोक्यलक्ष्मीमये
क्रीडाभिर्लघु निर्गमय्य समया नौदार्य्यपर्य्याकुलम् ।
पात्राय स्वयमागताय गुणितावासाय सद्वेदिने[३]
कैशोराय निजं प्रदाय विषयं पौगण्डमन्तर्द्दधे ॥

---

(१) प्रसभस्तु वलात्कारो हठोऽप्यस्खलितं छलं ।
(२) प्रकर्षातिशायि यथा स्यात् तथा ।
(३) उत्तमज्ञानयुक्ताय ।

तत्श्च ॥

दृष्टिप्रसादकृतसामभिरंशुदानै-
शश्वन्मनोहरणनिर्मितबुद्धिभेदैः ।
अर्थान्तरा[१]भिविनिवेशजभावदण्डैः
कैशोरकं[२] वशयति स्म हरेः समस्तं ॥

तत्र च ॥

मुखे पूर्त्तिः कान्तिर्नयनयुगले दैर्घ्यमरुण[३]-
प्रभा हृद्युच्छ्रायः प्रतीतिरपि मध्ये तु कृशता ।
इतीदं सौन्दर्य्यं यदवधि मनागप्यधिजगे[४]
जगन्नेत्र-श्रेणी[५] तदवधि हरौ तेन[६] चकृषे ॥

तदित्थं तज्ज्येष्ठश्च निर्दिष्टः ॥

तदा च तालफलपाकावसरे वर्षाप्रसरे कदाचिन्निनिखिलसुखवर्द्धनस्य गोवर्द्धनस्य गिरेराग्रय्यां हरिति हरिरामादयः सामोदा गाश्चारयन्तः सन्ति स्म ॥

ततश्च पूर्व्वानुभवसम्पाता[७]तीतं पूर्व्ववातानीतमतिदूरतः सजातीयपूर[८]धरं पक्किमतालफल-

(१) विषयान्तर ।　(२) कर्त्तृ ।
(३) आरुण्यं । गुणे शुक्लादयः पुंसीति ।
(४) गाङ्गतौ ।　(५) कर्तृपदं ।　(६) सौन्दर्य्येन ।
(७) सङ्गम ।　(८) प्रवाह ।

जातसौरभ्य-भरमुपलभ्य पूर्व्वत एव तत्कीर्त्ति-विवर्त्तितचित्ता व्रजवर्त्तिषु वित्ता[(१)]स्ते सर्व्वंसहायाः[(२)] स्पृहणीयाः सर्व्व एव तयोः सहायाः[(३)] हृदि स्पृहयाम्बभूवुः । रामकृष्णाभ्यां वलिता वयमित-श्चलिता रासभासर[(४)]राजभवनं तालवनं तत्पाल-गणमपि तथाविधं निभालयितुं नूतनकुतुकाः स्म । ततः स्ववुभुक्षासुक्षामता[(५)] लक्ष्य[(६)] विनोदादि-मौ विनुदामेति ते च श्रीदाम-सुवल-स्तोककृष्ण-शवला वल-कृष्णयोः समवला लब्धमर्माणः सधर्माण इत्यत एव शश्वदखिलतया[(७)] सखितया विराजन्ते । ययोरेव समं वीर्य्यमित्यादिकमीर्य्यत इति ॥

ततः सततमेव क्रमते[(८)] तत्पराक्रमे तेषां बुद्धि-क्रम इत्यकृत शङ्काशेषेण प्रणयविशेषेण जिघत्सा[(९)] मिषेण च तदर्थं भ्रातृवलं[(१०)] वलभद्रं प्रार्थया-मासुः ॥

---

(१) विदिताः । तत्रस्थप्राणिनामित्यर्थः ।
(२) पृथिव्याः । (३) सखायः ।
(४) आसरो राक्षसः । (५) कृशता ।
(६) व्याज । (७) अखण्डतया ।
(८) वर्त्तते । (९) क्षुत् । (१०) मत्वर्थे वलच् ।

यथा ॥

तालानां वनमत्रपंक्तिमफलं निर्हारि[१] पूरं यतः
सौरभ्यं बत दूरमेति तदिदं भोगं विना निष्फलं ।
श्रूयन्ते हि खरा नराशनकरास्तस्याधिपा इत्यदः[२]
श्रीरामायतदोर्युगार्पय तथा श्रीकृष्ण ! दुष्टापह ! ॥

आयतदोर्युगेत्यनेन च ध्वनितमिदं ॥

महाबाहुतया राम ! तर्कयसे त्वं च विक्रमी ।
न तथा लक्ष्यथाः[३] क्कापि लक्षणीय[४]स्तुसम्प्रति ॥

॥ इति ॥

श्रीरामस्तु सस्मितमुवाच ।—

भो भवन्तो ! लोभवन्तो भवन्तोऽप्यस्मत्तः प्रति[५] प्रतीयध्वे । यतो मुग्धानि युद्धाभिमुखैर्भ्रूभङ्ग-सूचितशौटीर्य्यसुखैः प्रभवद्भिर्भवद्भिः कदाचिदावा-मपि पराभवमासाद्यावहे । तत्कथमावामेव-याच्यावहे ॥

ते च प्रोचुः ।—

सर्व्वतोऽप्यति गुणवन्तौ भवन्तौ खल्वस्माकं सारौ राज-कुमारौ । राजनीति रीतिश्चैवमेव यद्राज-

---

(१) समाकर्षी तु निर्हारी ।   (२) अदो वनं कर्म्मभूतं ।
(३) न दृष्टस्त्वं ।   (४) द्रष्टव्यः ।
(५) प्रतियोगे पञ्चमी । अस्मत्तुल्यतयेत्यर्थः ।

कुलमेव व्रियते पुरस्क्रियते च । मृगयायां मृगताडनवन्नपुनरन्येन स्वयमग्रगण्येन भूयते । यदि तत्कुलं परमवीर्य्याकुलं भवति तदा तु किमुत तत्र चाग्रजतया भवतः सदा पाग्यूता(१)नाग्यूयते(२)। तस्माद्यद्यस्मादिच्छापूरणाय भवतोरिच्छा सङ्गच्छते । तदानान्यदनुमन्यतां ॥

तदेवं सह प्रहसिते शुभ्रांशुसिते कृष्णाग्रजे स्वयमग्रतो व्रजे सिंहनादमाददाना दामोदरादयः सामोदं तदनुप्लवाः(३) प्लवमानतया(४) तद्वनाय तदवस्था एव प्रतस्थिरे । गास्तु स्वस्थान एव स्थापयामासुः ॥

प्रस्थाय च रामं ॥

सोपालम्भमिवावदंस्तमनु तद्वाहू च मित्राणि यत्तेन द्राक् स च सेर्ष्यचित्तमिव तां गत्वा तु तालावलिं ।
सर्व्वामेव भुजायुगेन युगपद्विक्षिप्य सङ्घट्टयन्
विभ्रष्टानि मिथः फलानि विदधे घृष्टानि
दिग्दन्तिवत् ॥

---

(१) दीनता । अपाग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने ।

(२) न समीचीनेत्यर्थः ।

(३) तत्सहायाः । अनुप्लवः सहायश्चानुचरोऽभिचरःसमाः ।

(४) प्लुतगत्या ।

तज्ज्ञात्वास्रप[१]रासभाश्च परितः

साक्रन्द[२]मभ्याययु-

र्यान् दृष्ट्वा पशुपाः समाधवबलाः

शश्वद्धसन्तः स्थिताः ।

हासावेशवशात्कृतानवहितिं प्रत्यकूपदाभ्यां बलं

वज्राभ्यामिव धेनुकस्तमनुदत्तच्चैष नाबुध्यत ॥

न ज्ञातवानपि यतः स तु तं प्रहारं

तेनातिरोषभरनास्ति[३] विवेकचर्य्यः ।

भूयः पराक् स्थिति[४] विनर्द्य विकीर्णलत्त[५]-

स्तेनाथ वत्सक इवारचि धेनुकाख्यः ॥

अथ ब्रह्माण्डमपि खण्डयितुं प्रचण्डतामण्डिता-

च्चण्डचण्डीश-शूलादप्युद्दण्डप्रहारेण बलभुज-

दण्डेन तालमण्डलमण्डलेश्वर-शिरसि चक्री[६]-

वच्छक्रारिर्विचकरे । तेन[७] च तालपरावरपरम्परासु

यः खलु निहित आवेगसंस्कारः प्रलयजात-

दुर्वारप्रभञ्जना[८]कारः स तु हिन्दोलयंस्तत्तदुपरिग-

मर्द्दमर्द्दमग्रियत्वप्रक्षिप्तमिव विक्षिप्तं विधाय

---

(१) राक्षस । (२) आक्रन्दो दारुणो रणो ।

(३) बहुव्रीहिरयं नास्तीत्यव्ययेन । (४) यथा स्यात्तथा ।

(५) विक्षिप्तपादप्रहारः ।

(६) गर्द्दभरूपो दैत्यः । (७) विकीर्णत्वेन । (८) वायु ।

प्रायः सर्व्वमेवाखर्व्वतालखर्व्वमयं तद्वनं निमेष मात्रेण वित्रोटयामास । यत्र स्वयं तु भवन्तु तृणराजाः खल्विमे तथापि तृणान्येवेति वलभद्र-श्चिन्तयामास च ॥

अथ तदनुगता देवविस्पर्द्धिनः परेऽप्यस्वरतया[१] गर्द्दभा गर्द्दन्तः[२] प्रतिघात्[३] प्रतिघातमाचरन्तः सहसा रुद्धाध्वानः सह युध्वानः पर्य्यागतास्तृण-वन्मताः परमानन्दारामरामकृष्णाभ्यां हसद्भ्यां विलसद्भ्यामेवाखव इवधृतासव एव तुच्छीकृत्य गृहीतपुच्छचरणास्तेषां तालभक्षणसौकर्य्यार्थ-मिवाधि मध्यमध्यं स्थिततृणक्ष्माप[४]त्युपरिक्षिप्र-मेव परिक्षिप्ताः क्षपित[५]जीविताः क्षितिनि-पतिताः सह निस्तल[६]तालफलैः केतव इव राहुभिर्दिनानि कानिचित्कंस-पक्षीयान् भीषयन्त ॥

रासभान् शमयितुः कियद्भवेत्
पौरुषं तदिति नावमन्यतां ।
यद्द्विषद्-पटली तदापि तौ
वाद्य-गीत-कुसुमैरसेवत ॥

---

(१) स्यादसौम्यस्वरोऽस्वर इत्यमरः ।
(२) गर्द्दभजातिशब्दं कुर्वाणाः । (३) प्रतिघः क्रोध इत्यमरः ।
(४) ताल । (५) दूरीकृत । (६) निस्तलं वर्त्तुलं ।

अथ हास सहितमुपजहास च सा[१]मघवत्-प्रधाना धेनुकमघजिदभिप्रायमभिप्रयती ॥

यथा ।—

अघासुरः कालियकद्रुजन्मा-
प्यसोढवीर्य्यं यदि नास्मदीयं ।
पुत्रीप्रमर्द्दिन् ! वत गर्दभ ! त्वं
कर्त्तुं कथं धार्ष्ट्यमियज्जगन्थ ॥

अथ सद्यः पितृवन[२]विलासतालवनवासरासभ-शवस्पृष्टानि तानि तालानि नतु तैः परामृष्टानि[३] न च तदीयतृणानि गावस्तर्णाविताः[४] किंतु तद्विसृष्टानि तानि केचिदितर एव मानवा गावश्च विगतसाध्वसाध्वतया[५] चिरं साध्वास्वादितवन्तः ॥

तदेवं नृजग्धं[६] तं सगणं क्रोधदग्धसूक्ष्मदेह-पर्य्यन्तमाचर्य्य श्रीमान् कृष्णस्तु साग्रजः सह सखिव्रजः पुरस्कृतधेनुर्वादितवेणुर्व्रजन् व्रजमाजगाम ॥

---

(१) दिविष्ठपठली ।

(२) श्मशानं स्यात् पितृवनमित्यमरः ।

(३) स्पृष्टानि ।　　(४) तृणुअदने उकारान्तो धातुः ।

(५) विगतसाध्वसा अध्वानो येषां तत्तया ।

(६) जग्धो नरो येन परनिपातः ।

यथा ।—

कमलदलविशाललोलनेत्रः
सखिजनगीतपवित्रचित्रकीर्त्तिः ।
सहवलमविशद्व्रजं सवेणु
क्वणितकलं कलयन्[१] व्रजेश-सूनुः ॥
तं गोरजश्छुरितकुन्तलवद्धमाल्य
सम्वद्धपिञ्छममलेक्षणचारुहासं ।
आनन्दिवेणुमनुगेडितपुण्यकीर्त्ति
गोप्यः सतृष्णनयनाः परितः समीयुः ॥

तदेतत्पर्य्यन्तमुदन्तं समुदन्तः[२] कथयित्वा तत्र च कृष्णमनश्चोरीणां नवकिशोरीणां तन्मुखविधु-दर्शनशातजातभ्रूभङ्गतरङ्गसङ्गतानुरागसागरगरिमाणमनुस्मृत्य विस्मृतसर्व्वेन्द्रियकृत्यः सवाष्प-कण्ठाः स्निग्धकण्ठस्तस्यां सभायां मुहूर्त्तद्वयं मूर्त्त[३]भावमेवाससाद ॥

श्रीमद्व्रजराजादयस्तु तदभिप्रायमजानानाः सदयतया तदीयसान्त्वविधये सावधाना नानाविध-विधानमाचरन्तः सर्व्वं एव चिन्तातुरा वभूवुः ॥

---

(१) कुर्व्वन् । (२) सहर्षान्तःकरणं यथास्यात् तथा ।
(३) मूर्च्छालो मूर्त्तमूर्च्छितौ ।

तत्तद्विधानस्य चाकिञ्चित्करतायामचिरतायां मधुकण्ठ एव तान् स्फुरदुत्कण्ठः सान्त्वितान् विधाय भ्रातुः सर्व्वेन्द्रियकुण्ठता-शान्तये तदानीन्तनव्रजराज्ञी सन्ततलालनसङ्गानमाततान ॥

यथा ।—

हरिणा हलिना सहरिपुदलिना । रजनी-मुख-
मनुजननी लालनमिति कलितं जितकलिना ॥ ध्रु ॥
निर्मञ्छननीराजनमार्जनवदनालोकनरचनम् ।
मर्द्दनमज्जनसम्वस्त्रणतः(१) पश्चात्(२) पुण्ड्रक-
सचनम् ॥
रसचययोजनभोजनपूरणसुरभितनीरास्वदनम् ।
अगुरुद्रवयुतिरथ ताम्बूलन्यदनं सुखसम्वदनम् ॥
सुकृतिजनं प्रतिशय्या-संस्कृतिसमनुज्ञामनुशयनम् ।
प्रियसखसङ्गतिमनुसेव्यनुगतिमनु च मुदामति
चयनम् ॥ इति ॥

तदेवमति परिचरितं । हरिचरितवर्णनं मधुररागनीरन्ध्रकर्णरन्ध्रं प्रविशदेव तं मूर्च्छामूर्च्छन्तमपि जागरयामास नामधेयमिव निद्रालब्धचिद्राहित्यं ॥

अथ स्वस्थावस्थतया कुण्ठता रहितस्तादृशगुण-

---

(१) वस्त्रेण समाच्छादनतः स च समवायेऽौचादिकः ।
(२) मर्द्दनादिकन्तु तया न कृतमितिभावः ।

महितः स्निग्धकण्ठः सवाष्पकण्ठमुवाच ।—

सोऽयं गोपालभूपालतनयस्तव निर्दयः ।
मुग्धं च मद्विधं मुग्धं करोति स्वैरलीलया ॥

तदेवं वृत्ते निवृत्ते सर्व्वत्र च व्रजजने गृहवर्त्मानुवृत्ते नित्यवदेव व्रजमहेन्द्रतनूजस्तौ सूतराजतनूजौ सङ्गत एव निनाय । नीत्वा च तयोरात्मना तृतीयः सन् प्रसङ्गतः प्रच्छन्नतया पप्रच्छ ।—

कथयतं कथमेतावान् कस्मान्मूर्च्छावेशः क्लेश इव परामृष्ट इति ॥

उभौ तु सगद्गदं जगदतुः ।—

किम्ब्रूवहे भवन्त इव सर्व्वमनुभवन्तीति ॥

कृष्णश्च सतृष्णमुवाच ।—

जानीम एव केवलं न किन्तु तदानीं स्वयमपि नितरामाचराम तथापि तद्दर्शनमाकर्णयितु मिच्छामः ॥

तथाहि ।—

स्वयमपि यत् पुरु रचितं, तद्यदि हृद्यं तदा
सदाश्लाघ्यं ।
काव्यं निज सचितं य,त्तदिदं युवकां परस्परं
शृणुथः ॥

तस्मात् प्रथमं तावत् प्रेयसीगणाधिकाया राधिकाया विम्बोष्ठी-गोष्ठीमध्यमध्यास्य व्यस्यता[१] मेषा पटीयसी रसपरिपाटी ॥

उभौ सवाष्पतया परस्परं निरूपयन्तावूचतुः ।—

यदन्तर्यस्य सर्व्वं तत्तस्य जानात्यभीप्सितः[२] ।
स एव चेद्वसत्यन्तस्तत्तु जानीत कः परः ॥

कृष्णश्च सानन्दमुवाच ।—

तदद्य नक्तमेवानवद्या सेयं विद्या निवेद्यतामिति वाहुयुगं गृहीत्वा सखि-गोष्ठीमनु तावमूनीत्वा-वहलकुतूहलवेष्टितेन चेष्टितेन यावद्विरोचन निम्लोचनावसरं वासरं गमयामास ॥

इति श्रीगोपालचम्पूमनु गर्द्दभासुर-मर्द्दनं नाम चतुर्दशं पूरणम् ॥

———

(१) विस्तार्यतां ।
(२) यस्य अन्तःकरणे यद्वस्तु भवति तत् सर्वं तस्येप्सितो जनो । जानातीत्यन्वयः ।

# पञ्चदशं पूरणम् ।

अथ गोलोक-युवराजः सखिभिः सह राजमानः सायं प्रत्यवसाय भुक्त्वा मातुराज्ञामादाय वलित-प्रभायां गोपराज-सभायां प्रतिरजनीव जनित सर्व्वायतपर्व्वाकृताभिप्राये(१) प्रहरप्राये गुरूननु-ज्ञाप्य तदन्यान् प्रस्थाप्य महान्तःपुरं प्राप्य प्रसू-निदेश(२) मवाप्य सुवल-मधुमङ्गलादिभिरन्त-रङ्ग सङ्गिभिः सङ्गतः सूताङ्ग-जाताभ्यां च ताभ्या-मनुगतः प्राग्वर्णितगोकुलकमलपत्रस्थितं परम-सुखसत्रतया प्रमितं श्रीराधारामधाम जगाम ॥

अकस्मादागते च तस्मिन्(३) सस्मितक्रीडानर्म्म-जुषाममूषां सम्भ्रमभ्रमविस्मयस्मयत्रपापत्रपा(४)-दरादरहर्षतर्षादयस्ते भावा युगपदेव समुत्पन्नाश्चित्रीयमाणतां(५) चित्रायमाणता(६) मप्याचेरुः ॥

---

(१) कृत्यनुभवे । (२) मातुराज्ञा । (३) कृष्णे ।

(४) व्रीडा लज्जा सापत्रपान्यतः ।

(५) चित्रंकरोति चित्रीयते आश्चर्य्यकारितामित्यर्थः ।

(६) चित्रतुल्यतां ।

तत्र च ॥

अकस्मादायान्तं हरिमनुभवन्ती किल ह्रिया
दशामक्ष्णोर्नाना द्रुतमपिदधे[१] सानतमुखी ।
मुदा स्मेरा भुग्ना विकसितवती कुञ्चितवती
सत्राप्यास्तब्धाभाभवदिति समं या न घटते ॥

अथ प्रगुणा[२] गुणालङ्कृता किङ्करी-ततिर्विलास्ति-दघ्न[३]राङ्कवास्तरणेन तमतिविस्तीर्णं मणिकीर्णं मलिन्दमास्तीर्णं चक्रे । आस्तीर्णस्य च तस्य प्रतीचीप्रचितसुललिततूलिकायां प्राचीमुखतया स्वयं निविशमानः शुभ्रतारामचामरादिकराभिः सेव्यमानः श्रीराधाया वहिरपि विराजमानप्राणः पाणिना तामादाय स्वरसमिलिततदीयरसवेणी समाप्लवनजीवनानां श्रेणीकृतानामेणीदृशां गणा-ग्रदेशगततया वामदेशे निवेशयामास । दाक्षिणात-स्तु केवलतदीयनवतरुणिमावतारसमुचितसेवा-प्रकारकामनारामप्रथमवयसः सुबलादिसवयसः । यत्पङ्क्तिद्वयान्तिमसीम-मध्यगतौ तन्मिथुनाभि-मुखताभिरतौ तादृशप्रणयसुकुमारौ सूतकुमारौ

(१) आच्छादितवती ।　　(२) सरल ।
(३) उर्द्धप्रमाणं दघ्नट् ।

तस्थतुः । ययो रागतालादिसाहायकाय सखाय एव केचन सचन्ते स्म ॥

यौ खलु द्वयोरपि तयोः सवयसामावल्योरर्द्ध-मणिसरवल्ल्योरिवाग्रिमसीम-मध्यमधिकृत्य मिथः शोभाविनिमयशीलतया नीलपीतताविवेक व्यति-रेकमयमहानायकायमानं सर्व्वत्र प्रथितदृष्टि-प्रसादमपि मिथः समर्पितनेत्रत्रिभाग[1]रागं तन्मिथुनमवलोकयन्तौ द्वित्रक्षणं चित्रवदिवा-स्थिताषां ॥

ततश्च प्रहस्य नवघनश्यामेनादिश्यमानतया सावधानतां दधानावानन्दादुभावेव संहिताञ्जलि-करौ नान्दीकरौ[2] वभूवतुः ॥

तत्र वस्तु-निर्देशः ।—

इमौ गौरश्यामौ मनसि विपरीतौ वहिरपि
स्फुरत्तद्वद्वस्त्राविति वुधजनैर्निश्चितमिदं ।
स कोऽप्यच्छप्रेमा विलसदुभयस्फुर्त्तिकतया
दधन्मूर्त्तीभावं पृथगपृथगप्याविरुदभूत् ॥

---

(१) तृतीयो भागः कटाक्ष इत्यर्थः त्रिविष्टपवत् ।
(२) नान्दीवादी नान्दीकरः ।

अथ नमस्क्रिया ।—

श्रीरासां न तुलां बिभर्ति नितरा-
मित्युद्धवः कीर्त्तयन्
यासामङ्घ्रि-रजो ननाम हरिणा-
यः स्वेन तुल्यो मतः ।
तासां तत्प्रियता(१) सुधाकरतनुं
विष्वक् चकोरायिते-
नानेनानुगतां समस्तमहितां
वन्दामहे राधिकाम् ॥

अथाशीः ।—

प्रेमा यो ऽसौ राधिकाकृष्णयुग्मं(२)
स्वानन्देन प्लावयित्वा सखीश्च ।
शश्वद्विश्वं प्लावयन्सुप्रसिद्धः
सोऽयं वृद्धिं नः समिद्धां(३) करोतु ॥

इति परस्परं सवैलक्ष्यस्मितमीक्षित्वा स्थितयो-स्तयोः स्निग्धकण्ठः सोत्कण्ठमुवाच ॥

अथ श्रीकृष्ण-जन्मादि-माधुर्य्यवदेव श्रीराधिकायास्तत्तन्माधुरी वर्णनीयेति निर्णयेऽप्यति विस्तीर्णता-सङ्कोचनाय किञ्चिदेव सूचयिष्यामः ॥

---

(१) कृष्णप्रेम ।

(२) "प्रेमा यो ऽसौ कृष्णराधाभिधानौ" इति वा पाठः । (३) उद्दीप्तां ।

तत्र श्रीमद्भागवते खल्वेतदुद्भावितं ॥

ततः आरभ्य नन्दस्य व्रजः सर्व्वसमृद्धिमान् ।
हरेर्निवासात्म-गुणै रमा-क्रीडमभून्नृप ! ॥ इति ॥

तच्चैवं विशदयन्ति ।—

जन्मारभ्य हरेर्व्रजस्थलमभूद्विश्वर्द्धि(१)युक्तं पुन-
र्लक्ष्मीणां रमणास्पदं च तद(२) धिष्ठानाद्विशिष्याजनि ।
राधा यासु ललास पूर्णशशभृन्मूर्त्तीव तारासु सा
कान्तिः किन्त्विह चित्रभाववलिता या कृष्णपक्षा-
धिका ॥

बृहद्गौतमीयेऽप्येषा सर्व्वतो लब्धविशेषा प्रस्तू-
यते ॥

देवी कृष्णमयी प्रोक्ता राधिका परदेवता ।
सर्व्वलक्ष्मीमयी सर्व्वकान्तिः सम्मोहनी परेति ॥

अलंलक्ष्मीणा(३)मेतदानीनां लक्ष्मीणां जन्म
च श्रीमत्पर्जन्यमारभ्य धन्यतया लभ्यस्य पुरुष-
त्रयस्य परमातुलस्तोत्राणां मातुलगोत्राणां ये
खल्वामुष्यायणकुलता(४) निर्व्वन्धिनः(५) सम्बन्धि-

(१) सर्व्वसमृद्धि । (२) कृष्णस्य ।
(३) चतुर्थीतत्पुरुषः लक्ष्म्यै अलं अलंलक्ष्मः लक्ष्मीतोऽपिश्रेष्ठाः तासां ।
(४) प्रसिद्धवंशोद्भव । (५) दृढतायुक्ताः ।

स्तेभ्य एवेति मागधानामनुसन्धानं सपत्नीभूय यज्ञपत्नीस्त्यक्तवतस्तस्य तथाव्यक्तमर्य्यादता[१] न्यथा न पर्य्याप्तता[२] मापद्येत ॥

तदेवं स्थितेषु च श्रीराधिकायास्तु सर्व्वतोऽप्याढ्यकुलीनाद्वृषभानुतया लब्धख्यातिकान्महागोपपयोनिधेर्जन्म सम्मतं ॥

अत्र चोपगायन्ति ।—

सत्यं बहुसुतरत्ना, करतां स प्राप गोपदुग्धाब्धिः ।
किन्त्वमृतद्युति[३] राधा, लक्ष्मीजननादगात् पूर्त्तिं ॥

सा खलु श्रीकृष्णजन्मवर्षानन्तरवर्षे सर्व्वसुख सत्रे राधानाम्नि नक्षत्रे जातेति[४] राधाभिधीयते जन्मानन्तरं तस्याः सन्माधुरीचेयं ॥

कृतावलोकेन लोकेन कीदृगिति पृच्छतः प्रतिनिरूपिता ॥

नवेन्दुर्मूर्त्तिर्वा कमलमुकुलं[५] वक्त्रमथ वा
चकोरौ नेत्रे वा विसरदमृतं दृष्टिरथवा ।
अपीत्थं राधायां यदि जिततुलायां न वलते
विकल्पः किं तर्हि प्रसजतितरां तत्तदुपमा ॥

(१) व्यक्ता मर्य्यादा यत्र । (२) पूर्णतां ।
(३) अमृतमिव द्युतिर्यस्याः सा पक्षे अमृतद्युतिः चन्द्रः ।
(४) हेतोः । (५) कनक-कमलमिति वा पाठः ।

आस्तां तावदसौ व्रजलक्ष्मीणां परमलक्ष्मी रखिलाश्चता स्तथा वर्ण्यन्ते ॥

यथा ;—

हरिमनु विन्दति शश्व-
ल्लक्ष्मीरिति या तु सर्व्वतः ख्याता ।
तामपि किल गोपयितुं
गोपीसंज्ञा जयन्ति ता लक्ष्म्यः ॥

किञ्च ।—

कृष्णानुरूप[१] मव्यासां, वयोवृद्धिः समृद्ध्यति ।
यथा चन्द्रमसः पुष्टिस्तथा तस्य रुचामपि ॥

तत्र कौमार मध्यमध्यासीनायां श्रीराधिकायां तदानीन्तनानां केषाञ्चिन्नारीजनानामुत्प्रेक्षा । यथा ॥

पश्य पश्य ।—

अरुणितलघुशाटीखण्डकम्राधराङ्गी
श्रवणगलव[२]रन्ध्रप्रोतसुस्पर्शसूत्रा ।
रजसि निजसखीभिः क्रीडया लोलनेत्रा
मधुरिपुरतिवीजश्रीनिभा भाति राधा ॥

(१) यथास्यात्तथा ।

(२) लवलेश कणाणवइत्यमरः लूयते इति क्षीरनिरुक्तेः धर्मिणि । एवैते लवादित्रयं धर्ममात्रेऽपीतिसुभूतिः ।

केषाञ्चन पुनरेषा सविशेषा ॥
अपि रजसि विहारासङ्गिधीरानुरूप्या-
दजितकरगृहीतीभावमायाति राधा ॥ इति ॥

तदेवमीदृग्वयसि पर्य्यवसिते तदादीनां तासां सौन्दर्य्यसारस्यप्रचारः सर्व्वत एव प्रसर्पन्मातर पितरादिभिर्नापसर्पयितु[१] मीशाञ्चक्रे चिन्तयामास च ।—

न जानीमहे दुर्जनः कंसः किं सम्प्रति सम्प्रतिपत्स्यत[२] इति ॥

अथ प्रत्यहमेव प्रत्येकमन्तःपरस्परमिलिताः सन्तश्च ते सर्व्वे विचारितवन्तः । साम्प्रतमेव पात्रसात्कर्त्तुमेताः साम्प्रतं[३] । तत्राप्यासां श्रीमन्नन्दनन्दनादवरस्तु न वरतामर्हति । अवर एव हि सर्व्वः ॥

तथाहि ।—

कन्या धन्यतमा रमामपि जितां कुर्व्वन्त्यमूर्नन्दजः
स्वस्मादूनदशां रमारमणमप्यासादयन् दृश्यते ।
तस्मात्तुल्यतया स एव वरतामर्हत्यमूषां तद-
प्यास्तां धामसुहृत्प्रियात्मतनयप्राणा हि नस्तत्कृते ।

---

(१) दूरीकर्त्तुं ।　　(२) विचारयिष्यति ।　　(३) योग्यं ।

तत्र यद्यप्यधुना यज्ञसूत्रमलब्धवतस्तस्य न विवाहावसरः सम्भवति तथापि सज्जनसमाजमाचर्य्य भाषावन्धश्च सन्धातव्य इति ॥

तदेत्तद्विचार्य्य स्थितानां तेषां निश्चयावधारणापूर्व्वकं तन्निवारणां प्रति पूर्व्ववदेव वसुदेवमन्त्रणाया यन्त्रितविचारवर्गतयापि गर्गः सर्व्वदर्शतया[१] तदिदं परामर्श ।—

तल्लीलाक्रमः खल्वयं दुरत्ययतया मयासुगमः। तल्लीलाशक्ति प्रयुतानामस्माकं च तत्र प्रत्यग्व[२]दाचरणोऽपि नारदवन्न प्रत्यवायस्तथापि तथा प्रथनीयं यथा तासां[३] न प्रत्यवायः स्तादायत्यामिष्टप्राप्तिः स्यादखिलायत्यां पूर्णतदापत्तिश्च स्यादिति ॥

तदेवं विमृशन् स किल विलम्बमनवलम्बमानः श्रीमद्व्रजमाजगाम। आगम्य च तिजमुटजतटं सध्यानमध्यासीनां पौर्णमासीं प्रति जगाम। गत्वा च सर्व्वमेवेदं निवेद्य पुनर्निवेदयामास ॥

मयेदं तावत्कर्त्तव्यं। भवत्या तु तासां यथान्यत्र पत्यादिव्यवहारः सत्याय न कल्पते किन्तु लोक-

---

(१) सर्वज्ञतया। (२) प्रातिकूलवत्। (३) तास्विति वा पाठः।

प्रत्यायनमात्राय तथा व्यवहर्त्तव्यमिति ॥

तदेवं तां सम्भाष्य श्रीमद्व्रजराजसम्भाषणं विर्वाह्य वाह्यावरणवासिनामावासेषु वभ्राम । ते च तमागतमकस्मान्निशाम्य शाम्यच्चिन्तातमसः[१] स्व-स्व-मनोरथलब्धये लुब्धमनसः प्रणामादिभिः परिपूज्य कुशलमनुयुज्य प्रच्छन्नतया तमेवार्थं पप्रच्छुः । इदं तावच्छङ्कितं तत्र किं कर्त्तव्यमिति ॥

स तूवाच ।—

वयमिदं सर्व्वमपूर्व्वं पूर्व्वमपि जानीमहे । इदं च भवद्भिः सम्बध्य[२] मध्यवसितं । किन्त्वेकाशङ्का शङ्कु[३]रिव मंक्षु हृदि परिवर्त्तते । यदा भवदङ्गजाताङ्गनानां व्रजराजाङ्गजवरकुमारेण सह सङ्गमः स्यात्तदा नातिविलम्बतः सर्व्वस्यापि व्रजस्य तदीयचिरविप्रलम्भलम्भनं भविता किमुतामूषां ? ॥

किञ्च ॥

प्रौढतामूढवतीनां तु सहजतदनुरागस्वाभाव्येनादर्शनेऽप्युद्भवत्तत्स्फूर्त्तीनां न कोऽपि तस्माद्विनि-

(१) उद्वेगात् ।　　(२) योग्य ।　　(३) कील ।

वर्त्तनं कर्त्तुं समर्थः स्यादित्यपि कदर्थनान्तरं भविष्यति। तस्मान्नन्द-कुलावतंसात् कंसाच्च वञ्चयितुं चञ्चल[1]मेवान्येभ्यः सम्प्रदातव्या नव्याः कन्यकाः। तदेवमादिश्य प्रस्थिते यदु-पुरोहिते तत्कृतोपदेशोपजातदरो निज-निज-कन्यागोपनपरो गोपनिकरोऽपि तासां सम्प्रदानाय सम्प्रदानमन्वेष्टुं दुष्टु[2] चिन्तामवाप। किन्तु सन्ततमस्य सा लालसा तु नालसा जाता॥

तदेवमेतासां स्वतनयेन परिणायनं प्रति व्रजपतिजम्पती च पूर्व्वमतीव तीव्रस्पृहा गृहीतचित्ता वास्तां। विशेषतस्तु राधाया माधुर्य्यविशेषावधारणातः। किन्तु गर्गेण तद्वदेव निरस्तावित्यस्तमितप्रयत्नावभूतां॥

अनुतापस्तु तयो र्नापजगाम। तद्भ्रातृपर्य्यायाश्च तदेकानुगतिमर्य्यादया पर्य्याकुलास्तासां कन्यानां स्वपुत्रन्यासमन्यायं मन्यमानास्ततः पराङ्मूखा वभूवुः॥

किं वहुना? सर्व्व एव केवलस्नेहतस्तत्र कृष्णावरतायामेव जातेहतां[3] संहतवन्तः[4]समदृश्यन्त॥

(१) शीघ्रं। (२) दुष्टु सुष्टु प्रशंसने।
(३) जातेच्छतां। (४) प्राप्तवन्तः।

यतः ॥

योग्येन योग्यस्य तु नित्यसङ्गमः
कस्मै न रोचेत भृशं सचेतसे ।
रत्नेन हेम्नः शरदा सरोऽम्भसः
सिताख्यपक्षेण यथा सुधारुचः ॥

वरतासम्भावनाविषयाणां पितृवर्गश्च तादृगप्यनर्गलकर्णजप[१]लब्धसंसर्ग[२] गर्गवचन-सर्गत[३] एव भिन्नचित्ततामाप । पुत्रानप्यतिक्रम्य तत्र[४] स्थितानां कृष्ण एव हि सुखसत्रायते ॥

तदेवं ज्ञातरहस्योऽपि निर्णीतिर्नीतिप्रणीतये[५] रहसि व्रजराजमुपव्रज्य स च तत्पितृवर्गः प्रतिस्वमेव त[६]मर्थमर्थयामास ॥

आमुष्यकुलिका[७] कलिता[८]धन्याः खलु ताः कन्याः कृष्णान्यासत[९] एव सन्यायता मर्हन्ति । स यदि भवद्भिः स्वयमङ्गीक्रियते तदा भङ्गीभिः प्रसङ्गसङ्गीक्रियतामस्माभिरिति ॥

---

(१) सूचक ।　　(२) मिलन ।　　(३) सृष्टितः ।
(४) कृष्णे ।　　(५) करणाय ।
(६) कृष्णकर्तृकतत्तद्विवाहः ।
(७) प्रसिद्धकुलता ।　　(८) जाता ।
(९) अर्पणातः ।

व्रजराजस्तु तदाकर्णमाकर्ण्य सनिश्वासमिदं विवर्णतया वर्णितवान् ॥

अस्माभिः स्वपुत्राय सर्व्वथा न ते सम्वन्धाः सन्धातव्याः । किन्तु यूयमपीदं विदाङ्कुरुथ । यत् खलु युष्माकमपत्यानि युष्माकमिवास्माकं स्नेह सातत्य[१] वहानि समुद्वाहयितव्यानि । तस्मा दस्माभिरेव तत्र तत्र सत्रा[२] कुर्व्वद्भिः प्रयतनीयं ॥ तदेवं स्थगितसमुल्लासे निखिले च व्रजावासे व्रज-पत्यनुमत्यनुसारतस्तासां पितरस्तद्वितर[३]माचरितुं रुचिं विनापि वहिरुद्यममाचरितवन्तः ॥

तत्कुमार्य्यस्त्वतिवाल्यचर्य्यापर्य्याकुलतया न किञ्चिदपि चिदमत्रतां[४] निन्यिरे ॥

अथ या काचिद्वृन्दावन-गह्वरतः साक्षात् किल योगमायाया व्याजतस्तापस्यास्तत्र चाह्वयतः[५] पौर्णमास्याः समभ्यर्णमहार्द्दिवं प्रायः किमपि मन्त्रीयितु[६] मागन्त्री दृश्यते । या च मानुष्यपि देवीयमानेति वा देव्यपि मानुषीयमाणेति वा लक्षयितुं न शक्यते ॥

---

(१) नैरन्तर्य्यं । (२) साहाय्य । (३) दानं ।
(४) ज्ञानपात्रतां । (५) नामतः । (६) मन्त्रमाचरितुं ।

किन्तु सदानुकूलतया तद्वनपालितासिषाधयिषितकृष्णलीलता राधादिषु च परमस्नेहलता यस्यामनुमीयते । सा वृन्दारिकेति निजाख्यां प्रख्यापयन्त्यपि जनवृन्देन लाघवाद्वृन्देति स्वेनैव नाम्ना समाम्नायते । सा च सम्प्रति सर्व्वशोच्यतामयतद्वार्त्ता-श्रवणादतीवार्त्ता त[१]दभ्यासमेवाभ्याजगाम ॥

अभ्यागतामथ तां जयार्थमासीनापि पौर्णमासी तूर्णमुपव्रज्य नमस्कुर्व्वतीं परिष्वज्य शुभाशिषा च संयुज्य स्वच्छमनाः प्रपच्छ । कथ्यतां कथमसमयमिदं तव समागमनमिति ॥

वृन्दाह ।—

भगवति ! परमापदां पदमेकमुत्पन्नमस्ति कथं तव निश्चिन्तता दृश्यते ? ॥

पौर्णमासी उवाच ।—

किं तावच्चिन्ताकारणं तत्पदं[२] ? ।

वृन्दाह ।—

हन्त ! याः खलु नित्यतया कृष्णस्य प्रेयस्य इति श्रूयन्ते तासामप्यन्यसम्वन्धः सनिर्वन्ध इव दृश्यते ॥

---

(१) पौर्णमासी । (२) आपदाम्पदं ।

पौर्णमासी उवाच ।—

कथ मिवायं परामृश्यते ? ॥

वृन्दाह ।—

तस्यानुवन्धश्चक्षुषा स्पृश्यते ॥

पौर्णमासी उवाच ।—

न भविष्यति तासामन्येनान्येन संयोगसम्वन्धः । यतो मया हि मायया परा[१] निर्माय निर्म्मास्यते तत्र प्रतिवन्धः ॥

वृन्दाह ।—

अथ तथापि लोकतः कलङ्कः शङ्कनीयः ॥

पौर्णमासी उवाच ।—

न स्यादपि[२] तस्यापि स्थितिः यतो मुनयः पुनरिदं गास्यन्ति ॥

"नासूयन् खलु कृष्णाय मोहितास्तस्य मायया ।
मन्यमानाः स्व-पार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः" ॥ इति ॥

अतएव पुत्रोत्पत्त्यभावात् "पाययन्त्यः शिशून् पय", इत्यत्र शिशून् इत्येव पय इत्येव च वक्ष्यन्ति न तु

(१) अन्या ।
(२) इषदर्थेऽपिशब्दः अल्पमपि न स्यादित्यर्थः ।

सुतान् स्तनमिति । एतदपेक्षयैव क्वचित्पुत्रत्व-व्यपदेशश्च कृष्णपरिहासनिर्देशश्च सङ्गस्यते ॥

वृन्दाह ।—

यद्येवं तर्ह्यन्येन तासां पाणिपीडनं[1] पुनरतीव पीडनं । यत्र प्रायश्चित्तान्तरमपि न चिन्तयन्ति तन्त्र-विदः । तत्कथं साम्प्रतं स्वव्रतमुपेक्षसे ? ॥

पौर्णमासी सस्मितमुवाच ।—

भाविन्येतदपि न भावि, त्वया तु रम्याननतया गम्यतां ॥

वृन्दा सानन्दं पदारविन्दयोः पतन्ती सानुमोदं रुरोद ॥

सा तु तां निरवहित्थमुत्थाप्य सान्त्वयित्वा गहनाय प्रहापयामास ॥

अथ वृन्दापि तथा विश्वसती निश्वसती च वित्रास-रहिता द्वित्राहोरात्रान् गमयामास ॥

दिनान्तरे तु तासामुद्वाहनिर्वाहमाकर्ण्य विवर्ण-वदना पौर्णमास्यभ्यर्णं पुनरपि तूर्णमुपतस्थाना मृतकप्रतीका तस्थौ ॥

पौर्णमासी उवाच ।—

किमिव वृत्तं वृत्तं यस्माद्भवत्युद्वृत्तचित्ता[2] दृश्यते ? ॥

---

(१) विवाहः ।　　(२) उत्क्रान्तचित्ता ।

वृन्दाह ।—

मम मुखतः काचिदप्युक्तिर्न व्यक्तीभवति किमिव वक्तव्यं ? ॥

पौर्णमासी उवाच ।—

पङ्कजाक्षि ! न काचिदपि शङ्का मनसि सङ्करणीया ॥

वृन्दा सरूक्षहासमाह स्म ।—

भगवति ! कथमिव ?

पौर्णमासी उवाच ।—

यदद्याप्यसिद्धनिर्वाह एव तासां विवाहः ॥

वृन्दाह ।—

विचक्षणे ! तमेतं चाक्षुषमेव विधाय सर्व्वेऽप्याचक्षते[१] ॥

पौर्णमासी उवाच ।—

सम्प्रति ता बालिकाः कुत्र ?

वृन्दाह ।—

तदिदमपि श्रुतं । यदतिबालकतयावगताः पितृगेह एव ता निधाय ते गता इति ॥

---

(१) अभिदधतीति वा पाठः ।

पौर्णमासी सप्रणयरोषमुवाच ।—

अथ कथं मत्कथनं न प्रत्येषि यत्किम्वदन्तीमेव मुहूर्वदन्ती वर्त्तसे ? ॥

वृन्दा सानन्दमुवाच ।—

भगवति ! तदेतदनृतमनृत(१)मेव भवतु । किन्तु मया नायं सन्धिरनुसन्धीयते ॥

पौर्णमासी सहासमुवाच ।—

न लोकेनातथ्यं कथ्यते न च ग्रथ्यते स्म तासामुद्वाहवन्धः ॥

वृन्दाह ।—नेदं च वुध्ये ॥

पौर्णमासी उवाच ।—युक्तमेवेदं ॥

यतः ।—

त्वय्यपि लीलाशक्त्या, मवसरनाम्नी भवेद्विभोःशक्तिः ।
त्वामपि या भ्रमयन्ती, तस्मिंस्तस्मिन् प्रवर्त्तयति ॥

वृन्दा सकाकु प्राह ।—

तर्हि स्वयमेवेदं रहस्यं प्रकाश्यतां ? ॥

पौर्णमासी क्षणं हसित्वा नीचैरुवाच ।—

युगपदेव देवि ! सर्व्वेषु तादृग्दुःखप्न एव केवलं जागरकल्पतया मया कल्पितः ॥

---

(१) अमृतं स्वप्निग्रेनृतेऽइत्यमरः ।

वृन्दा विश्वस्य निश्वस्य च पुनरुवाच ।—

तथापि तासां तथा ख्यातिरपि न युक्ता ॥

पौर्णमासी उवाच ।—

सापि न भविष्यति । यतो मुनय एव पुनः पुनरिदं गास्यन्ति तत्र तापन्यां ताः पृच्छतीः प्रति दुर्वासाः; "स वो हि स्वामी भवती"ति । रासप्रसङ्गे च भगवान् वादरायणिः; "कृष्णावध्व" इति । उद्धव-सन्देशे स्वयं श्रीकृष्ण एव च; "वल्लव्यो मे मदात्मिका"इति । तदिदं "गच्छोद्धव ! व्रजं सौम्य ! पित्रोर्नः प्रीतिमावहे"ति वल्लवाभिमानितामात्मनि व्यज्य श्रीकृष्णस्य वचनं ब्राह्मणादीनां मम ब्राह्मणीत्यादिवत् । तथा "मामेव दयितं प्रेष्ठमात्मानं मनसा गता" इति प्रचुरं प्रचरतार्द्धपद्येन च ताभिरपि वहिर्दृष्ट्या परं तत्र क्वचिदुपपतित्वं प्रतीयते शश्वदन्तर्दृष्ट्या तु पतित्वमेवानुभूयत इति सूच्यते ॥

यथा च ।—

"अपि वत मधुपुर्य्यामार्य्यपुत्रोऽधुनास्त"इति ।

अथागमे च ।—

"मन्त्रं द्रष्टारः गोपीपदानन्तरं जनेत्यस्यान्ते वल्लभे"ति ।

तदिदं त्रिधा निरुक्तमप्यागमस्य रहस्यरीतितया क्रमात् पूर्व्वपूर्व्वपक्षस्य पूर्व्वपक्षत्वमुत्तरस्य तूत्तर-पक्षत्वं व्यञ्जितं ॥

यथा गौतमीयतन्त्रे ।—

"गोपीति प्रकृतिं विद्याज्जनस्तत्वसमूहकः
अनयोराश्रयो व्याप्त्या कारणत्वेन चेश्वरः ।
सान्द्रानन्दं परं ज्योतिर्वल्लभेन च कथ्यते
अथ वा गोपी प्रकृतिर्जनस्तदंश-मण्डलं ॥
अनयोर्वल्लभः प्रोक्तः स्वामी कृष्णाख्य ईश्वरः
कार्य्य-कारणयोरीशः श्रुतिभिस्तेन गीयते ॥
अनेकजन्मसिद्धानां गोपीनां पतिरेव वा
नन्दनन्दन इत्युक्तस्त्रैलोक्यानन्दवर्द्धनः" ॥ इति ॥

अत्र प्रथमा प्रकृतिः प्रधानं द्वितीया स्वरूप-शक्तिः । तत्वानि महदादीनि अंशाः ॥

"ज्ञान-शक्तिवलै-श्वर्य्य-वीर्य्य-तेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ इति ॥

विष्णुपुराणोक्ताः । "अनेकजन्मसिद्धाना"मिति "वहूनि मे व्यतीतानि जन्मानि तव चार्ज्जुने"ति श्रीभगवद्गीतावदनादित्वमेव वोधयति । "पतिरेवे"ति कदाचिदुपपतित्वव्यवहारस्तु मायिक एवेत्यर्थः ।

वा शब्दस्त्वस्यैवोत्तरपत्नता-वोधनाय। अतएवा-प्रकटलीलायां प्रकटमेव ब्रह्मसंहिता तथानुसंहि-तवती। यत्र ब्रह्मा प्राह।—

"आनन्दचिन्मयरसप्रतिभाविताभि-
स्ताभिर्य एव निजरूपतया कलाभिः।
गोलोक एव निवसत्यखिलात्मभूतो
गोविन्दमादिपुरुषं तमहं भजामि" ॥ इति ॥

अत्र कलात्वान्निजरूपत्वे स्वतःसिद्धेऽपि निज-रूपतयेति पुनरुपादानं? न तु प्रकटलीलामध्य-वत्परकीयाभासतयोपलक्षिताभिस्ताभि[१] रित्यर्थ-ज्ञापनार्थं ॥

तथा च तत्रैव।—

"श्रियः कान्ताः कान्तः परमपुरुषः"

इत्यत्र युक्तिं च दर्शितवान्। श्री-परमपुरुषयो-रौपपत्यं नास्तीति।

काशीखण्डे च धर्म्मराजः।—

"गोपीपते! यदुपते! वसुदेवसूनो"! इति।

सङ्गीतशास्त्रे च.।—

"गोपीपतिरनन्तोऽपि वंशध्वनि-वशङ्गत" इति।

---

(१) ताभिरिति बहुत्र नास्ति।

भविष्यत्काव्येषु श्रीगीतगोविन्दे।—

"पत्युर्मनःकीलित"मिति।

एतदभिप्रायेणैव लक्ष्म्यभेदेनोक्तं।—

"त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे
शङ्के सुन्दरि! कालकूटमपिवन्मूढो मृडानी-पतिः।
इत्थं पूर्व्वकथाभिरन्यमनसो विक्षिप्य वक्षोऽञ्चलं
राधायाः स्तनकोरकोपरिमिलन्नेत्रो हरिः पातु वः"
॥ इति ॥

अन्यत्र च।

"गोपीभर्त्तुः पदकमलयोर्दासदासानुदासः" ॥इति॥

भगवच्छङ्कराचार्य्यकृते यमुना-स्तोत्रे च।—

"विधेहि तस्य राधिकाधवाङ्घ्रिपङ्कजे रतिः"॥इति॥

ललितमाधवे श्रीराधिकादीनां तथावर्णनं तु स्फुटमेव निर्वर्णितं। उज्ज्वलनीलमणौ साक्षात् कथनया कुमारिकाणां साक्षादन्यसम्वन्धाभाव-प्रथनया परासामपि यदेव समृद्धिमदाख्यसम्भोगे ललितमाधवानुसारेण स्फुटमेवाङ्गीकृतमस्ति। भावार्थदीपिकायां च;"ऋषभस्य जगुः कृतानी"त्यत्र "ऋषभस्य पत्यु"रिति ॥

"कृष्णावध्व"इति स्वयमुक्तमिदमेव पतित्वं श्रीपरी-

च्चित्-प्रश्नोत्तरे पत्यन्तराभ्युपगमवादेनैव हि वहि-रङ्गाणां वोधाय परमात्मतयापि श्रीवादरायणिना वोधितं।

"गोपीनां तत्पतीनां च सर्व्वेषामपि देहिनां।
योन्तश्चरति सोऽध्यक्ष एष क्रीडनदेहभाक्॥

इत्यत्र। अन्तरङ्गान् प्रति त्वयमर्थः;-गोपीनां काश्चिदव्यूढाः काश्चिद्व्यूढा इति द्विधात्र लोकमात्र प्रसिद्धानां। वस्तुतस्तु नित्यसिद्धानां सर्व्वतः श्रेयसीनां तत्प्रेयसीनामन्यासामपि नानाभाव-समृद्धानां कुमारी-तरुणी-वृद्धानां तथा यथासम्भवं तासां पतीनां तदुपलक्षिततया कुमार-ततीनां, किं वहुना? सर्व्वेषामपि तदेकजीवानां व्रज-जीवानां यानि तत्तदुचितता[१] चिततदीय[२] क्रीडा साधनदेहानि तदासक्तः सन्नन्तःशब्दाभिहिते[३] महित्ते जगन्नेत्रादन्तर्हिते सदाभवे स्ववैभवे यश्चरति क्रीडति स एष एवाध्यक्षः कदाचिज्जगत्-प्रत्यक्षः सन् क्रीडति। तस्मान्निज-प्रेयसीभिः सममनादित एव मिथुनतेति कथनादौपपत्यमस्य

(१) तत्तद्योग्यताव्याप्त। (२) कृष्णसम्बन्धि।
(३) कथिते।

नोपपत्त्यर्हं किन्तु परमव्योमाधिपलक्ष्मी-नारायण-वद्दाम्पत्यमेव तदर्हं भवतीति । तदिदं "जयति जननिवास"इत्यादौ "व्रजपुरवनितानां वर्द्धयन् कामदेव"मिति पुरवनिताभिः सह तासां पाठाद्द्रष्टव्यं । श्रीमानुद्धव"स्त्वेताः परं तनुभृतो भुवि गोपवध्व", इत्यादावासामनुगतिं मुमुक्षुमुक्तमद्विधभक्ता"वाञ्छन्ती"त्युक्त्वा वृन्दावनचर्य्य इमाः क्व तदीदृशभावव्यभिचारदुष्टास्त्वन्ये क्वेति वदन्"कृष्णे परमात्मनि ह्येष रूढभाव"इति प्रत्यक्षतो दर्शयन्नासु माहात्म्यविशेषं दर्शयति । "नायं श्रियोऽङ्गे"त्यादौ श्रीप्रभृतिभ्यः पुनरपि विशेषयति च ॥

अथ सानन्दापि वृन्दा पुनः पप्रच्छ ।—

कथमीदृशी प्रक्रिया, नातिप्रिया नान्यथा क्रियते स्म भवत्या । भवत्याः खलु नाऽशक्यं तर्क्यते ॥

पौर्णमासी उवाच ।—

रसविशेषसम्पादयित्री लीलावश्यकतावसर वैचित्रीयं सीताया रावण-गृहगतिवन्नास्माभिरप्यन्यथा कर्त्तुं शक्यते ॥

रसविशेषश्चैवमेव सङ्गच्छते । भ्रमजनितत्वा-

दश्लीलता विश्लिष्टे[१] परसम्बन्धस्याभासमात्रे दृष्टे सति तासां परनिवारणाकुण्ठितानामुत्कण्ठावर्द्धनतः स्फुरदखर्वसुखगत्यां सर्व्वायत्यां विश्रान्तभ्रमनितान्तास्थिरतानिरतकान्तप्राप्तितस्तस्या[२]तीव दीप्तताप्राप्तिरिति ॥

तथा च भविष्यत्काव्येषु । श्रीमदुज्ज्वलनीलमणि-प्रमाणीकृतं प्राचां मतं, तत्र मूलं यथा ।—

"लघुत्वमत्र यत्प्रोक्तं तत्तु प्राकृतनायके ।
न कृष्णे रसनिर्यास-स्वादार्थमवतारिणि ॥ इति ॥

प्रमाणं यथा ।—

"नेष्टा यदङ्गिनिरसे कविभिः परोढा
तद्गोकुलाम्बुजदृशां कुलमन्तरेण ।
आशंसया रसविधेरवतारितानां
कंसारिणा रसिकमण्डल-शेखरेण" ॥ इति ॥

अत्र रसोत्कर्षस्य तर्षत एव "कंसारिणावतारितानां"मिति तासां नित्यं तन्निजप्रेयसीतया विहारस्तदवतार समय एव तु रसमयमहोत्कर्षाय मायया परोढाव्यवहार इत्यतो न दोषः प्रत्युत परमगुण एवेति भावः । इह चावतारितानामिति

(१) वियुक्ते । (२) रसविशेषस्य ।

देवीचरतां साधारणलक्ष्मीचरतां च न प्रचारयति । "नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः, स्वर्योषितां नलिनगन्धरुचां कुतोऽन्या" इत्यनेन विरोधात् । तेनैवान्यतमतान्यथा कारितया तदीयपरमलक्ष्मीत्वमेव तासां लक्ष्यत इति ॥

तदेवं च निरूप्य पुनरप्याह स्म ।—

तदीदृशं परमरहस्यमाकाशाय च न प्रकाशनीयं ।

किन्तु ।—

राधादीनां केवलानां(१) केवलो(२) नन्दनन्दनः ।
वरः स्यात्केवलं(३) तस्मात् केवलात्कुर्युरन्यथा ॥

यतः ।—

व्रजलक्ष्मीजनताया, हरिरिह रमणः परं न परः ।
कथमथ चकोरजाते, र्वृत्तिश्चन्द्राद्भवेदन्यः ॥

अथ वृन्दातु ।—

भवतु याथाकथाचं(४) यदिदमाचितं तदाचित-

---

(१) समस्तानां ।　　(२) एकः ।

(३) निर्णीतं निर्णीते केवलमिति त्रिलिङ्गत्वेककृत्स्नयोरित्यमरः ।

(४) तद्धितप्रयोगोऽयं अनादरेण कार्यमित्यर्थः यथाकथाचेत्यव्ययमनादरार्थं तस्माच्च तेन यथाकथाच हस्ताभ्यामिति णो विधीयते ।

मेव किन्त्वायत्यां सर्व्वसुखसमुत्थापनं भवद-भ्युत्थान[1]मेव गत्यन्तराय भवितेति प्रार्थ्य नमस्कृत्य च चलिता ॥

पौर्णमासी तु प्राह ।—

अवचमवोचमुवाच च, वच्मि हि वक्तास्मि
वक्ष्यामि ।

उच्यासमिदं वच्यां, वचानि नो चेदवक्ष्यं न ॥

तदेवं तासां खेलामात्रविलासिनीनां स्ववासि-नीनां[2] मातरपितरादिभिरन्तःपुर्य्यामसूर्य्यं-पश्यतया धुताकर्णनकृष्णावर्णनतया च परितः परीतं वारितानामपि दीप्यमानकैशोरसामीप्य-समिद्धः स्वभावसिद्धः कृष्णाभावः स्वयमुद्भूतवान् वारिदागमसमयं समया कासांचिद्वल्ली-जातीनां पल्लव इव ॥

यतः ।—

हृदयमनङ्गस्तासा,मविशद्वयसः क्रमादेव ।
श्यामाङ्गः स तु साङ्गं, विवेश सहसा ततः पूर्व्वं ॥

---

(१) अनुग्रह इत्यमरः ।
(२) चिरंटी तु स्ववासिनी विवाहानन्तरं पितृगृहवासिनी विवाहपूर्व्वं चेति क्षीरः ।

दृष्टान्तयन्ति चेदं ।—

आसीदासु हरेः स्फूर्त्तिर्दर्शनश्रवणे विना ।
यथान्तःपुररुद्धासु कन्यासु मदनोद्गमः ॥

अतएवोक्तं ।—

नव्ययौवनतः पूर्व्वं कृष्णे तासां तु या रतिः ।
तस्यां नातिशयोक्तिः सा स्वभावोक्तिस्तु मन्यतां ॥

तदा च ।—

यदा प्रसङ्ग-सङ्गत्या कृष्णेति वर्णद्वयं कर्णाभ्यर्णमापद्यते, वंशीवाद्यं वा, तदातमेव पश्यन्त्य इव हृष्यन्त्यः पुनरपश्यन्त्यस्तापमाप्नुवन्ति स्म । किन्तु, कश्चित्प्रति न किञ्चित्प्रकाशयामासुः । चेतसि तु भावयाम्वभूवुः ॥

यथा ।—

यः कृष्णनामाक्षर-माधुरी-भरै-
रास्वाद्यते वेणुकलीरसैरपि ।
स एक एवाम्बुद-रोचिरेष मे
कः स्वान्तमुच्चैः कुरुते पुरुव्यथम् ॥

तत्र च श्रीराधाया भावना यथा ।—

याते कृष्णेति शब्दे श्रुति-पथममृता-
दप्यति स्वादयुक्ते,

वंशी वाद्ये च शश्वन्मनसि सपदि
　　　　य: स्फूर्त्तिमाप्नोति सोऽयम् ।
आजन्माभ्यासहीनो प्यतिसुपरिचित्त
　　　　प्रायएवेति भाति,
प्राप्तिव्यावृत्तितस्तु प्रसभमचिरतो
　　　　नेष्यति प्राणवर्गं ॥

पुनश्च सम्प्रति स्वयमेव परस्परामिवाह ।—

राधे ! किमुदग्रं व्यग्रचित्तासि ? राधिके ! तदेतन्नावदधासि चेदवधानं विधेहि ।—

श्रव्याणां स्वादसारं श्रुतिरनुमनुते
　　　　यत्तु यद्वा सुधाब्धे-
र्मन्थाल्लब्धं रसज्ञा सुखहृदिजसुखं
　　　　चित्तवृत्तिर्य्यदेव ।
किन्तत् कृष्णोतिवर्णाद्वयमयमथवा
　　　　कृष्णवर्णद्युतीना-
माजीव्यः कोऽपि शश्वत्स्फूरति नवयुवे-
　　　　त्यूहया मोहितास्मि ॥

एवं श्रीकृष्णस्य च तदीयप्रचरिष्णुतत्तद्गुण भविष्णुतृष्णस्य भावरम्यता गम्यतां ॥

— —

नाम्नि श्रोत्रं सदनसरणौ नेत्रमामोदपूरे
घ्राणं स्पृष्टे वपुरपि गुणे सूक्तमासां मदीयं ।
मां प्रोज्झ्यासीद्द्रुतमिति[१] हरिः स्वीयदोषं विचारात्
प्रत्याख्याय[२] स्फुटमनुसवं तत्र चित्रायतेस्म ॥
राधाकृत्ते क्वचन गणके नान्तिकाद्वर्ण्यमाने
दृष्ट्वा राधां घटयति जने सञ्जनं स्वस्य दूरात् ।
राधागेहान्मृदुलपवने वाति नास्मारि तत्तत्
कृष्णेनास्मिन् पुनरलमसौ सस्मरे सैव राधा ॥

तदेवमपूर्व्वकृष्णादर्शनपर्व्वण्यजातपूर्व्वे यदा तु कालीयदन्दशूकसन्दलनमासीत्तदा विध्वस्तनिरोधा राधादयोऽपि व्रजवासिसाधारणतया तत्र गच्छन्ति स्म । एतदर्थमेव कालियदमनार्थे तावान् विलम्वारम्भसम्भारस्तेन[३] लम्भितः । तदेवं तत्र गतवर्तीनामपि वाल्यामोकतः[४] शोकतश्च न लोकतस्तासां भावः स्वस्य[५] विशेषं भावयामास । किन्तु प्रेमातिशयमात्रम् ॥

तथाहि ।—

यदा दूरे नृत्यं फणिशिरसि चक्रे मुररिपु-

---

(१) इत्यनेन प्रकारेण । (२) निराकृत्य ।
(३) कृष्णेन । (४) अपरित्यागात् । (५) भावस्य

स्तदा ताभिः साक्षादरचि स इतीदं नहि मृषा।
तथाप्यासां वाल्याद्बहुजनसमाजादपि शुचा
वृतेर्भावो नैव स्वरसमयतामण्वपि ययौ ॥
यदा कालीयस्य ह्रदवलयतः सोऽयमुदित-
स्तदा राधामुख्याः प्रथमकलनादेव पतिताः।
वहिर्ज्ञानं नासीद्यदपि तदपि स्फूर्तिवलिता
न मूर्च्छां नामूर्च्छां ययुरहह ! रात्रिन्दिवमनु ॥
यद्यपि कृष्णस्तासां, कलनादन्तर्विकारमासन्नः।
तदपि च समयान्तरजां, चकारगम्भीरतां
शरणम् ॥

ततश्च ॥

प्रभाते ताः शकटसमारोहिततया व्रजमानीताः कथमपि स्वस्थतां याताः ॥

यथा।—

मुहुर्वन्धु-स्तोमे तदुपचरणादुत्थितमतौ
जनद्वारा तासां हरिरपि विमूर्च्छां कलितवान्।
अथ व्यग्रीभूयामृतमिव मुरल्या मृदुकुलं
जगौ ताश्च प्रापुर्वहिरवहितिं(१) सत्वरतया ॥

---

(१) अवधानं।

किन्तु तस्य वंशीशंसनमाधुर्य्यमेव तासु भिसज्य(१)-दववुध्य तदवधि तासां प्रतिवन्धाय वन्धवस्तेनाति-निर्वन्धं ययुरिति कदाचिच्चिरतो दर्शनमपि तस्य तासु पर्य्यवस्यति स्म ॥

अथ श्रीकृष्णस्य षष्ठे वर्षे गते तासां च ततः किञ्चिदूनतया मते समारब्धप्रपञ्चाद्भावादत्तीणानां नवकैशोरलक्ष्मीणामुदञ्चनं तस्य च तासां च तथा जातं यथा परस्परं स्पर्द्धयेव सञ्चयमञ्च-दासीत् ॥

तत्र तस्य श्रीकृष्णस्य यथा ।—

वक्त्रं पूर्णकपोलकान्तिवलितं केशा भृशश्यामला
नेत्रे लोलविशालपाटलतटे वक्षः स्फुरद्विस्तृति ।
वाहुद्वन्द्वमखर्व्वपुष्टघटनं मध्यः कृशस्तत्परः
स्फीतस्तद्वदुरू(२) पृथूभवितुमुद्गाते(३) स्म
तस्मिन् हरेः ॥

तत्र च कस्य चिन्मर्म्मज्ञजनस्य नर्म्मवचनं ।—

---

(१) भिषगिवाचरन् ।

(२) नारीणां विमलतरौ समुद्गसन्त्याभासान्तर्दधतुरूरू दुकूल-मेवेति माघे । माघे ह्रस्वादिरप्युरुशब्दः ।

(३) गाङ्गतावित्यस्य वचनत्रयेऽपि पदं इति सर्वत्रान्वेति ।

तनौ श्यामा लक्ष्मीरभजदयमन्तर्हृदि पुनः
सदा गौरीरित्थं कपटमभिपश्यन्मुररिपोः ।
स्फुरन्नेत्र-द्वन्द्वं भजदरुणतामीषदभितो
मुहुः कर्णाभ्यर्णं व्रजति किल किञ्चित्कथयितुं ॥

अथ तासां यथा ।—

कटाक्षे कृष्णाभा(१) स्फुटमधरयो राग(२) गरिमा
कपोल-द्वन्द्वान्तः शुचि(३) रुरसि चारून्नतिरुचि(४) ॥
अमी चेतोधर्म्मा वहिरहह ! यद्येवमुदिता
भवेत् किम्वा तर्हि व्रज-मृगदृशां गोपनपदं ॥

तत्र श्रीराधां प्रति कस्याश्चिदुक्तिः ॥

भद्रा पद्मा धनिष्ठा शिविपशुपसुता(५)
पालिका श्यामला सा
चन्द्रावल्यप्यभीक्ष्णं वयसि निज-निज-
श्रीसमुत्कर्षि(६) दृष्टा ।

---

(१) चेतःपक्षे कृष्णस्याभा कान्तिः ।
(२) चेतःपक्षे अनुरागः ।
(३) चेतःपक्षे शुचिः शृङ्गारः । वहिः पक्षे शुक्लो वर्णः ।
(४) चेतःपक्षे रुचिरभिलाषः । चारून्नतिरुचिरिति वहुव्रीहिश्च । वहिःपक्षे रुचिरभिलाषः उन्नतिरुच्चता चारून्नतिरितिकर्म्म-धारयः ।
(५) शैब्या । (६) यथा स्यात्तथा ।

श्रीराधे ! त्वं पुनः स्वं जितकनकगुणां
द्योतमुद्योतयन्ती
तद्दिव्यं श्यामधाम प्रथयसि परितः
केन वा तन्न वेद्मि ॥

तत्रान्यस्या वचनं ।—

विलसति कृष्णनवाब्दः
स्फुटमधिहृदयं प्रविश्य राधायाः ।
न भवति तद्यदि कथमिव
पुलकैः सह लोचने स्रवतः ॥ इति ॥

तत्प्रभृति तासां भावना चेयं ।

तदेव यमुनारण्यं त एव च तमालकाः ।
तदेव चित्तमस्माकं साम्प्रतं किमिवान्यथा ॥

ततश्च ॥

शारद-प्रथमशुभ्रपञ्चमी
भाविरात्रि निकराब्ज(१) सप्रभं ।
सुभ्रुवां मुखमुरोज-युग्मम-
प्यापतुः प्रतिदिनं महोदयम् ।

यदा राधा तासु प्रथमवयसाकीर्णाकिरणा
तदा ताः सर्व्वाश्च प्रतिहत(२)समज्ञाः(३) समभवन् ।

---

(१)अब्जेनात्र पद्मं चन्द्रश्चोच्यते । (२)आच्छन्न । (३)कीर्त्तिः ।

परं[1] नानापुष्पावलिषु लतिकासु प्रथमतः
प्रफुल्लन्ती ख्यातिं सदसि सुरवल्ली वलयते[2] ॥

तत्र चेयं किम्वदन्ती वदन्तीव वभूव ॥

इन्दुर्मन्दति खञ्जरीटतरुणः खञ्जन्निवालोक्यते
दूनं भाति तिलप्रसूनमरुणाद्बिम्बं गुणाल्लम्बते ।
स्वर्ण-श्रीजयिवर्णजालविलसद्वल्ली नलीलायते
राधायामधुरिम्णि यद्विधुरतामाप्नोतितन्माधुरी ॥

तदेवं लब्धदरस्फोरे कैशोरे तासां स एव कृष्ण-प्रेमा तृष्णाविशेषमासादितवान् ॥

व्रतति-ततीनां[3] कृतव्रततित्वे[4] लब्धसत्वे स्वा-श्रयं प्रत्यभिमुखप्रसारस्तद्वलयन लालसमिव ॥

तत्र तासां भावना यथा ।—

जन्मन्येतदहो ! किमत्र भविता यत्तस्य वक्षस्थलं
विस्तीर्णातुलनीलरत्नमसृणं स्पृश्येत मद्वक्षसा
ताम्बूलं वत चर्वितं च मुखतः कृष्येत किं मन्मुखे
नैवं केयमहो ! ममाद्य विमतिर्धर्मध्रुगभ्यागता ॥

अथ प्रेमापि परमवरिमाणमाससाद ॥

---

(१) केवलं । (२) प्राप्नोति ।
(३) लतासमूहानां । (२) विस्तारवल्योर्व्रततिः ।

यथा :—

पूर्व्वं यत्परितो हरेरनुभवात् कैशोरमाशून्नतं
त[1]त्तासु स्फुरितं तमेव[2] विदधल्लीलाभिरुच्चैः
स्थितं ।
अप्याकर्णनदर्शनादिरहितास्ता देवताविष्टव-
च्चेष्टन्ते स्म यतः[3] शशाक नहि यद्वोढुं जनश्चाण्वपि ॥

तत्र तु ॥

शून्यं पश्यति वाष्पपूरमनिशं मोमुच्यते कम्पते
स्विद्यत्युन्नतकण्ठकत्वमयते स्तम्भं पुनः प्राच्छति[4] ।
म्लानिं गच्छति वाचितापि वचनं नाभाषते सेति तां
पश्यन्ती सुहृदां ततिर्मुहुरहो! राधामशोचन्मुहुः ॥

तस्या भावना चेयं ।—

रूपेणामृतसिन्धुः, कीर्त्तिभिरमृतद्युतिर्य्यदपि
तदपि हरिर्मम हृदयं विदधाति हा! धिग्विधिर्वामः ॥

तस्य च ।—

हृदयं पूर्व्वमलिप्तं, भावः कः पुनरलिप्त मे सहसा
स्मरदपि यस्य[5]तु विषयान्, स्वयमथ चित्तं
स्वतोऽपि जिह्रेति ॥

---

(१) कैशोरं ।　　(२) हरेरनुभवं ।　　(३) हेतोः ।
(४) प्राप्नोति ।　　(५) भावस्य ।

पुनश्च ।—

कालियदमनमन्वनुभूतं तासां भावं विभावयन्नाह ।—

पिता मे साधूनां कुलतिलकता विश्रुतगति-
स्तथा माता साध्वी समुदयविवेकाग्रिमलिपिः ।
कथं राधादीनां परमृगदृशां भावमभितो
भजत्यन्तः किम्वा मम मृदुलता मां क्लमयति ॥

किञ्च ।—

हन्त ! ज्ञानं मम विलुलितं क्वापि न स्यात् परन्तु
प्रेमार्द्रं तद्भवति सुतरां तासु तु प्रेयसीषु ।
यस्मात्तासु स्फुरति न धिया प्रेममय्यापरात्वं
नापि ख्यातिं बहिरनुगया[१] तां पराकर्त्तुमीशे ॥

तच्चेष्टा च यथा ।—

मौनार्हे प्रतिभाषते स्म वचनौचित्ये[२]
मुनित्वं दधे
शोच्यत्वे हसति स्म हासकथने रूक्षत्वमेवाददे ।
प्रस्तावे व्रजसुभ्रुवां सखिजनैर्निर्मीयमाणे हरे-
र्यद्यप्येवमथापि वर्णविकृतेर्व्यत्यस्ति[२]रालक्ष्यते ॥

---

(१) बाह्यया धियेत्यर्थः ।
(२) व्यात्यासः परिवर्त्तः ।

तासां विवाहश्रवणे तु ।—

वहिः सुरसतां व्यञ्जन्नपि तर्हि वलानुजः ।
अन्तस्तु विरसः प्रैक्षि मर्मज्ञैः पक्वपीलुवत् ॥

तदेवं स्थिते तासां जन्य[1]म्मन्यजन्ये न निज-निज-वधूनां नयनाय याच्यमानं तत्पितृकुलं तासु न तद्वाच्य[2] मकार्षीत् । केवलं तु कर्णेकर्णे मिथ एव वर्णयामास ॥

तासु गर्गादीहितवर्गादपि क्रमादधिगतकृष्णे-कतृष्णासु प्राणपर्य्यन्त-संक्षयाशङ्कया तमुद्वाह-मपि न सहसा न च साक्षादुद्भावयामास किमुत तादृगवस्थानां प्रस्थापनं ॥

अथ यथा दुर्वहश्च विवाहनिशमनसंक्रमः प्रथमलभ्यवाल्यमारभ्य पूर्व्वपूर्व्वक्रमलब्धविसरया परम्परयावधारित इति । क्रमविषयतया विष-भक्षणवदभ्यासव्यासत एव सोढस्तथेदमपि वाढं सोढव्यमिति तथैव श्रावयामास ॥

तासु तद्वार्त्तामात्रतः परमार्त्ता जाताः । यत्र च कष्टं भोः कष्टं जीवनमपि निष्ठीवनमापयितुं व्यवसितिमायाताः ॥

---

(१) जन्याः स्निग्धा वरस्य ये इत्यमरः ।  (२) वचनास्पदं ।

तथाहि ।—

प्रथमं तावत् प्रत्येकं पूर्व्वाहूतः पूर्व्वमेव गृहादात्मानं निह्नुवानाः सम्भृतगम्भीरनीरमुच्छलत्तरङ्गसङ्गनिर्ह्रादविलीयमानकर्णां कालवर्णां कालीयह्रदमेव निर्व्यतिरेक(१)विवेकमन्तरेण भावान्तरेण(२)भावयाम्बभूवुः(३) ॥

अथ ताः समस्ता एवावलाः केवलतया गता अपि समस्ता(४) वभूवुः। परस्परमपरिचितप्रायतया निचायन्तिस्म(५)। पप्रच्छुश्च का भवत्य इति। प्रचिते(६) च परिचये तत्राव्रजनप्रयोजनमप्यन्वयुञ्जत(७) ॥

ततश्च समानवासनावासितमानसव्यसनशंसकदशन-वसनादि(८) रुचिविलोकनवलितमिथःस्नेहादालिङ्गितकण्ठा मुक्तकण्ठमुत्कण्ठया स्फुटमेव रुरुदुर्विविदुश्च परस्परं हृदयं ॥

तदेवं कुलाङ्गनानामपि तासां स्वयमेव निष्कुलीकृत(९) मनसामुत्कृष्टगुणतयाकृष्टसर्वनयना

(१) अव्यभिचार। (२) देहजिह्वासारूपेण।
(३) प्रापुः। भूप्राप्तो आत्मनेपदी चौरादिकः।
(४) मिलिताः सम्पूर्वोऽस्यतिः समासार्थः।
(५) पश्यन्तिस्म। (६) आधिक्यम्प्राप्ते।
(७) पृष्टवत्यः। (८) आच्छादनओष्ठ। (९) व्यक्तीकृत।

श्रीराधा तु स्वत एव मध्यमाधारता[१] मापन्नाति-कष्टतः प्रकटमेव निजनिश्चयमाविश्चकार ॥

यथा ॥

यद्येतद्वपुरन्यसात्कृतमभूत्पित्रादिभिस्तर्ह्यदः
प्रेतग्रस्तमिवापि जीवदधिकं धिक्कारयोग्यं भवेत् ॥
धिक्चात्मानमहो ! यदेष सहतेऽप्येतस्य सङ्गापदं
तत्तीर्थाय वलाद्बलानुजकृते कर्त्तव्यमस्यार्पणम् ॥

विस्तरमत्र चालं[२] कृत्वा । यतः "श्रेयांसि वहु-विघ्नानी"ति नीति निघ्नतया[३] नातिविलम्बनमा-लम्बनीयं । इत्युत्थाय ताभिः सह मिथो वद्धपाणि-तया पानीय-समीपं प्रस्थाय यमुनां प्रत्यञ्जलिं-वलयन्ती साश्रुगद्गदमर्द्धोद्गतवर्णामुद्गदति स्म ॥

गोष्ठक्ष्मापतिदम्पतीश्च सुरतां रामानुजःस्वामितां
वृन्दारण्यमिदं सदापि भजतामारामतां नः परि-
याः स्नेहाद्व्यतिवद्धहस्तमभितः
कालिन्दि ! मग्नाभवत्
पानीयान्तरमूर्भजन्तु सखि ! तां
त्वामाश्रितास्तद्वयं ॥

(१) मध्यम एवाधारो यस्याः ।
(२) विस्तरेण प्रयोजनं नास्तीत्यर्थः ।
(३) स्थिततया ।

अथ सहायान्तराण्यपि ताभिस्तदन्तराप्तानि यथा ॥

तदेवममूमनु पुनरमूरसाधारणावाधानामाधारतया प्राणधारणायां तु धुतकारणाद्धूदमगाधजलं वलमानाः प्रतिप्रथिताकाशवाणी प्रत्यावर्त्तयितुं प्रत्याशां वर्द्धयामास ॥

अहह ! गोपसुताः सहसाहसं
न सहसा कुरुतापुरुवुद्धयः ।
शृणुत वः प्रतिकूलकुसङ्गति-
र्न भविता[१] न भवे[२]न्न भविष्यति[३] ॥

तदेवं ।

विरहावग्रह[४]क्लिष्टा गोपी भूमिसरोजिनीः ।
कृत्वा गीः सुधया सिक्ता देवाब्दास्त्रिदिवं ययुः ॥

ततश्च विस्मयफुल्लविलोचनतया व्यतिविलोकमानासु तासु सूरजा[५]पूरतः का[६]प्यदूरतः[७] समेत्य श्रीराधामुपेत्य सर्व्वाश्चाहूय स्वयं विभूय तत्तद्

---

(१) भवितुमर्हतीत्यर्थे लुङ् ।
(२) न सम्भवति सम्भावनायां लिङ् ।
(३) उत्तरकालभाविन्यपि न ।
(४) तद्विघातेऽवग्राहावग्रहौ समौ अनावृष्टि ।
(५) यमुना । (६) मूर्त्तिमती यमुना ।
(७) यमुनाप्रवाहतः ।

गात्रं गृहीत्वा पात्रं[1] मोचयितुमीहित्वा[2]तीरं प्रतीरयामास[3] ॥

साहि फुल्लेन्दीवरसुन्दरी स्वयमेव कालिन्दी । तया च तीरमानीतासु तासु वृन्दया कथिततद्वृत्त-वृन्दया[4] मधुमङ्गलेन च वाञ्छिततद्वृत्तमङ्गलेन सहिता परमहिता महिता पूर्णिमा च तूर्णमेवा-गता । ततः प्रतिस्वं तरुमात्रावलम्बनगात्रतया निश्चेतनवत्कृतकेतना[5] व्रजनिकेतनाङ्गनाः सालि-ङ्गनसम्बोधनपूर्व्वं गीर्वाणवर्णितवाणीवदेव वदमाना[6] तत्रानुवदमानाभ्यां[7]वृन्दा-कालिन्दी-भ्यां सार्द्धं वोधयामास ॥

वोधयित्वा च पुनर्भणति स्म । परममसृणमतीनां भवतीनां कथमेतावती कर्कशता[8] जाता ? । वस्तुतस्तु ॥

---

(१) पात्रं पारावारयोरन्तरं इत्यमरः ।
(२) वांछित्वा ।    (३) धरयामास ।
(४) कथितं तत्तद्वृत्तवृन्दं यया ।
(५) कृताश्रया ।    (६) साचयन्ती ।
(७) अनुवादं कुर्व्वतीभ्यां ।
(८) स्यात् कर्कशः साहसिकः कठोराममृणावपि इति नानार्थः ।

चन्द्रो न हृतकलङ्कः, क्वचिदपि न कलङ्कि वञ्चं वः ।
चन्द्रो मुहुरपि नश्यति, नश्यति नहि
वर्ष्म युष्मदीयन्तु ॥

किञ्च, तिसृभिरप्यस्माभिरपरोक्षं परोक्षमपि । तथा साहाय्यं कार्य्यं यथा कृष्णमात्रपतिगतीनां भवतीनां नानभीप्सितपुरुषशय्यायोगः स्यात् ॥

अथ वा तद्विषयकस्य भावमात्रस्य स एष प्रभावः किमुत भवद्विधानां महाभावस्य । यं खलु गोपवर्ग-नृपतिं प्रति गर्गः प्रतिज्ञातवान् ॥

"य एतस्मिन् महाभागे प्रीतिं कुर्वन्ति मानवाः ।
नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः" ।इति।

तस्मात्परमशुभवत्यः स्वयं भवत्यः पुनरत्र चिन्तां न कुर्वन्तु किन्तु गुरु-वशम्वदतया(१) वदमानाः(२) श(३)मासीदन्त्विति ॥

एवं तस्यां(४) सान्त्वयन्त्यां तमाल-
स्याधः स्थात्री हेमगात्री-ततिः सा ।
न्यञ्चद्वक्त्रा वाष्पनेत्रा तदीयां
पत्रश्रेणीं मार्जयन्त्येव तस्थौ ॥

---

(१) गुरूणां वचनास्थिततया । (२) यत्ने भासने वा आनः ।
(३) कल्याणं । (४) पौर्णमास्यां ।

तदेवं सानुव्रजन[१] मात्मनः[२] परिरम्भ्य ताः[३] कृतप्रस्थितीरूपलभ्य तदुपदेशं विस्रभ्य सद्यः समुद्यतीं कृष्णावलोकतृष्णां प्रतिलभ्य हस्तग्रह-ग्रहिलमहिलाभिः साहचर्य्यमाचर्य्य प्रच्छन्न-वर्त्मना निष्प्रत्यूह निगूहमानाङ्गं निज-निजाङ्गन-समीपवनं श्रीराधादयः समाजग्मुः ॥

ताद्विनतश्च ।

विशाखाललितामुख्याः श्रीराधासख्यमैयरुः ।
पद्माशैव्यादयश्चन्द्रावलेरित्यादि गम्यतां ॥

तदेतदवधिका मुहुरधिका सहायतायाः[४] सहायता[५] तासु कृष्णातृष्णानिरतासु नाश्चर्य्या। यतः साधारणस्यापि ।

साहायकं सुविधिरिच्छति यस्य कर्त्तुं
तस्यानुकूलनिचितिं युगपच्चिनोति ।
नानाग्रहर्क्षशकुनामरमानवास्त-
द्राज्यादि लब्धिसमये ह्युदयन्ति भव्या ॥इति॥

प्रस्तूयमानं तु श्रूयतां ।—

अथ मधुमङ्गलं सङ्गिनं विधाय पूर्णमनाः

---

(१) यथास्यात्तथा ।　　(२) ब्रजकुमारीरूपा ।
(३) पौर्णमासीःवृन्दा-यमुनाः ।
(४) साहायसमूहस्य समूहार्थे ता ।　　(५) साहाय्यं ।

पूर्णिमा वृन्दया सह सहसा हरि-समीपमाससाद ॥

भानुतनूजानुभावित[१]भावविभावविशेषश्लेषा[२] समीपतः[३] स्वागमनमपह्नुतवती । पथि पुनरिदं प्रच्छन्नं पप्रच्छ ।—

वृन्दे ! व्रजेन्द्रनन्दनस्य प्रेम किमासु वर्त्तते ? ॥

वृन्दाह ।—अथ किं ? किन्तु निगूढं ॥

यमुनाह ।—एतासान्तु स्पष्टमद्य दृष्टं ॥

वृन्दाह ।—तच्च दशमदशावशादेव[४] ॥

यमुनाह ।—

तर्हि किं पारस्परिकं तत् परस्परं न जानते ?

वृन्दाह ।—

यदपि तथा निगूढं तथापि विक्रियां विना प्रेम कथं ध्रियतां[५] ? सत्यां च विक्रियागत्यां परस्परं दुरपह्नव नवनवानुरागः कथमाध्रियतां ? ॥

यतः ।—

तमाला वक्षोजप्रभघुसृणमुद्रालिवलिता
नखाङ्क-श्रेणीभिः शवलितदलाश्चम्पकलताः ।

---

(१) चिन्तित । (२) योग ।
(३) ल्यप्लोपे पञ्चमी समीपं प्राप्येत्यर्थः । (४) वशात्वादेव ।
(५) ध्रिङ् अवस्थानं दैवादिकः । अवतिष्ठतां ।

सरोजानि श्यामान्युतकनक वर्णान्यधरज-
द्रवाण्येवं वन्याप्युभयरतिमत्र प्रथयति ॥

तदेवं सम्पृच्छ्य प्रच्छन्नायां यमुनायां वृन्दामधुमङ्गल-पूर्णपार्श्वा पूर्णिमा हरेयभ्यर्णमाजगाम ॥

आगम्य च विरहतापनिर्वापणाय क्वचिदेकान्ते नितान्तकान्त(१) चन्द्रकान्तशिला-मध्यमध्यासीनं परमध्यानवन्तमन्तर्मनसं(२)सन्तं निध्यातवती(३) ॥

तस्मात् प्रच्छन्ना चेदं गद्गदमाकलितवती ।
दोषाकरः स दोषाकर एव न चात्र सन्देहः ।
कमलं खल्वपि कमलं(४), राधावदनं तु शर्म्मणां सदनम् ॥

तदेवं मुहुर्मोहमूहमाना शनैरुपसृत्य तदादृत्य ताः कृतकृत्यंमन्या सास्रमाशीः-सहस्रेणेदं द्रावितवती ॥

विद्यते दुर्लभं किं ते वित्ते(५) तद्यद्भवानपि ।
अवश्य वश्यतां यस्य पश्य लब्धास्तु मद्विधाः ॥

---

(१) अतिशयप्रकाश ।
(२) दुर्मनसं । दुर्मना विमना अन्तर्मनाः ।
(३) ददर्श ।　　(४) कस्य जलस्य मलं ।
(५) विचारयति ।

कृष्णस्तु प्रेमपुषिते नद्युषितेन[१] तेन वाक्येन स्पष्टमपि तेषा[२]मिष्टमपि निजभावमस्तरिष्ट[३]। सज्जातानां लज्जा केवलं बलाय सज्जतीति ॥

अथ कमललोचने सादरदरङ्कोचलोचननिकोचतया कृतरोचने सा सप्ररोचनमवोचत । अयं मधुमङ्गलनामा स्वयं स्वसङ्गममङ्गलसङ्गेन सङ्गमनीयः। इति तत्पाणी समानीय हरिपाणौ प्रतिसमर्पणीयतया प्रणीतवती ॥

हरिरपि स्वविहारसुखसारसमुपहार एवायमिति तमनुसन्धाय प्रेमबन्धाय स्फुरदङ्गमालिङ्गितवान् ॥

सोऽपि तं किल विलक्षणमश्लिक्षद्यत्र चाश्लिषन्मिथः पुलककुलं ॥

तदेव मुपतिष्ठमानतया[४] द्वयोरप्येकनिष्ठतायां जातायां पुनर्वृन्दावनचन्द्रमा वृन्दां निर्वर्ण्य पूर्णिमां प्रति वर्णयामास ॥

केयं भवतीमनुवर्त्तमाना वर्त्तते ? ॥

---

(१) प्रख्यापिताभिप्रायेण ।
(२) पूर्णिमामधुमङ्गलादीनां ।
(३) आच्छादितवान् । (४) मैत्रीकरणेन ।

पौर्णमासी सस्मितमुवाच ।—

किमियं न परिचीयते भवता ? ॥

श्रीकृष्ण उवाच ।—

नूनं यन्नाम्ना वनमिदं धाम्ना[1] समाम्नातमस्ति-सैवेयमनुमेया ॥

पूर्णिमा तु स्मितपूर्णवदनं तामवादीत् ।—

नाद्यावधि कथमस्य विद्यमाना वभूविथ ? ॥

श्रीकृष्णः सास्मितमुवाच ।—

अपरिचिता न स्वयं मिलनाय समुचितायते ॥

पूर्णिमाथ वृन्दामूचे ।—

भवतु चेतः परं भवती सचेतः[2] सर्व्वदास्य दास्यमिवाचरन्ती चरिष्यति ॥

अथ साश्रुवृन्दां वृन्दां प्रणमन्तीमेव रमारमण-स्तु वनमालया पुरस्कुर्व्वन् वनमालया[3] पुरश्चकारेति गमयामास ॥

तदनु च ॥

व्यञ्जितनिजसुखासञ्जनया पूर्णिमावृन्दयोर्वा-चारञ्जनया चिराद्विराजमानः पुनर्गतयोस्तयो-र्लब्धमहासहायतामहसा वृंहितमना महामनाः

(१) प्रभावेन । (२) यथास्यात् तथा ।
(३) वनश्रेण्या ।

स तु पुरुषसिंहः सहगच्छतस्तत एव मधुमङ्गलतः कालीयह्रदसङ्गतं प्रेयसी प्रसङ्गं श्रवसि सङ्गमयन् सखिसङ्घं सङ्घति स्म ॥

स तु प्रसङ्गः सङ्गम्यते[१] ॥

कस्मादागान्मुनीशा[२] फणिह्रदवलयात्

तत्र किं राधिकाद्या

हेतौ कस्मिंस्तमेतं मम तु कथयतो

रुध्यते हन्त ! कण्ठः ।

हा धिक्किं किं विधाता कुशलितमकरो-

देव किं यावदेवं[३]

सिध्येदित्थं स तेन व्यतिकथिततया

व्यश्वसीन्न्यश्वसीच्च ॥

पुनश्च श्रीकृष्ण उवाच ।—

भगवत्याः पुरतः किमपि ताभिरुक्तं ॥

मधुमङ्गल उवाच ।—

नहि नहि; किन्तु सा सुमुखी-ततिरधोमुखी-भवन्ती सन्तीव्र[४]लोचनजलस्खलनतस्तलं सिञ्चन्ती तमालमपि तं म्लापयामास ॥

---

(१) विस्तार्य्यते इत्यर्थः । (२) पूर्णिमा ।
(३) किम्पर्य्यन्तं । (४) सम्यक् तीव्र ।

श्रीकृष्ण उवाच ।—

अथ तासां मनोरथपथः किमवगतः ? ॥

मधुमङ्गल उवाच ।—अथ किं ? ॥

श्रीकृष्ण उवाच ।—कथमिव ? ॥

मधुमङ्गल उवाच ।—

ताभिर्मुहुरपि भवतः सवर्णस्य तमालस्यावलोचनरचनेन ॥

श्रीकृष्ण उवाच ।—विशेषेण चेत्कथ्यता ? ॥

मधुमङ्गल उवाच ।—

कालिन्दी वचनेन च । यतस्तां प्रविशन्तीनां तासामिमां काकुमाकुलीभवन्ती पश्चादस्मासु सानुकृतवती ॥

यथा ।—

"गोष्ठक्ष्मापति दम्पती" इत्यादि ॥

श्रीकृष्णः सगद्गदमुवाच ।—

आगच्छ गच्छाव तावत्सखि-सङ्गमिति ॥

अथ मधुकण्ठः सोत्कण्ठं पप्रच्छ ।—

ततस्तासां कामतिर्जाता ? ॥

स्निग्धकण्ठ उवाच ।—

ततश्च व्रजसुन्दरीणामुन्मनस्तया धर्मत्रस्ततया च महती मनः-कथा जाता यथा ।—

ननु यद्येवमुन्मनस्ताग्रस्ता धर्मरक्षणार्थ-मक्षमासि तर्हि प्रत्यासन्न एव धर्मत्यागस्तत्राह ॥

धर्मस्त्याज्यः कथमतितरां लोकयुग्माभिनन्दी,

तर्हि लोक एव त्याज्यस्तत्राह ।—

लोकस्त्याज्यः कथमतितुलप्रार्थितार्थस्य धारी ।

ननु तर्हि तेन चार्थेन किं ?, तत्राह ।—

अर्थस्त्याज्यः कथमयमथ प्राणरक्षाधिकारी,

नन्वेतावति सङ्कटे प्राणत्याग एव प्राणदस्तत्राह ।—

प्राणास्त्याज्यः कथमिव न सा लालसा मां जहाति ॥

क्षणं शून्यमिव स्थित्वा प्रतिस्वं पुनः स्वगत-मूचुः ।—

हन्त ! तात ! जननी-कुलं कुलं
चान्यदाक्षिपतु मां यथा तथा ।
कृष्ण-रागरुचिरा मतिः कथं
जातु यातु रुचिमन्यभावितां ॥

पुनश्चिन्तायामपि सोद्वेगमूचुः ।—

निद्रा मम सुखदालि, या तस्य[१] स्फूर्त्ति-
विस्मृती दत्ते ।
तामपि चिन्ताक्रव्या,दृद्धा शश्वद्बलाद्ग्रसते ॥

---

(१) कृष्णस्य ।

तस्य च तथा वचनं, यथा ।—

रे रे चित्त ! प्रणयमयता पारतन्त्र्यं किमेषि,
त्वं तत्रापि व्यसनि[१] यदि वा धर्मतस्तत्प्रयाहि ।
हंहो किम्वा परगृहजुषां भाविनीनां च भावे
लग्नं मग्नं भवसि वहुधा प्रोज्भय तत्तद्विचारं ॥

तदेवमभिध्या[२]भ्रमाभिध्यानतः कथं कथमपि क्षपितेषु तेषु दिनेषु व्रजवासिनां सम्भ्रमेण जातव्युत्क्रमे धेनुकवधविक्रमेडितवासरे प्रेयसा सह चमूरुदृशा[३]ममूषां परस्परमतिरम्यं सम्यग्दर्शनमासीत् ॥

तत्र तु ।—

तासां नित्यप्रेयसीनां मुरारे-
र्जन्मन्यस्मिन् विस्मृतात्मस्थितीनां ।
शोभा तस्य स्मारयन्तीव तत्त्वं
धर्मं त्रासं द्रागमुहुर्ल्लुम्पति स्म ॥

तथा च वर्णितं वादरायणिना ।—

"पीत्वा मुकुन्द-मुखसारघमक्षिभृङ्गै-
स्तापं जहुर्विरहजं व्रज-योषितोऽह्नि ।

(१) आसक्ति ।　　(२) परस्वविषये स्पृहेत्यमरः ।
(३) मृगनयनीनां ।

तत्सत्कृतिं समधिगम्य विवेश गोष्ठं
सव्रीडहाससविनयं यदपाङ्गमोक्षं" ॥

तथाहि ।—

प्रीतं हरेर्वदनमब्ज[1]रसं प्रसह्या-
प्यासां दृशा रचितभृङ्ग-चकोर-भङ्गि[2] ।
तेनापि सत्कृतिममन्यत सप्रशस्ता-
माजीव्यतां[3]गतवतीषु तदासु युक्तम् ॥
तस्मिन्नपाङ्गशरमोक्षममूरकुर्वन्
व्रीडास्मिताश्रिनयनैरनुनिन्यिरे[4] च ।
तेनापि सत्कृतिममन्यत सप्रशस्ता-
माजीवि[5]लोकचरितं किल तादृगेव ॥

किञ्च ।—

कृष्णं लक्ष्यं विधायामूरभ्यास्थ[6] न्नेत्रपत्रिणः ।
तच्च[7] भक्तिरितीवाहुः[8] शराभ्यास उपासनं ॥

तदा च ।—

तास्तन्मुख—सुधारुचिरुचिपानापूर्णरुचयोऽपि

(१) अब्जेनात्र पद्मं चन्द्रश्चोच्यते ।
(२) यथास्यात् तथा । (३) वृत्तिदातृतां ।
(४) अनुनयं कृतवत्यः । (५) जीविकाग्राहि ।
(६) अनुत्क्षेपणे अस्यतेः स्थरुः । (७) उपासनं ।
(८) कोषकाराः ।

वलतस्तत्कुलपालिकाभिर्निलयमेव नीताः। चकोर-
वध्व इव पञ्जर-मध्यम् ॥

तदनु च ।—

आयाताः प्रतिविम्वतां यदपि ताश्चित्तहृदे श्रीहरे-
श्चित्रं तत्र तथापि विम्वपदवीं स्थित्या विकर्षेऽप्ययुः।
यत्र प्रस्फुटतारका इव तदा सर्वा वभुः सर्वतः
श्रीराधा पुनरन्तरिन्दुवलयद्योतश्रिया दिद्युते ॥

तत्र च ।—

पूर्व्वं तासां व्यवसिति(१)रभूदेवमीषत्कदाचि-
त्कृष्णं पश्यन्त्युपशममसौ लप्स्यते चित्तवृत्तिः।
दृष्टे दृष्टे पुनरथ मुहुस्तत्र चिन्तेयमासी-
त्किं भूयश्च क्वचिदहह! तदङ्ग-लक्ष्मीं पिवाम ॥

तत्र च सखीष्वपि गोपन-प्रक्रियेयम् ॥

नहि परपुरुषे वाञ्छा, मम सखि! काचित्कथ-
ञ्चिदप्यस्ति।
प्रकृतिः सेयं यदसित, वस्तुनि दृष्टे
भवेत्कम्पः ॥

तत्र तु ।—

राधा वाधाप्रतिहततनुः सर्व्वदा धारणाभि-
श्चित्ते शान्तीरपि निदधती व्याकुलासीदतीव।

(१) व्यवसायः।

हाहा ! तस्याः प्रियसवयसोऽप्याशु तद्भावभावा-
त्तामेवापुः कटुतरदशां हन्त ! केमूमवन्तु ॥

तदेव परच्छन्दता[१] मन्दता[२]यामपि ॥

सङ्कल्पः क्वचनान्वजीगम[३]दितः[४]
साक्षात्कृतिं श्रीहरेः
स्वप्नः कुत्र च लोचनं क्व च वियो-
गार्त्तौ च राधादिषु ।
यैरेतैः[५] सुधया लतास्विव तया[६]
ता[७]स्विन्दुविम्बैर्जवा-
दुक्षासावलिलम्भनात्तरुणिमा-
रम्भोऽपि सम्भावितः ॥

अथ स्निग्धकण्ठःसमापनदिग्धमाह ।—

स एष राधिके ! सर्व्वदुर्लभस्तव वल्लभः ।
त्वदर्थं पीडयाप्यार्त्तो दिनानि क्रीडयानयत् ॥
तदेवं सूताङ्गप्रभवशिशु-युग्मे कथयति
स्फुरत्प्रेमावेशात्प्रतिपदविविक्तैर्निघटनात् ।

---

(१) अभिप्रायवशौ छन्दौ ।
(२) अल्पता । गूढालपापटुनिर्भाग्या मन्दाः ।
(३) कुत्रापि प्रापयामास । (४) परं ।
(५) सङ्कल्पादिभिः । (६) साक्षात्कृत्या ।
(७) श्रीराधादिषु ।

कथा किं नाट्यं किं किमुत निज-लीलेति विविधं
समज्यासौ सार्द्धं स्फुरणमजितेनाप्यनुययौ ॥

अथ कथायां वृत्तायां चिरादेव च धीरतायां प्रवृत्तायां यथास्वं सूत-सुतद्वयाय वितीर्णसर्व्वहिताः सर्व्वे शयनाय सदनं विविशुः ॥

इति श्रीगोपालचम्पूमन्वपूर्व्वपूर्व्वानुराग-
चर्य्याजागर्य्यानाम पञ्चदशं पूरणम् ॥

———

# षोडशं पूरणम्।

अथ प्रभाते सभातेजसा प्रभाते परमप्रभाववतां गोमतां प्रभावुपविष्टे कृष्णाविशिष्टे तस्मिन् सदसि पूर्व्ववन्मधुकण्ठः कथायां यथावदुपक्रमते स्म ॥

स्निग्धकण्ठ! मदुपकण्ठतया रामविक्रमान्तरमाकर्ण्यतां ॥

यथा।—

एवं गोचारणामिषमयं क्रीडति भ्रातृ-युग्मे
वृन्दारण्यं तपऋतुरगात्प्राणिनां नातिरुच्यः।
धत्ते यद्वाकू स[1] च मधुगुणं तच्च नाश्चर्य्यचर्य्यं
तद्युग्मं[2] यद्वसति सततं तत्र नित्यानुरागि ॥

निर्झरस्वनवशाम्बुदागम-
भ्रान्तिर्झिल्लिकुलमाप मूकतां।
अङ्घ्रिपाश्च झरशीकरप्लुताः
पुष्पिताः पुनरमी मधुं दधुः ॥

---

(१) ऋतुः (२) रामकृष्णयुग्मं।

वनस्य च्छायाभिर्जडित[१]जल-वृन्दे विकसतः
शुचावप्यब्जादेः पवनविततिर्माधव इव ।
त[२]देवार्द्रं कृत्वा कुसुमितमकार्षीदविरतं
मिथो योग्यानां यद्द्वयतिवहति मैत्रीसुखशतं ॥
तत्रासीन्नरजातीनां ग्रीष्मेऽपि ऋतु-राण्मतिः ।
पिकभ्रमरमुख्याणां तिरश्चां तर्हि का कथा ॥
माधवस्तु यदामित्रैः प्रविशन् वेणुना जगौ ।
तदा द्विगुणितोरेजे माधव[३]स्तत्र सोऽपरः ॥

ते गृहे मणिभिरप्यलङ्कृता-
श्चारुकान्तिविधये यदुद्भवैः ।
पुष्पपल्लवमुखैरलंक्रियां
शश्वदादिषत तस्य[४] किं ब्रुवे ॥

अथ श्रीदामप्रधानतया सुदाम-वसुदामादिषु सभासदद्वोजालसम्भालनाय नातिदूरतः पृथगुपविशत्सु लसत्सु वलानुज-वल-सुवला-र्जुनादयस्तत्रागत्य नृत्यरङ्गाजीविभङ्गितया सङ्गत्य शुभाशिषा विशेषितवन्तः । तैश्च "कुत्रत्या विचित्रनर्त्तकप्रायाः प्रायाता भवन्त" इति पृष्टा हृष्टात्मानः स्फुटमुद्दिष्टवन्तः ॥

---

(१) शीतलित । (२) वन । (३) वसन्तः । (४) माधवस्य ।

भोः परमदानशूरा ! दूरादागता वयं। यतः प्रथमं तावद्भवत्कीर्त्तिनार्त्तितमनस्का[१]जाताः। ततश्च शरीरेणापि भवदग्रे नर्त्तितुमिच्छावः। कुत्रापि चिराय वर्त्तितुं न समर्थाः श्रोत्रयोरिव नेत्रयोरपि सुखं विभ्रतः सम्प्रति वर्त्तामहे ॥

तत्र च श्रीकृष्णः स्वानुवाच।—

अहो ! प्रत्येकमेवास्माकं लब्धवर्णाविमौ कर्णाविव पुरुगुरू अभूतां याभ्यामेषां महाशयानां गुणानुभवमासाद्यामहे स्म[२]। कियद्वा मानसं प्रशंसया मानयामः[३]। येन[४] तत्रैव[५] सामोदं प्रोदसाहयिष्महि[६]। चरणाभ्यां परितः किं नाचरितं ?। याभ्यां मनोरथपथमलम्भयिष्महि[७]। लोचनयुगलाय रोचनं किमन्यद्वितरामः। येन गुरूपदिष्टं तन्मिष्टमनुभाव्यामहे[८]। नासा-द्वयात् किं नासादयाम ?। येनानेनामोदेन सामोदी-क्रियामहे। त्वचः[९] किं वचः कथयामः ?। यया तमिममदःसम्बन्धिगन्धवाहमवगाह्यामहे।

---

(१) बहुव्रीहौ कः। (२) प्रापिताः स्म। (३) पूजयामः।
(४) मनसा। (५) गुणानुभवं।
(६) प्रोत्साहिताः वयं। (७) लम्भिताः।
(८) दृष्टवन्तः। (९) वार्त्तामित्यर्थः।

आत्मनि तु सुभगनामधेयं भागधेयं कियदाधेयतां विन्देत। यस्य तत्तत्फलवलयेनान्तर्बहिरप्याव्रियामहे[१]। अहो! अस्तु तावन्नाम्नैव श्रियं दातु[२]रस्य महाराजस्य विराजमानता। पारिषदानामप्यमीषां महिमानमुपनिषदोऽपि वर्णयितुं न शक्नुवन्ति। येनात्मानमपि विस्मार्य्य नृत्यमनुवर्त्यामहे। किमसङ्कीर्णमस्मासु न वितीर्णं[३] मर्मीभिर्महामहिमचरणैः। यत्खल्वतीतलोकेन[४]निजालोकेन निर्निमेषतया सुपर्वाणः क्रियामहे। कतिशः स्वयं[५] न प्रतिपालिता वयं। यन्निजच्छाया[६]मापद्य पर्य्याप्यामहे[७]॥

कतरद्वा मनः सन्तोषणं पोषणं न विहितम्। यन्निजदृष्टिसुधावृष्टिभिरभितर्प्यामहे। पश्यत पश्यत नेत्रगति-विचित्रताममीषां। यया खलु नृत्यमुपदिशद्भिरिवामीभिरनुगृह्यामहे॥ तस्मान्नृत्यचर्य्यापरिचर्य्यापर्य्युत्सुका वयं। तदर्थमेव योग्यमवसरं मृग्यन्तो[८] वर्त्तामहे॥

(१) आवृताः स्म।
(२) श्रियं ददातीति श्रिदामेति निरुक्तिभाजः। (३) नदत्तं।
(४)सर्वोत्तमेनेत्यर्थः। (५)महामहिम चरणैः। (६)आश्रयं।
(७) समर्थीक्रियामहे। पूर्णाकृताः स्म। (८) दैवादिकोऽयं।

सभासद ऊचुः ।—

भो भोः सुशीलवासनाः! कुशीलवा[1] इव स्तुवाना यदि सर्व्वपर्व्वनिर्वर्त्तका नर्त्तकाः स्थ तर्हि भवद्भिः समर्हिता निजकलाकलापाः कल्प्यन्तां विशेषादनेन श्यामधामनिकामवामविग्रहेण। यः खलु चित्राङ्गो[2] न तु चित्राङ्गः[3], चन्द्रकी[4] न तु चन्द्रकी,[5] पीतांशुको न तु पीतांशुकः,[6] श्यामघनो न तु श्यामघनः,[7] वंशप्रवीणाधरो न तु वंशप्रवीणाधरः,[8] गुणरूपी न तु गुणरूपी,[9] विद्याधरो न तु विद्याधर[10] इति वैचित्रीभिर्नेत्राणि चित्रयति।

ततश्च ।—

अर्जुन-सुवलादिभिरुपगाने
पाणि-शृङ्ग-दल-तालनिधाने ।
नृत्यन्तं तं व्रजशिशु सभ्याः
प्रशशंसुर्य्यें श्रुतिनुति[11]लभ्याः ॥

---

(१) चारणास्तु कुशीलवा इत्यमरः ।
(२) आश्चर्य्याङ्गः । (३) चित्रलेखरुपमङ्गं यस्य ।
(४) मयूरः । (५) पिच्छयुक्तः ।
(६) पीतकिरणः । (७) मेघः ।
(८) वंशे कुले प्रवीणोऽभ्योऽधरो न्यूनः । (९) गौणरूपी ।
(१०) जातिविशेषः । (११) वेदकर्त्तृकस्तुति ।

श्रीकान्तेऽप्यथ विष्क्रान्ते विवेशावेशतो बलः ।
तदालोकः सभ्यलोकः श्लोकयामास[१] तद्द्वयम् ॥
यद्येतयोर्वर्णभेदः स्यान्नैव श्याम-गौरयोः ।
तदा न परिचीयेता मतावङ्गगुणादिभिः ॥ इति ॥
अङ्गहारे तडिल्लीलामङ्के मेघेन्दुतां क्रमात् ।
व्यञ्जं व्यञ्जं विविशतुः सङ्गातृकुलाचले[२] ।

अथ सभासदः स्व-स्व-हृद्यविहारि मणिमय-हारिहारादिकं ददतस्ते तु प्रत्याचख्युः ।—

न वयं द्रव्यवनीयका[३] नर्तकनायकाः । किन्तु नियुद्धयाचनका एव शुभवन्तो भवन्तो मल्ल-तल्लजा इति वर्णानां कर्णयोः सश्रित्य निश्रित्य च समन्ताद्विचित्य सर्व्वोर्द्ध्वं भवतां भवतां समितिं[४] समागताः । अतस्त[५] देवास्मदीयाय तोषाय पोषाय च दीयतां । न तु मोषाय नीयतां ॥

तदेवमवधारयद्भिरेव हसद्भिस्तैः सभासद्भिरुप-सर्पद्भिः सह सहजातौ कृतशातौ तत्र भवन्तौ तदारब्धवतौ ॥

(१) वर्णयामास ।
(२) सङ्गे गातार एव कुलाचलाः ।
(३) वनीयको याचकः स्यात् ।　　(४) सभां ।
(५) नियुद्धं ।

यत्र ।—

भ्रामणैर्लङ्घनैः क्षेपैरास्फोटनविकर्षणैः ।
उरः पेष मिवामीभिर्न्ययुध्येतां वलाजितौ ॥

ततश्चानवद्यया विद्यया तोषितेषु निखिलगुणि-जनगर्व्वनिवर्त्तकेषु कृष्णादिनर्त्तकेषु सर्व्वदुरासद-श्रीदामादिसभासदः स्वकसर्व्वकलावेदिता निवे-दिता चरणाय नृत्यविद्यामुद्भावयामासुः ॥

यत्रा नन्दकन्दलिततया स्वयमपि लब्धतृष्णाः कृष्णादयस्तदीयशिक्षापरीक्षणाय सुदुर्गमतालादि-धरास्तत्परिकरा एव वभूवुः ॥

अतएवोक्तमृषिणा ।—

क्वचिन्नृत्यत्सु चान्येषु गायकौ वादकौ स्वयं ॥
शशंसतुर्महाराज ! साधु साध्विति वादिनौ ॥इति॥

अथ गोषु गोचरतामतीतासु ततश्चलित वन्तस्ते ॥

विल्वैः कुम्भैः करस्थामलकसमुदयै-
स्ताडयन्तो मिथस्ते
हासं हासं मृगेहा विकिर(१)भणितिभि-
र्दर्दुरादिप्लुताद्यैः ॥

---

(१) पक्षि ।

अस्पर्शिस्पर्शनार्थं नयतपरिवृते-
मोचनैः कृष्णराज्य
स्यन्दोलीसिंहपीठाद्यधिकृतिजसुखैर्निन्यिरे
यामवर्गं ।

तत्र च ।—

नृपतिरजनि कृष्णः स्तोककृष्णः प्रधानं
सुवल सचिव रामस्यापि तद्वन्नृपत्वं ।
उभयवलपती श्रीदामभद्राविताद-
न्विधविविधतया तौ राष्ट्रलक्ष्मीमकार्ष्टां ॥

क्वचित्स्थानं क्वचिद्यानं क्वाप्यर्थे सन्धि-विग्रहौ ।
पराजय-जयौ क्वापि क्रीडायामनुचक्रतुः ॥
एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने ।
नद्यद्रिद्रोणिकुञ्जेषु काननेषु सरःसु च ॥

तदेवं स्थिते दिनकतिपये च प्रस्थिते कदाचिदह-मुख एव पूर्व्वपूर्व्वपूर्व्वदेव-निर्वापण[१] भृत-निभृतचिन्ताकृतमतिभ्रंशस्य कंसस्य स्वयमभ्यासं[२] प्रलम्वनामा देवध्रुगत्याजगाम ॥

अभ्यागम्य च प्रणम्य व्यक्तमेव तमनुयुक्तवान्[३] ॥

---

(१) निर्वापणं विशसनं मारणं प्रतिघातनं ।
(२) निकटं । (३) पृष्टवान् ।

देव ! तव केयं परिदेवनावल[1] वदावर्त्तमाना[2] दृश्यते ? ॥

कंस उवाच ।—

न जानासि? ममान्वग्भूय स्थितं विशिष्टं किम्वा-वशिष्टम् ॥

प्रलम्व उवाच ।—

भवतु, मामपि याममेकं व्यापारय ॥

कंसस्तु तूष्णींभूय दूयमानवदनः क्षणमासीत् ॥

प्रलम्व उवाच ।—देव ! कथमिव ? ॥

कंसः सवैरस्यं विहस्य तस्य तत्र पतङ्गतां विभा-वयन्नुवाच ।—

त्वमपि तमसि प्रज्वलज्वलनवर्त्मनि वर्त्तनीयः ॥

प्रलम्वः सक्रोधमुवाच ।—

अहो ! सर्व्वङ्कषज्वालस्य कालस्य महिमा हिमाचलमपि ज्वलयति यदाश्रितांस्तडागांश्च ताडयति ॥

कंस उवाच ।—

भवतु यथा भवदिच्छा ॥

---

(१) अतीव आदरं ।

(२) पुनः पुनरभ्यागच्छन्ती ।

इति निशम्य तमानम्य तदवमानित[१]श्च तदैव दैव सन्दानित[२]तया कृताविलम्वः प्रलम्वस्तादृश-क्रीडापरेषु श्रीकृष्णावरेषु वालनिकरेषु प्राप्तदूर-भूर्विचारितवान् ॥

ताविमौ सुकुमारौ च सर्व्वमारौ कुमारौ यौ ।
सहसा रहसा येन येन[३] कंसा[४]दगंसातां[५] ॥

सर्व्वो[६]ऽप्यसौ सर्व्वचालेन कालेन घटित कठिन-ताभ्यामाभ्यां चर्वितगर्व्वः[७] सम्वृत्तः[८] तदद्य समस्तवासरविस्मृमरविहाराविसरजविश्वासप्रपञ्चनया वञ्चयन् वन्धुवदेव स्कन्धद्वये हस्तद्वयकृतवन्धं द्वयमपि प्रक्षिप्य क्षिप्रमेव भोजराजपरिसरं परि[९] समुपहरिष्यामीति ॥

अथ स तु कल्की[१०] वल्कीकृत[११] कच्चर[१२]-तादि प्रच्छन्नस्पश[१३]वेशतया पूर्व्वं गोष्ठमागत्य

(१) अवज्ञात ।　(२) वद्ध ।　(३) कर्त्रा ।
(४) सकाशात् ।　(५) जग्माते ।　(६) कर्म्मभूतः ।
(७) कर्तृभ्यां चर्वितो गर्वोऽस्य ।
(८) वभूव ।　(९) लक्षीकृत्य ।
(१०) दम्भी ।　(११) आच्छादनीकृत ।
(१२) कच्चरं मलदूषितमित्यमरः ।
(१३) द्वौ चौराभिमरौस्पशौ इति नानार्थे अभिमरः प्राण-निरपेक्षः ।

परितो दृष्टिं वितत्य वेश्मस्थितगोपवालविशेषवेषं समुह्य[१] तमेव च व्युह्य[२] मिश्री[३]भवितुं शिश्रीषन्[४] हसन्नेव तत्र प्रविष्टः परिदृष्टश्च कृष्णेन। दृष्ट्वा च तच्छलमेवास्वच्छस्वच्छलायावलम्ब्य भद्र! कथं विलम्बमालम्वथास्तथापि भद्रं दुद्यूषासमय एव समयितस्त्वमसीति विहस्य तदनुकृत-गोपवालसम्वन्धविशेषसम्वद्धं दुर्गामानिजव्याजाय परिहस्य च वहुपरितोषितेन तेन सह सहचरत्वं वलस्य वलनिर्जयार्थमेव कलयाञ्चक्रे॥

ऊचे च।—

अद्यारभ्य सभ्य! मम पर[५]मसुहृद्भवानेव। त्वामहमच्छिगततया[६] स्थापयिष्यामि। श्रीदामा राममेवान्वेतु। स किल[७] ह्यन्तर्वर्द्धनस्पर्द्धः स्पर्द्धनगणमेवार्हतीति। स तु क्रतुभुक्-शत्रु-स्तत्र निर्विस्मयमेव कुस्मयमानतया तथा स्थितः॥

---

(१) वितर्क्य। (२) वहतेर्ङितियेह्रस्वः।
(३) मिश्रित। (४) श्रयतेः। श्रयितुमिच्छन्।
(५) श्लेषे परमितिच्छेदः
(६) श्लेषे अच्छिगतोद्वेष्य इत्यमरः।
(७) किलेत्यनृते।

यतः ।—

विश्वचिकीरपि सविधिः,पिपठीर्यस्माद्भवे त्तस्मिन् ।
को वा चतुरम्मन्यः,प्रथयतु निज-चातुरीं कृष्णे ॥

अथार्भकसमुदयं विभागद्वयमयं विधाय तं च प्रलम्बं स्वबलपरिवृढ[१]तया दृढं निधाय तत्र च समत्सरमिव बल-प्रलम्बौ श्रीदामात्मानौ मिथः प्रतिसङ्घट्टिनौ[२] सङ्घट्टय्य परानपि सजूः कुर्वाणतया तथा प्रघटय्य पराजितानां च शताय[३] परिक्रीताना[४]मिव वाहकत्वं प्रकटय्य सङ्गराय[५] कृतसङ्गरः[६]स माधवो विविधक्रीडानिविडमना बभूव ॥

ततश्च ॥

अव्रीडक्रीडतायां जयतदितरयो-
वाहयन्तो वहन्त-
स्तस्मिन् वाहानुकर्त्तृंस्तुरगतुलनया
हासयन्तो हसन्तः ।
मर्य्यादा-निर्णये तु प्रथितकलिकुलं
वादयन्तो वदन्तः

(१) अधिप । (२) प्रतिस्पर्द्धिनौ ।
(३) शतेन वेतनेन । (४)परिक्रयणीकरणं सम्प्रदानं वा ।
(५) युद्धाय । (६) कृतप्रतिज्ञः ।

प्रापुर्भाण्डीरमेते वनवनभुवि गा-
श्चालयन्तश्चलन्तः ॥

तदेवं कुतूहले तु प्रवले वलं प्रलम्वस्कन्धारूढं सन्धातुं जितभुजगभुजः श्रीवलानुजः पराभवमगणयन् । दुर्वलं दुर्वलमेव विचिन्त्य स्वीकृतं स्वगणमेव पराभावयामास ॥

तस्या(१) पाततस्तु वहनाय माना(२)न्मनोग्लानिः स्यादिति स्वमपि तथा चकार ॥

ततश्च ॥

ऊहे कृष्णः श्रीदामानं दैत्यः स श्रीरामाख्यानं ।
अन्योऽप्यन्यं शूरम्मन्यः सर्व्वः प्रोचे धन्यो धन्यः ॥

पूर्व्वं कृष्णः कौतुके येन(३) दृष्टः
सौम्यः पश्चाद्रामकर्षे तु भीष्मः ।
इत्येवायं स प्रलम्वस्तु पर्य्य-
ग्मर्य्यादातः पर्य्यगात्तं प्रगृह्य ॥
रामः क्रीडाविष्टताश्लिष्टवोध-
स्तं नाज्ञासीद्दृष्टमात्रं न कृष्णः(४) ।

---

(१) प्रलम्वस्य ।
(२) गर्वात् । (३) प्रलम्वेन ।
(४) ननाज्ञासीत् किन्त्वज्ञासीदित्यर्थः ।

पूर्व्वः[१] प्रायेणार्जुनाभिन्नचित्तः
पश्चाद्भावी[२]चातुरीसद्धुरीणः ॥

अथ तथापि गिरिनिवहनिभवहलसारतावह-दुर्वहस्वभावताभावितसङ्घर्षणावपुःकर्षणजातघर्षणवशान्निविडपीडिततया व्रीडितचित्ततया च पुनः पुनरीडितम्मन्यः स्वमखर्व्वं पूर्व्वसिद्धं पूर्व्वदेववपुराविर्भावयामास ॥

यर्हि राममवहद्दनोः सुतः
शुभ्रधामवपुषं तमःप्रभः ।
इन्दुहारितम[३] इत्यमुं तदा
दिव्यलोकनिकरस्त्वमन्यत ॥

तस्मिन् किञ्चित्रासमासन्नवान्[४] स
ज्येष्ठः पश्यन् द्राक् कनिष्ठस्य वक्त्रं ।
तद्भ्राम्यद्भ्रूलीलया लब्धदृष्टि-
र्दुष्टं मुष्ट्या ताडयत् सुष्ठु मूर्द्ध्नि ॥

ततः ।—

प्रहतमस्तकं रुधिररूषितं तद्वपुः
पतत्तुलितमुज्जहत्[५]प्रतिहरि द्रुतं पुप्लुवे ।

---

(१) ज्येष्ठः । (२) कृष्णः ।
(३) राहुः । (४) प्राप्तवान् । (५) त्यजत् सत्

यथाञ्जनमहीधरं दलित[१]मक्त[२]रक्तद्रवं
त्यजन्द्रवति वज्रकः सपदि वज्रपाणिं प्रति ॥
प्रलम्बपतनं दूरे प्रलम्बाघ्यप्तिरन्तिके[३] ।
उभे ते[४] युगपद्दृष्टे जज्ञाते[५]स्मितविस्मिती ॥
वाष्पश्लिष्टतया तस्मिन्नाश्लिष्टौ भ्रातरौ मिथः ।
या वाश्लिष्यार्द्रतां याता वन्धुता वहिरन्तरम् ॥

महारवं कृतवति च प्रलम्बके
तदा द्रुतं मृतवति च द्यवि स्थिताः[६] ।
सुनिर्वृता ववृषुरलं स्रजां कुलं
व्यतर्कयन्नुपहसितं हरेरपि ॥

वाहक-शिरसि प्रहरणं,मत्रादिष्टं सदा विहृतौ[७] ।
मर्य्यादाति क्रान्ता,प्रलम्ब! भवता तथा तु नास्माभिः॥

तदेवं प्रलम्बालम्भनसम्भ्रमेऽप्यनुद्भ्रान्तचित्तास्ते शृङ्गिणीवित्ताः कुणपता[८]मितस्य प्रमीतस्य[९] तस्य पितृवनवेशं[१०] प्रदेशलेशं परित्यज्य योजन-व्यज्यविस्तार प्रशस्तभाण्डीरतलमण्डलमेवाधिष्ठाय

---

(१) विदीर्णं । (२) अञ्चित ।
(३) कृष्णस्येत्यर्थः । (४) कर्तृभूते ।
(५) जनयामासतुः । (६) स्वर्गवासिनः ।
(७) विहारे । (८) शवतां ।
(९) हतस्य । (१०) श्मशानतुल्यं ।

विहारनिष्ठाः क्रीडापराग्य[1] स्पृहयाय्या[2] जयाय्या[3] गृहयाय्या[4] स्तृणलोभाविष्टतया वृक्षषण्डा[5] द्विप्रकृष्टामपि यमुना-कच्छानच्छमुञ्जाटवीं प्रविष्टानामन्धीभूतानां पादबन्धनाना[6] मन्वेषणा-द्विश्लेषमाजग्मुः ॥

ततः कथमप्यवधानतः प्रनष्टचित्ततया स्पष्टकष्टचित्ता रंहसा सङ्कुशः सभयं हूयन्ते स्म । नूनं देशाधिपति-निदेशतः सद्देशमागता एव केचित्क्रूरा गा दूरगा विदधुरिति च ध्यायन्तिस्म ॥

ततश्च गवां खुरादिचिह्नैरह्णाय तासामध्वानं लब्ध्वा समस्ता एव ता हरिरह्वास्त ॥

यथा ।—

कृष्णो तटाग्रमधिरुह्य सुवर्णवर्णं
वल्गूत्तरीयमनुघूर्ण्य वितीर्णहूतौ ।
गावः प्रतिस्वमभिनेदुरुदीर्णतापा
गर्जत्तडिद्घनघनाघन तृष्णयेव ॥

तदेवं यदालम्बि चास्तम्भि च नैचिकीनिचयस्तदानीमेव च दृष्टनिर्विलम्बप्रलम्बप्रलयचराः

(१) कर्मणि षष्ठी ।　　(२) स्पृहाकर्त्तारः ।
(३) जयकर्तारः ।　　(४) ग्रहणकाः ।　　(५) समूहात्
(६) गोमहिष्यादीनाम्पादबन्धनं महिष्यादीत्यमरः ।

कंसचरा लब्धावसरा मुञ्जाटवीमुद्भटचेष्टतया वेष्टयित्वा निर्निर्व्वारणाकूपीटकारण[1]वृष्टिं झटिति तादृशदुष्टवौषट्[2] कारास्पदतद्विलक्षणतेजांसि तस्मिन् प्रतिपक्षताकल्पनया निसृष्टवन्तः ॥

या खलु ज्वालकलयापि सर्व्वैरोषादोषामास कल्प[3]मिति । प्रज्वलति महाज्वलने पटपटायमानायां च महामुञ्जाटव्यां भीततयाऽस्तव्यस्तचालास्ते गोपालाः सखिवलयारामतया कलितकेलिजालाविह राम-गोपालावेव भूरिदूरतः शरणतया समुपाजग्मुः ॥

तत्र च ।—

दवाग्निं दृष्ट्वा ते यदपि हरिरक्षापरतया
समीयुर्वैयग्र्यं तदपि निजरक्षामवृणुत ।
प्रसक्तिस्तस्येत्थं किल भवति सा चेदुदयते
तदा शक्तिश्चास्य प्रभवति यथेच्छं मुहुरिति ॥

यथा ।—

"कृष्ण ! कृष्ण ! महावीर्य्य ! हे रामामितविक्रम ! ।
दावाग्निना दह्यमानान्प्रपन्नांस्त्रातुमर्हथ ॥ इत्यादि ॥

---

(१) अग्नि । (२) होम ।
(३) उपदाहे ईषन्न्यूनं ददाह

तदेवं दूरागतानां कार्पण्यपण्य[१] भणितश्रवण-मारभ्य तस्मा[२]दभ्यास[३]गतानामपि भयमुपलभ्य श्रीमान् कृष्णस्त्विदं ससंरम्भं भावयामास ॥

आत्मनोऽप्यलममी मम प्रिया
हा ! दवं प्रति[४]दवं समियूति[५] ।
गीर्णमेव करवाण्यमुं[६] ततः
कोऽयमः क इह वा भवेद्धरः ॥

किन्तु मया वैश्वानरनिगरणं न सोढुं परिवृढा भवेयुरेत[७] इति विचिन्त्य प्रोवाच ।—

माभैष्ट नेत्रपुटं त्वनुद्घटितं घटयतेति निमीलद्विलोचनेषु च तेषु तदावेशवशया कृतप्रवेशया योगमायया तत्कालकल्पितमहाजलधरकल्पापरशरीरस्तत्रत्येनानल्पेनानेन तमदुःखत एव सर्व्वं विभ्रक्षन्तं[८] भक्षितवान् ॥

तथा तदिच्छया सुधाचुलुकायमानमित्येके । तयैवं चान्यदपि चकार ॥

---

(१) स्तुत्य ।　(२) हेतोः ।
(३) निकट ।　(४) दवं लक्षीकृत्य ।
(५) प्राप्नुवन्ति अगतौ ।　(६) दवं ।
(७) सखायः ।　(८) भर्जनायेच्छन्तं ।

यदुक्तं ।—

"ततश्च तेऽक्षीण्युन्मील्य पुनर्भाण्डीरमापिताः।
निशाम्य विस्मिता आसन्नात्मानं गाश्च
मोचिताः" ॥ इति ॥

अथ धेनुततिं विनिवर्त्य हरिर्वलयुक्ततया मुरलीं कलयन् सहचारिगणप्रथितात्मयशा व्रजमागतवानहनि ग्लपिते ॥

गवां धूलिर्नादः खुरघटितघट्ट[१]ध्वनिघटा
हरे[२]स्तासां[३]हूतिः श्रवणगुणभिद्वेणुरणितं।
अमीभिस्ते कृष्टास्तरतमतया गोकुलजना
न पृष्ठ्यं नाग्रीयं न सममविदुर्न स्वमपि च ॥

यद्यपि वहुसङ्घट्टन, धूलिध्वान्तं च सर्व्वत्र।
तदपि हरेर्मुखचन्द्रः, प्रतिजनमानन्दितं चक्रे ॥

अथ पूर्व्ववन्मान्तरपितरादिरचितसुखवितरौ भ्रातरौ निजनिलयं प्रविविशतुः ॥

सखायश्च प्रलम्वदवानलकथाप्रथनया सर्व्वे विस्माययामासुः ॥

तदेतत्प्रोच्य समापनमाह ।—

---

(१) घटना। (२) हरिकर्त्तृका।
(३) गवां।

ईदृशस्तव गोपेन्द्र ! पुत्रः पुण्यकृतस्तवः[१] ।
प्रेमार्द्रः सुहृदां यस्तु दावाग्निमपि पीतवान् ॥

इति श्रीगोपालचम्पूमनु प्रलम्बदवसम्वर्त्त-
निवर्त्तनं नाम षोडशं पूरणम् ॥

---

पुण्यैः कृतः स्तवोयस्य ।

# सप्तदशं पूरणम् ।

अथ पूर्व्ववद्विलक्षणायां क्षणदासभायां समुत्कण्ठः स मधुकण्ठः कथयामास ॥

पूर्व्वपूर्व्वानुसारेण धेनुकवधानन्तरव्यवहारेण प्रेयसीनां प्रत्यहमेव वर्द्धमानाः कमलकलिकावदुत्कलिका मधुसूदनस्य वहिरीहितैर्दुरूहां स्पृहां वृंहयामासुः ॥

तत्रापि सर्व्वाधिकायाः श्रीराधिकायास्तु नितरां[१]

तत्र तूपलक्षणतया श्रीराधामाधवयोर्वर्ण्यते ॥

प्रसङ्गेच्छा[२] वीक्षास्पृहितमनुषङ्गा[३]भिलषितं
पृथग्लोकद्वेषः प्रतिसमयमुद्वेगकलना ।
इमे भावा युग्मे[४] युगपदुदितास्तत्क्रमवशा-
दहो ! दूरस्थित्योरपि दयितयोरेकरुचिता ॥
आदर्शाविव तौ स्वच्छौ सदाभिमुखतां गतौ ।
राधामाधवयोर्भावौ मिथोभावानुपेयतुः[५] ॥

---

(१) अतितरामिति वापाठः ।

(२) प्रस्तावेच्छा । (२) मिलन । (३) राधाकृष्णो ।

(५) प्रापतुः ।

भूयो भूयो दृश्यते यर्हि मूर्च्छा
राधायां वा श्रीहरौ वा रहस्तु ।
अन्योन्यस्य स्फूर्तिरेवाप्तितुल्या[१]
कल्याणाय प्रायशः कल्पते स्म ॥

तदेवं ताभिस्तस्यातिदुर्लभस्य स्पृहातिशय वाहितया नातिहितायां शरद्यतिवाहितायां[२] मार्गशीर्षस्तु तासां पतिम्मन्यगृहगमनाय मार्गशीर्षतामवाप[३] ॥

यत्र च ।—

कन्यानां मातरपितरेषु तद्दानाय पूर्व्वमेव स्वयमनभिरुचितीकृतमुरजिदितरेषु स्वप्नदोषादेवान्यत्रावगततद्धितरेषु तत एव दुःखिततयानभिनन्दितत्सम्बन्धिनिकरेषु सम्प्रति तासामति दुष्खशुष्कता दृष्ट्या भीतिपरेषु तत एव तत्प्रस्थापनायां स्थगितान्तरेषु लोकधर्म्मविगानलब्धदरेषु[४] च घूर्णितचित्ता पूर्णिमा तदिदं निर्द्दिदेश ॥

---

(१) प्राप्तितुल्या । (२) गमितायां ।
(३) मार्गस्य शीर्षं प्रथमांशं तामित्यर्थः ।
(४) भयेषु ।

भवन्तस्तावत्तटस्थीभवन्तस्तिष्ठन्तु वयमेवा-मूरनुनीय तत्तद्गृहमुपनीय तत्तत् प्रक्रियां क्रिया-विषयीकरिष्याम इति ॥

अथ जन्यम्मन्यांस्तेषा[१]मनादरमवधाय मन्युं मन्यमानान् स्वयमेव सा देवतादिमान्या साम्ना सम्मान्य यथा स्वमनीषित[२] मेवाङ्गीकारयाञ्चकार ॥

कन्यास्तु ता धन्या वरम्मन्यालयान्तःप्रयाणं तत्र च लब्धतदञ्चलन्यास[३] निजाञ्चलताद्यन्याय-मसम्मन्यमाना वभूवुः ॥

अथ ताः शपथप्रथनया तदालयेष्वसम्भव-मपीष्टलम्भनमभीष्टनिष्टं विप्रलम्भनं च विस्रम्भ-न्निषयं विधाय दुःसहनानाव्यवसायाद्विष्कम्भ्य[४] गमनकर्म्मणि लभ्यमानाः। पथितु स्वमायया गोपयन्ती तत्र तत्सहगन्याश्चारोपयन्ती तत्त[५]-न्निर्वाहयामास ॥

पश्चादेव च तास्तत्र वासयामास। तास्तु तत्र च परमत्रस्ता वभूवुः ॥

---

(१) पतिम्मन्यानां। (२) वाञ्छितं
(३) परस्पराञ्चलग्रन्थ्यादीत्यर्थः
(४) सम्प्रतिबन्धं कृत्वा। (५) यद्यदपेक्षितं

यतः ।—

यासां देहोऽप्येष वन्दी गृहाभः
कृष्णालाभाद्गोपिकानां वभूव ।
तासां गेहं पैतृकं शर्म्मणो किं
यद्येवं धिक् श्वाशुरं वह्निरेव ॥

अप्यनुकूलं यासां, प्रतिकूलं स्याद्विदूरगे कृष्णे ।
तासां प्रतिकूलं तु, स्फुटमेवासीत्कुकूलतल्पाभं[१] ॥

तथापि पौर्णमासी तास्तत्तद्गेह-मध्यमध्यासीना विधाय यदा चलितुमुद्यतासीत्तदामूः पुनर्विचप्रचा[२]माप्ता निश्चप्रचाकृते[३] तदिदमादिष्टवती ॥

यदा भवतीभिः स्वमर्य्यादालोपस्तर्क्यते तदा प्रपलाय्य स्थीयतां समाधानं पुनः कयाचिद्विद्ययास्माभिरेवाधातव्यं । सहसा पलायनधाम च तत्र तत्र विधातव्यमिति ॥

तदेव राजकारागृहाद्वैरिकारागृह इव पितृगृहात् तत्र गत्वा वसन्तीषु । यावानजनि निरोधस्तावत्युत्कलिकापि सम्ववृधे । कृष्णप्रेमवतीषु

(१) कुकूलं शंकुभिः कीर्णो श्वभ्रे ना तु तुषानले ।
(२) सन्देह । विचितं च प्रचितं चेति वाक्यान्निपातः समासे ।
(३) सन्देहनिरासकृते ।

श्वासानिललीलतां याता यद्यपि मनसि समिद्धा[१] हरिपरिरिप्सा तथापि ताभिः सा आव्रियते स्म विचारैस्ततिरिव वह्नेः सदिन्धनप्रकरैः। तच्च श्रीराधाप्रधानतया वर्ण्यते ॥

यथा।—

पीयूष-च्छविधारि[२]हारिकिरणः सर्व्वत्र शश्वज्जडी-
भावप्रापि[३]गुणः सदार्द्रहृदयः सुभ्रूचकोरीगतिः।
सोऽयं हन्त! मया कथं हरिरहो तत्प्राणया त्यज्यतां
धर्मो गच्छति किन्त्वधर्मपदवीं रुद्धा च हत्वा च माम्॥

श्रीकृष्णस्य च भावना यथा।—

मदेकचेता मत्प्राणा राधान्यवशतां गता।
यां स्मरन्मम हा! चेतश्चेतनामावरिष्यति॥

ततश्च।—

राधां तथा स्मरन् कृष्णः स्निग्धं रागिविलोचनं।
कियन्त्यहानि मार्ष्टि स्म हन्त हारिद्रवाससा॥

मिलनायातिवैयग्र्ये च॥

धर्म्मातिक्रमिचित्तं, कथमधिमित्रं च तत् प्रकाश्येत
इति हरिरुपचितयुक्ति,र्युयोज दूत्याय केवलां दृष्टिम्॥

---

(१) उद्दीप्ता। (२) चन्द्र।
(३) प्रापयितुं शीलमस्य।

इदमेव वक्ष्यते ताभिः ॥

शरदुदाशये साधुजातसत्-
सरसिजोदर-श्रीमुषा दृशा ।
सुरतनाथ ! ते ऽशुल्कदासिका
वरद ! निघ्नतो नेह किं वधः ? ॥ इति ॥

यतः ।—

कृष्णास्यान्यत्र दृक्प्रान्तः सद्भिः शास्त्रफलं[1] स्मृतं ।
हन्त ! तासु पुनः सोऽयमेभिः[2] शस्त्रफलं[3] मतं ॥

ततश्च ।—

रात्रिन्दिवं वसति चेतसि हन्त ! भाव-
ज्वाला हरेरुत तदीयरमागणानाम् ।
सन्ध्याद्वये व्यतिविलोकसुखाज्यसिक्ता
साग्निद्विजालय इवाग्नि-ततिः समिद्धा ॥

तत्र च ।—

गोष्ठाद्वनं प्रविशतो वनतश्च गोष्ठं
लोकेन लोकनकृते सह माधवेन्दोः[4] ।
सम्भूय सङ्गतवतीषु च तत्प्रियासु
राधा जयत्युडुषु पौर्णिमराधिकेव[5] ॥

(१) सस्ये हेतुकृते फलमित्यमरः। आयुधाग्रे लाभे फले चेति क्षीरः
(२) सद्भिः । (३) अग्रभागः । (४) श्लेषेण वैशाख-चन्द्रमाः ।
(५) पूर्णिमासम्बन्धिराधानक्षत्रमिव ।

तत्र च प्रगेतन[1]-वनप्रस्थाने ।—

मिथ्याहासानकुरुत हरिः स्पृष्टपार्श्वस्थहस्तं[2]
वीक्ष्यां वक्रप्रणायवलितामर्द्धमर्द्धं वितेने ।
आश्लेषाघं विहरणगणं मित्रवर्गेषु चक्रे
दूरे गत्वाऽप्यहह ! मुरलीसम्विदः सम्व्यधत्त ॥

इदमेव च ताभिर्वक्ष्यते ॥

"प्रहसितं प्रिय ! प्रेमवीक्षितं
विहरणं च ते ध्यानमङ्गलम् ।
रहसि सम्विदो या हृदि स्पृशः
कुहक ! नो मनः क्षोभयन्ति हि" ॥इति॥

अथ सायन्तनागमने तु ।—

यदा वा गोष्ठं सम्प्रविशति तदा च भ्रमरकै[3]-
र्वृतं वक्त्राम्भोजं घनखुरपरागैर्वलयितम् ।
अमूषां नेत्रालिष्वभिमुखतया दर्शयति त-
न्मिलत्पाशं यन्त्रं मदनरचितं वन्धु[4]मिव तान् ॥

एवमेव च ताभिर्वक्ष्यते ।—

"दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतं ।
धन-रजस्वलं दर्शयन् मुहुर्मनसि नः स्मरं वीर !
यच्छसि" ॥ इति ॥

---

(१) प्रातःकाल । (२) यथा स्यात्तथा ।
(३) चूर्णकुन्तलैः पक्षे भ्रमरैः । (४) बद्धं कर्त्तुं ।

एवमहरहरपि परस्परं स्पर्द्धयेव वर्द्धमानतया तासामुत्कलिकाः कलित[१] मधुमाधवावधिकाला-व्याकुलताकुलतां कलयामासुः ॥

यथा वर्णितं प्रलम्बवधवासरसम्बधिसन्ध्यामनु सन्धाय ।—

"गोपीनां परमानन्द आसीद्गोविन्द-दर्शने ।
क्षणं[२] युगशतमिव यासां येन विनाभवत्" ॥इति॥

अस्य[३] चाभिधेयमिदं ॥

तासां कृष्णावलोके प्रमदसमुदिति-
र्न स्वरूपेण वक्तुं
शक्या किं तु स्वकार्य्यस्फुरणपदतया[४]
किञ्चिदुद्देशमाप्ता ।
तद्विश्लेषे यथासां युगशतकदशां
याति कालः कलाख्य-
स्तद्वत्तस्यानुसङ्गे युगशतमपि त-
द्धाति शश्वत् कलाभं ॥

(१) प्राप्त ।
(२) त्रसरेणुपरिमाणकालः त्रुटिः, शतत्रुटिः लवः, त्रिलवः निमेषः, त्रिनिमेषः क्षणः, पञ्चक्षणः, काष्ठा, पञ्चदशकाष्ठा लघुता, पञ्च-दशलघुता नाडिका, द्वे नाडिके मुहूर्त्तः, षट् सप्त वा मुहूर्त्ताः प्रहरः ।
(३) श्लोकस्य ।　　(४) आस्पदतया ।

कलापि यदि विश्लेषे युगानां शततां गता ।
रात्रिन्दिवीयसङ्ख्यायां तदा शङ्कामहे वयम् ॥

एवं सायंप्रातिकावलोकनवलतः कथमपि निदाघेऽपि त्तपिते मयूरान् मदयित्नूनां गदयित्नूनां च स्तनयित्नूनां समागमः सम्वृत्तः[१] ॥

तत्र च ॥

गृहनिगृहीतानां तासां मनः-कथा यथा ।—
खर्जूरादिफलैः सुकन्दवलितैर्मित्रैः समं प्रावृषि
प्राग्वृष्टिजवारिवारिणि[२] तरुक्रोडेऽशनक्रीडनं ।
नीरप्रान्तशिलासु तासु दधियुग्भिस्स्वादि[३] सम्भोजनं
दूराह्वेन्वनुहूतिरप्यघजिता नश्चित्तमुल्लुञ्चति ॥

यत्र च ।—
घनागमघनागमे विरमिताजितो[४]न्मीलने
समस्तजन-शर्मदाः सपदि खञ्जरीटेक्षणाः ।
अमूः शुचि[५]रुचि-श्रिया स्वहृदि कृष्ण-भावं गता
हरिव्रजवनप्रियास्तमसि लीनतामागताः ॥

---

(१) सिद्धः ।
(२) निवारके । तरुक्रोड इत्यस्य विशेषणं ।
(३) अन्न । (४) कृष्ण, पक्षे विष्णु ।
(५) पक्षे शृङ्गारः ।

यथा ।—

अकुण्ठामुत्कण्ठां निरवधि वितर्क्यालि-वितति-
र्यदा तासामग्रे हरिपरिचितं वृत्तमरुणात् ।
तदा वर्षाजातास्तडिदनुगताम्भोदवलिताः
प्रतीपाभाः कृष्ण-स्फुरणमधिकं हा ! विदधिरे ॥

नूनं निदाघेन विभूय जज्ञे
सन्तप्तिरासां हरिरागिणीनां ।
वर्षासु शाम्येदिति सङ्गिनीनां
निर्णीतिरासीद्विपरीतरीतिः ॥

वर्षा द्वितीया दधिरेऽक्षि-नीरै-
रन्तःस्फुरत्कृष्णघनाभिराभिः ।
(१)इत्थं निनिन्दुः किल ते रुवन्तः
स्वाजीव्यवर्षानुगताः प्लवाद्याः(२) ॥

कलापामासु(३)रेतासु कलापाश्च कलापिनाम् ।
स्मरार्द्धचन्द्रवाणाभा यत्रैके भान्ति चोन्मुखाः ॥

वर्षाः शीतलताकरैर्निजगुणैरासां मनः शान्तता(४)-
मानेतुं किल यद्यदत्र विदधुः सर्व्वं च तत्प्रत्युत ।

---

(१) "इति स्वपक्षस्थितपूर्ववर्षा, स्ते पर्य्यभाषन्त किल प्लवाद्याः"॥ इति वा पाठभेदः॥　　(२) मण्डूकाः ।

(३) कलापास्तूणीराः तद्वदाचरन्तिस्म कलापो भूषणे वर्हे तूणीरे संहतेऽपि च ।　　(४) धीरतां इति वा पाठः ।

द्वेषं ता वत मेनिरे यदनु च प्राणालिभिः शङ्कितं
हन्त ! द्विष्टसुहृद्दशेयमुदिता हा ! हा ! विधेः का गतिः ॥

अत्र तासां त्रासवचनं ।—

इरम्मदरदा(१)स्तेऽमी नीरदा(२) अपि सर्व्वदा ।
चर्व्वन्ति क्षोणि-पृष्ठस्थान् गर्जन्ति किल गर्वतः ॥

अहो ! चित्रीयते सेऽयं प्रेमगति-वैचित्री ॥
यतस्नादृशि(३) च त(४)द्वृत्ते कदाचिदानुकूल्यस्पृशीव श्रीराधास्तुतीनामाधारता(५) दृश्यते ॥

यथा तस्यास्तत्पश्यन्त्या भावनेयं ।—

अयि ! तडित्त्वमसौ क्व नु किं तपः
कियदहो ! कृतवत्यसि तद्वद ।
यदिमम्बुधरं हरिवक्षस-
स्तुलितमालिगता रमसे सदा ॥

यत्र च प्रमादतः सा किञ्चन प्रोच्यापि सख्यामपि सङ्कोचादन्यथा प्रख्यापयामास ॥

अहह ! पश्यत कृष्णघनाघनं
प्रसजती चपला खलु खेलति ।

---

(१) मेघज्योतिरिरम्मदः, इरम्मदेव रदा यस्य ।
(२) निर्द्दन्ताः पक्षे मेघाः । (३) प्रतिकूले
(४) मेघस्य । (५) राधाकर्तृकस्तुतीनां विषयः ।

स्मरसि किं नु हरेः स्मरकौतुकं
नहि नहीदमृतोर्गुणवर्णनम् ॥ इति ॥

कदाचिच्च ।—

मेघागम-समयेऽस्मिन्नधिगतहरिताद्दृशां सम्पत्[1] ।
हरये स्पृहयसि राधे ! नहि नहि शाद्वलविभूतये
द्विषति ! [2] ॥ इति ॥

अथ श्रीकृष्णस्य च दिग्दर्शनं यथा ।—

शिखण्डिनां या कलनृत्य-माधुरी
शिखण्डचूडस्य सदातिशर्मदा ।
न सानुसन्धानमिता तदस्तु य-
न्मूर्द्धः शिखण्डं च जगाम विस्मृतिम् ॥

तदेवं सुष्ठु चापष्ठुता[3]मनुष्ठाय गतायां प्रावृषि शरदपि यथा ।—

आगमिष्यति शरद्भुवि द्यवि
स्वच्छतां विदधतीति चिन्तितम् ।
हन्त ! ताभिरुदये तदीयके
स्वं[4]दधे द्विगुणभावनाविलं[5] ॥

---

(१)अधिगत-हरित्वमेव दृशां सम्पत् पक्षे अधिगतो हरितो वर्णो यस्यां तादृशां सम्पत् ।
(२) शम्बुद्धिः । (३) प्रतिकूलमय ।
(४) आत्मा [illegible] । आत्मानं । (५) मलिनं ।

सतडिद्वारिदवृन्दं, निरीक्ष्य पूर्व्वं यदेव या तप्ता ।
तदपश्यन्त्यपि सेऽयं, सम्प्रति राधा भृशं दूना ॥

तत्र च राधाकृष्णयोर्नखालिपिवलयितकिसलयदलद्वयगतं पद्यद्वयं वायुना परस्परं नीतं ॥

तद्यथा ।—

तडितः पुण्यशालिन्यः सदाया घनजीवनाः ।
तेन सार्द्धमदृश्यन्त नादृश्यन्त च तं विना ॥

आवृतिमजहादिन्दु,-र्विलसति हंसश्च नीलकञ्जश्च ।
वृन्दावनमनु हा ! धि,ग्दैवं सत्तन्न[(१)] दृश्यते तस्याः॥

इति ॥

राधाकृष्णावित्थमन्योन्यमाप्तं
दैवात्पत्रं शश्वदाश्लिष्य साश्रु ।
अन्तःशून्यस्वर्णविम्वान्तरूपं
मध्ये हारं नायकं निर्मिमाते ॥

अत्र सखीनामपि खिन्नता यथा ।—

जलं कुमुदमम्वुजं विधुरुचिश्च यस्यां शर-
द्यहो ! विकसदात्मतामगमदाशु तस्यामपि ।
मनो नयनमाननं दशनकान्तिरासां पुनः
सदा मलिनतामगादिति किमालिभिः सह्यताम् ॥

---

(१) हंसश्च नीलकञ्जश्च ।

अत्र च वर्णितं लब्धवर्णै[१]रपि ।—

"आश्लिष्य समशीतोष्णं प्रसूनवनमारुतं ।
जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतसः" ॥

यतः ।—

सौन्दर्यं तन्नीलिमासौ द्युतिः सा
लावण्यं तत्ते च लीला-विलासाः ।
पीयूषश्रीण्यङ्गसङ्गे प्रियाणां
विश्लेषे तान्येव हालाहलानि[२] ॥

ततश्च ।—

हरेर्गन्धवहान् सर्व्वे जगत्प्राणतया विदुः ।
तद्वियोगेन तु क्षामा रामास्ता नाशुगा[३]ख्यया ॥

तदेवं यद्यप्युत्कण्ठायाः परमकाष्ठा जाता तथापि काचिदपि काञ्चित् प्रति न प्रकाशयामास ॥

अधर्मेणापि तं भजामीति यथा तास्तथा कृष्णोऽपि ॥

तत्र[४] ता निर्विद्यानिर्विद्य खिद्यते स्म ॥

कृष्णस्तूपायान्तरमपश्यन्नेत्र-विक्षेपवेत्र-विक्षेप-

---

(१) लब्धवर्णैः विचक्षणैः ।
(२) हलाहलाज्जातानि ।        (३) आशुगौ वायुविशिखौ ।
(४) द्वयोर्मध्ये ।

वित्रस्तानामपि तासां वश्यतामयातानामावश्यक-तद्भावनाय वंशी-शंसन-विशेषमभ्यस्यति स्म ॥

यथैव वक्ष्यते तत्र तत्र तदेवालक्ष्य ताभिः ।
"वेणु-वाद्य उरुधानिजशिक्षा" ॥ इति ॥

अथ प्रथमतस्तन्मना निजाग्रजन्मना युगली-भूय मुरली-कलीमावर्त्तयति स्म ॥

तत्र तु यदा समुद्दीपितभावान्तरे वनान्तरे गोचारणे सर्व्वमनसोऽप्यगोचरान् सहचरान् विस्मापयन्नतिकान्तगुणव्रजेन निजाग्रजेन सह स्वयमहरहः सहर्ष उत्कर्षं प्रवीणायन् वेणुशिक्षा-मीक्षयामास । तदा तासां तद्रूपस्फूर्त्तिरतीव पूर्त्तिमायाता ॥

सा च यथावदेव । यतस्तस्य भाव-वैभवस्य स्वभाव एवायं यद्दूरतश्च स्वविषयं विषयीकरोति ॥

तथाहि ।—

(१)अनुमानगता तासामर्थापत्तिः प्रतीयते ।
यतः कृष्णस्य दयितास्ता एव न्यायपण्डिताः ॥

---

(१) अनुमानं यत् प्रमाणं तदन्तर्गतैवार्थापत्तिर्विषयोपलब्धिः । अनुमानमात्रेण ताभिर्विषयाः साक्षात्क्रियन्ते । नैयायिकाश्चानुमानान्तर्गतमर्थापत्त्याख्यं प्रमाणं मन्यन्ते इति ।

तत्र याः[१] पुनरतीव स्निग्धता दिग्धहृदयास्त[२]-दुःखतः शुष्कतामवापुर्न पुनः स्वक-दुःखं पुष्कलं मेनिरे । यथा ।—

राधाया विशाखा ललिता पर्य्यायानुराधा च ।
चन्द्रावल्याः शैव्या पद्मा चेत्यादयः ॥

तासु[३] तु ताः[४] स्वमात्रनिष्ठतां निष्टङ्क्य स्वयमेव स सौहार्दं निजहार्द[५] मावेदयाञ्चक्रुः ॥

तथापि तत्र प्रथमं रामसहिततापिहित[६] मेव तं लुप्तवर्णं पदं वर्णयामासुः ॥

तत्र गीतं यथा ।—

रामो रामानुज इति युगलं । कृतनटवेषतया
पटुराजति गायति सखिगण युगलं[७] ॥ ध्रु ॥
सरसरसालजपल्लवतल्लजपल्लविता[८] मलशीर्षं ।
तवयौवनवनवीजाङ्कुरमिव धारयदतनुचिकीर्षं ॥
वाञ्छितपिञ्छावलिपरिलाञ्छितमणिनिच-
याञ्चितकेशं ।
दधदिव हरिधनु[९] रनुगततारावलि-
वलिताम्वुदलेशम् ॥

(१) सख्यः । (२) राधादि । (३) सखीषु ।
(४) युथेश्वर्य्यः । (५) हृदयस्थितं । (६) आच्छादितं ।
(७) अत्यर्थं । (८) पल्लवयुक्त । (९) इन्द्रचापं ।

वलयितनवदल[१] दुत्पलकर्णिककर्णयुगाद्भुत-
शोभम् ।
लतिका कासाविति विस्मयकृतिमधुकृतिविनिहित-
क्षोभम् ॥
हस्तकमलमभिकमल-विघूर्णनरमणकला
रमणीयम् ।
मधुपगणं प्रतिमधुकणवर्षणमकृत यतः
कमनीयम् ॥
मालामाला[२] परिमलवलि[३] वलि[४]
वपुरलिवलितसदेशम् ।
अलिझङ्कृतिनुतिकोलाहल- वहवहुल
कुतूहलवेशम्[५] ॥
सितमसितं वपुरसितं पीतं वसनं यस्य च गीतं।
तदिदं यदि गोकुलमनु[६]गोकुल[७]मयति तदाघ[८]
मतीतम् ॥ इति ॥

अपि तु तस्य गोकुल-सदेशप्रवेश एव सर्वेषा-
मभिनिवेश-हेतुः ।

---

(१) विकसत् । (२) समूह । (३) उपहार ।
(४) वलवत् । (५) कुतूहलमेव वेशो यस्य ।
(६) गोसमूहेन सह । (७) व्रजं ।
(८) दुःखं ।

यतः ।—

चक्षुर्भाजां फलमिदमहो ! यद्व्रजस्य प्रवेशे,
गोभिः सार्कं सखिवलयितं दृश्यते भ्रातृयुग्मं ।
युग्मे तस्मिल्लघुरिह मुखाम्भोजमस्मिन्मुरल्या,
दीप्तिः किञ्चिन्निगमनकलाशालिनेत्रं च तत्र ॥

अत्र चैवं ध्वनितम् ।—

धामागतस्य समये सखि ! धेनु-सङ्गि-
सङ्गायतो विहरतो हसतश्च तस्य ।
किञ्चिद्विमृग्यदिव चञ्चलताञ्चितारं
हा ! रागिनेत्रमनु[१] विध्यति मानसं नः ॥

तस्मात् ॥

साकिल कुलजाकुलजा, नयने तस्याः परं नयने ।
वेणुविनोदी मदनः, स भवति यस्याः स्वयं मदनः ॥

तदेवमघदमनेन तासां क्रमपरम्परातः परस्परं स्वविषयाभिलाषव्यञ्जना[२] सञ्जनं[३] किञ्चिल्लज्जापर्य्यय[४] माचर्य्य तादृशरम्यस्व-विद्यावलतारतम्यविदुरतया[५] विदूरतोऽपि त[६]मव-धार्य्य परपरतः परार्द्ध्यं[७] समर्द्ध्यमानां पुनर्वेणु

(१) निरन्तरं । (२) प्राकट्य । (३) मेलनं ।
(४) पर्य्ययः स्यादुपात्ययः । (५) ज्ञाततया ।
(६) मोहनादिकं । (७) श्रेष्ठं यथास्यात्तथा ।

शिक्षां विलक्षणीकुर्व्वता सङ्कर्षणः केवलं लक्ष्याय कल्पयाञ्चक्रे ॥

यत्र हि सर्व्वमेव युगपन्मुग्धतादिग्धं बभूव । यत्र श्रीव्रजदेवीभिरपि निज-भावव्यक्तिं शङ्कमानाभिः सङ्कर्षणं लक्ष्यं विधाय तद्वर्णयामासे ॥

यथा ।—

वेणोः शिक्षामथ रचयतोर्धेनुरक्षादिलक्ष्या-
न्नानारण्यं प्रतिविहरतोर्बिभ्रतोर्यष्टिरज्जू ।
स्तम्भं लोले चलनमचले कुर्व्वतोरत्यपूर्व्वं
भ्रात्रोरासीद्वत तनुभृतां धर्म्मतो वैपरीत्यं ॥

अत्र चैवं ध्वनितम् ॥

नूनमेवं विदधतोः[१] सर्व्वेषां धर्म्मपर्य्ययम् ।
कृष्णो मूलमसौ चास्मद्धर्ममुन्मूलयिष्यति ॥

तदेवं भ्रातृभ्यां सङ्गाने युगपदेव सर्व्वेषां मोहन-मूहमानेनानुजेन विचारितं । हन्त ! तासामेव मोहनाकर्षणे सुष्ठु ममाभीष्टे। तत्रापि राधाभिधायाः। तस्मात् पृथग्भवन् पृथगेव यथा जीवानां जाति-र्यथा युक्तं तयो[२]र्द्वयमेकं वा वहति क्रमशो व्यक्ति-

(१) अनयोर्मध्ये ।　　(२) मोहाकर्षणयोः ।

रपि तथा शिक्षार्थं प्रयतिष्ये । तच्च तत्त[1]न्मात्रातिशयिताभीप्सितस्वरादिमर्म्म-समुद्भावनया सम्भविष्यतीति ॥

तदेवं विचारयता तेन परीक्षापर्य्यालोचनार्थमुत्तरमुत्तरां वश्यतामतीततराण्यवराणि सत्त्वानि क्रमशः स्ववशता मानीतानि तथापि तत्प्रेयसीभिर्भिचत्तक्षोभमात्रं तु लेभ एव ॥

तत्र यथा प्रथमतो गाः प्रति तद्गानमवर्णितं तथा वर्णितं ॥

यथा ।—

हरेर्वक्त्रं वेणुध्वनिमिषतया वर्षति सुधां
पिबत्येतां[2] गव्या[3]पदनु[4]रसना कर्णयुगलं ।
अहासीत् प्रस्तब्धा निजविषय[5]मन्या[6]तु रसनां
किमेतत् किं नैतद्भवति किमिवैतत्किमिति वा ॥

अत्रापि ध्वनितमिदं ।—

गवामस्माकं च श्रवणमनुवेणोः समदशा
यदप्येषा जाता तदपि किल भेदो विलसति ।

---

(१) मोहं आकर्षं च ।　　　　(२) सुधां ।
(३) गोसमूहः ।　　　　(४) यत्र पाने ।
(५) तृणादि ।　　　　(६) जिह्वा ।

अमू[१]स्त[२]द्वक्त्रेन्दुं सपदि कलयन्ति प्रतिपदं[३]
वयं नैतद्विघ्नः क्व भवति युगे तस्य कलनं[४] ॥

अथापरेद्युश्चापरां शिक्षामधिकृत्य वन्यान्यपि[५]
सत्वानि समाहृत्य मोहितानि ॥

यथा ।—

वंशः सोऽयं तु वीतंसः[६] कंसशत्रोरितीयते ।
तेन[७] शंसनतो[८]यान्ति विध्वंसं मृगपक्षिणः ॥

तदपि ताभिरुद्भावितं यथा ।—

वृन्दारण्यं प्रथयति भुवः कीर्त्तिमत्र स्वयं हि
श्रीमान् कृष्णो विहरति पदाम्भोज-लक्ष्मीं वितत्वन् ।
वेणोर्वाद्ये नटनघटनं बर्हिणः सभ्यभावं
वन्याः सर्व्वे ययुरिति सदा रङ्गतां य[९]ज्जगाम ॥

अत्र चेदं ध्वनितं ।—

वृन्दारन्यस्य पुण्यं व्रजितुमिह न नः
　　शक्तिरस्तीति चास्तां
यद्वर्ह्याद्याश्च भान्ति प्रतिपदसुकृत-
　　प्रोदयादस्मदर्ह्याः ।

---

(१) गावः ।　(२) कृष्ण ।　(३) यथास्यात् ।
(४) दर्शनं ।　(५) वनस्थानपि ।
(६) वीतंसो वन्धनं मृगपक्षिणां ।　(७) वंशेन ।
(८) कथनतः ।　(९) वृन्दावनं ।

गृह्याणां[१] गृह्यकाः[२] स्मः स्फुटमिह तदलं
गृह्यकेभ्य[३]श्च गर्ह्या-
स्ते तस्य स्वैरमीक्षां विदधति न तदा-
भासमण्वप्ययाम ॥

अथ दिनान्तरेऽपि तेभ्यो विच्छिद्य हरिण्यस्तथा कृताः। तच्च पूर्ववत्ताभिर्वर्णितम् ।—

आश्चर्यं सखि ! कृष्णसार-दयितावृन्दं मिलद्भर्तृकं
जात्या मूढमपि व्यतीत्य भवतोरप्येव मोहान्दधे ।
श्रुत्वा वेणुकलं हरिं प्रतिगतिस्तद्रूपतश्चित्रता
तस्याऽप्यर्चनमुल्लसत्प्रणयतस्तत्रापि नेत्राञ्चलैः ॥

ध्वनितमपीदं ।—

वयं जात्या नार्य्यः पुरुगुणवतामादृततमा-
स्तथा भर्त्तारस्तत्प्रणयनयसिद्ध[४]व्रजभुवः ।
हरिण्यो नेदृश्यस्तदपि पतिभिस्तं ययुरहो !
धिगस्मान् दुष्पुण्यादधिम नहि तासामपि तुलां ॥

दिनान्तरे तु विशिष्य विहङ्गमास्तथाभावं गमिताः।

---

(१) गृहस्थानां ।

(२) ग्रामाश्रिताः पशुमृगाद्यकास्ते गृह्यकाश्च ते इत्यमरः । आधीनाः । अधीनो निघ्नआयत्तोऽस्वच्छन्दोगृह्यकोऽप्य सावित्यमरः ।

(३) ग्रामाश्रितपक्ष्यादिभ्यः ।    (४) ख्यातः ।

तत्र च ताभिरभिहितं ।—

अस्मिन् वने तु विहगा मुनयः प्रदिष्टा[१]
कृष्णस्तु तद्[२]गुरुरिति प्रततं प्रतीमः ।
नैवान्यथा त[३]दमुना किमपि प्रगीतं
मौनव्रतेन शृणुयुः परितो निविष्टाः ॥

अत्र तु सनिर्वेदं ध्वनितम् ।—

यस्मादसौ मुनिस्ते च मुनयः सर्व्वतः स्थिताः ।
तस्मात् काचित् स्पृहामत्र[४] नाश्रितां[५]कर्त्तुमर्हथ ॥

अथ दिनान्तरे देव्योऽपि तथाकृताः ।

तत्र ताभिर्वर्णनं यथा ।—

वेणूद्गानगुणेन तस्य परितः कोष्ठे विमानोत्करे
देव्यो रूपविलासमोहनकलामासाद्य मोहङ्गताः ।
यत्रेदं न विदुः किमेतदभितः पूर्व्वं श्रुतं वीक्षितं
चेति स्रस्तमभूत्कचादि किमु वा नैनेत्यपि[६]प्रायशः ।

अत्र च ध्वनितम् ।—

हन्त ! देव्योऽपि यत्रे[७]तामवस्थामापुरञ्जसा ।
तदीयव्रजभूवाला वराक्यस्तत्र का वयं ॥

---

(१) कथिताः । (२) मुनि । (३) वेणुनादं ।
(४) कृष्णं । (५) नप्रापितां ।
(६) इतीदं न विदुरित्यन्वयः । (७) वेणुध्वनौ कृष्णे वा ।

तदेवं चेतनांस्तथा वितथचेतनान् विधाया-
चेतनानपि चेतनानिवाचारितुमारभते स्म ।

अचलमर्य्यादया पर्य्याप्ताः स्फुटममू[१]राकृष्टु-
मचेतनमतिक्रम्यापि दुःशका इति ॥

तत्र[२] नदी-चरितं ताभिरेवं विचारितं ॥

द्वीपिन्यः श्रवणेन वेणुरणितेः स्तम्भङ्गताः सभ्रमाः
फुल्लत्पूरतया स्फुरद्घनरसा हंसादि-गीःशिञ्जिताः ।
उन्मर्य्याददशामिता मुररिपुं दूरेऽभिसृत्यागता
भङ्गा लोलभुजैः सरोजवलय[३]स्तस्याङ्घ्रियुग्मं दधुः ॥

अत्र चेदं ध्वनितम् ।—

नद्यः सिन्धुपतिव्रता हरिहरि प्रत्यक्तमर्य्यादिका-
स्तं विद्रुत्य मिलन्ति चेदहह ! का दीनास्तदानीं वयम् ।
किन्तु स्वैरममूरु[४]दूढसुकृता नास्मासु तत्तुल्यता
स्वल्पापीति निवृत्तिरेव सुखतो युक्ताथवा दुःखतः ॥

दिनान्तरे चाम्भोदवर्णनं यथा ।—

मुरारेरम्भोदः सुहृदिति न वा केवलरुचा
स्वसादृश्यात् किन्तु व्यतिकृतहितत्वादपि सदा ।

---

(१) गोप्यः ।　　(२) अचेतने ।
(३) उपहाराः ।　　(४) उत् ऊर्वः ।

असौ मल्लारेण प्रवलयति तं वेणुजनुषा
स चायं छायाभिः प्रशमयति तापं तदुपरि ॥

अत्र च ध्वनिः ।—

हंहो ! पश्य जडोऽपि वारिदचयः सर्व्वोपरि स्थाय्यपि
च्छायाभिः स्वरसैश्च तं परिचरत्यन्तश्चरप्रेमतः ।
कष्टं सुष्ठु वयं तदेकशरणप्राणस्थितिम्मन्यता
गण्यास्तस्य विना तु सेवनममूर्जीवाम धिग्जीवितम् ॥
अहो ! शिलामय्यपि शैलजातिः सुखमेवं भजते ॥

यथा ।—

श्रीमान् गोवर्द्धनाद्रिः स्फुटमयमभितः
श्रीहरेर्दासवर्य्यः
कृष्णे रामेण यस्मात्त(१)मनु मुरलिका-
वादनायाधिरूढे ।
लब्धैर्यः सात्विकाभैश्चरणसरसिज-
स्पर्शजैरंकुराद्यैः
सर्व्वाङ्गीनद्रवैरप्यनुगसखिधनं
सेवते तं चिराय ॥

आस्तां गोवर्द्धनाद्रेः पुलकमुखदशा श्रूयतामन्यदेत-
च्चित्रं चेन्न प्रतीतिर्भवति किल गिरौ दृश्यतां चापरत्र ॥

---

(१) गोवर्द्धनं ।

यः[१] स्निग्धत्वं समन्ताद्दधदिह मुरली-
गानतश्चिक्कणा[२]ख्या-
मागाद्यत्रास्ति साश्चिप्रतिपदमुदितं
कृष्ण-मुख्याङ्घ्रि-चिह्नम् ॥

अत्र च ध्वनितम् ।—

महतां पदवीमाप्तुं वाञ्छा यद्यपि धृष्टता ।
तथाप्यनुगतिस्तेषां भाति चेदस्ति दृष्टता[३] ॥

तदेवं तासामतस्मिंस्तद्भावनां[४] भावयन्नुन्मादददशावशतां परिकलय्य विह्वलहृदयः सदयतया स मधुकण्ठः क्षणं गद्गदकण्ठः सम्वास्त्रितमुखः समस्तमनु न्यस्तनिजासुखः पुरु रुरोद ॥

अनूदितवांश्च श्रीराधानिवद्धमवद्धं[५] पद्यमेकं ।—

वेणोः पुण्यमतीव हन्त ! यदसावस्त्री च तस्याधरं
गोपीनां समपि ह्रियं परिहरन् शश्वत्पिवन्नर्दति ।
तृप्त्या छर्दिनिभादमुष्य रणिताभ्रद्योऽपि फुल्लन्त्यमू ।
यद्वंश्या नग[६] जातयोऽपि मधुभिर्वाष्पं
मदाद्बिभ्रति ॥

(१) गिरिः ।
(२) चिक्कणं मसृणं स्निग्धं । (३) पूर्व्वपूर्व्वाचारदर्शनं ।
(४) अतस्मिन् वस्तुनि तद्वस्तुभावना ।
(५) अबद्धं स्यादनर्थकं । (६) वृक्ष ।

ध्वनितं चेदम् ।

याचे ऽहं वंशदेहं नतु कुलजवधूदेहमाद्ये हि कृष्णा-
स्तृष्णाग्भावेन सज्जन् वहुरुचि विहरन्
दुर्लभः स्यात्परत्र ।
वंशीभावे चिदंशप्रशमनवशता
विस्मृतात्मा यदि स्यां
तेन[१] ज्ञायेय सेयं मम विरहदुता[२]
दारुतामागतेति ॥

ततश्चेतसि चेदं विचारितं ।

गण्डं चुम्बसि कुण्डलस्थमकरि !
त्वं तस्य वंशि ! त्वम-
प्यास्यं लेढि तथाङ्गमङ्गमसकृ-
न्माले ! त्वमालिङ्गसि ।
तद्युक्तं यदतीतसर्व्वविधिका यूयं वयं तु स्फुटं
हा ! तत्तद्विधिभागविचारहतके-
ना[३] भिप्सिताद्वञ्चिताः ॥

अहो ! सुमनसो मुक्ता वज्राण्यपि हरेरुरः ।
न त्यजन्ति वयं तत्र का वा स्मरवशाः स्त्रियः ॥

---

(१) कृष्णेन । (२) तप्ता ।
(३) निन्दितविचारेणेत्यर्थः ।

चेन्न सङ्गम परस्य विधत्ते
श्याम एष न तु तर्हि दुनोमि ।
अङ्कपालयति[१] हा ! गतशङ्कः
सङ्गिनः कथमिदं कलयानि ॥ इति ॥

तदेतत्पर्य्यन्तमन्तरस्पर्शिरागपरीते तस्य वेणुगीते कोऽपि सम्भ्रमः सर्व्वमेव व्रजं निघ्नं[२] कुर्व्वन् विघ्नमाचरति स्म । स तु प्रातः प्रस्तोष्यते । इत्य-ञ्जलिं वद्ध्वा पुनरुवाच ॥

अस्य त्वदीयकान्तस्य राधे ! जानाति कोऽपि न ।
प्रयासाभ्यन्तरस्थायित्वन्निमित्तप्रयासतां ॥

तदेवं कथायां समाप्तप्रथायां सर्व्वे यथा स्वभावा समासन्नाः ॥

इति श्रीगोपालचम्पूमनु वेणुशिक्षामिष-
प्रेयसी भिक्षानाम सप्तदशं
पूरणम् ॥

---

(१) आलिङ्गति ।　　(२) अधीनं ।

# अष्टादशं पूरणम् ।

अथ प्रभाते सदसि व्रजेशितु-
र्महाप्रभावेषु[1] विभातपंक्तिषु ।
आनर्च्छ[2] सामोदमुदश्रुकण्ठतां
सस्निग्धकण्ठः कथयाम्बभूव च ॥

अथ तस्मिन्नाश्विनावशेषे लब्धावशेषे यज्ञयोग्य-वेशे व्रजाद्बहिः प्रदेशे सर्व्व एव पर्व्वणा सान्द्रा-नन्दव्रजा इव सप्रजा व्रजेन्द्रादयः सम्भ्रान्ताशय-प्रायतया चरन्तः सुरेन्द्रयागयोग[3] माचरन्तः स्थानादिसश्रिस्क्रीयमाणा[4] नादिशन्तः स्व-स्व-वसतिं विहाय वसतिं[5] वहिर्व्वसन्ति स्म। तदा च कदाचि-देकस्यां सन्ध्यायां गोचारणभूभागतः समागतः सङ्कर्षणसहचारितया लब्धहर्षः सकुतुकतृष्णः श्रीकृष्णस्तदीयचरितमालोचितवान् । तत्रैव च प्रभूतकुतुकाकूतसम्भूततया[6] वसति स्म । तदपि

---

(१) गोपेषु ।  (२) प्राप्तवान् ।
(३) उपाय ।  (४) मुहुः संस्कारकर्त्तॄन् ।
(५) रात्रिं, वसती रात्रिवेश्मनोरित्यमरः ।
(६) मिलिततया ।

च यदपि पूर्व्वपूर्व्वसम्वत्सरेषु दृष्टमित्यपूर्व्वदृष्टं न भवति। तथापि सम्प्रति प्रौढताप्रकाशतः शतमन्युं प्रति मन्युं जनयन् जनकादिषु प्रणयमयकोपं ज्ञापयन्नज्ञानत इव जिज्ञासाञ्चक्रे। तत्र तत्र कारणञ्चेदं चिन्तायाञ्चक्रे। यद्यपि शतपर्व्वपाणि-रेवं गर्व्वायते। एते गोपालनकारकाः के वराकाः। निखिललोकलोकपालपालकस्य मम दक्षमुख्याः प्रजापतयः स्वीयमन्वन्तरपातिप्रभृतयः पृथिवी-पतयः कमलजन्मजन्मप्रधाना मुनीशाना यजमाना विराजन्तेतरामिति तथाप्येते मत्पितृपुरःसरास्तत्र भक्तिमतिरिक्तीकुर्व्वन्तीति ॥

अथ स्पष्टीकृतगौरव सौष्ठवमन्तःकष्टपरामृष्टं पृष्टवान्।—

कथ्यतां वः पितः! कोऽयं सम्भ्रमः समुपागतः।
यज्ञार्थो यदि देवः कः प्रमाणं किं फलं च किं ॥

व्रजेश्वरे तु ज्ञानपूर्व्वकप्रश्नविज्ञानतस्तदभिप्रायं प्रायः प्रतिपद्य सद्यः प्रतिवचनमदत्तवति पुनर्लालित्य-तोचितवाल्यतो दीनताधीनम्भिवोवाच ॥

यथा विधातुं भवतां तथा श्रोतुं च नः स्पृहा।
उभयेषां यतस्तत्र विशेषाश्रयता स्थितिः ॥

अथ किमस्माभिर्व्यक्तं वक्तव्यं गोत्रभित्सत्रं प्रति किम्वायं वत्सः प्रतिपत्स्यत इति विचिकित्सति तातपादे तदेव किञ्चिदतिरिक्तं व्यक्तमिव कर्त्तुमिच्छति स्म ।

यथा च ।—

तात ! सर्व्वत्र वैज्ञानिकानां[१] भवतां पुत्रा वयं न तावद्वोचारकतामात्रपर्य्यवसितपर्य्यालोचनाः, किन्तु किञ्चित् किञ्चिज्ज्ञाननीतिधर्मरीतिमपि प्रतिपद्यामह इति व्यञ्जनया मञ्जु वदति स्म ॥

सर्व्वक्षेत्रप्राज्ञ एकः परात्मा
तस्मिन् जीवाः सन्ति नैवातिभिन्नाः ।
एतद्विज्ञाः साधवो विद्वदिज्या[२]
स्तस्मादेषां गोपनं नैव युक्तं ॥

योगिनां मतमेतच्चेन्नीतिरप्यवधार्य्यतां ।
उदासीनोऽरिवद्वर्ज्यः सुहृदात्मैव सम्मतः ॥
यद्येष पन्था धर्म्मस्य सोऽपि नास्त्यविचारतः ।
तत्र यद्विदुषः सिद्धिर्भवेन्नाविदुषः क्वचित् ॥
धर्म्मो वैदिक एवेष्टो लौकिकः क्वापि दृश्यते ।
भवद्भिः कस्तयोरेष विशेषत्वेन सम्मतः ॥

(१) कुशलानां । वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ।
(२) विद्वद्भिरिज्याः पूज्याः ।

तदेवं स्वसुतस्य सुपर्वपति-मानचर्वणायाविर्भवन्तं सर्व्वमतज्ञतागर्वमखर्वमालोचयन्नपूर्व्वतया भावनां कुर्व्वाणस्तेन च निजपक्षस्यापेक्षणीयतां लक्षयन्निदं व्रजपतिरुपक्षिप्तवान् ॥

धर्मोऽयं लौकिकस्तात[१] ! यद्यपि स्यादथाप्यसौ ।
युक्तत्वादपि चाम्नाया[२]दाम्नायज इवेष्यते ॥
य इन्द्रो देवतात्र स्यात्पर्जन्यः स तु सर्व्ववित् ।
तस्यार्च्चनं कुलायातमस्माकं केतनं मतं ॥

कृष्णस्तदेतत् कर्म्म कर्म्मप्रधानतया वर्ण्यमानं तदुत्तरमाकर्ण्य वासव-ह्रासवासनया[३] कर्मकाण्ड-पण्डितम्मन्यानां मतमनुसृत्य देवताखण्डनमाह ॥

स्वनः कर्म्मवशा देवा दातुं कर्म्मानुसारिणः ।
ईशश्चेदस्ति कर्म्मानुगाम्यसौ का नु देवता ॥
सर्व्वं तद्भस्मनि हुतं परतन्त्रे यदर्पणं ।
गार्हपत्ये हुतं तत्तु यदात्मात्मीय-पोषणं ॥
तस्मादाभीरवैश्यत्वादघ्न्या[४] सेवा तु नः कृतिः ।
देवता यदि मन्येत मन्तव्या सा तदाश्रयः ॥

---

(१) अनुकम्पायां ।
(२) आम्नायः सम्प्रदाय इत्यमरः । वृद्धपारम्पर्य्यप्राप्त इतिक्षीरः ।
(३) इच्छया ।
(४) गो । अर्जुन्यघ्न्या रोहिणी स्यात् ।

अथ मन्योरपि पर्जन्यतया तदाश्रयत्वमाशङ्क्य साङ्ख्यसङ्ख्यावतां[१] मतात् प्रत्याचचक्षे[२] ॥

रजोभू[३]र्यवसाद्यर्थस्तस्मान्नेन्द्रो गवाश्रयः ।
किन्तु गोवर्द्धनाख्यानक्षोणीभृद्यः स एव सः[४] ॥

निजाजीव्यतया गावः कुलागत्या च भूसुराः ।
आश्रयत्वे समक्षत्वं यान्त्यते न दिवौकसः ॥

तत्र मतान्तरं वितण्डापण्डितानां मतेन खण्डयति ॥

आप्त[५]वागनुमानञ्च प्रत्यक्षादेव गम्यते ।
तस्मात् प्रत्यक्षमेव स्यात् प्रमाणं सर्व्वमर्द्दकं ॥

तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां महः[६] ।
ऐन्द्रैर्निर्म्मीयतां सेयं त्रिकर्मी हविषां कुलैः ॥

होमो यदि विधातव्यो वह्निमुद्दिश्य हूयताम् ॥
आश्रयः स हि सर्व्वेषां प्रत्यक्षश्चानुभूयते ॥
अथ विप्राः प्रीणनीया दत्वा धेनूः सदक्षिणाः ॥
स्वभाव एष भवतां विधिकिङ्करता नहि ॥

अन्नं दत्वा ब्राह्मणादिश्वपाका-
न्तेभ्यः श्वभ्योऽप्यत्र गोभ्यस्तृणानि ।

---

(१) पण्डितानां, संख्यावान् पण्डितः कविः ।
(२) निरस्तं कृतवान् ।
(३) रजोगुणो भूरुत्पत्तिर्यस्य । (४) गवाश्रयः ।
(५) वेदं । (६) उत्सवः ।

त्रोणीभर्त्रे दीपतामन्नकूटो
यस्मादेषोऽप्यन्नकूटाभिधः स्यात् ॥

तदेवं श्वपाकश्वपर्य्यन्तेभ्यः प्रदातव्यं नतु पाकशासनायेत्यभिप्रेत्य सर्व्वान्निर्वचनेकृत्य[1]प्रत्येकं प्रवर्त्तयन् प्राह ॥

भुक्त्वा वस्त्रालेपवेशान् गृहीत्वा
विप्रं वह्निं गां परिक्रामताद्रिं ।
नात्राप्याह्निकामितावश्यकत्वं
स्वच्छन्दत्वाद्यानमप्यत्र दिष्टं ॥

ये वा क्रतुभुजोऽप्यत्र जनास्ते स्युर्जना[2]विह ।
सुपर्वाणः सुमनसो निर्जराश्च सुरा इव ॥

किञ्च ॥

आढ्यङ्करणी सुभग,ङ्करणी तद्वत्प्रियङ्करणी ।
श्रीगोवर्द्धनपूजा, नाम्नी विद्या परिस्फुरति ॥
गोवर्द्धनगिरियज्ञा, वज्ञातुर्गोत्रभित्पूजा ।
अन्धङ्करणी पलित,ङ्करणी नग्नङ्करण्यपि च ॥

तदेवमग्रज-मुखं निरीक्ष्य मृदु हसित्वा पुनः सादरमाह स्म ॥

---

(१) मौने स्थापयित्वा गतिसंज्ञकोऽयं :
(२) जन्मनि ।

इत्येतन्मे वालभावेन वुद्धं
गो-विप्राद्रि-प्रेप्सितं मद्धितञ्च ।
युष्मभ्यं चेद्रोचते तर्हि शीघ्रं
कार्य्यं विघ्नः स्याद्विभिन्न-प्रवेशे(१) ॥
सर्व्वं यद्यन्मानसं वाचिकम्वा
युष्मादृग्भिः साध्यते कायिकं वा ।
नित्यं तत्तद्दृश्यते मन्निमित्तं
तस्मादेतन्मद्धितत्वाद्विधेयम् ॥

अनुन्मन्तः स्वतः सर्व्वं वेत्ति स्वीयं हितं पितः ! ।
नचेद्वेत्ति नच ब्रूते ब्रूते चद्वेत्ति निश्चितं ॥

तदेतद्विप्रलम्भ(२)लम्भनमप्याक्लिष्ट(३)वर्णानविशिष्ट-माकर्ण्य तन्मुखञ्च निर्वर्ण्य तदेव सवर्णैरसवर्णैरप्य-धिपर्व्व(४) मागतैः सर्व्वकैर्निर्णीतान्ये ॥

तथाहि ॥

प्रेष्ठः किञ्चिद्यद्ब्रवीति प्रतीति
सर्व्वेषां तद्याति नूनं रुचिश्च ।
तच्चेद एवप्यहितं तर्हि किम्वा
वाच्यं तस्मात्तेप्यमन्यं तत्तद्धि ॥

---

(१) भिन्नजनस्य प्रवेशे ।
(२) विसम्वाद । (३) क्लिष्टं परस्परपराहतं ।
(४) अव्ययीभावसमासान्तं ।

तदेतदत्रधार्य्य मधुकण्ठस्त्वमुक्तकण्ठं परामृशति स्म ॥

चेदप्यतिवेदः सुविचारतानश्वरः सोऽयमनीश्वर-वादः कृतवक्रभावचक्रशक्रपराभवकौतुकतात्पर्य्य-मात्रपात्रतया तेन प्रयुक्तः ॥

किन्तु न प्रवृत्तिविरोधिपात्रतया(१) तथापि तत्र(२) मित्रतातिचित्रतया लब्धनिगम(३) विस्रब्धसर्व्व-पुरुषार्थसार्थ(४) शिरोमणिरूप(५) स्वरूपेषु तेषु व्रज-भूपेषु नायुक्तः ॥

ईश्वरज्ञानगुरुभिरपि तद्भावमेव परिसर्व्वोपरि-पुरुतापरामर्शात् ॥

यथोक्तं ॥

"अहो ! भाग्यमहो ! भाग्य"मित्यादि ॥

ततः कौतुकचारितयापि तेन यद्विचारितमिव सम्पद्यते तदपि परमार्थवर्य्यतया पर्य्यवस्यतीत्येव महोपरममहो(६) वरकरस्वभावधरः सोऽयं व्रजधरा-पति-वंशजन्मा शशधर इति ॥

अथ स्पष्टं चाचक्ष्व ।—ततस्ततः ? ।

---

(१) प्रवृत्तितया ।　(२) कृष्णे ।　(३) निश्चय ।
(४) सजातीयवृन्द ।　(५) प्रेम ।　(६) उत्सव ।

स्निग्धकण्ठ उवाच ।—

ततश्च दीपावलीनामानममावास्यामनु दीपावली-वलिकौतुकं प्रतिपद्य प्रतिपत्प्रातस्तु विस्रम्भतः परमाश्रव(१)तामाश्रय मार्गौरमीभिर्यथा तेन(२) विहितं तथा विहितं ॥

तत्र च ।—मुख्यकल्प(३)कल्पनाय विचित्रचित्र-वितानपताकादिभिः सर्व्वसुखसम्वर्द्धनस्य श्रीगोवर्द्धनस्य कूट(४)मण्डलं मण्डयित्वा यथाविधि निर्वन्धसाधितसाधुगन्धवन्धुरपाद्यादिप्राग्र्यसामग्रीभिरभिसभाज्य तमभिप्राज्य(५)चरणाचलव(६)दाज्य-प्राघार(७)निर्झराश्चित्रवर्णव्यञ्जनव्यञ्जितधातुरञ्जनाः, दुग्धतटिनीसङ्कटिता दधितडागसङ्कटिताः सम्पन्न-मन्नकूटाः, निकटा(८)दुपढौकयामासिरे(९)येषां प्राग्-भावेनापूपिकं शाष्कुलिकमित्यादिभूयिष्ठनिष्ठान(१०)-कूटनाम्ना स्थानान्यपि चिरमाम्नातानि ॥

---

(१) वचनेस्थित। (२) कृष्णेन।

(३) कल्पो विधिक्रमे तुल्यः। मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः।

(४) कूटोऽस्त्री शिखरं शृङ्गं। (५) प्रचुर।

(६) पादपर्वततुल्य। (७) क्षरण। घृक्षरणादीप्योः।

(८) निकटादित्यत्र सङ्कटय्येति पाठस्तु बहुत्र।

(९) उपजह्रिर। (१०) व्यञ्जन।

नानावाद्यं लोककोलाहलाढ्यं
स्वर्गं वाढं व्यानशे[१] तत्र सत्रे ।
यत्तद्देवक्ष्मापते[२]राश्विनेयौ[३]
निर्णिन्याते कर्णशूले निदानं ॥

सृष्टेष्वद्रेरन्नकूटेष्वनल्पः
कृष्णाकारः[४] कश्चिदाविर्बभूव ।
अल्पीयस्त्वं केवलं भेदबुद्धे-
र्यस्मात् कृष्णो कारणात्वं जगाम ॥

तञ्च प्रथमं वसुन्धराधरशिलासन्धितः समेधमानस्फुरदुत्सेधं[५] प्रेक्षाकारिणः समुत्प्रेक्षामासुः ॥

पीतश्यामा किं प्रभा किं तडित्वान्
किम्वा धातुद्योतिभूभृद्विभाति ।
सुष्टूत्तिष्ठन् किं स्विदेतद्बकीजि-
न्मूर्त्तिव्यूहः स्फूर्त्तिमत्रातनोति ॥

कायप्रायतभा[६]जिताञ्जनगिरिर्वस्त्राणि सन्ध्याभ्रजि-
द्विस्तारद्युतिमन्ति वेषमणयः सूर्य्यादिजेतृप्रभाः ।
उत्तंसा वरपुष्पभारवलवच्छाखासहस्राण्यहो !
यस्य क्ष्माधरदेव एष कुरुते नेत्राणि चित्राणि नः ॥

---

(१) व्याप्तं । (२) इन्द्रस्य । (३) अश्विनीकुमारौ ॥
(४) श्यामरूपः । (५) उच्छ्रायं । (६) कायस्य या प्रा ःप्रभ

ततः स तु चतुराननचातुरीचालनचतुरः कृष्णनाम्ना मधुरः सप्रश्रयं पप्रच्छ । भगवन् ! कोभवानिति ॥

देवस्तु निर्घोषनिभघर्घरितस्वरेणाभ्रभ्रमं प्रथयन्नर्थेन तु त[१]मन्यथयन् वचः प्रचारयामास पूर्विता[२] खर्वमत्यर्वन् पर्व्वतः सोऽयमहमस्मीति ॥

तदेतदवधार्य्य देवार्य्यमित्रः श्रीदामादिमित्रः स्वभुजौ प्रसार्य्य विस्फूर्जायमानकोलाहलानर्गलं गोपवर्गं निवार्य्य नमस्कार्य्यः खल्वसौ यस्मात् करुणाव्यग्रताजाग्रन्महाविग्रह[३] समग्रविग्रह[४]-प्रकाशग्राहिलतया प्रत्यक्षप्रत्ययमेव स एव देवः प्रत्यवरुद्धवानिति[५] । सर्व्वान् प्रत्यखर्व्वां वाचमुवाच, उक्त्वा चाखण्डदण्डवन्नतिं कुर्व्वति सह सस्मितपूर्व्वजे तस्मिन् विस्मितमनसः सर्व्वे एव प्रतिपर्व्वतं[६] तथाकुर्व्वत । कृत्वा च श्रद्धया बद्धाञ्जलिषु तदावलिषु सर्व्वसुखवर्द्धनः स गोवर्द्धनः पुनरुवाच ॥

नान्यदेव वदस्माकं भेदं युष्मद्विचक्ष्महे ।
तत्पश्यत भवद्दत्तं प्रत्यत्तं भुञ्ज्महे वयम् ॥

(१) अभ्रभ्रमं । (२) पूर्व्वपूरणे धातुः ।
(३) महाविस्तार । विस्तारो विग्रहो व्यास इत्यमरः ।
(४) देह । (५) आवरितवान् । (६) पर्व्वताभिमुख्येन।

तदेतदुक्त्वा च ॥

अन्नान्याढककोटितण्डुलकृतान्यादाय तद्व्यञ्जना-
न्यप्येष प्रतिकूटमेककवलप्राप्तां तमादत्तथा ।
मध्यं मध्यमनुप्रकृष्य तु यथा नीरं पिवन् पल्वलान्(१)
कुण्डान्याशु सरांसि किञ्च सरितो निन्ये क्षयं सर्वतः ॥

यदाग्रासाय स करं प्रसारयति चाग्रतः ।
तदा सर्वे द्रवन्ति स्म सर्वतश्चटका(२) इव ॥

मध्येकृत्य(३) व्यञ्जनान्यन्नकूटं
ग्रासं ग्रासं पाणिना दक्षिणेन ।
तर्जन्यासावुद्दिशन् वामया तं
शक्रं लोलत्प्रान्तगत्या जहास ॥

दोष्णस्तस्याश्वतिपरिमितिग्रासहेतोः प्रसारे
चाकुञ्चे च स्थगितहरितः(४) प्राप्ततत्तद्गतीनाम् ।
अक्ष्णामासीद्व्रजकुलभुवां चित्रवृन्देऽपि चित्रं
यत् काप्येकं न किल गलितं सिक्थमेकं स्थितं न ॥

अतरीतृण्यत(५)ग्रासान् भूभृद्भूभृ(६)द्यथा यथा ।
अचलीक्लृप्यताप्युच्चैर्मांसलाय(७) तथा तथा ॥

---

(१) अल्पसरसः ।
(२) पक्षिविशेषाः ।　(३)गतिसंज्ञकोऽयं ।
(४) आवृतदिक् ।　(५) पुनः पुनर्भुक्तवान् ।
(६) गिरिराजः ।　(७) क्लृपि सम्पद्यमाने चतुर्थी ।

तत्र च ॥

वाला भीतिं यौवनोन्मत्तचित्ता-
हासं वृद्धाश्चित्रमर्हास्तु भक्तिं ।
याता ये ये तेषु सर्वेषु देवः
शुद्धां तुष्टिं कौतुकित्वाद्बभाज ॥

दूराद्दूरात्पूरमादाय वारां
वक्त्रं शश्वत् क्षालयन्नद्रिदेवः ।
ष्ठीवन्नुच्चैः पृष्ठदेशे समन्ता-
द्वृष्टिं कुर्वन् शष्पसृष्टिं चकार ॥

गण्डूषाणामन्तरे वंशदण्डै-
र्दन्तान्तर्गान्यन्नपिण्डानि कृष्णान् ।
उद्यन्मूर्त्तिस्तत्र शैलाधिदेवः
पूर्त्तिं कुर्वन् प्राणभाजां ससर्ज ॥

ताम्वूलानां वीटिकाः कोटिखर्वं
कूटीकुर्वंश्चर्वयन् गर्वफुल्लः ।
प्रान्तच्छायामण्डलश्चण्डरश्मिः
प्रातर्यद्वत्तद्वदास्यं चकार ॥

जातं नीराजनमस्य क्षणमनु निखिला-
मोहमापुर्यदेत-
त्तस्मिन् द्राघीयसि स्यात्कथमिति विविधा-
क्रान्तचित्ता विचारात् ।

कृष्णस्त्वल्पं विहस्य प्रतिविधिमकरोत्
कल्पितायन्त्र भेदा-
द्यस्मिन् दीपाः सहस्रं तलमुपरि च ते
चाल्यमाना विरेजुः ॥

अथ सर्वमिच्छन्नन्विच्छन्[1] प्रतीच्छ[2]न्नपि गिरिरयमहो ! गिरिं[3] करोतीति निध्याय[4] मूर्द्धनि वद्धाञ्जलितया सर्वस्मिन्नप्यूर्द्ध्वं स्थितवति सर्वतोऽपि वरान् विरचय्यातर्कितमन्तर्हिते परमहिते तस्मिन्नखण्डदण्डवत् प्रणामपूर्वमत्र द्वित्रक्षणं चित्रमिव सर्व एवासीत् । अवहिते च वहिरर्थे श्रीहरिरसौ सर्वान् पर्वतपर्वागतान् प्रत्युवाच ।

अहो ! कलयताचलः करुणयात्मरूपं मह-
द्वहत्प्रकटतां भजन्नखिलमेव भुङ्क्ते स्म सः ।
अनादरकृतामयं दलयितेति सम्भाव्यते
पुरन्दरवलिग्रहाददतिवली तथा तर्क्यते ॥

ततश्च सर्वोऽपि विस्रब्धः परमप्रेमभाजनगोसभाजनमारब्धवान् ।

---

(१) मृगयमाणः     (२) गृह्णन् ।
(३) गिरणं भक्षणं इति यावत् ।     (४) दृष्ट्वा ।

यत् खलु ॥

गोभिर्गोपा मिथः स्युः प्रतिपददयिता-
स्तत्र नन्दव्रजस्था-
स्तत्र श्रीनन्दराजः स्वयमयमुपमा
तत्र तत्रास्य पुत्रः ।
यद्येवं तर्हि गोवर्द्धनमहसि तदभ्यर्च्चने ते गवाद्याः
किं वर्ण्याः किं तु निर्व्वर्णन[१] मनुपरमं
ज्ञेयभावं प्रयान्ति ॥

तथा च ॥

लब्धार्च्चाश्चारुवेषैः शवलितवपुषः
प्राप्तभोगावलीका
वत्सैः पृक्ताः[२] प्रमोदं पृथुतरमभजन्
धेनवः सत्यमेव ।
किन्तु श्रीकृष्णादृष्टि प्रमदवलायिता
यर्हि तर्ह्येव नोचेत्
केचिद्यद्वद्व्रजन्ते मधुरविधुरतः[३]
संस्कृतं षाडवादि[४] ॥

---

(१) दर्शनं ।　　(२) मिलिताः ।
(३) विधुरं तु प्रविश्लेषे इत्यमरः ।
(४) आम्ररसादिकृतं पानकभेदः ।

सद्दृष्टिपुष्टीकृतास्तु ।
स्वर्णनिर्मितविषाणसुरूपा
रूप्यसम्वृतखुरा धृतहाराः ।
किङ्किणी-प्रकरभङ्कृतियुक्ता
नैचिकीनिचितयो[१]रुचिमाञ्चन् ॥

तत्र गोपाः श्रीगोपालादिगोपालसत्कृतिचमत्कृतिमधिगम्य विधिमनुमम्य चित्रकाङ्क[२] निभचित्रातिरम्यवस्त्रावृताङ्गतया तर्णकमाक्रम्य कौतुकतो गाः सम्भ्रम्य[३] तज्जातहासकोलाहलाद्विरम्य ग्रासविश्राणनेन[४] ता विश्रम्य परिक्रम्य प्रणम्य चाचार्य्यं वार्य्यमाचर्य्य वितान[५] वितानेनाग्निं परिचर्य्य प्रदक्षिणावर्त्ततया वर्त्तमानश्च तं प्रदक्षिणां विरचय्य भूषणनिवहमहितानां पुरोहितादीनां पूजनमपि पूरयामासुः ॥

तत्र श्रीगोपाल-पूजा यथा ।—

स्नानीयांशुकचित्रकाद्वि[६]सुरभि[७]स्रक्कुण्डलाद्यं यदाश्चर्य्यं तत्र मुहुश्च तोषरहिता[८]स्तत्तत्परीवर्त्तत ।

(१) समूहाः ।　(२) तिलक ।
(३) सम्भ्रान्ताः कृत्वा ।　(४) दानेन ।
(५) यज्ञ ।　(६) तिलक ।
(७) अङ्गलेप ।　(८) अलङ्कृतिः ।

तन्नोवर्द्धनपूजनाङ्गपशुपाभ्यर्च्चासु कृष्णार्च्चने
तातम्वादितदीयवान्धवजना नान्तं चिरादैयरुः[१] ॥
यथा कृष्णस्तथा रामो रामो यद्वत्तथा स च ।
व्रजेशयोर्नात्र भेदस्तन्मित्रेष्वपि तद्दृशोः ॥

गोसम्भ्रमणं यथा ।—

यदा मुदा याति हरिः परोक्षतां
गवां तदा ता निजवत्सकाङ्क्षितः ।
व्यग्रीभवन्ति स्म यदा समक्षतां
यात्येष यान्ति स्म तदा तदात्मताम् ॥

हासकोलाहलो यथा ।—

आकृष्टे वत्सवृन्दे किलकिलित-रवै-
मातरो[२]रम्भमाणा
दन्तैराकर्षकांस्तान् व्यथयितुमभितो
धावनार्त्ता यदा स्युः ॥
हासं कोलाहलाढ्यं कलयति निखिले
तर्हि कृष्णाननाब्जं
जीयादुद्धासहासद्रवमधुपरितो स्यादनं यद्ववर्ष ॥

गो-ग्रासविश्राणनं यथा ।—गोपा-ऊचुः ॥

कृष्ण! गोग्रासमेतं हस्ताम्भोजस्पृष्टमीषत्कुरुष्व ।

---

(१) प्रापुः । (२) गावः ।

तत्सौगन्ध्यप्राप्तसन्धानमेनं माधः सुष्ठुप्रीतितः स्वादयन्ते ॥

गो-विश्रमणं यथा ।—

गोवर्द्धनाचलमहस्य युतादियूथ
गोरोधनाय पशुपा नहि तत्र शेकुः ।
फूत्कारकेलिकलया मुरलीमुरोर-
रासीदलं यदसकौ गुणाकोटिकल्पा ॥

गो-परिक्रमणन्तु श्रीकृष्णेनेत्थं तदिष्टमादिष्टं ।—

न भवति बलबहुलाना,मतिबहुलानां परिक्रमः सद्यः ।
इत्येकस्याव्यक्तेः, क्रियतां यस्मादशेषगा जातिः ॥

तत्र पदक्षिणीकार्य्यमेकं वृद्धं गवोरसम्[१] ।
मूलाराधनतः सर्वाराधनं विबुधैर्मतम् ॥

गोषु प्रणामात्मिका भक्तिस्तु तेषां वर्णनाय नाभ्यर्णतामन्वेति ॥

यतः ।—

भक्तः स्वभावात् किल गोपलोकः
श्रीनन्दलोकस्तु ततोऽपि गोषु ।
अस्याथ गोवर्द्धन-यज्ञयोगे
योगेशदुर्गानमनाख्यभक्तिः ॥

---

(१) गोप्रधानं ।

आचार्य्यवरणलक्षणामपि विलक्षणामेव तत्र ॥

यतः ।—

स्वयमव्रियता[1]चार्य्यस्तत्र नान्यत्रदार्थितः ।
यत्र सुष्ठु सितं[2] यच्छ्रित्तं तत्रैव तस्य[3] च ॥

होमे तु ॥

गोवर्द्धनमहायज्ञे हुतभुग्व्याजतस्तदा ।
हरेः प्रताप एवेन्धाञ्चक्रे शक्रप्रतापनः ॥
यदाग्निर्दक्षिणावर्त्ती यज्ञे जज्ञे तदा जनः ।
सर्वश्च दक्षिणावर्त्तं परीवर्त्तमवर्त्तत ॥

कृते सत्र वस्त्रं तिलकमथ चर्च्चामवयव-
प्रकारालङ्कारं सकलमिदमप्युत्तमतमं ।
द्विजेभ्यः प्रायच्छल्लषितलषितं शश्वदनुगा-
न्मुदावादीयस्मिन् ददददमात्रं व्रजपतिः ॥

दिव्यदातव्यसम्भारे व्रजराजेन योजिते ।
परीक्षका[4] स्तत्र परं तत्परीक्षकतां[5] ययुः ॥

यदनु सर्वेऽपि प्राणिनः प्रीणाते स्म ॥

तथाहि वन्दिजन-वन्दनं ।—

---

(१) कर्म्मकर्त्तरि । (२) बद्धं । (३) आचार्य्यस्य ।
(४)परीक्षकःकारणिक इत्यमरः । दाने योग्या योग्यविचारकाः ।
(५) तत् दातव्यं परिलक्षीकृत्य ।

अर्थेन[1] पोषकान्नन्दादर्थेन[2] च सदार्थिनां ।
वदान्यश्च वदान्य[3]श्च वदान्यः को भवेदतः ॥

किन्त्वयमत्रातिशयः ।—

अन्नात्पूर्त्तिरभूद्बलावधिवलाद्गोवर्द्धनाद्रेर्मखे
सर्वप्राणभृतां तथापि हृदयं नापूरि तत्राण्वपि ।
यस्मिन् स्निग्धमभूदशेषदिविषद्वृन्दं यदप्यत्र भोः
पश्याश्चर्य्यमथापि हन्त ! गतवान् संक्रन्दनः
शुष्कताम् ॥

अथ तदेवं विप्रसात्कृत[4]सत्रादिकः पुरोहितहित सहितः श्रीव्रजयुवराजमहितः स खलु विज्ञानां समाजः पुरस्कृत्य व्रजराजस्तद्यज्ञावशिष्टं परम-विशिष्टमन्नमुपभुज्य वेषविशेषं संयुज्य गीतनिबद्धं सश्रद्धतया हरिचरितं प्रतिरसन् हसन् विश्वसन् लसन् परितो गोवर्द्धनं परिचक्राम ॥

यथा च । यथा श्रीविष्णुपुराणे ।—

द्विजांश्च भोजयामासुः शतशोऽथ सहस्रशः ।
गावः शैलं ततश्चक्रुरर्च्चितास्ताः प्रदक्षिणां ॥

तत्र पूर्वापरीभावो यथा ।—

---

(१) धनेन ।　　(२) प्रयोजनेन ।
(३) वदान्यो वल्गुवागपि ।
(४) विप्रसात्कृत ।

धेनवो हरिवलादयो द्विजाः
स्वामिनः परिजना गुरुस्त्रियः ।
नूतयौवतशतानि दासिकाः
श्रेणिमुख्यजनताश्चचुक्रमुः ॥
आकृष्टुं प्रतिदिशमत्र नेत्रमीनान्
वाद्यादिप्रकटनधीवरा[१]नटाद्याः ।
कृष्णस्य प्रथितगुणा[२]लिगीतजालं[३]
तन्वानाः पुनरिह धीवरत्वमापुः ॥

तत्र गोपाङ्गनानां गानञ्च यथा ।—

यत्र प्रथमयमर्द्धमेकस्यास्तदुत्तरमयं तु वहूनां । गिरिपूजेयं विहिता केन ? । अरचि शक्रपदमभयं येन । गिरिपूजेयमित्यादि ? । पूतनिका सा निहता येन । गिरीत्यादि ? । तृणावर्त्ततनुदलनं येन । गिरीत्यादि ? । यमरलार्जुनतरुमुदकलि येन । गिरित्यादि ? । वत्सवकासुरहननं येन । गिरीत्यादि ? । व्योमाघासुरमरणं येन । गिरीत्यादि ? । कालियदमनं कलितं येन । गिरीत्यादि ? । खरप्रलम्बकशमनं येन । गिरिइत्यादि ? दवयुग्मं परीपीतं येन । गिरीत्यादि ? ।

(१) वुद्धौ श्रेष्ठा । (२) श्लेषेसूत्र ।
(३) जालं समूह आनाये। गवाक्षक्षारकावपि इतिनानार्थः ।

त्रस्यति कंसं सततं येनेति ॥ किन्तु ।—

तदैव गुणिनां गुणा विविधकौतुकाद्यप्यहो
मनोहरणमावहन् व्रजनिवासिनां सर्वतः ॥
यदाघरिपुवंशिकाकलतुषारकान्तित्विषा
जडीकृतशरीरता भवति तं तु कालं विना ॥

अग्रे काञ्चनरत्नशृङ्गवलिताधेन्वादिकाः सर्वत-
स्तासां गोपततीर्विधाय सखिभिः सार्द्धं हरिः साग्रजः ।
दीव्यद्दिव्यसुवर्णवर्णवसनादुद्गच्छदङ्गप्रभ
कन्याकुङ्कुमयुक्कराङ्कविलसत्पृष्ठः स्फुरद्वेषवान् ॥
सद्गन्धारुणचूर्णरोचनतनुर्यष्टिं नभस्युत्क्षिपन्
गृह्णंश्च प्रतिकूलगामिधवला विद्रुत्य सङ्कोचयन् ।
हासं क्रीडनकं मिथःकरयुतिं सम्वादितां वादितां
कुर्वन् वादितवल्गुवेणुपरितश्चक्राम गोवर्द्धनम् ॥

युग्मकम् ॥

यदा हरिर्यत्र गतिं विलासत-
श्चकार मन्दं लघु(१) वा यदृच्छया ।
तदा दृशः सर्वजनस्य तां दशां
तत्रापयुः सूत्रनियन्त्रिता इव ॥

तदेवं बहुलकुतूहलतश्चालं चालममी गोपग्रामण्य-

(१) शीघ्रं ।

स्तदेव रम्यं यज्ञधाम समागम्य परमानन्दाह्वाशिनी निभवाशिनी[१]प्रभृति कृतनृत्यवाद्यगीतग्रामिणीं[२] यामिनीं विश्राम्यन्ति स्म। प्रातश्च द्वितीयाया महिमकरकन्याया महिमश्रवणात: प्रवणतया तस्यां स्नानमाचर्य्य निकाय्यमेवागच्छन्ति स्म। तस्याश्च भ्रातृद्वितीयायां भ्रातृभिः प्रशस्तेन भगिनी-हस्तेन भोक्तव्यमिति परमधन्याभिरुपनन्दादिकन्याभिर्मिथो मिलन्तीभिर्निमन्त्रितौ प्रणयपन्त्रितौ तत्र सतृष्णौ च रामकृष्णौ सहचरनिकरेण सह भोजनकरेण सह महमरोचयतां। तदेवं वृत्ते वृत्ते कृष्णस्य समुन्नद्धता[३]वद्धया[४] कुहनया[५] मद्यज्ञप्रत्यूहन[६]मिदमित्यूहमानः शक्रस्तु वक्रमावचक्रतया चुक्रोध॥

कृष्णेन तस्य यागूढापि खट्वारूढता[७] तर्किता सा कथमन्यथा सम्पर्क्तितया[८] वर्त्ततेति व्यक्तीकर्त्तुमिव मत्सरतस्तत्साहितविश्वमाहितश्रीमन्नन्दादिनिन्दापूर्वकं सम्वर्त्तकमभ्रान् व्रजविघाताय प्रवर्त्तयामास॥

---

(१) वाणिन्यौ नर्त्तकीदूत्यौ। (२) समूहः।
(३) समुन्नद्धौ पण्डितम्मन्यगर्व्वितौ। (४) युक्तया।
(५) कुहनालोभान्मिथ्येर्ज्यापथकल्पना।
(६) सविघ्नीकरणं। (७) गर्व्विता। (८) अन्वयायोगतया।

ततश्च ।—

कौवेर्य्यां पूर्वमासीत् किमपि हिममरुत्

कालिमा मेघलेशः

शम्पानिर्घोषवीप्सा स्पृगिति पशुकुले

गोष्ठमेवाशु नीते ।

गोपाद्या दुर्निमित्तप्रकरकलनया

कृष्णमावृत्य वृत्ता-

स्तन्निर्देशात्तमद्रिं सपदि परिगता-

स्तस्थुरूद्धं निरीक्ष्य ॥

निर्देशो यथा ॥

इन्द्रो यदि महावृष्टिं नष्टसृष्टिं तनिष्यति ।

तदाङ्गीकारिगिरिराट् कृपां साङ्गीकरिष्यति ॥

उपत्यकामुपेत्य तां विघ्नं निघ्नं[(१)] कर्त्तुमद्रिमुपघ्नं[(२)] कृत्वा कृताधिष्ठाने तु गोष्ठे गोष्ठेन्द्रतनये च समयं प्रतिपालयति[(३)] ॥

घडद्घडदिति ध्वनद्घनघटाभिसङ्घट्टनैः

कठोरकुठ[(४)]कुट्टकैः[(५)] कुटिलवायुभिः कुण्ठते ।

---

(१) आयत्तं ।        (२) अन्तिकाश्रयं

(३) प्रतीक्षमाणे ।        (४) वृक्ष ।

(५) कुट्टच्छेदने ।

प्रकोष्ठकुटकुट्टिमावटतटादिम[1]त्युज्झिते
जने प्रकटमाट सा प्रथितधृष्टिवृष्टिप्रथा ॥
धाराः शक्रधनुर्विमुक्तशरतां तन्वन्ति वर्षोपला
वज्रत्वं वत वज्रपातनिचयाः सूर्य्यप्रपात-भ्रमं ।
इत्थं दुःखितया हरिं गतिमिते गोष्ठे सगोवर्द्धनं
हस्तेऽधत्त यथा न केन च तदा शक्तं दरा[2]प्यूहितुम् ॥

तत्रैवं मेघङ्करे पुरन्दरे निविरीष[3]वर्षादिना भयङ्करे चार्तिङ्करे च जाते क्षेमङ्करः स मुरारिः पुरा ह्येवं परामम‍र्श ।

इन्द्रः स्वैराभिमानी मयि मदनुगते
चावमानी ततश्च
स्वान्तान्मेदूरमानी[4] तदमुमनुमया
मानभङ्गप्रसक्तः ।
गोष्ठं मद्गत्यशेषं[5] मम मदनुगत-
स्यापि मुद्गाद्विशेषं[6]
मच्चिते सावशेषं[7] तदिदमथ मया
प्राणसाम्येन धार्य्यम् ॥ इति ॥

---

(१) बुद्धि । (२) ईषदपि ।
(३) निविड । (४) मानं प्रमाणं ।
(५) अहमेव गतिर्यस्य स मद्गतिः तादृगेवाशेषो यस्य तत् ।
(६) विशेषः स्वगतभेदो यस्य । (७) पूर्ण मित्यर्थः ।

समजनि हलिना न हरे, गिरिधृतिसम्भ्रमवशेन
सम्वादः ।
तदपि परस्परहार्द्दं, ज्ञानं तस्मिन्नजी-
जनत्त[1]मिव ॥

तं नगमुन्नयमानश्चासौ रोमाञ्चतः सूचिनिचय निचितसर्व्वावयवानिव निचायन्नमूनभीरुमाथुराभीरजातिजातीयगम्भीरमधुरस्वरविकस्वरदूरभृविभूति[2]हूतिभिरूर्जितगर्जितादिगर्वं खर्वं विधाय प्रियङ्करतया व्यक्तमुक्तवान् । यत्र खलु मुहुरपि हे शव्दः प्लुतताप्लुत एवासीत् ॥

तथाहि ।—

अम्ब ! हे माविलम्वस्व तात ! हे अत्रैव यूयमायात ।
आर्य्य ! हे सर्वानादायागच्छ इतिप्रभृति ॥

तदेवं वलरामेण वलेनान्तिकमानीतेषु तेषु पुनरूचिवान् ।

पितर्न कुरु सम्भ्रमं जननि ! नार्त्तिमावर्त्तय
प्रशाम्य सुहृदां तते मम तु कोऽपि नात्र श्रमः ।
यतो गिरिवरः स्वयं करुणया करे मामके
समुत्पतनलीलया स वरिवर्त्ति तूलप्रभः ॥

---

(१) सम्वादं ।　　(२) दूरभूर्विभूतिर्व्याप्तिर्यासां ।

किञ्च ॥

भूभृद्गर्त्ते प्यत्रऽनिश्रेणियुक्ते
स्थानं पश्यन्नस्मि पातालकल्पं ।
विस्तीर्णोऽभूदद्रिरित्यन्तरम्भः
सङ्गातीते नो निपत्यादि[१]चात्र ॥

पुनश्च तेषां भावान्तरं विभाव्य स्वकर्त्तृकधारणमप्यर्द्धमङ्गीकृत्य भणति स्म ॥

मातुर्मन्त्रणया मा मां निवर्त्तयत सत्तमाः ! ।
उदस्तो येन तद्धस्ताद्धस्तः स्याद्गिरिराट् कथं ॥

किञ्च ॥

मा विलम्बध्वमत्यर्थं युष्मद् दुःखेन कम्पतां ।
मयि गच्छत्यद्रिपतिः पतिता विशत द्रुतम् ॥

अथ पशुपजनस्तदीयहार्दाद्[२] द्रुतमविशन्निखिलस्तदाद्रिगर्त्ते नहि शरणतया कदाचिदेनं स[३] भजति किन्तु तदेकतर्षिवुद्ध्या ॥

ततश्च ।—

सुविन्यस्तनिःश्रेणिलब्धप्रवेशं ।
मणिश्रेणिविद्योतमानप्रदेशं ॥

(१) पिच्छिलभूमिः । (२) स्नेहात् ।
(३) पशुपजनः ।

गृहस्येव रत्नाङ्कभित्तिप्रकारं ।
तदूर्द्ध्वञ्च तत्तुल्यशोभाप्रचारं ॥
सुखस्पर्शमण्याचितक्षोणिभागं ।
समस्तावकाशार्हसन्धा(१)विभागं ॥
यथापेक्षविभ्राजितस्वच्छनीरं ।
सुखाकारिधर्म्माश्विनीचैः समीरं ॥
करे स्वस्य वामे तु वामे(२)वसन्तं ।
गिरिं(३)लीलयास्पृश्य सन्तं हसन्तं ॥
तदीयान्तरुद्यन्महाकुट्टिमस्थम् ।
हरिं(४)हारिरूपादिभिःप्रागवस्थं ॥
दध(५)द्वेणुमानम्रहस्तप्रधानं(६) ।
कदाचिन्मुदा सख्युरंसे दधानं ॥
ददर्श प्रहर्षं सतर्षं(७) सभीतिं ।
व्रजावासिलोको ययौ चातिरीतिम् ॥

---

(१) सन्धा प्रतिज्ञा मर्यादेति नानार्थे ।
(२) मनोहरे ।
(३) सुविन्यस्तादीनि गिरेर्विशेषणानि ।
(४) हरिं ददर्श इत्यन्वयः । गिरिं लीलया स्पृश्य सन्तमित्यादीनि तस्य विशेषणानि ।
(५) हस्तप्रधानस्य विशेषणमिदं ।
(६) प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायाञ्च प्रधानं स्यादेकत्वेतिसदोत्तमे इति विश्वप्रकाशात् ।
(७) सतर्षादित्रयं प्रहर्षस्य विशेषणं ।

गोवर्द्धनाद्रिस्तत्रासीद्रत्नचित्रं महागृहं ।
हरिर्यत्र हरिद्रत्नस्तम्भतारम्भिविभ्रमः ॥

अपि च ॥

विलसति मणिदण्डश्रीर्मुकुन्दस्य वाहु-
स्तदुपरि परितोऽपि च्छत्रतुल्यो गिरीन्द्रः ।
प्रतिदिशमिह मुक्तादामवद्वारिधारा
व्रजसदनजनानां प्रत्युताभूद्विभूतिः ॥

ततश्च सहसा रोहिणीसहिता व्रजेश-गृहिणी तं(१) पार्श्वयोर्गृहीतवती तदिदं वर्णिभि(२)र्निर्वर्ण्य वर्ण्यते स्म ॥

यथा ।—

मातृभ्यां पार्श्वयुग्मे धृततनुरसकृन्-
मृज्यमानाननाब्जः
पित्राद्यात्मीयवर्गैः सपुलकमभितो
वीक्षितोऽतर्क्यकर्म्मा ।
सोऽयं स्मेराब्जनेत्रः कलिततटकला
हस्तकः सव्यहस्त-
न्यस्तक्षोणीभृदुच्चैर्जयजयनिनदा-
न्वीडितः क्रीडतीव ॥

---

(१) कृष्णं । (२) वर्णिनो ब्राह्मणादयः ।

गोवर्द्धनधरस्याग्रे विलासान् व्यञ्जतो वलः ।
कृत्स्नानुत्साहयत्येष नाट्येवा[१] नटनायकः ।

तदेवं सति ।—

महावृष्टिर्गर्जः खरहिमपवनः स्फूर्जथुर्ध्वान्तशब्द[२]-
स्तथा वज्रीत्येवम्विधविविधगति-क्लेशहेतुर्वहिर्यः ।
तमन्त[३]र्निर्वर्ष[४] मधुरनिगदितं चारुवायुः प्रगीतं
मरीचि[५]श्चित्रश्रीरजितगिरिभृ[६]दित्याप्तशर्म्म
व्यकारीत्[७] ।

नृत्यस्तोत्रप्रगीतान्यतिचटुलनटा-
द्यर्थिनां दानचर्य्या
वर्य्याणां स्वस्तिपाठः श्रुतिसमयविदां[८]
त्रीडितं वालकानां ।
गर्व्वात्यर्व्वाखिलानामिति सकलमभू-
द्यस्य तु प्रेमजातं
स श्रीगोवर्द्धनाद्रिप्रवर[९] धरकरः
कं न तोषं पुपोष ॥

(१) इवार्थे ।  (२) मद्ध इत्यपिपाठः ।
(३) अन्तरिति सर्वत्रानुसन्धेयं ।
(४) वर्षाभावः ।  (५) किरणं ।  (६) कर्मधारयः ।
(७) विहितवान् । इति अनेन प्रकारेणाप्तशर्मकर्तृत्वं क्लेशहेतुं व्यकारीदित्यन्वयः ।
(८) समयाः स पथाचारकालसिद्धान्तसम्विदः ।  (९) श्रेष्ठ ।

गुरौ नम्रा तुल्ये स्मितयुगनुपाल्ये धृतजला
क्वचिल्लीला लोला मघवति तु वक्रा वत सती[१] ॥
धृताद्रेर्दृष्टिस्तत्तदनुगुणामर्थं[२] विदधती
क्रियामन्यां तस्य[३] स्वमनु[४] पुनरुक्तामकुरुत ।
गिरिधरवदनेन्दोरस्मिपीयूषधारां
पिवदिह पशुजातं सप्तरात्रिन्दिवानि ।
तुधमपि सतृषं त[५] न्नाययौ तर्हि तस्य
प्रणयिजनगणानां किं ब्रुवे न ब्रुवे किं ॥
श्रीमुखेन जनतासुधारसै-
रस्य भूधरधरस्य पूर्यते ।
एवमप्यवयती[६] तदा प्रसू-
स्त[७] न्मुहुर्व्वहुरसैरपूरयत् ॥
सप्ताहर्निशनिर्मिता गिरिभृता ये ये विलासास्तदा
तान् कल्पैरपि सप्तभिः कथयिता शेषोऽपि नाशेषतः ।
एवं चेद्वचनैरमूंस्त्रिचतुरैः सच्चातुरीवर्जितै-
स्तूर्णं वर्णितवान् कविः स्वयमसौ दुर्भूय[८]दोदूयते ॥

---

(१) सतीति गुरौ नम्रेत्यादि सर्वत्रान्ते योज्यं ।
(२) गुर्वादौ योग्यमर्थं । (३) कृष्णस्य ।
(४) दृष्टिमनु । (५) पशुजातं ।
(६) जानती । (७) मुखं ।
(८) कुण्डुभूत्वा ।

तदेवमत्र प्रस्तावे लब्धावस्थाने तत्र शक्रस्तु दुष्टुक्रममनुष्ठितवान् । प्रथमं तावत्प्रथमानेन(१) वातेन वातेन(२) ते प्रलयं गता इति सन्दिह्य तदैव तद्दैवतशतमेव तत्र प्रभूत(३ दूततया प्रस्थापितवान् । तत्तु तस्मादतिसत्वरमागत्वरतया तदभीष्टं प्रत्याचष्ट । ततश्च वलारातिर्वलात्प्रवर्तितप्रसारेण जलासारेण(४)तद्विलापनं(५) प्रतीत्य च सत्यताप्रतिपत्तये(६) जलददेवानेव तद्वार्त्तायां वर्त्तयामास ॥

वर्तिताश्च ते त(७)द्वीक्षितेन यथा प्रत्यागत्य यथापूर्वं त(८)त्प्रत्याशापदं(९) प्रत्याख्याय स्थितवन्तः ॥

ततश्च । परममपूर्वं मत्वा मनस्यतीव धूर्वणं(१०) गत्वा घनाघन(११) वृंहणः स घनाघनः(१२) स्ववाहनं घनाघनं(१३) क्रोधादङ्कुशेन मङ्क्षु जघान ।

---

(१) वर्द्धमानेन ।　　(२) हिंस्यता ।　　(३) प्रचुर ।
(४) धारासम्पात आसारः ।
(५) व्रजस्य तस्य । विलयप्रापणं ।　　(६) ज्ञानाय ।
(७) तत्तेन इन्द्रेण ।　　(८) इन्द्रस्य ।
(९) आस्पदं विषयमितियावत् ।
(१०) हिंसनं । धूर्वीहिंसायां ।
(११) शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघना इतिनामर्थे ।
(१२) इन्द्रः ।　　(१३) ऐरावतं ।

हृत्वा च किञ्चिदग्रतो गत्वा सत्वरमैरावतीयवह्नि(१) मह्निचापहृतनेत्रवीर्य्यं विकीर्य्य दूत्याय तद्देवतामवतारयामास । साच ततो निवृत्य प्रवृत्यन्तरं निवेदयामास ॥

देव ! परमाश्चर्य्यचर्य्येयमवधार्य्यतां । यत् खलु स एव वलिभोजनवलितवलः सन्नचलः सम्यगुत्पतन्निवावलोक्यते ॥

इन्द्र उवाच ॥

दृश्यतां कीदृशमनन्तरमन्तरं जातं ।
लब्धशोकश्च व्रजलोकः कुत्र वा सपुत्रः प्रयातः ॥

अथ सर्वे यथा ज्ञापयन्तीति विद्रुत्य पुनः सङ्गत्य(२) संहृत्य(३) प्रत्यभाषत ॥

सर्वदेव सर्वदैवतमान्यशतमन्यो ! मन्यामहे ते सर्वे शतपर्वसगर्भविद्युद्वह्निना प्रलीनतामेव नीताः । यद्वह्निर्न हि विलोक्यते ॥

इन्द्र सहर्षमुवाच ॥

आयुष्मद्भिर्युष्माभिः पुनरपि निरूप्यतां ।
अथ तथा पुनः सङ्गत्य(४) गत्यन्तरं प्रथयामासुः ॥

(१) वैद्युतवह्निं ।
(२) इन्द्रमितिशेषः आगत्येति वा पाठः ।
(३) परस्परं मिलित्वाः । (४) आगत्येति वा पाठः ।

दिवीश्वर ! नाद्यापि ते नश्वरतां प्राप्ताः प्रत्युत पातालतल इव गिरिगर्त्ततले प्रविश्य तद्दिश्यतीवानन्दकोलाहलं कुर्वन्तः प्रतीयन्ते । अचलश्च स्वयं वलानुजहस्तन्यस्तप्रायग्राव[1]निकायमयकायतया प्रतीयते ॥

इन्द्र उवाच ॥

लक्षयामि मया पूर्वं छिन्नपक्षति[2]रप्यसौ पुनः सपक्षः सम्पन्नः । यत एव गर्ववान् स पर्वतः सर्वतस्तेषामक्षयाय पक्षपातमाचचार । भवतु नाम तमेनं पुनर्निह्लादि[3]ह्लादिनीवह्निप्रहारेण संहारे योजयामि ॥

येन तदीयतले वलमानतया लब्धावलेपा[4]स्तेऽपि तूर्णमेव चूर्णतामासादयन्तीति ॥

तथा च ।—

तद्वह्निमाविद्धं[5] विधाय प्रणिधान[6]द्वारा तदन्यथा प्रणिधाय[7] मनसि कोपप्रकोप[8]माधाय मुहुरपि तदेव सन्धाय व्यर्थताकदर्थितपुरुषार्थः पुनर्नूतनदूतगणं प्रहापयन्नाह स्म ॥

---

(१) पाषाण । (२) पक्षमूलं । (३) शब्दायमान ।
(४) गर्वाः । (५)नुन्ननुत्तास्तनिष्ठ्यूता विद्धक्षिप्तेरिताः समाः ।
(६) दूत । (७) ज्ञात्वा । (८) अतिशयं ।

अरे ! निरूप्यतां तिरोभूय भूयः किं तत्र चित्रमिव वर्त्तते।

येनाशनेरपि प्रचारः स्वव्यवहाराद्वयभिचारं सञ्चचार ॥

अथामी च तथागत्य स्वप्रत्यक्षं प्रत्याययामासुः[१]। सुत्रामन् ! न तत्र कुत्रचिदपि द्वित्राण्यपि पत्राणि स्रस्तानि दृश्यन्ते, नच काचित्पिपीडिकापि पीडिता ॥

तदेवं यद्युपरितनं वृत्तं परितो वृत्तं[२] तदाविलसितरङ्गतरङ्गाणामन्तरङ्गाणां वार्त्ता तु दूरे वर्त्ततां ॥

अथ तं निखिलोच्चं शिलोच्चयं प्रति प्रतिहत[३] निजटङ्क[४]तया सशङ्कः स वज्रपाणिर्विस्मयलज्जाभयानि सज्जंश्चिरमेव तूष्णीं भूष्णुतया चिन्तयामास ॥

आं कृष्णाकारमनु विष्णुरेव तत्राविर्भविष्णुतामाससाद कथम्वा सच परात्पराजिष्णुतामासीदतु। यः खल्वहार्य्यमपि[५] हार्य्यता[६]मासादयामास ॥

---

(१) प्रतीतिविषयं कारयामासुः। (२) स्थितं।
(३) प्रहितो वा पाठः। (४) टङ्को दर्पाश्मदारणे।
(५) पर्व्वतमपि। (६) हार्यतां हरणीयतां। अनुद्धार्यमपि पर्वतमुद्धारयामास इत्यर्थः।

अथ तदानीमेव मूढः संज्ञया शङ्खचूडः कंस-सपक्षः कश्चिद्यक्षः प्रतिकुष्ट[1]मतितयातिहृष्टः सङ्गम्य प्रणम्य च प्रोवाच ॥

महेन्द्रदेव! दुर्मिलदानवनन्दन महीन्द्रसदनाद्भवत्प-दारविन्दं वि·न्दमानः सोऽयमस्मि ॥

स हि परमहितसहिततया दुन्दुभिसन्दोहनिर्घोषं प्रतिदिशं जोषयित्वा भवन्तं प्रति प्रीतिपरिणामं प्रणामं निर्दिदेश सन्दिदेश च ॥

तदिदं भवद्भिर्यदेतदनुष्ठितं तेन परमतुष्टिमा-पन्ना वयं। यतः क्षुद्रतमनिर्मितगर्वकिर्मीरित[2]म-हदतिक्रमः समस्तस्य च दुःसहः सम्पद्यते। वला दुत्पतनलीलपिपीलिकवदमूदृशां तद्दिष्टतः[3]प्राप्त दिष्टान्तता[4]च दृष्टा ॥

किञ्च ॥

कियदाभीरजातीनां यजमानतया भवत्प्रयोजनं जनिता। वयमेव हि नानायज्ञाननुज्ञाप्य भवत्सु सन्तर्पणमर्पयिष्यामः ॥

अथ तदेतदवधार्य्य स देवकुलनिर्धार्य्यश्चमत्कार-माससाद ॥

(१) निकृष्ट।　(२) मिश्रित।　(३) तत्कालतः।
(४) दिष्टान्तःप्रलयोऽत्ययः।

यत्रैवं चिन्तामाप ॥

अहो ! शक्राशनव्यसनतया मम बुद्धिर्न सदा शुद्धिमवरुणद्धि[१] । यतो मित्रामित्रता-वैपरीत्यं परीत्य[१] नीत्यतिक्रममापन्नवानस्मि । तदेतच्च, गोत्र भिदिति स्वनामस्फुरदुपश्रुति[३] फलमिव मम प्रतिभाति ॥

किञ्च ॥

गर्विणः सुष्ठु मे युक्ताप्येषाभिभवभावना ।
आत्तगर्वोऽभिभूतः स्यादिति पर्य्यायता यतः ॥

प्रकाशन्तु स्व-दासानुवाच ॥

भवतु; निवर्त्तन्तां सम्वर्त्त[४] वर्त्तना मेघावर्त्ताः । अवरजन्मा[५] यमिति व्रजराज-तनूजं प्रति तितिक्षा-भाज एव वयं । शिक्षामात्रपात्रतामासादितवन्तः । न तु कथमप्यन्यथा भावभावन(६)व्यथामिति ॥

अथ यक्षमप्यादिदेश ।—

निजं राजानमिदं सन्दिश ? ॥

---

(१) प्राप्नोति । (२) प्राप्य ।
(३) याहच्छिकलोकोक्तिशकुन ।
(४) प्रलय । (५) नीचजातिः । वस्तुतस्त्वनुजः ।
(६) चिन्तन ।

मुहुः कोपितोऽपि सोऽपि भवांस्तस्माद्भयमिव भावयन् वर्त्तेत इत्यवधारयत एव ममाधिकः क्रोधस्तत्र वर्द्धते स्म ॥

यदि त[1]दपि तथ्यं स्यात्तदा वयं याथातथ्य[2]मेव प्रथयिष्यामः शतमन्योः सहस्राद्यस्य शतकोटि[3]-हस्तस्य ममापि कः खलु खलतयानभीप्सितं कुर्वीत ॥

अपि च ।

त्वं पुण्यजन[4]सेव्यश्रीर्देवानां प्रियता[5]गतः ।
सोऽप्यग्रे त्वद्विधानां स्याद्गोजानां गोपदारकः ॥

तदेतदनुभूय कुपूयः[6]खल्वसौ दूयमानहृदयतया यक्षः प्रतस्थे स्वेन चानीतं सन्देशं प्रवाहे मूत्रित-मिवातस्थे[7]। तदेवमपध्वस्त[8]म्मन्यः मतमन्युश्च शतमन्यु[9]तया विमानगतिं[10] प्रति विमानगति-मासाद्य सद्यः सानुशयं[11] संशयानतया[12] शयान-तया च निजान्तर्निलयमयाञ्चक्रे। शाब्दिकाष्टकमनु-

(१) भयं । (२) यथायुक्तं । (३) वज्रं ।
(४) श्लेषे राक्षसः । (५) श्लेषे पशुतां । अलुमयं ।
(६) कुत्सितः । (७) निश्चितवान् ।
(८) अपध्वस्तस्तु धिक्कृतः । (९) शोक ।
(१०) मानरहितगतिं । (११) सानुतापं ।
(१२) संशययुक्ततया ।

विशिष्टतया रलयोर्व्यत्ययमिवावेत्य[१] निरयमेव च तं[२] मन्यते स्म ॥

तथाहि ॥

विक्षेप्तुं व्रजमैच्छदेष पवनैर्विक्षेपमाप स्वयं
वर्षैर्धर्षयितुं च धर्षमगमद्वाढं विडौजा हृदि ।
वज्रैस्ताडयितुं तथाप शिरसि स्वे वज्रताड्यात्मतां
साधूत्पातकरत्वमर्जति विपर्य्यस्ता गतिर्युज्यते ॥

तदेवं गेहगुहामवगाहमाने कौशिके[३] ॥

अथ द्यवि दिवाकरः प्रकटभावमाट द्रुतं
दिशः स्फुरणमागमन् धरणिराप वर्त्मप्रथाम् ।
तदा च नयनश्रवश्चरणसंहतिः प्राणिना-
मिदं निजनिजाश्रयत्रयमनु स्ववृत्तिं ययौ ॥

निर्य्याते मेघजाते हरिरथ पशुपानाख्यदुच्चैरमुष्मा-
न्निर्य्यातप्रात्त(४)ग्रह्या(५)दर(६)च दर(७)मतिं
मा कुरुध्वं त्वरध्वम् ।
यस्मिन्न् गाम्भीर्य्यभाजि स्फुटवचसि घनाः
पूर्वमप्यस्य कान्त्या

(१) ज्ञात्वा । (२) निलयं ।
(३) महेन्द्रगुग्गुलूलूकव्यालग्राहिषुकौशिकः । पक्षेउलूके ।
(४) गृहीत । (५) गृह्यं गृहभव्यं ।
(६) ईषत् । (७) भय ।

भूभृद्भृत्या च धूताः पुनरहह ! ययु-
गर्जगर्वाद्विधूतिं ॥

अथ तदाम्रेडितप्रेरिततया वादितबहुलकाहला-दिहलहलायमानकोलाहलमाचर्य्य हरिदासवर्य्य-गिरिहृदयायमानकुहरात्पुरत एव निर्व्रजन् स-गोसमजव्रजजनसमाजः सयशःस्नेहप्रसरदेह इव तस्य विरराज ॥

गावस्तावत्पुरस्ताद्गिरिवर-
विवरा(१)च्चाल्यमानाः समन्ता-
दारादप्यन्तरन्तर्गिरिधरवदनं
द्रष्टुमासन्निवृत्ताः ।
यासां निर्य्यापनायां मुहुरपि तद(२)लं
लोकमानः सलोकः
स्तब्धीभावं प्रपन्नः परवशदशया-
तत्र वैयग्र्यमाप ॥

अथ कथमपि निर्गिरिविवरः सर्व्वः परस्पर-मनुयानं(३) परीक्ष्य निर्निमेषतया श्रीकृष्णनिष्क्र-मणं प्रतीक्ष्य त्वणतस्तदपि निरीक्ष्य जीव इव

(१) "तलत" इति पाठो वा । (२) मुखं ।
(३) "मनुगमन"मिति वा पाठः ।

जीवननिभं तमासीदन्[1] पुनरतीव मुदमवाप ॥

यतः ।—

स्वभावः सौन्दर्य्यं गुणगरिमभूमा मृदुलता-
खिलव्यापिप्रेमा गिरिधृतिरपि स्वावनकृते ।
क्रमादेते धर्माः प्रणयमनुसान्द्रीकृतिपरा
यदीयाः सोऽभ्यागान्निजदृशि गिरेस्तस्य तलतः ॥

किन्तु ॥

यद्वदुत्थापितस्तद्वत् कृष्णेनाद्रिः स रोपितः ।
दृष्टश्च सर्वलोकेन प्रकारस्तु न लक्षितः ॥

दर्शनादनन्तरन्तु ॥

अतिशयितमवेगप्रेमधारानिमग्ना
विवशपशुपलोका गोत्रगर्त्तान्मिलन्तं ।
हरिमभिपरिरम्भाद्यात्मयोग्यं दधाना
दधुरनुनिजलाभं व्युत्क्रमश्च क्रमश्च ॥

गोप्यस्तत्र तु मान्यभाववलिता दध्यक्षतादिस्फुर-
द्रव्यद्रव्यसमार्जितं विरचयामासुर्जितस्वर्पतिम् ।
यद्यप्येवमथापि मूर्द्ध्नि च करं धृत्वा तमाशीशिषन्
सम्वित्ते तदिदं स एव यददं हृद्यन्वभूत्कर्ह्यपि ॥

श्रीव्रजेश्वर्य्यादीनां मिलनं तु श्रीमन्मुनिवर्य्यैर्णैवं

(१) अतिशय ।

वर्ण्यते स्म । यत्र चेदं सुष्ठुतरमनुष्टुप् छन्दसा स्वल्पवद्यमपि पद्यममृतसम्भृतकुम्भवदक्षयरसं प्रसूते ॥

"यशोदा रोहिणी नन्दो रामश्च बलिनां वरः ।
कृष्णमालिंग्य युयुजुराशिषः स्नेहकातराः" ॥इति॥

तथाहि ॥

अहह ! नवनवनीतनीतिसुकुमारा कुमारतनुरियमखर्व्वपर्व्वतभारतः कीदृगभवद्भवति भविष्यति चेति स्नेहमयसन्देहरीतिभीतिमन्तस्ते तदेतत्क्लेशकुलमस्मद्वपुरावेशं सन्देशतया प्रयास्यतीत्यभिप्रयन्त इव तमाश्लिष्यन्तस्तत्राप्यविश्वासा इव विशेषादशेषाशिषः प्रयुञ्जाना निजवंशं यशस्वितादियुक्तं कुर्व्वाणा इव ते तत्तन्नाम्ना समाम्नाताश्चिरं वाष्पनिष्पत्तिभित्तनेत्रवृत्तयः सम्वृत्ताः । तत्र यद्यपि यौगपद्यतस्तूर्णमेव चतुर्णां मिलनं समपद्यत ॥

तथापि प्रेमतारतम्यमनुक्रम्य कृष्णावधानक्रमः क्रमते स्म यस्मातस्मादेव तथा श्रीशुकदेवः प्रचक्रमे "यशोदे"त्यादिना ॥

यत्र ज्ञानक्रियाशक्तिभ्यां वलं वलवानस्यापि वलदेवस्य तादृशीस्नेहकातरतानिरत । तत्र किमुतापरस्य स खल्वपार एवेति ॥

तत्र च ।—

माता साश्रुममार्जवक्त्रमभित-

स्तातः शिखामस्पृशा-

द्द्वावप्यङ्कुलं निभाल्य परितः पप्रच्छतुः शन्तमं ।

मित्राद्याः समवाहयन्नवयवानेवं व्रजस्थाः परे

प्रत्येकोचितमेव सेवनमधुः प्राणा हि सर्वस्य सः ॥

अत्रापरापि कौतुकपरम्परावधार्य्यताम् । गते तु कंस-पत्ते यत्ते यदा स खलु वृद्धश्रवा वृद्धश्रवस्ता-मेवात्मानं प्रतिमन्यते स्म । तदा सावहित्थमिद-मुत्थापितवान् ॥

भो ! मदीयगणाः ! समवधीयतां ॥

स खलु दानवारिर्वारितमदुद्यमतया विपक्षवदाच-रन्नपि वैरिशमनतया[१] मया सहायतया निश्चित-स्तत्परीक्षार्थमेव च तथा विभीषित इत्यभिनन्दनीय एव भवद्भिरिति ॥

ततश्च सव्रजव्रजराजनन्दननिष्क्रमाद्यनन्तरं ॥

दिवि देवगणाः साध्याः सिद्धगन्धर्भचारणाः ।

तुष्टुवुर्मुमुचुस्तुष्टाः पुष्पवर्षाणि सर्वतः ॥

---

(१) हेतुना ।

शङ्खदुन्दुभयो नेदुर्दिवि देवादिवादिताः ।
जगुर्गन्धर्वपतयो येषां तुम्बुरुरादितः ॥

तदा दिवि भुवि स्थितैर्विविधवाद्यगीतादिभिः
कृतस्तवतया चलन्मुदितगोपवृन्दैर्वृतः ।
दिविष्ठमहिलाजयिप्रकटगीतगोपीतति
स्फुरत्परमसम्मर्दं व्रजमगाद्व्रजेशात्मजः ॥

गर्त्तं प्रविष्टाः शकटादिदध्य-
क्षतान्तिमार्थप्रचिता(१) यथा ते ।
तथा निवासं पुनराप्तवन्तः
किञ्चिच्च नाज्ञासिषुरर्थनाशं ॥

गिरि-गर्त्तान्निष्क्रमणे यथोक्तं श्रीबादरायणिना ।
"गोप्यश्च सस्नेहमपूजयन्मुदा दध्यक्षताद्भि"रिति ॥

गोपराज ! तव सूनुरीदृशः
शैलमप्यधृत यः स्वकानवन् ।
यश्च शक्रमपि घातमन्तरा(२)-
प्युद्धुतं(३) व्यधित दूरदेशतः ॥

धृत्वा गिरिमसौ नैकधुरतामागतः परं ।
भवतां जगतां चागादपि सर्वधुरीणतां ॥

---

(१) युक्ताः ।　　(२) हननं विना ।
(३) उद्धतं परामूतं ।

तदेवं कथाप्रथनपूर्वकं पूर्ववन्निजनिजप्रयोजनाय कृतव्रजनायां जनतायामनुकृष्णं[१] रवेः समस्तमस्तं यावत् कृतविहारौ सूतकुमारौ पुनरपि रजनीसभायां सभाजितौ नन्दिताजितौ वभूवतुः । तत्र प्रथमतः परमश्रेयसीं तत्प्रेयसीं प्रति स्निग्धकण्ठ उवाच ॥

स्वल्पापि लीला भवदीयतां गता
विस्तारमायाति तथा वकी-रिपोः ।
राधे ! विवेक्तुं नहि शक्यते यथा
प्रथीयसी[२] का वत का तनीयसी[३] ॥

तामप्यस्माकं ग्रन्थलाघवाय सङ्कोचयतां कविषु लाघवमेव पर्य्यवस्यति । तथाप्यकुण्ठवुद्ध्या स्वयमेव सा वहुधा वुद्ध्यतामित्युक्त्वा भ्रातरमाह स्म ।—
आर्य्य ! कथकाचार्य्य ! भूयः श्रूयतां ॥

परं गिरिरेव सत्रं हरिणा न प्रकाशितं ।
किन्तु श्रीराधिकादीनामाननेन्दुरुचेरपि ॥
यदा तु मखसम्भारः कृष्णेन विपुलीकृतः ।
तदालङ्कारसम्भारस्ताभिरप्युररीकृतः ॥

---

(१) कृष्णस्य पश्चात् । (२) पृथुतमा ।
(३) सूक्ष्मतमा ।

यदा दीपालिरज्वालि शिखरं शिखरं प्रति ।
स चामूश्च मिथस्तर्हि व्यदृश्यन्तावृतस्थलात् ॥
यदा प्रवर्त्तितस्तस्मिन् वकहन्त्रा गिरेर्महः ।
प्रावर्त्ति च तदाताभिस्तादृग्दृक्षामहामहः ॥
यदा समुदिता जाता महिला भूमिभृन्मखे ।
तदा ता मुदिता जाता हरिदर्शननिश्चितेः ॥
कृष्णे संलापमाचेरुर्यदा विविधसुभ्रुवः ।
तदार्थबोधसदृशं[1] दृशं ताश्च न्ययूयुजन् ॥
यदाद्रिर्जनतादृष्टिं कृष्टवान् प्रकटीभवन् ।
आशाधाम ययुः स्वैरं तदासामक्षिपक्षिणः ॥
यदा गोपूजनं कर्त्तुमारब्धं सर्वकैस्तदा ।
ताभिः प्रतिस्वं धेन्वर्चा प्रश्नास्पदमकारि सः ॥
यदा गो-पालपूजाया महो[2]व्यक्तमभूद्बहिः ।
तदा मनोमह(३)स्तासां वक्रे वक्रे व्यलोक्यत ॥
गोपपृष्टं यदा दृष्टं कन्या(४)पाणयङ्कितं पुरु[5] ।
तदासां पाणयः कृष्णं स्प्रष्टुमुत्कण्ठितां गताः ॥
होम-काले यदा कृष्णः प्राविशद्ब्रह्म-संसदि ।
हुतं वत तदा ताभिर्मानसं विरहानले ॥

---

(१) दिशो विशेषणं ।　　(२) तेजः ।　　(३) उत्सवः ।
(४) गोरोचना ।　　(५) प्रचुर ।

गिरेः परिक्रमे यर्हि व्यवधानं ययौ हरिः ।
तदा तां व्यवधामेव गिरीयन्ति स्म[1] तत्प्रियाः ॥
यष्टिं यर्ह्युत्क्षिपत् गृह्णन् कृष्णाश्वक्राम तर्हि तां ।
दृष्ट्वा दूरादङ्गनास्तैर्भानुजा(२)भानुजायत[3] ॥
यदा यदा मिथो रूपं द्रष्टुमासीदसम्भवः ।
गवानुद्रवलक्ष्येण स तासां मध्यमद्रवत् ॥
धेन्वनुद्रवणव्याजात्स्पृशन् वव्राज यां हरिः ।
चिल्लीवल्लीताड्यमानस्तया स स्तम्भमीयिवान् ॥
यदा राधामनुस्पृष्टिं दृष्टिरस्य गता तदा ।
अयं सर्वं विसस्मार किन्तु सस्मार तन्मुखं ॥
यदा रात्रावभूद्वासः सर्वेषामेकधामनि[4] ।
तच्छब्दमात्रतत्पर्य्याः श्रुतितां[5] तर्हि ता ययुः ॥
कृष्णायास्तु यदा कृष्णश्चिक्रीड स्रोतसि स्वयं ।
तदामोदिन्यमूस्तस्मिन्नक्रीडन्नतिदूरतः ॥
भगिनीनां गृहे यर्हि भोक्तुमभ्याययौ हरिः ।
सख्यलक्ष्या(६)त्तदा तासां सर्वास्तत्राप्यमूर्गताः ॥
यथापूर्वं यदा सर्वे प्रतिस्वं वासमव्रजन् ।
तदाकारा गृहे हन्त ! मेनिरे ताः पुनर्गतिं ॥

---

(१) गिरिमिवाचरन्ति स्म । (२) राधा ।
(३) यमुनायते स्म । (४) एकगृहे ।
(५) वेदतां कर्णतां वा । (६) मिषात् ।

यदा सम्वर्त्तमेघास्ते प्रावर्त्तन्त तदा तु ताः ।
अकामयन्त कृष्णाय स्वस्य च्छत्रायमाणतां ॥
यदा सुहृद्भिश्छत्राद्यैर्लालितं तमलोकयन् ।
स्वाङ्गभेत्रीममूर्वृष्टिं तदासौधीममंसत ॥
विच्छिन्नपूखरासारच्छत्रे तत्रेह दीव्यति ।
कृष्णे स्वैरं गताद्दृष्टिं मेनिरे वृष्टिमामृतीं ॥
अभिकृष्णं यथा सर्वः शैलगर्त्तेऽन्ववर्त्तत ।
गृहप्राप्तनिधीनां वा[1] तदा तासां स्थितिर्मता ॥
निमेषरहितास्तदा प्रतिनिमेषमासेदिरे
हरेर्मुख-सुधारसं रसनया दृगाकारया ।
अहारजनि[2] सप्तकं व्रजचकोरनेत्राः कियत्
कुतः सुकृतमुद्गतं न इति विस्मितीरव्रजन् ॥
राधा तत्र सुखातिसीमदृशया युक्तापि मुक्तावली
स्वच्छे नेत्रजले तदीक्षणभवे कोष्णत्वमित्थं गता[3]।
हा ! धिग्दैव ! सदैव नास्ति तव कोऽप्युच्चैर्विवेको यतः
कान्तस्यानिशदर्शितस्य च चिराददृिः करे दृश्यते ॥
यदा गिरिवरं दधे मुरहरस्तदा लोचनं
निजार्थितविनाकृतामपि दिशं स निन्ये मुहुः ।

---

(१) इवार्थे ।　　(२) अहोरात्र ।　　(३) प्राप्ता ।

इदं भजति राधिका दिगवलोकनाय च्छलं
कृते तदवलोकनं कृतमिदं कृती स्यादिति ॥

कदाचिदिह चेत्प्रथां भजति राधिकाया मुखं
तदाफलमयं मम श्रमतमः प्रसज्जेदिति ॥
अयं गिरिवरं दधे करुणयेति कारुण्यवान्
समस्तमभि[1] तर्क्यते तदिह चित्तधैर्यं भज ।
निरन्तरितलोचनप्रभववृष्टिमग्नो[2]भव-
द्वपुश्च तव रक्षितेन्यकृत भावमेषा तदा ।
गिरेर्गर्त्तान्निःसज्जितुमुदित[3]माकर्ण्य दयिता
मुरारेस्तं प्राणप्रतिममपहायापि निरयुः ।
स एवं तं भारं वत विसृजतीत्थं स तु परं
तदासां विश्लिष्टेर्भरमसहमानो निरगमत् ॥

किं गिरेर्विवरतो वहिर्गतः
किं स वा स्वहृदयादिति स्फुटं ।
नातिवोढुमशकन् हरिप्रिया-
स्तर्हि यर्हि निरगादसौ प्रियः ॥
यद्दृगम्बु ववृषुः स्तनभूभृ-
द्भूरिभूमिवलयेषु मृगाक्ष्यः ।

---

(१) लक्षीकृत्य । (२) "भीर्ता" इति वा पाठः ।
(३) "निष्क्रामणवचन" मिति वा पाठः ।

उद्धृतप्रथित[1] भूभृति तस्मिं-
स्तत्किमप्यकथयन्निज-हार्द्दम् ॥

अथ समापनमाह ।—

राधे ! परितो यासी, ङ्गोवर्द्धनधारिणस्तदा करुणा।
सास्त्रान्नयनप्रान्ता,त्प्रान्ता[2]त्त्वय्येव सा सुविश्रान्ता ॥

तदेतदपि कथनशेषं समाप्य पूर्व्ववदेव सूत-सुतयोर्गतयोः सर्वेऽपि यथास्वं प्रस्थिताः ॥

इति श्रीगोपालचम्पूमनु गोत्रभि[3]ङ्गोवर्द्धन-
गोत्र[4]मानवर्द्धनमष्टादशं पूरणम् ॥

---

(१) महत् । (२) प्रान्तं प्राप्य । (३) गोत्रभित्पक्षे छेदनं ।
(४) गोत्रं कुले धने नाम्नि गोत्रस्तु धरणीधरे । गोत्रा भूमिगवां वृन्दे इत्यजयः ।

# ऊनविंशं पूरणम् ।

अथ प्रभाते सभातेजसा विभातयोः सूतजातयोर्मधुकण्ठनामा कथयामास ॥

तदेवं तादृक्सम्पदि प्रतिपदि गोवर्द्धनसमर्द्धनं(१) सिद्धं ॥

तृतीयामारभ्य नवम्यधिकं रम्यं तद्धारणमद्धा(२) वधार्य्यतां ॥

अथ तादृशदृशा रम्यायां दशम्यां श्रीव्रजराजसमाजमनु निमन्त्रणया प्रामाणिकमाणिक्यव्रजजनाः सुखयोजनं भोजनं संयुज्य मुखवासनं(३) मुखवासनमुपयुज्य वार्त्तां वर्त्तयामासुः ॥

यत्र क्षितिधरधारणनिध्याना(४)न्निर्धारयन्तः पूतनावधादिकमेतदवधिकमसम्भावितं सम्भावितं चाविशेषतया तत्कर्मविशेषतया गणयामासुः ॥

---

(१) अर्चनं । (२) साक्षात् ।
(३) आमोदी मुखवासनः । (४) दर्शनात् ।

पुनश्चैवमाहुः ।—

वाववहिः[१] पर्वतं वालः सासहिर्नतु चाचलिः ।
वहिरेव यथा वृष्टिः पापतिर्न तदन्तरे ॥

तदेवं परमप्रभावता तावद्विस्मयजननी जननीति-मतिक्रामति । तस्यामपि सत्यामत्यासक्तिमयस्नेह-चयस्वभावता मादृशामन्यादृशामपि तस्मिन्निश्चिता विस्मितिमातनोति । तस्य च मादृक्षु विसदृक्षु च यासौ लक्ष्यते सा तु परमविलक्षणतयातीव वैलक्ष्यं[२] लक्षयति ॥

किञ्च ॥

प्रत्येकं स्वे तनूजे प्रवलयति जनः स्वैरमेवानुरागं
सर्वेषां नस्त्वदीये स कथमथकथं शक्यतेनापि मोक्तुं ।
सर्वेष्वप्यस्य सो[३]ऽयं स्फुरति सहभव[४]-
स्त्वादृगेव व्रजेश !
स्मारं स्मारं तदेतन्न कथमपि मना-
गुक्तियुक्ता व्रजामः ॥

तदेवं प्रवणतया श्रवणतः श्रीमान्नन्दः प्रजाता-नन्दः प्रणयमयतया सम्मतसमयतया च गर्ग-

(१) अतिशयेन उवाह एवमुत्तरत्र ।
(२) जन्मना सह ।　　(३) गच्छतु ।

सिद्धान्तवर्गमेवानुगद्य निरवद्य सौहृद्यतस्तेषाम-मन्देहोद्भवसन्देहोद्यमं संयमनमनैषीत् ॥

"श्रूयतां मे वचो गोपा ! व्येतु शङ्का च वोऽर्भके" इत्यादिना।

अन्ते चोक्तवान् ।—

यदवधि मामुद्दिश्य, प्रास्थितगर्गस्तदवधि जानामि।
शिशुरयमद्भुतचर्य्यां, वलयति नारायणी यया शक्त्या॥

तदेवं श्रीमन्नन्दराजतस्तदवकलनानन्दभाजस्तं यदा समस्तजनाः समस्तजनानन्दनतन्नन्दन-वार्त्तया नन्दयन्तः सन्ति स्म। तदा निजवृन्दै-र्वृन्दारकैश्च वन्द्यमानतया नन्द्यमानतया च वृन्दा-वनचन्द्रः सहसा सहरामः समाजगाम। समाज-श्चायं सममेव तं परिवेष इव परितश्छादयामास चकोरवार[1] इव तत्कान्तिमास्वादयामास ॥

कुमुदसमुदय इव तदभिमुखतया स्वं प्रसादया-मास ॥

चन्द्रकान्तसन्ध इव निजमङ्गमङ्गमार्द्रतामासाद-यामास ॥

वारां निधिरिव चात्मानमुल्लोलतया सम्पादयामास।

---

(१) वारः समूहः।

तदेवं स्थिते सर्वस्मिन्नपि स्वस्थतया चावस्थिते क्षणकतिपये च प्रस्थिते सर्व एव ते सामाजिकाः प्रतिस्वममन्देन्दिरादात्ममन्दिरादानीतं पीतासितासित प्रशस्तवस्त्रसङ्करं[1] सदलङ्करणादिकं तञ्च तद्भ्रातरं तत्पितरञ्च पृथक् पृथगलङ्काराय स्वीकारयाञ्चक्रुः। यथैवं वहिरेभिराचरितं तथान्तःपुरे सराममातृकां गिरिधरस्य मातरमभिचैषां महिलाभिर्विरचित-मिति निर्विशेषमेव तदुभयत्र पर्वासीत् ।

अथ सुरपुरे सुरेशस्य वृत्तमनुवृत्त्यताम् ।

इतो गत्वा दैन्यं मत्वा स्खलदोजा विडौजाः क्षयं[2] गच्छन्नप्यसौ क्षय[3]मृच्छन्निव स्थितवान्न तु शची-मचीकमत ॥

न च निर्जर-सदसि निर्जगाम ।

तदेवं वर्ण्यमानमवकर्ण्य वाचस्पतिर्वास्तोष्पति-मनुरहसं भर्त्सयामास । यतः स खलु विबुधाना-मपि विबुधः[4] ॥

भर्त्सनं यथा ।—

---

(१) युक्तं ।　　(२) निलयं ।
(३) पक्ष्माणं ।　　(४) पण्डितः ।

यस्मादभजासि विष्णुं, जिष्णो !
तस्मादनेधितासे[१]त्वं ।
न विना चन्द्रं विन्दति, जीवनवृत्तिं
वनस्पतिःकोऽपि ॥

अथवा सहस्रदृशमप्यहो ! भवादृशमभिभूय भृशी-भवन्ती तादृशी मदान्धता नासदृशी ।

यतः सुरेशो[२]ऽसि ।

किन्त्वमृतपता[३] तव कथं मृतपता[४] जाता । यतस्त्यक्तप्राणप्रायकायप्रणायतः प्रमादः सोऽयमा-पतितः ॥

तथा च स्मरन्ति ।—

अपस्नात[५] इव स्नातोऽप्यलमस्पृश्य एव सः ।
मृतकं वपुरासज्जन् यः सद्यो भयदायकः ॥

किञ्च ।

वृषाह्वय ! तव चेदमत्यविचारत एव ।

तथाहि ।

यदालम्बाज्जनः प्राणं यस्माद्रक्षितुमिच्छति ।
वैपरीत्यं तयोः कुर्वन्ननुन्मत्तो न कथ्यते ॥

(१) तिङ्श्चाक्षेपेनलोपात् । (२) पक्षे सुरा ।
(३) अमृतं पाति । (४) चाण्डालता ।
(५) अपस्नातो मृतस्नातः ।

इन्द्र उवाच ।—

अविचारितमेवाचरितमिदं मया । भवद्भिस्तु साम्प्रतं साम्प्रत(१) मुपदिश्यतां ॥

वाचस्पतिरुवाच ।—

शतमन्यो ! तादृशविसदृशतायां शतधृति(२) रेव धृतिमासादयिता । तस्मात्तदनुसरणमेव शरणं ॥

तदेवं जम्भभेदी सखेदी भवन्नवधाय धातारमेव गत्वा सङ्कोचममत्वा स्वापराधमवधारयामास ।

स तूवाच ।—

हन्त ! विबुधाधिपेनाप्यबुधेन भवता भवतादुः-साधवाधः सोऽयं महानेवापराधः कृतः ।

यं खलु साधवः सकृदप्यवधारयन्तस्त्वामवधीर-यन्तः सावधानः श्रोत्रमपि दधते । तथापि सृष्टि-विधित्सादुर्विधिना विधिना मया तदिदमुपदिश्यते। पूर्वं तन्महिमजिज्ञासया धाष्टर्यमनुष्ठितमस्तीति तन्मात्रकिल्विषविषमविषमविषहमानेन मया दुर्मानमयागाधभवदपराध-क्षमापणाय क्षमता न लभ्यते(३) ॥

---

(१) योग्यं । (२) ब्रह्मा ।

(३) लक्ष्यत इति वा पाठः ।

किन्तु ।—

"गवां कण्डूयनं कुर्य्याद्गोग्रासं गोप्रदक्षिणां ।
नित्यं गोषु प्रसन्नासु गोपालोऽपि प्रसीदती"ति गौतमादि सम्मत्या गोजातिषु प्रीतिरीतिपरीतस्य तस्य क्षमापणाय कातरस्त्वं तज्जातिमातरं सुरभीमेव भजस्व न चेदसुरतः सुरभी[१]सङ्गतिर्भविष्यति ।

अथ सुनासीरस्त्वसुरभीतः सुरभीलोकमासाद्य सद्यस्तदवद्य[२]चरितप्रचाराद्विमनसमपि तां मातुः स्वसारं मुहुः प्रसाद्य वेधसः सविधमेवानिनाय । ततश्च विधातेदमभिदधे ।

अयि! सुरभि! सुरपति-भीसान्त्वनार्थमसुरान्तकस्यान्तिकं गच्छ । गत्वा च त्वमस्य नूनमेवमेव लब्धदुश्च्यवन[३]नाम्नः परकिल्विषकीर्त्तनभिया किल कविपरिषदुपेक्षणीयतन्नामधेयस्य कृष्णातश्च्यवनं विच्यावय । तच्च स्वसम्पदुपकण्ठकुण्ठीकृतापर-वैकुण्ठलोकगोलोकमहेन्द्रता मर्त्यलोकेऽप्यस्य व्यक्तीभवतादिति । तदभिषेकसेवातिरेकतः सम्भवितेति ॥

---

(१) सुराणां भी । (२) गर्ह्यं ।
(३) दुश्च्यवते इति दुश्च्यवनः ।

अथ हरिवासरदिवसे सुरभिः सुरराजमनु[१]-वृन्दावनभूपरि भुवर्लोकभागमागम्य तदवसरं प्रतीक्षामास ॥

तत्र च दूरतः सुरपतिं सुरभिरभिहितवती ।

नासौ मेघः पश्य गोवर्द्धनाद्रि-
र्नायं नव्यस्तस्य[२]भागः स कृष्णः ।
नेयं विद्युल्लोलपीतांशुकश्री-
र्नैतन्मन्द्रं गर्जितं नर्मवार्त्ता ॥

पश्य पश्य सम्यगुत्पतिष्णुः पतगजिष्णुर्विष्णु-वाहनः सोऽयमस्मदप्युपरिभागमारूढः सन् विद्युद्गूढवारिदद्वार इव यस्य छाया[३]मिच्छन् किल यत्र छायां प्रसारयति ।

सोऽयं तु ।—

श्रीगोवर्द्धनशैलरत्नदृशदि[४] प्रक्षिप्तसुभ्रास्तरे
वामोरुस्थितकञ्जचारुचरणो सव्यं करं दक्षिणे ।
न्यस्यन्नन्य[५]मपूर्वरूपमुरलीनाले मनागत्र नः[६]
स्मेरेणाक्षितटेन सन्दधदहो मन्ये कृपां वर्षति ॥

---

(१) इन्द्रेण सह । (२) मेघस्य ।
(३) वारिदपक्षे छायां कान्ति गरुडपक्षे त्वाश्रयं ।
(४) रत्नशिलायां । (५) करं । (६) य इति क्वपाठः ।

अत्र चायमस्मन्मिलनमङ्गीकुर्वन्नेव सङ्गिनः प्रसङ्गान्तराय प्रस्थापितवान्। बलदेवश्च नाद्य वनमागतवानिति चास्थीयते[1]। तस्मादतिस्वच्छतरचेतसममुं भवांस्तावन्निभृततया[2] निभृतमव्यग्रतया चाभ्यग्रं[3] गत्वा दण्डवन्नत्वा प्रसादयितुमर्हति।

यतः।—

स्वयमपराध्यति कुरुते, प्रभुमभि तन्मार्जने सहायं यः।
तस्येदं परशक्ते, दर्शनमथ नैव दैन्यस्य॥
यस्मिन् स्वयमपराधी, नमति रहस्तं सहायनिर्विण्णः।
कृपयति सा जनमात्रं, दैन्यावस्था महाजनं किमुत॥

ततश्च पश्चादेव विशेषनिवेदनायाहमायास्यामि।

अथ पाकशासनस्तदनुशासनमुररीकृत्य प्रच्छन्नतया मुरलीधरसमीपमागत्य प्रत्यग्रं[4] चरणखरदण्डयो[5]र्दण्डवत्पपात।

इन्द्रो ननाम च यथाह्नि नखा मुरारे-
रग्र्याममुष्य मुकुटे मणितामवापुः।

---

(१) प्रतीयते। (२) विनीततया।
(३) उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययं।
(४) अग्रं। (५) चरणपद्मयोः।

चक्रन्द चाथ स यथाम्बक[१]कैरवाम्बु
माध्वीकविद्रवविधौ विधुतामगच्छन् ॥

अथ क्रन्दति संक्रन्दने पङ्कजलोचनः सङ्कोचतः किरीटाग्रमग्रहस्तेन साग्रहमुदस्तमाचरन्नुवाच । भगवन्नेवमयुक्तं माकार्षीरार्षीणां वाणीनां त्वमेक एवातिरेकतः परायणमसि । वज्रपाणिस्तु मूर्ध्नि प्रसज्जिताञ्जलिपाणितया सलज्जं स्वयं स्ववज्रहत इव मौनमेवाससज्ज ।

यतः ॥

परस्य कायं बध्नाति तेजसा वचसा मनः ।
शक्तः[२] शक्तश्च[३] सोऽयं यस्तस्य भक्तः कथं न कः ॥

तदेवं तस्य तेजसा कृपया च सुपर्वाधिपस्य विविधा गतिर्जाता ॥

यथा ।—

अन्यत्र चन्द्रति[४]हरिः शक्रे तर्हि स्म सूर्य्यति ।
शक्रोऽपि सूर्य्यत्यन्यस्मिन् खद्योतति हरौ स्म सः ॥
यदा मौनं ससज्जासौ तदा मूक इवाभवत् ।
यदा तु स्तोतुमारब्धस्तदागाद्वावदूकताम् ॥

---

(१) अम्बकं नेत्रं ।　　(२) समर्थः ।
(३) शक्तः प्रियम्वदे ।　　(४) चन्द्र इवाचरति ।

यथामुं स्तुतवानिन्द्रस्तथा वक्तुं न शक्यते ।
श्रीव्रजेन्द्र ! यतः सोऽयं त्वत्तः सङ्कुचति स्फुटम् ॥

अवमानमनालोच्य कवमानः[१] स पुनरेवमञ्जसा तदुपसञ्जहार ॥

"मयेदं भगवन् ! गोष्ठनाशायासारवायुभिः ।
चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना" ॥ इति ॥

अयञ्च प्रहस्य प्रोवाच ।—

मया तेऽकारि मघवन् ! मखभङ्गोऽनुगृह्णता ।
यन्मत्पित्रादिसच्छ्रेष्ठान्नातिक्रामेर्मम[२]स्मरन् ॥
सुरश्चेद्विषयाभोगगर्वाद्रोचेत[३]वासव ! ।
तदा विप्रश्च शोभेत शौष्कल[४]म्मन्यतामदात्[५] ॥
अहमुन्मूलयिष्यामि शक्र ! त्वद्वैरिपन्नगान् ।
कथं म(६)न्मन्यसे भीतिं नीतिमेव प्रवर्त्तय ॥

अथ दूरतः सुरभिरभीतामिव त[७]मभीक्ष्य[८] हुङ्कारतः स्वसन्तानसन्तान[९] माकार्य्य कार्य्यविदुषी[१०] सतृष्णनयना कृष्णामभिजगाम ॥

---

(१) कवृवर्णने । (२) मां । (३) शोभेत ।
(४) आमिषाशी तु शौष्कलः । विप्र इतिशेषः ।
(५) शौष्कलत्वाभिमानत इति वा पाठः ।
(६) मत्तः । (७) इन्द्रं । (८) दृष्ट्वा ।
(९) विस्तारं । (१०) पण्डिता ।

कृष्णाश्च स्वजातिरीतिकावस्थितित एवावनमन्तीमिव तामिमां सहसा सहसामसम्भ्रममञ्जलिसञ्जितकरः सञ्जगाद ।

माता कथं समायाता ? ।

ततश्चाशिषः सिषासती[1]ताः सम्भ्रमादनुद्राव्य सुरभ्युवाच ।—

एते मदन्वया धन्या गोत्वं त्वां सेवितुं गताः ।
अहं तु नेदृक् पुण्या यद्गोचरत्वं च नागता ॥

अथवा ॥

दैत्यघाती भवान्नित्यं सर्वलोकैकपालकः ।
वयं च लोकमध्ये स्मस्त्वन्नाथाः स्वत एव तत् ॥

ततस्तदिदं किञ्चित्प्रार्थये ॥

गोसूक्तं भाषते गावः पदं[2] सर्वसुपर्वणां ।
तद्ब्रह्मादौ सुपर्वत्वमवन् विन्द[3]गवेन्द्रतां ॥
तदेवं कियदैश्वर्य्यं यद्ब्रह्मावधिपालनं ।
वैकुण्ठकुण्ठताकारि यस्य गोलोकवैभवं ॥
सर्वस्य पालकात् क्वापि खण्डपालनमिष्यते ।
जगत्प्रकाशकाद्भानोर्निजधामप्रकाशवत् ॥

---

(१) षनुदाने । दातुमिच्छति ।
(२) आस्पदं ।　　(३) प्राप्नुहि ।

नास्माकं केवलमिदं मतं किन्तु विधेरपि ।
यद्भवेदस्य चेन्द्रस्य दुर्बुद्धेः शुद्धिभावनं ॥
त्वत्कृपायाः परं स्थानं वयमित्येष वासवः ।
आशिश्रिये यदस्मांस्तद्द्वारमात्राय कल्पते ॥
यस्मान्मृग्यति तामेव मद्विधाद्भवतः कृपाम् ।
कूपादिव रसान्तः[1]-स्थां तर्षी[2] घनरसस्थितिं ॥
देवाधिदेव ! पश्येन्द्रः पश्यंस्तव पदद्वयम् ।
सूचयत्यभिषेकं ते नेत्रधारासहस्रतः ॥

अथ तत्र सचित[3]सङ्कोचनेन विलोचनेन गोचरितानुमतेः श्रीगोकुलपतेः प्रसादमासादयन्ती[4] सुरर्षिसुरमातृसुरपतिसुरततिभिरुपसुरप्रभृतिभिश्च साकं सुरभीसरभसमसुरमर्द्दनं पुरस्कर्त्तुं पुरःसरतामवाप ॥

ते हि द्रुहिणेन[5] तावनुसमनुज्ञाता द्रुतमेव विद्रुत्य निह्नुत्य च राजीवलोचनं राजीयन्तः[6] परितः स्थिता बभूवुः । यत्र रुद्रद्रुहिणावपि तेषामग्रेसरतामवापतुः ॥

---

(१) पृथ्वचन्तः । (२) तृष्णायुक्तः ।
(३) सच समवाये । मिलित । (४) प्राप्नुवन्ती ।
(५) ब्रह्मणा । (६) राजानमिच्छन्तः ।

ततश्च सुरभिरभिहितवती ।

श्रीमद्व्रजमहेन्द्रकुलचन्द्र ! भवद्भवदीयचरणानामनुचरणातस्तावदत्रत्यानि तीर्थानि स्वार्थकान्येव जातानि । धेनवश्च युष्मद्विहितदुग्धधयनाद्धन्यतामधुः ॥

ततश्च स्वर्गस्थिततीर्थवरस्य गङ्गानिर्झरस्य तथात्मीयस्याप्यूधोभरस्य त्वदाराधनया व्यर्थतावाधाय पयः समाहर्त्तुं भवन्तं विधि[१]मर्थयामहे[२] ॥

अथवा यथा दिश्यते तथावश्यं प्रथयामः ॥

कृष्णः सस्मितमुवाच ।—यथेष्टमनुष्ठीयताम् ।

अथाभ्रवाहण[३]भ्रूभ्रमणातः ससम्भ्रममभ्रमातङ्गः[४] स्वः[५] सङ्गतसङ्गातः समुद्दण्डितसुण्डादण्डेनाम्भःसम्भृतान्निधिकुम्भान् निर्विलम्बमेव मुहुरपि लम्भयामास । सुरभिरपि सुरभिपयसासुरपति-सरसीमुपगिरं[६] विभराञ्चकार ॥

ततश्च ॥

वाद्यस्पृग्गीतनृत्यैरुपसुर[७]सदसां[८]

स्तोत्रमन्त्रैर्ऋषीणां

(१) आज्ञां । (२) द्विकर्मकोऽयं । (३) इन्द्र ।
(४) ऐरावतः । (५) स्वर्ग । (६) गिरेःसमीपे ।
(७) गन्धर्वादि । (८) सदः सभा ।

हर्षान्दोलातिकोलाहलजयनिनदै-
र्ब्रह्मरुद्रादिकानां ।
उत्सर्पद्भक्तिरिन्द्रः सह हरिदधिपै[१]-
स्तद्गणैश्चाभ्यषिञ्चत्
कृष्णां येनैव सर्वेऽप्यहह !
सुखसुधासिक्तरूपा वभूवुः ॥

अदितिर्मातृकृत्यानि स्वसृकृत्यानि पार्वती ।
गरुत्मान् भृत्यकृत्यानि चाहृत्यात्र मुदं ययौ ॥

तदेवं यदा निर्णिक्ततया देवगणास्तमासिक्त, तदा ।—

कान्तिर्याता दिगन्तं परिमलवलना-
प्यभ्रमीद्भूमिगोलं
मङ्गल्यध्वानधारादिगनुगकरिणां
प्राविशत्कर्ण-गर्त्तं ।
इत्थं सर्व्वत्र हर्षप्रसरभरवरप्रावृषा-प्राणिजातेः
शाते जातेऽपि कंसः सरट[२] पटलराट्
चेष्टया वेष्टयते स्म ॥

तदेवं स व्रजेन्द्रनन्दनः सर्व्वदिग्गतान् यदा दिग्ये[३] तदा तु ।—

(१) दिक्पालैः ।
(२) कृकलास । (३) देङ्पालने दयते स्म ।

यावद्विष्णुपदं विभाति परम-

व्योमादि[1]तावत्य[2] पि

श्रीगोलोकपदं प्रशस्तिमयते लक्ष्मीपरार्द्धास्पदं ।

तत्रापीन्द्रतया विभासि नितरां गोविन्दनाम्ना यथा

तेन[3] त्वं जगदङ्ग[4] तद्वदवता-

दित्यूचिरे ते समम् ॥

आकाशकुसुमैः सार्द्धमाकाशवचनं तदा ।

गोविन्द इति यद्वित्तं[5] ततः किमिव साद्भुतम् ॥

इन्द्रश्छत्रं विवस्वान् वहुविधमधुरा-

लङ्कृतीनां कदम्वं

ब्रह्मा लीलाब्जमीशः स्वरचितमुरलीं

माधवाय व्यतानीत् ।

अन्यश्च स्व-स्वमर्थं त्रिदशपति-तति-

र्यत्पुनः सर्व्वमेषां

पूर्व्वं चापूर्व्वमासीदभवदथ तद-

ङ्गावृतीज्यासु[6] पूज्यं ॥

---

(१) वहुव्रीहिः । (२) विष्णुपदे ।

(३) नाम्ना । (४) पुनः ।

(५) ख्यातं । वित्तविज्ञातविश्रुताः । (६) पूजासु ।

तदेवं स्थिते ।

राजद्राजासनमुपरिगच्छत्रचित्रं सुरम्य
भ्राम्यद्वालव्यजनयुगलं प्रस्फुरद्दिव्यवेशं ।
कृष्णं दृष्ट्वा सुरपरिवृतं स्तब्धनेत्राणि दूरा-
च्चित्राणीव क्षण-कतिपयं तत्र मित्राणि तस्थुः ॥

ततश्च कृपया स्नापितनयनारविन्देन गोविन्देन कृतमानन्दनमनुफुल्लतया(१) पूर्ववतः पुरुषु(२) महेन्द्रादिदेवगुरुषु छत्रादिकं तरुषु सन्धाय निज-हितनिबन्धाय तत्पदद्वन्द्वमेव वन्दं वन्दममन्द-वाष्पनिस्पन्दं निजामवज्ञास्पदतां विज्ञाप्य तम-नुज्ञाप्य दूरं विन्दमानेषु लब्धविगतानिन्दमानेषु सखि-सन्दोहः शन्दोह(३)मनुविन्दन् मन्दं मन्दमा-ससाद ॥

आसद्य च ।—

अद्राक्षीदहसीदबोचदलगीदाजिघ्रदप्यच्युतं
छत्राद्यं च चचाय(४)मित्रपटली पप्रच्छ भूयश्च तं ।
सोऽपि व्याजमिहाचचार बहुधा सा (५)न प्रतीयाय तं
किन्तु प्रीतिभरं मिथः प्रबलयन्
हासस्तदावर्द्धत ॥

---

(१) हेतुना । (२) प्रचुरेषु ।
(३) मङ्गलपूरणं । (४) ददर्श । (५) मित्रपटली ।

ततश्च ।—

इह स्थितैः पृथगपरैस्तु भूषणै
र्विभुः परस्परमपि तानभूषयत् ।
अमी तदा सकनकदण्डचामरैः
परिच्छदैः स्वयमपि तं सिषेविरे ॥

तस्मिन्नथ राजन्यति[१] सखिवृन्दे ।—

दृष्ट्वा देवततिर्विदूरतरतस्तं[२] सेव्यमानं सुहृ-
द्वर्गैस्त[३]द्गुणरूपशीलतुलितैः स्वप्रत्त[४]तत्ताच्छ्रिया ।
तान्[५] स्वज्ञानविलाससञ्चितफलं
मेने तथा तामपि[६]
स्वप्रेमार्जितकन्मसम्पदममंस्तात्यन्तमात्यन्ततः ॥

तदेव मारब्धेऽपि गमने स्तब्धे सति सतीपति[७] प्रभृतयस्तस्मिन्नभिषेकप्रभवं प्रभावान्तरं पश्यन्तः परस्परं साद्भुतमिदमुद्भावयामासुः ॥

यथा ।—

कृष्णार्च्चारचि दैवतैः सुखमयुर्लोकाश्च गावस्तथा
पृथ्वीं दुग्धभृतां व्यधुर्वहुविधान्नद्यो रसान् सुस्रुवुः ।

---

(१) राजनीवाचरति ।  (२) कृष्णं ।
(३) तत् तस्य कृष्णस्य ।  (४) दत्त ।
(५) सर्व्वान् ।  (६) स्वदत्तश्रियमपि ।  (७) रुद्र ।

वृत्ता मध्वधुरुद्दधुश्च गिरयो दत्तानि निर्वैरतां
जीवाः प्रापुरहो ! महत्यपचितिः[१] पुष्यत्यकर्त्तॄनपि ॥

किञ्च ॥

इन्द्रः क्रूरचरित्रमाचरितवान् यत्तेन चिन्तागमे
चित्तं कम्पमियर्त्ति चेद्गिरि[२]कथञ्चित्तेन
तद्[३]व्यज्यतां ।
कृष्णास्तत्र च यां कृपां[४]वत तया चित्तं द्रवीभूतता-
मायाति स्वयमेव चेद्गिरि[५]कथं
चित्तेन सा[६] व्यज्यतां ॥

अथ चरमाचलं चुचुम्बिषति भानुबिम्बे विलम्बः सम्वृत्त इत्यविलम्बमेव गो-निकुरम्बसम्वलनया सखिभिः समं व्रजं व्रजन् व्रजराजजन्मा-सन्मानयद्भिर्निर्जरव्रजैरुपर्य्यतुलपुष्पवर्षैरुपचर्य्य व्रजद्भिरनुवव्रजे ॥

यथा ।—

दिव्यातपत्रसितचामरशस्तहस्तैः
संसेव्यमानसविधः सखिभिः प्रगीतः ।

---

(१) महाजने पूजा। (२) वचसि। (३) क्रूरचरित्रं।
(४) आचरितवानित्यनेन सम्बन्धः।
(५) वचसि। (६) कृपा।

पुष्पव्रजेन विविधैर्विबुधैश्च सिक्तः
श्रीपृक्तकान्तिरजितः सदनं ससाद ॥
निशमितमकरोन्निशामितं[१] च
द्युजनि-विभूषणभूषणाङ्कमेतं ।
व्रजनृपतिमुखव्रजः समन्ता-
दजनि च सात्त्विकराजिराजिमूर्त्तिः ॥

यत्तु निशम्य रम्यचेतारामः सानुक्रोशं क्रोशमात्रमुपव्रज्य निजावरजविजयं पश्यन् सुखवश्यमनास्तमालिङ्ग्य मूर्द्धानमाशिंघ्य[२] क्षणकतिपयमुपविश्य वचनचातुरीभिस्तत्प्रसङ्गं सङ्गतवान् ॥

ततश्च निजानुजेन पूर्वमेव स्वकृते निर्दिश्य रक्षितैर्दिव्येष्वपि दिव्यतालक्षितैरनल्पैराकल्पैः[३]: सोऽयमग्रजः स्वकरेण विराजयामासे ॥

ततश्च ।—

स्वानुजं गुरुजनानामग्रतस्तादृशतया प्रयातुं सङ्कोचमरोचयन् सोऽयमग्रजः शनैः शनैरनैषीत् ॥

अथ तस्मिन् दिने तु गोसन्दोहदोहनिबन्धनं तदनुबन्धिजनान् सन्धाय स्वयन्तु तत्तदुदन्तानुसन्धा-

---

(१) दृष्टं । (२) शिंघिआघ्राणे इतिधातुः ।
(३)भूषणैः ।

नाय धेनुसान्निधान एव सानन्दं नन्दराजः सन्निधाय वन्दमानं सरामसखिवृन्दं गोविन्दं पुरस्ताद्विधाय सममेव वन्धुभिः सममासनमासजन्नासामास ॥

तत्र चानन्तरमाचरिता गतिभिः सम्यगुरीकृतरामानुजानुमतिभिः सूनृतवादिभिः श्रीदामादिभिः ससमाजाय व्रजराजाय दिव्यच्छत्राद्यर्चामत्रादिषु समर्पितेषु सन्तर्पितेषु च सर्वेषु तदच्छन्नमेव स पप्रच्छ ।

कथ्यतां तथ्यं किमिदं वृत्तं वृत्तमिति ।

श्रीदामा प्राह ।—

वयमपि गोसङ्कलनाय कलितभूरिदूरतया चिरं विरम्य स्थिता न सम्यगवगम्यं त[१]दाचचार । किन्तु सामग्रीयमेव निजसम्यग्रीतिमावेदयतीति ।

ततो नम्रतां विन्दति श्रीगोविन्दे परस्परमवधाय; साधुश्रीदामन् ! साध्विदमुक्तमित्यभिधाय सर्व एवानर्वाचीनगोपाश्चित्रप्रतिकृतय इव द्वित्रक्षणां निर्निमेषतामवापुः ।

मधुमङ्गलस्तूच्चैः सहासमाह स्म ॥

(१) वृत्तं ।

श्रीमन् ! व्रजराज ! श्रूयतां ।

गौरेका गिरमातनोदथ पुमानन्यः सहश्रेक्षणो
ऽनंसीत्[१] कोऽपि करीसितः स्वरुदका-
न्याहृत्य शश्वद्ददौ ।
कौचित् पञ्चचतुर्मुखाञ्चलितौ स्तोत्रप्रथाञ्चक्रतु-
स्ते चान्ये च महामहेन सिषिचुर्गोपेश ! पुत्रं तव ॥

अथ स्वयं चात्र सर्वतश्चित्रं माङ्गलिकं कर्म-निर्मातुं युक्तमिति विचार्य्य चित्रायमाणे कृष्णप्राणे ससमाजे व्रजराजे विष्णुपदचरिष्णुवाणीयमाविर्बभूव ॥

यथाभ्यषिञ्चाम वयं व्रजेशितः
संसज्य[२] गोविन्दतया सुतं तव ।
समं समस्तैः कृतमङ्गलं तथा
तं यौवराज्येन जवाद्विराजय ॥

अथ तदेतदमृतवर्षत इव हर्षधर्षिता व्रजवर्षीयांसः[३] परस्परं विचार्य्य कार्य्यमाणमङ्गल्यतौर्य्यत्रिक-पौर्व्वापर्य्यतः स्वस्तिवाचनादिकमाचार्य्य-द्वारा समाचर्य्य प्रतिस्वमपि विविधविधानदानपूर्व्वकं पर्व्व पूरयित्वा युवराजतया तं सभाजयामासुः ॥

---

(१) ननाम ।　　(२) मिलित्वा ।　　(३) वृद्धाः ।

आगम्याथ शतं शतं व्रजमहेन्द्राणीप्रधानाङ्गनाः
प्रत्येकं मणिदीपसन्ततिकरा मङ्गल्यकोलाहलाः।
नीराज्याभिसभाज्य रत्ननिकरैर्निर्मञ्छ्य गेहं प्रति
स्नेहं मूर्त्तमिवातियत्नवलिता गोविन्दमानिन्यिरे ॥
ईदृशस्ते व्रजाधीश ! सुतः सूत[1]-सुखोत्सवः।
यो गवेन्द्रतया गां[2]च गां[3]च
गाश्च[4] सुखाकरोत्[5]॥
सुभगं भविष्णुजातं, जगदपि कृष्णाभिषेकतः
पश्चात्।
अन्धं भावुकमासी,द्भावुकशून्यं कुलन्तु दनुजानां ॥
तदेवं दिवाकथायां वृत्तायां नक्तमपि सा पूर्व-
वद्वृत्ता ॥

यथा मधुकण्ठ उवाच।—

भवेदनल्पं कुत्रापि स्वल्पं कुत्रापि पोषकं।
यथान्नव्यञ्जनं लोके यथा रसरसायनं ॥
तस्मात्संक्षिप्तमप्येतद्विस्तरवदेव मन्तव्यं।

तथा हि।—

तस्मिन् महसि नीरन्ध्रपुरन्ध्रीभिः सममासा[6]मपि

(१) जनित। (२) धेनुं। (३) पृथिवीं। (४) स्वर्गं च।
(५) श्रीभागवतस्थपद्येन। (६) व्रजसुन्दरीणां।

समागमनं वृत्तं यत्रोपकण्ठगतानामप्यमूषां वस्त्रावगुण्ठितानि नेत्राण्यतीवोत्कण्ठितानि जातानि ।

तस्मिंश्च तस्य(१) विवाहसमतावहे महामहे मनसीदमसीममाभिर्विभावितं ॥

केयं जगत्यहह ! राजति गोपकन्या
धन्या यया तु करपीडनमस्य गन्ता ।
हा ! योग्यतामपि विधाय विधिः समस्ता-
मस्तं निनाय वत ! नस्तममुं धिगस्तु ॥

भवतु तदपि किन्त्विदमतीवान्याय्यं ॥

कुलीना रूपिण्यः परमगुणशीलाः प्रणयिता-
भृदुत्कण्ठाकण्ठागततुलितजीवा वत वयं ।
न तावद्वंशी तत्तदनुगुणतामञ्चति जडा
तथाप्येषा हा ! धिक्कलित(२)हरिसङ्गा न तु वयं ॥

केव सेयं वराकी केवलमुखचूषणसुखा ॥

यतः ॥

आलिङ्ग्य कण्ठमुरसि प्रतिपद्य कान्तिं
माले ! कटं प्रकटमेव सदा दधासि ।
न श्रीहरिर्न भवती न तु वा जनोऽयं
सङ्कोचलेशमयते त्वमतोऽसि धन्या ॥

---

(१) कृष्णस्य । (२) प्राप्त ।

तदेवं मनसि वदन्तीषु ।

पूर्णां दृष्टिं विधिवशतया काचिदाश्रीन्मुरारे-
रर्द्धं काचिद्व्रजजनगता काचिदस्यास्त्रिभागम् ।
काचित्किञ्चिन्न च तदखिलं तुल्यतामेव दध्रे
सर्वासां यन्मनसि चक्लृपे हन्त तापाय तत्तत् ॥

अथ तस्यामेव निशायां चन्द्रशालिकायां कृत-शयनेन कञ्जनयनेन तासामपराह्णेतनापाङ्गमाङ्गशर-निकरसङ्गलब्धभङ्गे हृदि समुत्थितव्यथतया जात-निशीथजागरतायामविरतायां तासु निजानिर्वृतिं विवृतीकर्त्तुं(१) तामिव च तर्त्तुं पुरहरकृतवितरनव-मुरलीकलः खुरलीभिः(२) कलयामासे ॥

तदा केदाररागस्तु प्राप केदारतां निशि ।
गोपीभिर्वासना-वीजमुप्तं यत्राङ्कुरायितम् ॥

तत्र च ॥

तूकारः खलु माथुरेषु परितस्त्वङ्कारभाषा मता
सोऽयं वैणवगानतः प्रतिपदं प्रायः परामृश्यते ।

---

(१) व्यक्तीकर्त्तुं ।
(२) अभ्यासः खुरली योग्येति त्रिकाण्डशेषः

प्रत्येकं युगपत्प्रियां निशमयन् कृष्णो यदा तं जगौ
मत्वा स्वंप्रति त(१)त्प्रतिस्व(२)मपि ताः
सर्वा विमूर्च्छां ययुः ॥

किञ्च ॥

आनुषङ्गिकतयापि सगाना-
दास्वधाद्यदविदुस्तदमूश्च ।
उद्दिदेश पुरु यां वत सा तु
स्वं च(३) सम्प्रति विवेद न राधा ॥

तदेवमल्पसमयमयमपि कल्पचयमयमिव कल्पयित्वा कथकः समापयन् कथनं श्लथयामास ॥

सोऽयं ते रमणो राधे! लब्धः कृच्छ्रेण यस्त्वया ।
त्वद्विना भवतः सौख्यं यश्च कुत्रापि नाप्तवान् ॥

तदेवं संक्षेपेणापि कथिते प्रथिते मुहूर्त्त-द्वयं मूर्त्तवदेव ताश्च ते च तूष्णीम्भावमासेदुः ॥

पुनश्च ॥

यथायथमावासं समासेदुः ॥

इति श्रीगोपालचम्पूमनुजम्भभेदिसुरेन्द्रतास्तम्भन-नगेन्द्रधरगवेन्द्रतालम्भनमूनविंशं पूरणम् ॥

---

(१) तूकारगानं । (२) प्रत्येकं ।
(३) चकाराद्यद्भाप्तदपि ।

# विंशं पूरणम् ।

अथ प्रभातकथायां स्निग्धकण्ठ उवाच ॥

तदेवमेकादशी-कथा कथिता ॥

ताञ्च तिथिमशिथिलतया प्रथितमनोरथां प्रतीत्य नित्यवदेव व्रजदेवः सम्यगुल्लासमुपोवास ॥

किन्तु पारणा-कारणमवशीर्णा(१)मेव द्वादशीमवशिष्टामवधाय बह्ववशिष्टायामपि रजन्यां विशिष्टविधिवलतः स्नानादिकलनाय कालिन्दीं प्रविष्टवान् ॥

प्रविश्य च यथायथमन्त्रस्नुः सस्नौ । स्नात्वा चान्तरेव वारिणः श्रीनारायणमेकायनतया(२) सागमनिष्ठमुपतिष्ठमानः(३) सुष्ठु ध्यातुमारब्धवान् ॥

तत्र चायं जन्मत एव त(४)न्मयतया सन्मतिरासीत् ।

तादृशनन्दनलाभानन्दतस्तु तत्राप्यतिशयं विन्दति स्म ॥

---

(१) अल्पां ।

(२) एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ।

(३) पूजयन् । (४) नारायण ।

ततश्च तद्विधध्यानावधानतः समाधिमनवधिमापन्नवन्तं तं सर्वतः प्रचरन्तः प्रचेतसश्चराः सहसा समासद्य सद्यः स्वीयस्वामि-निवासं प्रत्येव प्रवासयामासुः ॥

एष निवासविशेषश्च तस्य जलस्तम्भविद्यालम्भितारम्भवान् ॥

स्वत एव भास्वान् भास्वत्कन्या-हृदस्थविवरस्याधःप्रदेशे सदेश एव रसा[१]विवरदेशे निवेशमासीदिति ॥

नच कृष्णप्रभवता[२]विदितमहितानुभावस्य तस्य तथानयनं नयवतां[३] न सम्भावनीयम् ॥

स[४] हि निरन्तरमिदं चिन्तयति ।

यदस्य मद्भाग्यजाततः सञ्जातस्य सुतस्य यथोत्तरप्रथमानमान[५]तया परमप्रेमहर्षदमुत्कर्षं शश्वदेव पश्यामेति ॥

ततस्त[६]देवासकृदेव योग[७]मापयितुं तल्लीलायामुपयोगमायातया योगमायाया एव समया[८]स्त एते पूतनागमनादिवत् ।

---

(१) पृथ्वी । (२) पितृता । जन्मस्थानताभुवः प्रभव इतिवत् ।
(३) नीतिवतां । (४) व्रजेशः । (५) परिमान ।
(६) चिन्तितं । (७) संयोगं ।
(८) आचाराः । समयाः शपथाचारकालसिद्धान्तसम्विदः ।

अथ तथावेशिनमेव व्रजेशानं यदा पाशिनः[१] पुरतस्तदादेशाभिनिविशिनस्ते सञ्चारितवन्तस्तदा त[२]दाकारत एव तं निर्द्धारयन् ॥

पुनश्च ॥

नारायणधारणावन्तमवधारयन्नयमतिदरादराभ्यां कृतदिव्यवस्त्रादिप्रशस्तितया वरशय्यामेवाधिशाययामास ॥

स्वयं च पितृहरणासहिष्णुकृष्णागमनमनन्तरमेव मन्वानः सुदूरदृष्टिहेतुं पूर्द्वारमधितिष्ठन्नूर्द्ध्वमेव तिष्ठति स्म ॥

अथात्रेत्थं वृत्तमनुवृत्त्यतां ॥

यदा खलु श्रीकृष्णस्य तातः कृष्णा-पाथसि[३] तन्नाथवत्तामात्रधनानां जनानामदृश्यतामवाप । तदा दिशि दिशि कान्दिशीका[४]स्ते जलमवगाह्य तदप्राप्तितस्तद्बाह्यं प्रदेशमागताः ॥

आगम्य च विक्रोशन्त[५] एव व्रजमभिगच्छन्तः कृष्णरामाग्रण्यस्तान् व्रजग्रामण्यः कलितासुखान् स्वाभिमुखानेव लेभिरे ॥

---

(१) वरुणस्य । (२) व्रजेशस्य । (३) यमुनाजले । (४) भयद्रुताः । (५) क्रुश आह्वाने रोदने च ।

तत्र च वृत्ते श्रुतमात्रे परमदुःखपात्रे सर्व्वतः कृतमनोविरामौ कृष्ण-रामौ विक्रम्य सर्व्वमति-क्रम्य परमोत्कण्ठितमत्या झटितिगत्या पृथिवीमपि घट्टयन्तौ तमेव घट्टमाटतुः ॥

तत्र च कृष्णः समग्रव्यग्रमग्रजमालिङ्गन् रिङ्ग-दस्त्रमेवेदमश्रावयत् ॥

भ्रातर्मातरमकातर[1]तयाभिरक्ष्य सर्व्व एव रक्ष-णीयाः यावदहं पितरमानीय सुखवितरं करवाणि मातर्यत्रागतायां तु न कथञ्चिदपि पर्य्याप्तिं[2] पर्य्यापयितुं शक्ष्यामीति ॥

तदेवं कृतसम्वादमात्रः पितरमानेतुं निर्मितयात्रः संहनन[3] वृंहितासिंहलज्जः संहितपरिकरसज्जः पातालविवरद्वारपात्रं[4] सरित्पात्रमनु[5] ममज्ज ॥

अनन्तरञ्च ।—

व्रजेश्वरीप्रधानाः सर्व एव तत्र चरणमात्रमाद-धाना राममेकमवदधानाः कृष्णमनुसन्दधानाः पप्रच्छुः । क्व नु यातस्त्वदनुजात इति ॥

---

(१) अधीरे कातरः ।　(२) पर्य्याप्तिः स्यात् परित्राणं ।
(३) शरीर ।　(४) स्थानं ।
(५) पारावारमध्यं ।

स तु तां व्रजेन्द्रसुदृशं(१) विसदृशदृशं परामृशन्नुवाच ।—

मातर्न कातरतामायाहि । स तु सम्प्रत्येव जनकमादाय स्वजन-सुखं जनयिष्यति ॥

अथ स्व-मातरमुवाच ।—

हन्त ! त्वमपि कथं मां हन्तासि ? मयि विश्वासतः श्वासमात्रावशिष्टामेतां पाहि ॥

ततश्च सर्व एवानर्वाञ्चः कालीयदमनप्रक्रमतस्तद्वचनमक्लमप्रममेव(२) मन्वानास्तां विश्रमयामासुः ॥

किन्तु ॥

किं स्वप्नः किमु जागरः किमथवा
मूर्च्छा किमुन्मादिता
वेत्येतत्परिचेतुमापुरसकृद्बुद्धिं न तस्मिन् जनाः ।
किन्तूत्कण्ठितताविगुण्ठितहृदां तेषामभून्मद्गिरियं
हाहा ! श्रीव्रजराज ! हा ! वत ! हहा !
श्रीकृष्ण ! कुत्रासि ! भोः ! ॥
जनीचतुष्टयधृताप्लुष्टचित्ता(३) व्रजेश्वरी ।
श्वासास्तितातर्कपात्रं हाहा ! मात्रं जगाद सा ॥

---

(१) पत्नीं ।

(२) अक्लमा प्रमा यत्र । प्रमेत्यनेन यथार्थानुभव उच्यते ।

(३) प्लुष्टप्रुष्टाग्निता दग्धे ।

अथ तुङ्गाचलजल(१)चितसुरङ्गा(२) प्रवेशतः प्रचेतः-सदनगतस्य तस्य व्रजलक्ष्मीदयितस्य चरितमनुपचरित(३)मवधार्य्यताम् ॥

यदा तु ते यादसाम्पतिभवनं(४) जवतः श्रीव्रज-राजमभाजयं(५)स्तदा स(६)च तत्र सच ते(७) स्म ॥

यथा च ।—

स्निग्धश्यामलरुच्यपि क्रुदरुणाद्योतादहश्यं वपु-र्ध्वान्तध्वंस्यपि तीव्रताशवलनाद्दृग्राधनं दृग्द्वयं ।
कौमल्यादिगुणापि रोषरभसादुग्रा तथा तस्य गीः कल्पान्ताब्दतडिद्ध्वनि-भ्रमधरान् विस्मापयन्ते(८) स्म तान् ॥

ततश्च विलम्बलमानः स खलु जम्बुकः(९) क्व नु वर्त्तत इति जल्पकल्पनया तस्मिन्नवज्ञावर्द्धनस्य

(१) अचलं यज्जलं ।
(२) तिर्य्यग्विवरं । स्त्रीलिङ्गे तिर्य्यग्भूविवरवाचित्वेन धृतोऽयं शब्दो लिङ्गादिसंग्रहे ।
(३) अगौणं । (४) वरुणभवनं ।
(५) प्रापयन् । (६) कृष्णः ।
(७) सचसमवाये ।
(८) वपुर्दृग्द्वयगिरः प्रयोजककर्त्र्यः विस्मयपूर्व्वकं भीषयन्ते स्म ।
(९) जम्बुकौ क्रोष्टुवरुणौ ।

श्रीमन्नन्दकुलसमर्द्धनस्य भृशमर्द्दिधिषति[१] दृशमर्द्दिदिषति[२] च तेजसि वहलकोलाहलप्रवाहमवलम्बमानः स्वगलवलयितचेलतया क्ष्मामेलितभालः सर्वजलपालः शङ्कितकालिः कलिताञ्जलिर्विदूरभूगत एवाखण्डदण्डवत् प्रणनाम ॥

तस्य चेदृशात्[३] खर्वगर्वतावलोकनात् सर्व एव तन्नाथास्तथा प्रथाश्चक्रुः ॥

ततश्च तरुणारुणकमललोचनः सर्वरोचनः करुणया पुरःसरतामासद्य सद्यस्तं वरुणं पप्रच्छ ॥

ते तु कुत्र परमधर्माचरणा मदीयपितृचरणा इति ॥

वरुणस्तु गलितधैर्य्यसञ्जनः[४] साञ्जलितया सान्त्वं[५] वचो व्यानञ्ज ॥

पुरुषोत्तम ! यत्र खलु तत्र भवांस्तत्र परमसावसमः परममहान् सम्भवति । नान्यत्र ॥

किन्तु तेषामेषां किङ्कराणां किं करवाणि शासनमात्मनश्चेति तदनुशासनमाशासे[६] ।

कृष्णः ! सशान्तस्वान्तमाह स्म ।

---

(१) वर्द्धितुमिच्छति । (२) तार्डयितुमिच्छति ।
(३) दण्डवत्प्रणामात् । (४) कवचं ।
(५) अत्यर्थमधुरं सान्त्वं । (६) वाञ्छामि ।

वराकाणामेषां दण्डः केवलं दण्डयितुः पौरुषं खण्डयति । अविलम्बस्पर्शमेव तु दर्शयतात्तात-चरणसरोजातं ॥

अथ यथादिशन्ति दीर्ण्य(१)दीनादीनता(२)स्तत्र भवन्त इति । वारिराजः श्रीव्रजराजविराजमान-सदनपर्य्यन्तं पन्थानं तच्चरणमूलतः परमदुकूलानु-कूलं चकार ॥

तत्र निनाय च गोपकुलनायककुलनायकं ॥

उवाच च ।—

"गोविन्द! नीयतामेष पिता ते पितृवत्सल"! । इति ।

इदमहं जानाम्येव तत्कथमन्यथाचरामि कथं वा परादस्य पराभवः स्यादिति भावः ॥

तदेवं वरुणस्य पाशाद्यद्भयपात्रायमाणत्वं तस्मादपि स्वप्रभावेण मोचकस्य तस्य ॥

उपलभ्य च सौरभ्यमनभ्यस्य सुतस्य सः ॥

अभ्याययौ वहिर्वृत्तिं सभ्यानां विस्मयं वहन् ॥

उन्मीलयामास विलोचने स
श्रीमन्मुखं तस्य च सन्ददर्श ।

---

(१) खण्डित ।　　(२) आदीनवास्त्रवौ क्लेशे

सन्दर्शनादेव बभूव सास्रः
स्वप्नायितं चास्रवृते[1] रमंस्त ॥

कृष्णस्तु तच्चरणयुगल तलस्पर्शपूर्वकं तमालिङ्ग-न्नुन्नमितवान् ॥

तात! सोऽहमागतोऽस्मीत्यधिगतवांश्च ॥

तत्र द्वयोरपि समग्रव्यग्रतामागच्छतोरथ हरिस्तु परितः परीतपरपरीवारपरिहासशङ्कया सङ्कुचित-चित्तस्तत्र चात्मनि च वाष्पादिविकारव्यतिरिक्ता-कारतामासादयितुं व्याजहार ॥

तात! परितः समवधीयतां।

अथ व्रज-सूत्रामा[2]परितः समीक्ष्य च कुत्रावा-मागताविति सवैलक्ष्यं पुत्राननमीक्षते स्म ॥

स चोवाच ॥

तात! मा तन्यतामन्यथाभावः। यथा व्रजनमेव स्वव्रजं व्रजिष्यावः।

ततः पुरतश्चरणकमलमवधीयमान[3]माधीयतां॥

तत्र[4] तु तथाकुर्वति व्याकुलताकुलकाकुपूर्वं वरुण उवाच।—

(१) हेतोः। (२) इन्द्रः। (३) स पश्चान्नं। (४) आनन्दे

कृपालुस्त्वमहो ! कृष्ण ! द्वयोरेकतरं कुरु ।
दण्डं वाथ प्रसादं वा नापराधं तु शेषय ॥

तदेवं कृतयात्रतया स्थितयोरपि क्षणमात्रमवस्थितयोस्तयोर्महोपचारांश्चरणाग्रतः समर्पितानाचरन् प्रणाममाचचार ॥

चचाल च स ताभ्यां सह यावद्विवराभ्यासं ॥

आगम्य च तद(१)भ्यासं तद्वर्त्मभागस्थितनीरं विभागमागमय्य ताभ्यां सह व्रजं प्रति प्रहित(२)जनप्रहितमहितालङ्कृतिमुखपरिवर्ह(३) सम्भृतिमुहूर्त्तसुखपूर्त्तितः कृतकृत्यं मन्यतया नृत्यन्निव निववृते। तदा तीरस्थाना व्रजजनि(४)जनाः प्राणरहितप्रभास्तद्वर्त्मेक्षास्थितशिथिलजीवस्थितिदशाः पिता पुत्रौ तौ निर्व्यथन(५)सदनान्निर्व्यथतया गतौ दृष्ट्वा भूयोप्यहह ! सुखतन्द्रीमभिययुः। केवलस्तु वलदेवस्तावभिजगाम, प्रणनाम च व्रजराजं ॥

दत्तसुसमाजे व्रजराजे तु तमुपगुह्य विस्मृतवाह्यतया किञ्चन चासमूह्य(६)क्षणकतिपयं विरमति ॥

---

(१) विवर। (२) प्रकृष्टहित।
(३) परिच्छदे नृपार्हे परिवर्हः। (४) जन्म।
(५) छिद्र। (६) अवितर्क्य।

पुनश्च रामे पुनः पुनर्नमति रामानुजः सहसा[१]
सहसा परिक्रम्य परमरम्यनिजस्पर्शामृतस्पर्शनतः[२]
प्रथमं मातरमेव कातरः पुनर्जीवलोकमालोकया-
मास[३] ॥

क्रमशस्त्वन्यमन्यमपि ॥

समागते पितरि हरेरुभावमू
मिलन्त्यपि व्रजजनतामिलन्मिथः ।
तदा न सा परिबुबुधे परम्परं
परन्तु तावखिलमवैत् परापरं[४] ॥

हुम्वारावैर्जनकलकलैः स्वर्गतः पुष्पपातै-
र्वाद्यैर्नृत्यैः स्तव रवशतैरुत्थितेऽन्योन्यमर्द्दे ।
श्रीमान्रामः पशुसमुदयं वारयल्लोकवृन्दं
श्लक्ष्णालापैरपि समुचितस्थाननिष्ठं चकार ॥

तत्र च ।—

स्वयं दत्वा शुभ्रासनमिह महागोपपतये
यथायोग्यं चान्यान् विदधदुपविष्टानथ वलः ।
उपान्तप्रक्रान्तिस्थिति[५]मनुजमापृच्छ्य परितः
कथामेतां शृण्वन् पशुप-कुलमश्रावयदपि ॥

(१) वलेन । (२) दानतः । (३) दर्शयामास ।
(४) तदा सा जनता परमन्यं न बुबुधे परन्तु किन्तु परापरं निखिलं तौ पितापुत्रौ एवावगतवती । पितापुत्रौ श्रीनन्दकृष्णौ ।
(५) उपान्ते प्रक्रान्ता स्थितिर्येन ।

तत्राथ दत्तस्वातन्त्र्यतया विप्रानामन्त्र्यपरमान्नादिभिः सन्तर्प्य तदभीप्सितानि वीप्सया समर्प्य द्वादश्यतिक्रमभिया तत्प्रवणधिया व्रतमिदमच्छिद्रप्रथ(१)मस्त्विति प्रार्थ्य गीर्भिस्तदाशीर्भि(२)स्तत्र सामर्थ्यं समर्थ्य कृतार्थम्मन्यास्ते धन्या बहुलकुतूहलतः सर्वं एव व्रजमाव्रजन्ति स्म ॥

यत्र व्रजाध्यक्षः स्वयमध्वानं(३) व्रजन्मध्येसुतद्वय(४)मभ्राजिष्ट ॥

अथ कथकस्तामेतां कथां समापयन् ॥

श्रीव्रजेश्वरं प्रत्याह ।—

पाशिपाशेन सम्बन्धस्त्वय्यासीन्नेति का कथा ।
तद्भयेनापि नासीत्त्वत्पुत्रस्यास्य प्रभावतः ॥
तदुक्तं वरुणेनास्य करुणां वीर्यभीरुणा ।
गोविन्द! नीयतामेष पिता ते पितृवत्सल! ॥ इति ॥

अथ दिनान्तरे कृष्णमन्तरेण सभान्तरे निविष्टा गोपकुलशिष्टा व्रजपतिं प्रति तत्रत्यं चित्रं पप्रच्छुः ॥

सच लोकपालस्य तस्य तं महोदयमैहिकलोका

(१) ख्यातिः ।　　(२) सैवाशीर्यासु ।

(३) अध्वानमाक्रम्य व्रजन्नित्यर्थः गत्यर्थकर्मणि चेष्टायामनध्वनीत्यस्यप्रत्युदाहरणमीदृशमेव ।

(४) अव्ययीभावः । सुतद्वयस्य मध्ये ।

नामालोकपथातीतमस्तोकं श्लोकयामास ॥

तत्र च मित्राणि ! चित्रं श्रूयतामिति तद्वासिनां कृष्णो भक्तिमतिरिक्तां वर्णयामास ॥

तद्वर्णनानन्तरन्तु निजनिजमन्तरमनुविस्मितानां तस्मिन्नीश्वरतालम्भकसम्भावनया सर्वेषामेव सेयं भावना जाता ।

यदि चानश्वर[1]प्रतिपत्ति वशादयमीश्वरस्तथाप्यौत्पत्तिकस्नेहसम्पत्तिविषयाश्रयतामयनिरामयसुखदायीति सदा मुख्यव्यतीतसर्वतर्षं समुत्कर्षं द्रष्टुं सुष्ठुमुहुरुल्लसत्येव नश्चेतोवृत्तिः। तच्च किमनेन निर्वाधं साधयिष्यत इति ॥

एष चाशेषाणामेषां स्वापरपर्य्याय ज्ञातितया स्वाभेदेन विज्ञायमानानामेतदभिज्ञाय कारुण्यजातयन्त्रणया शीघ्रतापरतन्त्रतया चिन्तितवान् ॥

अहो ! एते च ते ते मम परमस्वजना मयि पारमैश्वर्य्यं पर्य्यालोच्य सर्वतोऽप्यसम्भवं मद्वैभवमनुभवितुमिच्छन्ति ॥

किन्तु नानुभवन्ति यत एव लोकपालवैभवमात्रं चमत्कारपात्रं कुर्व्वन्ति ॥

---

(१) दृढविचार।

तादृशं तद्वैभवं पुनरेषां स्वगतिमयमेव त[१]त्तु तन्मय[२]मपि यन्नानुभवन्ति ।

तत् खल्वविद्याकालकर्म्मनिर्म्मितोच्चावचगतिमति-जगति विरचितमवतारमनुसर्वसाधारणम्मन्यतया बुद्धिवाधात एव साचैषां ॥

"इति नन्दादयो गोपाः कृष्णरामकथां मुदा ।
कुर्वन्तो रममाणाश्च नाविन्दन् भववेदनां" ॥इति॥

"कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामाः" ॥ इति ॥

"कृष्णे कमलपत्राक्षे सन्न्यस्ताखिलराधसः"॥इति॥

तथा च ।—

"एषां घोषनिवासिनामुतभवान् किन्देवरातेति न-
श्चेतोविश्वफलात्फलं त्वदपरं कुत्राप्ययन्मुह्यति ।
सद्वेषादिव पूतनापि सकुला त्वामेव देवापिता
यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्तत्कृते" ॥

इत्यादिभिः प्रमितसर्वोपरिमद्वशीकारिप्रेममहिम्नां यद्यपि नाविद्यादिमयी[३] ॥

तथाप्येषामन्यसाधारणां मन्यतामसहमानोऽहं मदीयप्रेमसन्दोहमयमोहाभिलापलालनाजालतः

---

(१) वैभवं । (२) स्वगतिमयं । (३) वाधा ।

सञ्जायमानामप्येतां[(१)] तन्मयी[(२)]मेव मन्ये वस्तु-तस्तु तादृशप्रेमवर्णनानादिकल्पत एवान्येभ्यः प्रत्तानवकाशामुत्तमवर्णतां गतानामप्येषां मय्यर्पित-सर्वार्थानां गतिरेव ममगतिस्तदनुगतमेव च मम परमं वैभवं न पुनरतःपरमपि परं सम्भवति ॥

तदेवं जलावितुर्वैभवादपि पितुर्मम यश्चमत्कारः स तु मां दुःखाकरोति । तस्मादेतेषां यथा मयि प्रेमावेशस्तथा नैतेषु ममेति तदनुसन्धानवता मया तदेतदेषामेव वैभवमेतेषामेव शुभानुध्यान-मययोगमायानुभावतः साम्प्रतमेनाननुभावया-नी[(३)]ति ॥

तदेतद्विचिन्तनानन्तरं दिनान्तरे पुनरादिवराह-पुराणवाचकया च कविप्रद्वारापुरद्वारा[(४)] स्थानी-स्थितिकविचित्रपित्राद्याभीरवीरपरिषदं प्रति कार्त्ति-कवर्त्तिपूर्णिमास्नानमक्रूराभीष्टप्रदे ब्रह्महूदे तूर्णमेव पूर्णतत्फलतां साधयतीत्यवधारयन् सारतया धार-यंस्तत्प्रातः सर्वांस्तान् दायादादीनादाय सत्रा[(५)] तत्रागतवान् ॥

---

(१) बुद्धिवाधां । (२) अविद्यादिमयी ।
(३) दर्शयानि । (४) तत्पुरुषः । (५) सह अर्थात्तैः ।

आगत्य च सर्व्वेण सह तत्र निमज्य तमुत्सृज्य तीरमासज्य प्रकृतितः परतया सच्चिदानन्दघनं परमस्वरूपरूपरसगन्धस्पर्शशब्दतयात्मारामाणामप्यलभ्य घनं गोपानां स्वनिकेतमेतं गोलोकमावरकशक्तिमपाकृत्य व्यक्तीकृतवान् ॥

तिरस्कारिणीं निराकृत्य विचित्रं दिव्यचित्रमिव यं खल्यस्य निराकृतिपरब्रह्मणः स्वलोकतया ब्रह्मणो लोक इत्याचक्षते ॥

यत्र किल स्वेषामेव मध्यमध्यासितं निजकुलतिलककृष्णाकारतया परिचितं कृतजन्मादिगोकुललीलास्तुतिश्रुतिसाक्षिकतयातिनिश्चितं तमेतं(१) सलोकमालोकयन् व्रजलोकः सर्वशोकं व्यतीत्य विस्मयानन्दसन्दोहतः प्रतिक्षणमेव सुखसंरोहमवाप ॥

तदेवं व्यज्यरज्यन्मनसस्तान् व्रजलोकान् गोलोकतः सदैतेयारिदैतेयपीडनादिक्रीडां पूरयितुं पुनर्व्यवधापितवांश्च ॥

---

(१) श्रीकृष्णं

अथ कथकः समापनमाह ।—

ईदृग्व्रजेश ! पुत्रस्ते जितलोकेशलोककं ।
यस्त्वाञ्च तव लोकञ्च(१) लोकमेत(२)मलोकयत् ॥
अधिगोलोके गोपाः, स्वयमधिगोपेषु गोलोकः(३) ।
इति कलयन्(४)वनमाली,यस्तं(५) व्यानञ्ज(६)तं नौमि ॥

तदेवं प्रातः कथायां प्रयातायां विभावरीकथा विभाति स्म ॥

यथा ।—स्निग्धकण्ड उवाच ॥

यदा यातः पित्रा सह वरुणलोकं हरिरसौ ।
तदा राधादीनां स्थितिरिह मृषा का प्रथयिता ।
जडानां जाड्यं स्यादसुखसुखवुद्धिस्तु सुधियां
न शून्यस्य प्राप्तिं भजति परितः कापि च दशा ॥
यदा यासीत्कृष्णः किल वरुणलोकं पितृकृते ।
तदा श्रीराधायाः श्वसितममुना सार्द्धमगमत् ।
यदा यासीत्तस्मादयमथ तदा तत्र सहसा
समागादित्येषा परमिहकवीनां सुकविता ॥

---

(१) लोकस्तुभुवनेजने । (२) गोलोकं ।
(३) गोलोकस्वामिन इत्यर्थः । (४) दर्शयन् ।
(५) गोलोक ।
(६) स्वर्गादूर्द्धमित्यादि ब्रह्माण्डस्योर्द्धतो व्यक्तवान् ।

किञ्च ॥

आयाते तु व्रजपति-सुते पाशिलोकात्तदा का-
प्येका राधामनु तमनु च स्निग्धभावा विदग्धा ।
औत्सुक्यं तद्‌हृदयमनु निशि श्रावयन्ती द्विनिष्ठं
चेतोवृत्तेर्मुखमिव तयोरञ्जसा जायते स्म ॥

तत्र राधानिष्ठं तद्यथा ।—

यदि मां नयसि विधात-
र्लोकान्तरमन्तरा हरेः सेवां ।
नय मां तन्मुख-सुषमा
ससुखां विरहान्न दुःखितां तस्य ॥

श्रीकृष्णनिष्ठं यथा ।—

अनीताः पितृचरणा,वारुणलोकात्प्रनन्दितालोकाः ।
हा ! राधा मम शोका,द्राधागीर्णा न जीर्णास्ति ॥

अत्र काका जीर्णास्त्येवेति सम्भाव्यते ॥

तदेवं सा तस्यां तस्मिन्नपि रहसी निवेद्य विशेषतः श्रीकृष्णमप्युपालब्धवती यथा ।—

रागं विनास्ति हृदयं, माधव ! तव रोचते च त(१)तुभ्यं ।
इति नियतं कनकाङ्गी,पाण्डु(२)र्भवति स्फुटं राधा ॥

---

(१) रागं विनाहृदयास्यास्तित्वं ।
(२) हरिणपाण्डादिशब्दा अपि श्वेत इति क्षीरस्वामी ।
सितपीतसमायुक्तः पांडुवर्णः प्रकीर्तित इत्यन्ये ।

ततश्च तस्य स्नेहवशाद्देहद्रवीभावं व्यवस्य पुनः प्रहस्य प्रोवाच ।—

भवान् गुणी माधव ! राधिकापि सा-
येनातिदूरादपि सुष्ठु कृष्यते ।
राधापि वाढं सरसा निजालया-
दप्येवमार्द्रीक्रियते यया भवान् ॥

मधुकण्ठ उवाच ।—

केयं वृद्धा ! यतस्तत्र नान्यजनस्य प्रवेशः सम्भवतीति पूर्वं निर्णीतं ॥

स्निग्धकण्ठः सहासमाह ।—

पौर्णमास्येव नानावेशेन तत्र प्रविशतीति ।

अथ तदारभ्य ।—

निशीथं[१]निशीथं तदासौ प्रकर्षा-
द्वगासीन्मुरल्येति तथ्यं मृषान ।
अमूस्तु प्रतीयुः स्फुटं मर्मभेदी
स वा कः शरैर्यश्छिनत्त्याशु सर्वं ॥

निवेशे सम्वेशे[२] मथि[३] पथि जने पाथसि वने
हरिर्यद्यप्युद्यन् प्रतिहरितमेव स्फुरितवान् ।

---

(१) अर्द्धरात्रनिशीथौ द्वौ । निशेतेऽस्मिन्निति थक् ।
(२) शयने । (३) मन्थाने ।

स्फुटं द्रष्टुं स्प्रष्टुं तदपि त[1]दलब्धेर्विधुर[2]जा-
दधे राधा बाधा-तदनधिगमादप्यधिकताम्[3] ॥

अथ समापनं ।—

ईदृशस्ते पतिः श्यामे ! यत्कान्तेस्त्वं परा गतिः ।
अत्राभिलाषः शोभा वा कान्तिरित्यधिगम्यतां ॥

इति श्रीगोपालचम्पूमनु वरुणलोकालोक-
चमत्कारतिरस्कारकगोलोकावलोकनं
नाम विंशं पूरणम् ॥

---

(१) कृष्णा ।	(२) विधुरं तु प्रविश्लेषे ।
(३) तदपि तथापि विश्लेषजं तस्यानधिगममप्यतिक्रम्य
राधाया बाधा अधिकतां दधे स्फुटं द्रष्टुं स्प्रष्टुं तदलब्धेः ।

# एकविंशं पूरणम् ।

तदानीं पुनः स्निग्धकण्ठ उवाच ।—

अथ गर्गकृतव्रजवर्गभेदमयसमयतः पश्चादुद्भूताः काश्चिदन्याश्च धन्याः प्रभूता[1] नानाकुलप्रसूता या व्रजकुमारिकाः स्वभावतः कृष्णभावानुसारिकास्तासां कौमारपारमारभ्य वासना वर्णनीया ॥

यथा ।—

कुमारीणां तासामघजिति पतिः स्यादिति रुचिर्यदा जाता तर्हि प्रतिपदमुपायाकृतधियां[2] ।
विधुश्रीणां शश्वद्धत वहुल[3]पक्ष[4]स्थितिजुषां तम[5]स्फूर्द्धिश्चस्मिन्नहह ! कृशता नित्यमजनि ॥

ततश्च तदर्थमनुरहसं नानादेवतामर्थयमानाव्यर्थमिव भ्रमन्ति स्म ॥

प्रार्थना चेयं ।—

व्रजेशित्रोः सद्मवासः परं श्वसुरतानयोः ।
कृष्ण एव पतिर्भूयान्मम जन्मनि जन्मनि ॥

(१) प्रचुराः । (२) अकुशलानां । कृशताविशेषणं ।
(३) श्लेषे कृष्णपक्ष । (४) पक्षः साध्यविरोधयोः ।
(५) पक्षे दुःखं ।

ततश्च कदाचित्कालिन्दीमनु परस्परं विन्दमाना बभूवुः ॥

युक्तश्च तत् । यतः ।—

एकं पद[१]मुद्दिश्यं, भवति समन्ताद्बहूनां चेत् ।
विविधभुवामपि तेषां, मिलनं घटते
यथा सतीर्थानां[२] ॥

मिलितानां तासां परस्परं हार्दमपि जातम् ।

तथाहि ।—

दिशि दिशि जाताः स्निग्धा, व्यतिमिलिताः
सुष्ठु बिभ्रति स्नेहं ।
मेदुरमुदिरसमूहे, मुहुरपि यस्मात्तथा दृष्टं ॥
तत्र जातेचासौहार्दे हार्दमपि परस्परं व्यक्तं ॥

यतः ।—

ह्नुत[३] मप्येकाश्रयिणां, हृदयं
व्यक्तिं[४] मिथो याति ।
तत्तु व्यतिमिलितं चे,द्वद तर्हि स्यात्पिधानं किं ? ॥

ततश्च परस्परं हृद्वाष्प[५]मुद्गीर्णवतीनां दृग्वाष्पमपि विकीर्णवतीनां तासां दशान्तदशावशाङ्गतया[६]

(१) स्थानं । (२) सतीर्थास्त्वेकगुरवः ।
(३) गोपितं । (४) प्रकटं । (५) वासनां ।
(६) दशानामन्तरूपा या दशा तस्या वशमङ्गं यासां तत्तया ।

# एकविंशं पूरणम् ।

तदानीं पुनः स्निग्धकण्ठ उवाच ।—

अथ गर्गकृतव्रजवर्गभेदमयसमयतः पश्चादुद्भूताः काश्चिदन्याश्च धन्याः प्रभूता(१) नानाकुलप्रसूता या व्रजकुमारिकाः स्वभावतः कृष्णभावानुसारिकास्तासां कौमारपारमारभ्य वासना वर्णनीया ॥

यथा ।—

कुमारीणां तासामघजिति पतिः स्यादिति रुचि-
र्यदा जाता तर्हि प्रतिपदमुपायाकृतधियां(२) ।
विधुश्रीणां शश्वद्वत वहुल(३)पक्ष(४)स्थितिजुषां
तम(५)स्फूर्द्विश्वस्मिन्नहह ! कृशता नित्यमजनि ॥

ततश्च तदर्थमनुरहसं नानादेवतामर्थयमानाव्यर्थमिव भ्रमन्ति स्म ॥

प्रार्थना चेयं ।—

व्रजेशित्रोः सद्मवासः परं श्वसुरतानयोः ।
कृष्ण एव पतिर्भूयान्मम जन्मनि जन्मनि ॥

(१) प्रचुराः । (२) अकुशलानां । कृशताविशेषणं ।
(३) श्लेषे कृष्णपक्ष । (४) पक्षः साध्यविरोधयोः ।
(५) पक्षे दुःखं ।

ततश्च कदाचित्कालिन्दीमनु परस्परं विन्दमाना बभूवुः ॥

युक्तञ्च तत् । यतः ।—

एकं पद(१)मुद्दिश्यं, भवति समन्ताद्बहूनां चेत् ।
विविधभुवामपि तेषां, मिलनं घटते
यथा सतीर्थानां(२) ॥

मिलितानां तासां परस्परं हार्दमपि जातम् ।

तथाहि ।—

दिशि दिशि जाताः स्निग्धा, व्यतिमिलिताः
सुष्ठु बिभ्रति स्नेहं ।
मेदुरमुदिरसमूहे, मुहुरपि यस्मात्तथा दृष्टं ॥
तत्र जातेचासौहार्दे हार्दमपि परस्परं व्यक्तं ॥

यतः ।—

गुप्त(३) मप्येकाश्रयिणां, हृदयं
व्यक्तिं(४) मिथो याति ।
तत्तु व्यतिमिलितं चे,द्वद तर्हि स्यात्पिधानं किं ? ॥

ततश्च परस्परं हृद्वाष्प(५)मुद्गीर्णवतीनां दृग्वाष्पमपि विकीर्णवतीनां तासां दशान्तदशावशाङ्गतया(६)

---

(१) स्थानं । (२) सतीर्थास्त्वेकगुरवः ।
(३) गोपितं । (४) प्रकटं । (५) वासनां ।
(६) दशानामन्तरूपा या दशा तस्या वशमङ्गं यासां तस्या ।

सम्भाव्यमानानामनुत्तमां सुखाकाङ्क्षिणीपारिकाङ्क्षिणी[१] वेषविशेषं विन्दमाना तत्र वृन्दा गता ॥

सा ह्येवं पुरा चिन्तितवती ।—

राग एव खल्वासां व्रजनागरस्य तस्य समागमाय वागगोचरशक्तिभागवसीयते[२] ॥

रागश्च लोकरीतिमयप्रणायत एव जागरूकतया गरीयान् वरीवर्त्तीति देवतान्तराराधनमेव साधयितव्यं नतु तदाराधनमिति ॥

अथागम्य च तत्कृताभिवादनस्वकृताभिवदन[३]-विधौ लब्धविधौ साभिदधाति स्म ॥

अहमत्रैव वने वसन्ती भवतीनां भाववतीनामवस्थाः पश्यन्ती दयाविदीर्णहृदया समायातास्मि । तदियं मम सिद्धा विद्या स्वकर्णानुविद्धा विधीयतां ॥

नातिप्रयासभाविता च भवतीनां भविता । किन्तु माससमात्रमत्र श्रमाभास ॥

सा खलु मन्त्रमयी योगमाया मया दयावती साधितास्तीति ॥

---

(१) तपस्विनी ।
(२) निश्चीयते । (३) आशीर्वाद ।

तदेवं तासां कर्णाविवरमनु मन्त्र-वर्णान् निधिवन्निधाय तद्विधिमपि सविधि[1]मभिधाय मुदान्तर्हितवती[2] सान्तर्हितवती[3]। ततश्च तास्तदुपदेशलग्नाः परमसुखमग्ना वभूबुः ॥

यतः ।-

नित्यं तावदनल्परागमहिमा सर्वं सहायीयति[4]
प्राप्नोत्येष तु योग्यकल्पमथचेद्वृत्ते सदुल्लासितां ।
तस्मिंस्ताद्दृगभूद्गुरुः स्वयमसौ शक्तिः परा वैष्णवी
पूज्या मन्त्रवरश्च वांछितधरस्तासामितः किं सुखं ॥

अतएवामूर्विस्रभ्य मार्गशीर्षीयशीर्षायमाणतालभ्य[5] प्रतिपद[6]मारभ्य सङ्कल्प्य व्रतमारब्धवत्यः ॥

यत्रारुण[7]कृतारुणगुणप्रसरमवसरमनु परस्परं गृहविसरतः समाकारणपरा[8] व्यतिवद्धकरा यमुनागमनतत्परा गानपरायणा वभूवुः ॥

यत्र परस्परपरीहासप्रायतया निजाभिप्रायं व्यञ्जनयामासुः ॥

---

(१) विधिर्विधाने दैवेपि । अत्रापिशब्दात् काले धातरि प्रकारे कल्पे विधायके च वाक्ये इति क्षीरः ।
(२) अन्तरे हितयुक्ता । (३) अन्तर्धानं कृतवती ।
(४) सहायमिच्छति । (५) योग्य । (६) तिथि ।
(७) सूर्यसारथि । (८) आह्वानपराः ।

यथा ।—

त्वामुपयन्ता सखि ! वनमाली ।
सकलशुभाकरवरगुणशाली ॥ ध्रु ॥
यत्र(१) व्रजपतिरितरुचि(२)रुचितां ।
वार्त्तां चालयिता सुखसचितां ॥
श्रुत्वा तत्तव मातरपितरौ ।
सुखमयितारौ कृतधनवितरौ ॥
हरिरपि मुदमिह हृदि गोपयिता ।
सखिभिर्नर्म्मणि यः कोपयिता ॥
गणकनिदिष्टतरे सुदिनाहे(३) ।
वेषं धास्यति स निजविवाहे ॥
नीलरुची(४) चितगौरदुकूलं(५) ।
घनचपलालिरुचामिव मूलं ॥
अन्तरवसनगकञ्चुक(६) पीतं ।
चित्रप्रच्छदरुचिपरिवीतम् ॥
मुकुटकिरीटतिरीट(७) विराजं ।
अलकावलिमणिचित्रक(८) भाजं ॥

---

(१) उपयमने निमित्ते ।　(२) प्राप्तरुचिः सन् ।
(३) शुभदिने ।　(४) कान्तिः ।　(५) वेशस्य विशेषणानि ।
(६) कर्म्मधारयस्ततस्तृतीयासमासः ।
(७) शिरोवेष्ट ।　(८) तिलक ।

कुण्डलमण्डितगण्डविभागं ।
ताम्बूलच्छविजिदधर-रागम् ॥
अधरावृतये करधृतचेलम् ।
ग्रैवेयकमनुकृतमणिमेलं(१) ॥
साङ्गदकङ्कणमुद्रिकहस्तं ।
आवापक(२)धृतिवलयितशस्तं(३) ॥
हारवलितहृदि धृतमणिराजम् ।
वनमालादिकमाल्यसमाजम् ॥
मणिमयशृङ्खल(४)लसदवलग्नं(५) ।
चरणविभूषणगणरुचिमग्नम् ॥
वेषे चास्मिन्नेतदपूर्वं ।
यत्तु न दृष्टं क्वचन च पूर्वम् ॥
अङ्गं भूषणमपि किल सर्वम् ।
सर्वाभरणं स्वयमिति गर्वम् ॥
अथ मणिशकटाधिष्ठितमेतम् ।
कलयिष्यन्ति सुहृद्भिरुपेतम् ॥
तं जन्यानां(६) शकटपरीतम् ।
कुसुमैर्वर्षिष्यन्ति सगीतम् ॥

---

(१) सङ्गमं ।
(२) हस्तसूत्र ।　(३) मङ्गलं ।　(४) काञ्ची ।
(५) मध्यदेश ।　(६) जन्याः स्निग्धा वरस्य ये ।

शकटध्वनियुतवाद्यशतेन ।
मुदमाप्स्यति स स्वयमपि तेन ॥
तद्ध्वनिकलने तव सखि ! चित्तं ।
धृतमपि यत्नाद्द्रविता भित्तं(१) ॥
स यदा गन्ता द्वार-सदेशं ।
सखि ! विसृजेः सुखमूर्च्छावेशं ॥
तमुपव्रजिता सा तव गोष्ठी ।
स्त्री-ततिरपि गास्यति बिम्बोष्ठी ॥
उपयानं(२) तद्वाद्यवितानं(३) ।
गालिप्रायं तदपि च गानं ॥
सारात्रिकनिर्मञ्छनदृष्टिं ।
कर्त्तारस्ते सकुसुमवृष्टिं ॥
मण्डपवरमुपनीते श्यामे ।
सुखसम्मर्द्दो भविता रामे(४) ! ॥
गोपेन्द्रादिकगणपूजामनु ।
नर्म्मकुतूहलमुदयेद्दरतनु ! ॥
पूर्वं विधिमपि कृत्वा सद्विधि ।
आनेष्यन्ति त्वामिह सहनिधि ॥

---

(१) खण्डितं ।　(२) समीपागमनं ।
(३) वाद्यं वितानयति विस्तारयति ।　(४) सम्बुद्धिः ।

वरपुरतस्त्वां शिथिलितगात्रीं ।
स्थापयितारः प्रियरतिपात्रीं ॥
तातस्तव करमथ दधदवलं[१] ।
ग्राहयिता वरकरमनु सजलं ॥
तत्र च भवती सुमुखि ! सुखेन ।
किम्भवितेति ज्ञाता केन ॥
किम्वहुना तव करसंयमनम् ।
कृतमिव पश्याम्यमुनाकमनम् ॥ इति ॥

तदेवं यमुनां प्राप्य द्रुतमेव गानं समाप्य वेलायां[२] वाल्यचापल्येन कल्ये[३] प्रोज्झितचेला एव मिथः कृतमेला वेलायां[४] निमज्जन्ति स्म ॥

निमज्ज्य च कौशेयतया क्षालनां विनापि न परिहेयमिति तदेव चेलं परिधाय सेव्याया देव्याः सैकतीमर्च्चां[५] मर्च्चितां विधाय मन्त्रमनुसन्धाय[६] धामसमायान्ति स्म ॥

तदेवं ताव[७]न्मासं यावद्विधाय त[८]त्पूरकदिनं व्रतस्यापि पूरकं जातमिति परमानन्दपूरणात:

---

(१) कोमलमित्यर्थः ।　(२) तीरं ।
(३) प्रातः ।　(४) नीरं । वेलास्यात्तीरनीरयोः ।
(५) प्रतिमां ।　(६) स्मृत्वा ।
(७) वाक्यालङ्कारे ।　(८) मास ।

सूरजापूरमनुदूरनिर्जनता जातनिर्व्रीडतया त्वरा-मक्रीडन् ॥

तदेवं पूर्वपूर्वं जानन् व्रजराज-नन्दनस्तुष्टमनाः कुमारचतुष्टयमनुविधं(१) विधाय तत्र प्रस्थायगुप्त मुप्त(२)चित्ततया ताः पश्यति स्म ॥

ये खलु दाम-सुदाम-वसुदाम-किङ्किणि-संज्ञास्तस्य प्रज्ञाहङ्कारचिन्तमनसां वहिः प्रकाशतया लब्ध-समज्ञा(३) स्तन्त्रविज्ञातृभिर्विज्ञायन्ते ।

त एते हि कुमारा जातचतुःपञ्चवर्षाः परस्पर-सवयस्कताधृतहर्षाः कृष्णादनुदिनमासादित(४) प्रेमवर्षाश्चलनारम्भत एव कुत्र याम इति पृच्छन्त एव गच्छन्तः कृततत्सङ्गमागच्छन्ति स्म ।

तदेवं ।—

सङ्गं विधाय चतुरश्चतुरः कुमारा-
नागम्य तत्र करवारिततत्प्रहासः ।
नम्रीभवन्नलमलक्षिततां प्रपद्य
सद्यस्तदंशुकचयं स हरिर्जहार ॥

(१) अनुगतं । (२) न्यस्त ।
(३) कीर्त्ति । (४) प्राप्त ।

हृत्वा ससत्वरकदम्बनगाधिरोह-
पूर्वं सडिम्भनिकरः स्फुटमुज्जहास ।
श्रुत्वा प्रहासमथ गोप-कुमारिकाणां
वर्गः समं सभयमूर्द्धित[1] दृष्टिरासीत् ॥

गम्भीरस्वरसङ्गतं तदितरानुद्भाव्यभव्यश्रियं
हासन्तं परिचित्य वाल्यवलिता-
स्ताः प्रेक्ष्यचान्योन्यतः ।
वस्त्राण्यप्यनभीक्ष्य तत्र विधृता-
न्युच्चन्तु वक्षःस्थलं
कृत्वानीचमुदक्तवक्र[2] मुदके-
न्यक्चक्रिरे पद्मिनीः ॥

अतलिन[3] नलिनवनानां-
भ्रममिह चक्रुर्मुखानि तासां न ।
हेमन्ते तदयोगात्, किन्तु न्यक्कारमेवात्र ॥

ततश्च ।—

क्षणमधिजलमध्यं तस्थुरानम्रनेत्राः
पुनरुदयतिशीते ऽद्राक्षुरेताः कदम्बं ।

---

(१) उर्द्धीकृत ।　　(२) उत्थितीकृतवक्रं यथा स्यात् ।
(३) अविरल । तलिनं विरले स्तोके ।

अपि हरिरधिशाखं गुप्तमूर्त्तिः पुरासी-
त्पुनरवृति[1] मयासीच्चातुरक्ष्याय ताभिः ॥
तासां जलस्थवपुषां वदनेषु कृष्ण-
स्यारूढनीपकतरोः सहसा दृगन्तः ।
पद्मेषु पद्मप[2] कलामदधादमुष्मिन्[3]
यासां च नीरभृतिचातकरीतिमाप ॥

ततश्च ।—

उच्चैर्जहसुर्बालाश्चुक्रुधुस्तत्र बालिकाः ।
ऊचुश्चेदं तु वः कृत्यं व्रजाद्दत्यं भविष्यति ॥
अथ कृष्णेन मुहुरपि शिक्षिता बालाः प्रोचुः ॥

तत्र प्रथमं यथा ।—

कृत्यं वा किमकृत्यं वा न विद्मो वयमण्वपि ।
शिक्षार्थं[4] किन्तु वः प्राप्ता वीक्ष्याज्ञासिष्म
तत्पुनः ॥

अथ सर्व्वाः सलज्जं परस्परमीक्षित्वा पुनरूचुः ।—
यः कश्चिच्छिक्षकस्तस्माद्भवद्भिः सुष्ठु शिक्षितं ।
अभ्यस्यथ व्रजे तच्च स्वगुरोर्मान-वृद्धये ॥

---

(१) आवरणाभावं । (२) भ्रमर ।
(३) कृष्णे । (४) शिक्षाग्रहणार्थं ।

पुनस्तच्छिद्रान्विता डिम्भाः प्रोचुः ।—

किमर्थो यमुपालम्भस्तन्न विघ्नस्तु किञ्चन ।
भवत्यो जलचारिण्यो वयं वृक्षाग्रगामिणः ॥

ता ऊचुः ।—

विक्रान्तिर्लुण्ठतायोग्या य[१] द्रुःशाखाग्रगामिता ।
दीनता लुण्ठितानां स्याद्यन्नः सलिलगाहिता ॥

अथ श्रीकृष्णः स्वयमेव सकोपविस्मयमिव वक्ति स्म ।—किं लुण्ठितं भवतीनां ? ॥

ता ऊचुः ।—

अहो ! वत कथमस्माकमसङ्ख्यतया दुःसम्वरमम्वरं सम्वरण[२] मापद्यते ॥

श्रीकृष्ण उवाच ।—

भवतीनामम्वरा[३] वरणता विद्यत एव तदम्वरं वा कथमपहारेण सम्वलन[४]मवलम्वतां[५] ॥

ता ऊचुः ।—

अम्वर[६] मप्यम्वरता[७], मासादयितुं तवास्ति
सामर्थ्यं ।
इह दामोदर ! चौर्य्यं, कियदिव शौर्य्यं समर्पयतु ॥

---

(१) यस्माद्धेतोः ।　(२) गोपनं ।　(३) श्लेषेणाकाशः ।
(४) एकत्रीकरणं ।　(५) प्राप्नोति ।　(६) वस्त्रं ।
(७) आकाशतां ।

अथ कृष्णः सस्मयमाह स्म ।—

न नग्ना एताः पाथसि मग्नाः ।

तदिदन्तु मया परिहसितमेव दृष्टं ॥

भवद्भिर्दुष्टप्रकृतीनामाकृतिमात्रमुष्टुतायुताना-मासामनुष्ठितं । यन्मदीयान्येव शस्तानि वस्त्राणि विहारतः समस्तव्यस्ततया यत्र तत्र विस्रस्तानि तान्येता दरिद्राणां कन्याः स्फुटमन्यायतया[1] परिचित्य च विचित्य परिदधानामादृशस्तु दृशः सकाशाद्गोपनं कामयमाना वाढं जलमेवावगाढ़ाः ।

यानि खल्वतिस्वच्छानां तिग्मच्छविकन्याजलानामन्तरप्यप्रच्छन्नान्येव लक्ष्यन्ते ।

यान्येव चासां जलमग्नप्रत्यङ्गलग्नानि स्वर्णसवर्णवर्णा निवर्णा इव निर्वर्ण्यन्ते ।

तस्मात् प्लवन्त एव भवन्तः प्रत्येकमेताः करगृहीतकराः समानयन्तां ।

तदेतदवधार्य्य तीरपर्य्यन्तमवतीर्य्य सम्भ्रमप्रतीक्षितातल्पकालान् कृष्णाज्ञापालान् वालानमूः प्रत्यूचुः ॥

---

(१) हेतुना ।

कथं स्तम्भमवलम्बध्वे ? । निःशङ्कमेव संक्रामत ॥

सखीः प्रति च प्रावोचन् ।—

अत्रैवानीय पानीयवाससुखं लुण्ठाकानेतानाकण्ठमासादयत ॥

अथ तान्प्रति च ।—

आहरवसना[१]माहर,वनितां यस्मात्
क्रियां सदाधीध्वे ।
कात्यायनी-प्रसादा,त्तमपि विकर्षाम तोयान्तः ॥

अथ तदेतच्छ्रुतवन्त एव द्रुतवन्तः स्खलन्त इव नीपतर्वन्तमासद्य सद्यस्तमेव तरुमारुरुहुः ।

कृष्णस्तु सहासं स्पष्टमिदमभ्याचष्ट ॥

अहो ! शुभंयूयमानानामासामहंयुता भवतीनां भवतु पश्यामस्तत्र भवतीषु देवताप्रभावं यावदेव तदेतमुदवासमुरीकृत्य भवत्यस्तिष्ठन्ति तावद्वयमपि धृतनिष्ठास्तरोरुपरिष्टादेव नभोवासमुररीकृत्य तिष्ठाम ॥

अथ तत्र तदुत्तरमुररीकुर्वत्यः सर्वाः सश्लेषमात्महृद्गतमुद्गमयामासुः ॥

---

(१) आहरवसनमिति यस्यां क्रियायां एव माहरवनिता इत्यादि वाक्येन समासे निपातोऽयं ।

न नादेयभयं(१) तस्य तरौ(२) यस्य भवेत् स्थितिः।
पात्रसात्कृत(३)गात्राणां पृच्छ्यानादेयता(४) तु नः॥

ततश्च तन्मुखतुषारकरतस्तुषाकर(५)तरङ्गनिकरत-श्च कम्पमानाः सनर्मानुकम्पममूरयमुवाच॥

अहो! हिमश्रथ(६)श्लथाङ्गसन्धयः परमदुर्वलाः सर्वाभिरेवार्वागागम्यतां॥

तास्तु भ्रूभङ्गसङ्गतमूचुः।—

पुनः किमर्थमागमयितुमर्थयसे?॥

कृष्ण उवाच।—

वनदेवतयाहृतं मया तु प्रसह्य तस्याः समाहृतं वासः समासाद्यतां(७)॥

ता ऊचुः।—

किमतः शेषमन्वेषयामः?॥

तदेतदुक्त्यान्तर्वारिण एव प्रसारितकराः किञ्चि-दभ्यानञ्चुः(८)॥

---

(१) नदीसम्बन्धिनां यद्भयं तत्। (२) नावि वृक्षे वा।
(३) पारावारयोरन्तरं पात्रं। पक्षे पात्रं दानयोग्यः।
(४) नदीसम्बन्धिता पृच्छया कथं जातेति जिज्ञास्या।
पक्षे अदेयतादत्तत्वादेवेति भावः।
(५) तुषारं शीतं करोतीति। (६) हिमसन्दर्भः।
(७) गृह्यतां। (८) अभ्याजग्मुः।

कृष्णस्तु साङ्गुलिव्यङ्गमुवाच ।—
अये ! शतपत्रपत्रनेत्राः ! सविधेऽत्रागम्यतां ॥
ता ऊचुः ।—
तवैतदेही[१]दं कर्म कथमिव ? ॥
कृष्ण उवाच ।—
मम दृष्टिर्विसृष्टि[२]श्च विशिष्टतामाप्नोतीति ॥
ता ऊचुः ।—
तर्हि किमर्हितं[३] भवेत् ? ॥
कृष्ण उवाच ।—
अहणातिवृत्ति[४] वंस्त्रपरिवृत्ति[५]श्च न स्यात् ॥
ताश्च परस्परमूचुः ।—
अहो ! मुग्धा ! वञ्चयितुमेवेयं प्रपञ्चना ? ॥
कृष्णस्तु ताः सन्दर्श्य जिह्वां सन्दश्य बभाषे ।
सत्यमेवेदं ब्रवीमि नासत्यं ।
ताः पुनः प्रत्यूह[६]मूहमाना व्यन्यूचुः ॥
अहो ! मूढबुद्धयः ! सुव्यक्तान्तर्निगूढहासः परीहास एवायमस्य ॥

---

(१) यहि इहेति यस्मिन् कर्मणीत्यर्थे समासनिपातः ।
(२) वस्त्राणां दानं । (३) योग्यं
(४) अतिक्रम । (५) परिवर्त्तः । (६) विघ्न ।

कृष्णस्तु गूढमपि स्मितमगूढसमूढप्रियवद्य[1]-तयाप्यवादीत् ।—

हन्त! नहि नहि यस्माद्भुतकृशतया भृशदया-विषया एव यूयं न तु दूयमानतामर्हथ ॥

ता ऊचुः ।—

स्पृहयालुश्चान्य-वस्त्रं गृहयालुश्च यः स तु ।
शीतालुषु दयालुश्चेदाश्चर्यातिशयालुता ॥

भवतु विस्रब्धं[2] वदत कदा सत्यं वक्तुमारब्धं तत्र भवद्भिः ? ॥

कृष्ण उवाच ।—

कदापि नानृतं वचसि कृतवानस्मि ॥

ता ऊचुः ।—कः कथयति ? ॥

कृष्णः सहासमुवाच ।—

अहो! कूटकूटं घटयमाना! । यद्यन्यथा मन्यध्वे परमधर्मपरानेतानेव समेता[3] न्पृच्छत ? ॥

ताः सहासमूचुः ।—

सत्यमेते भवतः प्राप्तमर्माणः सधर्माणश्च दृश्यन्ते ॥

कृष्ण उवाच ।—

हन्त ! मुष्टिसम्बन्ध्यमध्यमाः! प्रतीतिमतीथ चेत्प्रत्यक्षत एव लक्ष्यतां । सर्वाभिरेवागम्य न वा सर्वानतिरेकया कयाचिदेकयापि ॥

---

(१) प्रियवचन । (२) प्रतीतिविषयं । (३) मिलितान् ।

ततश्च ।—

तस्य तत्क्ष्वेलितं[१]श्रुत्वा वालाः प्रेमपरिप्लुताः ।
व्रीडिताः प्रेक्ष्य चान्योन्यं जातहासा न निर्ययुः ॥
तीरे गन्तुं लज्जा, स्थातुं नीरे च शीतमित्युभयं ।
समजनि जाड्यं युगप,त्तदिमास्तत्रैव किञ्चिदब्रुवत ॥

व्रजनृपकुलरत्न ! त्वं व्रजप्रीतिशाली
व्रजजनमहनीय[२]श्चासि याचामहे तत् ।
वयमतितरशीतव्यग्रताग्रस्तचित्ता
वितर वितर वासश्चानयं मा च कार्षीः ॥

कृष्ण उवाच ।—

ममानयः को वा नयनविषयः कृतः। प्रत्युत सत्कुलप्रभवतीनां भवतीनां वनदेवताहृतवस्त्राणां साहाय्यमेव कार्य्यमिति तथा मयारब्धमस्ति ।

नतु भवतीनां चेलचेलप्रचये[३] मादृशामभिलाषमेला[४]सम्भवति ।

तस्मादस्मत्परितोष-पोषणाय यदि किञ्चिदपि दत्थ तदा तन्मदादेव देवता[५]विरोधमप्यनुरोध[६] विषयीकुर्म्मः ।

---

(१) नर्म्मवाक्यं ।　(२) पूज्यः ।
(३) निन्द्यवस्त्रसमूहे निन्दार्थे चेलः ।　(४) मिलनं ।
(५) वनदेवता ।　(६) इच्छा ।

अथ तदेवमवधारितवत्यः कात्यायनीव्रतवत्यस्तदेतन्मनसि विचारितवत्यः। हन्त! यदस्माभिर्मनसि रञ्जितं तदेवायं व्यञ्जितं कर्त्तुं प्रयतते।

तस्मादस्माकमयमेव समयः। किन्तु किमपि लक्ष्य(१) मेवात्र लक्ष्यं(२) तदपि स्वत एव लब्धं। यत्पृथुशीतभीततादिकमत्र प्रकटमेव घटते॥

अथ तं प्राहुः।—

हा! हा! द्रुतमनेन हैमनेन पवनेन शीतपरीततया जीवनविपरीततां वयमायाताः। तस्मान्मर्म्मभेदकं नर्म वृथा मा कृथाः। किन्तु वस्त्रमेव सेवय। यद्वा वाञ्छसि तत्तु लाञ्छनमङ्गीकृत्यापि करिष्यामः॥

कृष्णः सस्मितमुवाच।—

हन्त! यदि मद्दिष्टं दास्यथ तर्हि दास्यमेव स्वीकुरुत॥

अथताश्चिन्तयामासुः।—

हन्त! सहसा मर्म्मस्पर्शकर्म्मठतामेव लब्धवानसौ। भवतु; वयमपि नर्म्माश्रित्य तदेव शर्म्माङ्गीकुर्म्मः॥ स्पष्टं च प्रोचुः —

---

(१) व्याजमेव। (२) दृश्यं

"श्याम[१]सुन्दर ! ते दास्य" इति ॥

कृष्णश्च सस्मितमाह स्म ।—

तत्र च यन्ममोदितं तदनुमोदितं पुरतः कुरुत ॥

अथ ताः परस्परमालोचनपूर्वं निकाचितलोचन-मूचुः ॥

भवतु; "करवाम तवोदित"मिति ।

तदेवमपि कृष्णे सतृष्णेऽपि तूष्णीमेव स्थिते पुनरूचुः ॥

"देहि वासांसि धर्मज्ञे"ति ।

अत्र चान्यथा निजाङ्गीकारसभङ्गी[२]भावाद्धर्म एव मर्मबाधायां नात्मानं सम्वर्म्मये[३]दिति भावः ॥

तथापि तथा स्थिते तस्मिन् कौतुकनिगूढस्मिते पुनरूचुः ॥

"नो चेद्राज्ञे ब्रुवामह" इति ।

अत्र च भयानिर्मुक्तमिमं[४] तद्युक्तमात्रमाचरितु[५]-मुक्तमिदं । न तु वस्तुतः ।

तदेष व्याजपदेन[६] राजपदेन यं विशेषमवबुध्यते तमेव बुद्ध्यतां नाम निकाममित्यभिप्रायः ॥

---

(१) अङ्गीकृतौ लोट् ।　(२) भग्नता ।
(३) वर्म्मणा न संनह्येत् ।　(४) कृष्णं ।
(५) भययुक्तमात्रं कर्त्तुं ।　(६) स्थानेन ।

कृष्णश्च तदुपयुक्तमुक्तवान् ।—

अहो ! कदा दास्यो भविष्यथ कदा वा ममोदितं करिष्यथ तत्तु नोपलभामहे। यदि वेत्थं सत्यमेव तदा गत्यन्तरमन्तरा जलादुत्थाय सर्व्वसम्पदुत्थाय[१] स्मितेन समेतमेव समेत[२]। न तु सूक्ष्मयापि रूक्षतया।

न चेन्मिथ्यासङ्कल्पजल्पानां तत एवाधर्म्ममर्म्मकल्पानां[३] साहाय्यमस्माभिः कथम्वा प्रथनीयं। तथापि तासामनुत्थामनुद्दङ्क्य कठिनताघटितमाचष्ट। न वयं वृथा कृताशानां कन्यापाशानां[४] वः सम्वन्धमनुरुन्ध्महे[५]॥

किन्तु।—

इदञ्च मे दयालुत्वमेव वुध्यध्वमञ्जसा।
नो चेन्नाहं प्रदास्ये किं क्रुद्धो राजा करिष्यति॥

अत्र च राजपदं व्याजाय व्याजहार।

ततश्च मौनं प्रतिलभ्य तासां भयमुपलभ्यते। न करुणासभ्यशिरोमणिना प्रत्यय[६] माचर्य्य

---

(१) उत्थानाय। (२) समागच्छत।
(३) अधर्मस्य मर्म कल्पयति समर्थयति।
(४) कुत्सितार्थे तद्धितः पक्षे पाशरूपाणां।
(५) कामयामहे। (६) शपथं।

कथञ्चित्प्रत्यये[(१)] चाचरिते शीतार्त्ततानिर्वर्त्तिवार्तता[(२)]-माहर्त्तुं व्रीडानिविडजडवपुषोऽपि जडादुत्तेरुरिति वार्त्तयन्ति । तद्यदि तथा स्यात्तदा वस्तुतस्तु तत्कारणमिदमस्तु ॥

प्रार्थ्यञ्चेत्फलति तदा भजेम देहं
नो चेन्नो इति समयस्य यैव सीमा ।
तासां सा[(३)] यदि विफला क्व तर्हि लज्जा
निर्व्वस्त्रागतिविधये हि मन्तुलक्ष्यं ॥

तदेवं कथञ्चिदुदकादुदक्ता[(४)]श्च ता न व्यक्तावयवा जाताः ॥

किन्तु ।—

हस्तपल्लवकृताग्रवस्त्रिकाः
केशविस्तृतिधृतापराम्वराः ।
आदि[(५)]निष्ठित[(६)]कनिष्ठदारिकाः
कुब्जिकावदमिलन् कुमारिकाः ॥

ततश्च पश्य कृष्ण ! पश्य सर्वतस्त्रस्तां[(७)] एता लोप्त्राणि[(८)] वस्त्राणि पाथस्येव स्रस्तानि विधा-

---

(१) विश्वासे । प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ।
(२) निरामयतां । (३) सीमा ।
(४) उत्थिताः । (५) अग्रे । (६) स्थापित ।
(७) भीताः । (८) चौर्य्यार्जितानि ।

यागता इति संलप्य प्रबलहासं बलातिबालवर्गे हरिस्त्विदं भावितवानतीव दयामयामास ॥

यथा ।—

शशधरतन्वा तुलना-
माहतलक्षणा[१]तया ययुर्यदपि ।
तदपि च तां[२] सहसामू-
राहतलक्षणातया[३] जिग्युः ॥

एताः सत्कुलसम्भवा वर[४]महो वाञ्छन्ति देहव्ययं
न व्रीडाक्षयमेवमप्यथ दशामेतां गता मत्पुरः ।
बीजञ्चात्र परन्तु मद्विमुखताशङ्का ततः[५]कुण्ठता-
मुत्कण्ठा किरती[६]विलोढयति मा-
मासां निजाशर्मणि ॥

तथाप्यासां सुष्ठु तन्निष्ठां[७] निष्टङ्कयितुं पङ्क[८]-दर्शिनं मनोरथस्पर्शिनं परिहासमप्यतीव स्पष्टयितुं चित्तमिदमुत्कण्ठते । यदा[९] गता अपि सङ्कोचावगाहतः परस्परमाहत[१०]प्रकाशावयवा एव तिष्ठन्तीति ॥

---

(१) गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ ।
(२) शशधरतनुं । (३) सम्यक्हतकलंकतया ।
(४) वरमीषत्प्रियेऽव्ययं । (५) हेतोः ।
(६) दूरीकुर्वती । (७) मद्विमुखताशंकां ।
(८) पापे । (९) यस्मात् ।
(१०) आहता इत्यस्य व्याख्येयमेव वा आगता इति तूक्तमेव ।

प्रकाशन्नूवाच ।—

अरे ! रे ! चपलाः ! कथं भवन्तो हसन्ति ।—

एताः खलु नग्निका[१] एव कथं वा नग्निकाभावे दोषमर्हन्तीति ॥

अथ पुनर्वस्त्रकदम्बं कदम्बस्कन्धसन्धिविशेषे सप्रत्याहारं[२] तत्प्रत्यक्षसम्वलिततया सन्धाय प्रेम-वन्धाय सस्मितं ताः प्रत्येवमाह स्म ।—

दास्याङ्गीकार-कारणात् प्रदास्याम्येव तान्येतानि वस्त्राणि किन्तु पूर्वमशक्यनिर्णयः सम्प्रति तु निर्वर्ण्य निर्णीतः सोऽयं सद्गुरुतो यजतनमतां[३] प्राप्तवतीनां भवतीनां दुर्नयः सपदि मां विवर्णयन् वर्त्तते तदेतदवधार्य्यतां भवतीभिः ॥

शम्वरं[४] प्रविविशे विनाम्वरं यत्तदेव जलदेवहेलनं ।
छिद्रमावरितुमत्र तद्धृते शीर्षभाक्करयुगं स नम्यतां ॥

तास्तु तत्र सापत्रप[५]चित्ताश्च परमभीतिभित्ता-स्तथाकार्य्यतयावधार्य्य पश्यत केऽपि शब्दायन्त

---

(१) गौरी तु नग्निका नागतार्त्तवा ।
(२) प्रत्याहार उपादानमित्यमरः । अनेकस्यैकत्राध्यारोप इति क्षीरः ।
(३) यजतनमतेति यस्यां नियोजनक्रियायां तां । प्राप्तवतीनां ।
(४) जलं ।    (५) लज्जा सापत्रपान्यतः ।

इति बालानां दृष्टीः प्रतार्य्य पतिरेव देवतेति विचार्य्य सपरिहासविलासव्याजतस्तमेव नमश्चक्रुः। स्वामिन्! नमस्तुभ्यमिति ॥

ततश्च ।—

कृष्णः सकौतुकतृष्णतया तासां प्रतिप्रतीकं(१) संदृश्य स्निग्धतां विदग्धतामपि परामृश्य लब्धप्रसादमेलः खेलावलितं चेलानि यथा स्वमर्पयामास ॥

यत्र च ।—

दृष्टिपथसेवनादेव भवतीनां पुष्टिदीर्घतादिकं मम मुष्टिगतं जातं कथमन्यथा समर्पणं कुर्य्यामित्येवं तुष्टिं ददानः स्वविचक्षणतां लक्षयामास ॥

किन्तु ।—

प्रातिकूल्यवचनं च सौहृदा-
दानुकूल्यमतिगम्य शर्मदं।
पश्य वस्त्रहरणादिना हरिः
प्रत्युत प्रमदयाम्बभूव ताः ॥

(१) प्रत्यवयवं

ततश्च वृक्षादवतीर्णवति तस्मिन् ।—

लज्जासम्वरणार्थमम्वरमधुर्वाला भृशं लज्जिता-
स्तर्हि स्वाङ्गवृतिं दधुर्मुहुरहो व्यक्तान्तरङ्गारतिः ।
कृष्णादल्पविवृत्तवक्रकमलास्तस्थुर्दृगन्तः पुन-
स्तत्रागाद्व्रजसुभ्रुवामहह ! भोः !
कामस्य वामागतिः ॥

यदर्थमत्रागतवानयं हरि-
र्वरार्पणं विस्मृतवांस्तदेव तु ।
तासां मुखाम्भोजततेर्मधूलिका
सौरभ्यमात्रं परिरभ्य नासया ॥

ततश्च ।—

भृङ्गश्रेण्य इवाम्भोजं रसपूर्णं कुमारिकाः ।
भर्तृकामास्तदा कृष्णं वरीतुं परितः स्थिताः[(१)] ॥

अथ तेषु चाकरालेषु[(२)] वालेषु चल चल किम्वा करणीयमत्रेति करद्वयं वसनादिपरिकरचयश्चाकृष्य

---

(१) अम्भोरुहामिवालिन्यः पतिस्यन्त्यः कुमारिकाः । रसपूर्णमभूः कृष्णं वरीतुं परितः स्थिताः ॥ इति वा पाठः पतिस्यन्त्य इत्यत्र पतिमिच्छन्त्यः । पतिस्यन्तीवराङ्गनेति भाषावृत्तिः ।

(२) कोमलेषु ।

हृष्यत्सु वितरणीयं वरमम्बरहारिताहारीहरिः स्वमनुसंहितवान्(१) ॥

ततश्च ।—

तासां विज्ञाय गोपालः स्वकरस्पर्शकाम्यया ।
धृतव्रतानां सङ्कल्पं कल्पयामास(२) सिद्धिदं ॥

यथा ॥

स्वस्यार्थः स तु यद्विभाति परतः स्वीयं समाराधनं
मय्याविष्टमनास्त्वनादरमथा-
चर्य्यात्र मा(३)राध्यति ।
तत्राद्ये स्वयमस्मि शश्वदुपमा यूयं द्वितीये ततः
सङ्कल्पो निरुपाधिरेष भवतीष्वेवातिसत्यो मतः ॥
सर्पिर्भृष्टतमागुडक्वथितता मासाश्च धाना यथा
रस्यन्ते स्वयमेव वीजवदमूस्तन्वान्ति नान्यस्पृहां ।
मन्मात्रस्पृहिणां मदीयभजनं नो तद्वदन्यस्पृहं
किन्तु स्याद्रसनीयरूपमिति चेद्युष्माकमास्तां
कथा ॥

तदेवमाकर्णिनीर्व्वरवर्णिनीः सद्य एव गान्धर्व्व-पर्व्वसम्पद्यतामित्यभिप्रायतया सापत्रपनयनाः

---

(१) अनुसन्धानं कृतवान् । (२) रचयामास । (३) मां ।

स्वीकृतिमयसमयमपेक्षमाणाः प्रति समर्द्धक-तया[१] समर्द्धकतां[२] गच्छन् पुनरद्धमुवाच ॥

यथा ।—

मिथः स्वीकारः स्यात्परिणयविधिस्तत्परिकराः
परे ते ते धर्माः स पुनरुदबोधि स्वयमिह ।
अतो यूयं सिद्धा व्रजगमनमेवाद्य कुरुत
क्षपायां कस्यांचित्किल मिलनमप्याशु भविता ॥

तदेवं ताभ्यः प्रति श्रुतवति तस्मिन्नधिकमेव-तासामावेशो जातः ॥

यथाह श्रीशुकः ।—

"इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः ।
ध्यायन्त्यस्तत्पदाम्भोजं कृच्छ्रान्निर्विविशुर्व्रजं" ॥

तथाहि ।—

अक्षिभ्यां वक्त्रबिम्बाद्भुजयुगरुचिभा-
ग्मध्यभागान्नितम्बा-
दूरुभ्यां जानुयुग्मात्पदसरसिरुह-द्वन्द्वमापुर्मुरारेः ।
व्रीडानम्राः स्वदृग्भ्यामहह ! मृगदृशस्तद्वियुक्तौ
तु तत्त[३]-
त्पश्चाद्दृष्टं पदन्तु प्रतिपदमुदभूदन्तरे लग्नमासाम् ॥

---

(१) वरदत्तेन । वरदस्तु समर्द्धकः ।
(२) समृद्धिकारितां ।　　(३) तस्मात्तस्मात् ।

द्वे चित्त वाससी नीत्वा कुमारीणां पदं[1] ददे ।
न पूर्व्व[2]न्तु निराकारं गोपनीयमितीव सः ॥
यत्तर्ह्यन्तिमघस्रपूर्य्य[3] मपि ता देव्यर्च्चनं सम्मदा-
द्विस्मृत्य व्रजमेव जग्मुरभवंस्तेनैव पूर्णाक्रियाः ।
प्रेम्णो यस्य तु तच्च तच्च लसितं तस्याथ साक्षात्फलं
कृष्णाङ्गीकृति शर्म चेद्दवलिरे[4] किं शिष्टमिष्टं परं ॥

मधुकण्ठ उवाच ।—

मासिकामिष्ट[5]मनुमिष्टमिषं भुक्तावती देवी कथ-
मिष्टदानार्थमागमनमुक्तवती ? ।

स्निग्धकण्ठ उवाच ।—

राग एव किल सिद्धिकृदासां
नास्मदर्च्चनमिति प्रतिपद्य ।
नागमद्वरविधाविह दुर्गा
किंतु रागविषयः स्वयमेव ॥

मधुकण्ठ उवाच ।—

नूनमेताश्च मर्गणैव गोविन्दादपेताः[6] कृताः ॥

स्निग्धकण्ठ उवाच ।—

कृताः किन्तु न साक्षात् ॥

---

(१) वासः । (२) चित्तं । (३) पूरणीयं ।
(४) कुमारिकाः । (५) पूजां । (६) दूरीकृता ।

मधुकण्ठ उवाच ।—कथमिव ? ॥

स्निग्धकण्ठ उवाच ।—

यद्यपि साध्वीशिरोमणिरमणीनां राधादीनां दीनायमानानामालोचनसङ्कोचतस्तस्य[१] पुनर्व्रजागमनमनुमाना न जातं। तथापि त[२]दनुसन्धानं विना व्रतवन्धादिद्वयं न सन्धातव्यमिति श्रीव्रजपतिजं पत्योः कृतनिवन्धतया राधादीनां वधूनामलाभादुत्पन्नमनस्कार[३]प्रतिवन्धतया च ताः परम्परया पराकृताः[४] ॥

मधुकण्ठ उवाच ।—

तर्हि ताः कुमारिकाः कथमासन् ? ॥

स्निग्धकण्ठ उवाच ।—

वहिः कौमारेण; रहस्तु श्रीहरिपरिणीतताव्यवहारेण ॥

मधुकण्ठ उवाच ।—

सत्यं; वाल्यमेव खलु पूर्वासां[५]वोधस्य विरोधं कुर्वाणमासीदिति विपरीता रीतिर्जाता कथमिव ज्ञानोत्तराणामुत्तरासां[६] सा भवेदिति ॥

---

(१) गर्गस्य । (२) गर्गस्य गमनं ।
(३) चित्ताभोगो मनस्कारः । (४) निरस्ताः ।
(५) श्रीराधादीनां । (६) कुमारीणां ।

तदेतत्कथां प्रथयित्वा कथकः श्रीराधां वोधयति स्म ॥

एवं वलानुजातेन यद्विलम्वावलम्वनं ।
तद्वलं[१] वलवज्जातं तव सम्वलनं विना ॥

यत एव पूर्वं स्तब्धा वेणुशिक्षा तेन पुनरारब्धा । यत्र कथाविशेषप्रथनं पद्यद्वयं साम्प्रतलीलामयमपि "शरदुदाशये साधुजाते"त्यादिवत्तासां वचसा रसावहं स्यादिति तद्द्वारा श्रीपरीक्षिच्छिक्षागुरुणा निक्षिप्तं ॥

तद्यथा ।—

"यर्ह्यम्वुजाक्ष ! तव पादतलं रमाया
दत्तक्षणं[२] क्वचिदरण्यजन-प्रियस्य ।
अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमञ्जः
स्थातुं त्वयाभिरमिता वत ! पारयाम ॥

इति तासां रासरजन्यारम्भे दैन्यसम्भेदनं निवेदनं ॥

"पूर्णाः पुलिन्द्य उरुगाय-पदाब्जराग-
श्रीकुङ्कुमेण दयितास्तनमण्डितेन ।

---

(१) विलम्वावलम्वनस्य वलं । (२) दत्तोत्सवं ।

तद्दर्शनस्मररुजस्तृणरूषितेन
लिम्पन्त्य आननकुचेषु जहुस्तदाधिं" ॥

इति पूर्ववर्णितवेणुवर्णनमयं ।

तदिदं स्पर्शद्वितयं कान्तयोगजभोगविशेषमयं न स्यात् । रास-रजन्यां वक्ष्यमाणकृष्णप्रत्याख्यानायुक्तेः । रासारम्भ एव "भगवानपि रन्तुं-मनश्चक्र" इत्युक्तेश्च ।

तदेवं "त्वयाभिरमिता" इत्यस्य तु तत्स्पर्शानन्तरं त्वया सर्व्वतोभावेन प्रयुक्तरत्याख्यभावा इत्येवार्थः सङ्गच्छते ।

तस्मादथेदं विव्रियते ।

तदेवं दीर्घरात्रतया मन्दतापात्रं हेमन्तार्द्धेन सार्द्धं शिशिरं निशि निशि वंशीशंसितमभ्यस्यति तस्मिन् वसन्त आयातः । सच सार्व्वत्रिकचार्वनुभवोऽपि वृन्दावने वृन्दारकता(१) मविन्दत ॥

यथा ।—

वसन्तति(२) निदाघोऽपि वसन्तस्यात्र किं ब्रुवे ।
वसन्तं यत्र गोविन्दं सर्व्वसन्तः(३) सदा विदुः ॥

---

(१) श्रेष्ठतां ।　　(२) निदाघोऽपि वसन्त इवाचरति ।
(३) सर्वे च ते सन्तश्च ।

तथापि ।—

हेमन्तशिशिरावपि तापदापदायतनतया(१) यस्य यासाञ्च प्रतिभासेते स्म। तासां कृष्ण-कृष्णा-प्रेयसीनां निदाघनियतपूर्व्वभावी वसन्तः किमिव तादृशताया(२) मपूर्व्वः स्यात् ॥

तथा च ।—

तत्प्रेयसीमां प्रत्येकं भावना ॥

समागन्ता यर्हि प्रथममृतुराजः सखि! तदा
ऋतूनामन्यायं वत! कथयितास्मीति लषितम्।
तदास्तामेष प्राक् परभृतशिलीवक्त्र-ततिभि-
र्वितर्जन्नेवास्मान् कृतवृजिनकं धिक् प्रविशति ॥

द्विरेफो वर्व्वरः प्रोक्तः परपुष्टश्च चेटकः।
तौ चाग्रण्यौ(३) मघोर्दृष्टौ याप्यता(४)काप्यतः किमु ॥

किञ्च ।—

प्रसूननिकराः स्मितं सरसिजानि नेत्रप्रथां
पिकाः परमपञ्चमं मधुलिहाङ्गणाश्चुम्वनं।
हरेर्निगमयन्ति(५) चेत्कनु कुतः कथम्वा गति-
र्भवेदहह! नः समं(६) सपदि माधवीयैर्वृतम् ॥

---

(१) तापदाया आपत्तदायतनतया स्थानतया।
(२) तापदापदायतनतायां। (३) परभृतशिलीवक्त्रौ।
(४) अधमता। (५) ज्ञापयन्ति। (६) सर्व्वं।

ऋतुराजः प्रणाय्यो[१]ऽयं न्याय्यमत्र न विद्यते ।
प्रपलाय्य क्व वा यामः श्यामं[२] नः स[३] तु कर्षति ॥

धूमाः षट्चरणा विसर्पिखरतास्पर्शा मृदुस्पर्शना[४]-
ज्वालाः किंशुकसञ्चया दिशि विदिश्यङ्गारसाराः पिकाः।
भस्मान्यत्र परागपुष्पपटलान्यग्निर्मधुश्छद्मना
हा!हा!कृष्णघनं विना कथय को निस्तार-विस्तारकः॥

अत्र श्रीकृष्णस्यापि भावनेयं ॥—

यदि न भवति गोपसुन्दरीणा-
मयमथ मेलयितेति सम्प्रतीतिः ।
कुसुमशरशरप्रणेतु[५] रस्य
स्फुटमनयन्तमृतोः सहेत को वा ॥

राधामाधवयोश्च यथा ।—

राधा राधा[६] पदं[७] मासि माधवे विधुतां विधुः ।
प्रिया[८] सङ्कते लब्धुं पौर्णमासीमवैक्षत ॥

पुनः सर्व्वासामुद्वेगो यथा ।—

द्विजानां काकली तत्र वियोगे यागसम्मिते ।
अजनि व्रजतन्वीनां धाय्ये[९] वाग्निसमिन्धनी ॥

---

(१) निष्कामो दुर्मतिश्च ।
(२) श्यामं प्रति द्विकर्म्मकत्वात् ।　(३) ऋतुराजः ।
(४) मृदुवायवः ।　(५) कर्त्तुः ।　(६) नक्षत्र ।　(७) पदवीं ।
(८) प्रियस्य । पक्षे प्रियायाः ।　(९) धाय्या ऋग्वेदः ।

अत्र वृन्दया शिक्षितः शुकः कश्चिच्छ्रीकृष्ण-पुरतः प्रजजल्प ॥—

सहन्ते शशिनो ज्वालां वायोः क्ष्वेडं पिबन्ति च ।
राधादयो महाबाधा वैयग्र्याद्व्रजनायक ! ॥

अत्र च कस्यामपि चम्पकलतायां श्रीराधया स्वहस्तेन लिखितं पद्यमिदं वृन्दा श्रीगोविन्दं दर्शयामास ॥

यथा ।—

वृन्दावने तमालस्त्वमहं चम्पकवल्लिका ।
अगयोर्नौ मिथः सङ्गो वृन्दयैव न चान्यथा ॥

तच्च दृष्ट्वा मुहुरपि नयनाभ्यां स्पृष्ट्वा कृष्णः सतृष्णमिदमचिन्तयत् । हन्त ! भद्रां(१) पद्मां(२) नित्यमागच्छन्नपि भद्रां(३) पद्मा(४)मद्यापि नागच्छन्नस्मि(५) ।

श्यामलाभा मधुरतामश्नन्नपि श्यामलाभिलाष-विधुरता(६) मश्नन्नस्मि(७) । नरवरविजितचन्द्रावली-

(१) उत्तमां ।
(२) लक्ष्मीं । (३) भद्रानाम्नीं ।
(४) पद्मानाम्नीं । (५) न प्राप्नुवन्नस्मि ।
(६) विश्लेषतां । (७) प्राप्तवानस्मि ।

कतामाप्नुवन्नपि चन्द्रावलीं प्रति लब्धतृष्णातामा-प्नुवन्नस्मि ॥

हन्त ! हन्त ! यद्यप्येवमेवं तथापि क्रमप्राप्त-सुललितविशाखा[1] न्वितराध[2] तामाव्रजन्नप्य-लब्धसुललितविशाखान्वितराधतां यदा व्रजामि तदिदं मामतिदुःखाकरोति । तस्या राधाया एव नूनमियं विदग्धतानिदिग्धतानिदिग्ध[3]वुद्धेः पटी-यसी परिपाटीति ॥

अथ माधवपूर्णिमामासज्य सर्व्वतो विरज्य च पूर्णाशिक्षाविलक्षणां मन्यमना माधवः किञ्चन दुर्गमं गहनमवगाहमानः परममुरलीधमनलीलया धैर्य्य-मूनय[4]न्नमूः प्रधूनयति स्म मुहुः प्रधर्षयन्ना-कर्षति स्म च । साधारणतया राधापि समाग-मिष्यतीति ॥

राधा तु तत्र द्वित्रप्रहरं चित्रवदेवासीन्न पुनराकृष्टता-मवलिष्टपूर्व्वमन्येषामाकर्षणे ता इव ।

अथ श्रीवनमालिशालिवृन्दावनमिन्द्रनीलकान्ति-भिर्व्वलितमिव दृशा यमुनाजलपरमाणुभिः परि-

---

(१) नक्षत्रवाचकः । (२) वैशाखे माधवो राधः ।
(३) उपचित । (४) ऊनपरिहाने ।

चितमिव त्वचा मृगमद-परागैः सरागमिव नसा[१] विचार्य्य ताभिर्विविशे ॥

ततश्च ।—

एका द्वित्राश्चतस्रो युतावियुततया

पञ्चषाः सप्तचाष्टौ

पङ्क्ति[२] स्तद्वृद्धिसङ्ख्यामिति[३] रहिततमा-

स्तत्र याताः समन्तात् ।

यस्मा[४] द्वयक्तिं प्रपन्ना कलितमुरलिकात्[५]

कर्षणीनामविद्या

तच्छ्रीवक्त्रं निरीक्ष्य प्रतिहतमतयः

शर्मलीना वभूवुः ॥

ततः समर्य्यादाश्च ताः सहसा हरेः समर्य्यादं[६] सज्जमाना लज्जया तत्रावहित्थामप्यवलम्वमाना-स्तस्य चरणस्पृष्टिप्रथमकं दृष्टिप्रथमधितिष्ठन्ति स्म ॥

तत्र च

यद्यपि मुरहरपुरतः, किञ्चन न व्यञ्जितं ताभिः ।
तदपि विलक्षण[७] मेवा,प्रथयदमूषां विलक्षणं भावं ।

(१) नासिकया । (२) दश । (३) संख्या ।
(४) श्रीवक्त्रात् । (५) अत्र मुरलीशब्दो ज्ञेयः ।
(६) निकटं । (७) वृथात्वास्या विलक्षणं ।

तदेवं स च सममात्मने(१) तिष्ठमाना(२) गोष्ठ-रमणीर्निरीक्ष्य क्षण-कतिपयं तल्लक्ष्मीनिष्ठमना आसीत् । पश्चात्तु राधिका-सामानाधिकरण्यं(३) विना निर्जनारण्यमपि सङ्गताभङ्गीविशेषादनङ्गी-कुर्वंश्चार्वङ्गीरायत्या(४)मङ्गीकारकारणावधारणाञ्चि किञ्चिद्व्यञ्जनया रञ्जयन्निव कञ्जनयनःपुनरकृतस्पृहाय च गृहाय प्रहापयामास ॥

तत्र भङ्गीविशेषो यथा ।—

मया स्वभावान्मुरली निनादिता
तस्माद्भवत्यः किल सङ्गता इह ।
अतः परीयुर्व्वत चेत्परे जनाः
शङ्केततः सुष्ठिति नात्र तिष्ठतेति ॥

रञ्जना यथा ।—

व्रजत वत ! निवृत्य द्राग्व्रजं नाप्रतीतिं
कुरुत मयि न किं वः प्रीतिमप्यस्मि(५) वेद्मि ।
अहह ! यदि न वेद्मि प्राणसख्यस्तदा सा(६)
भवदभिमतसिद्धिं स्वेन शीघ्रं दधीत ॥ इति ॥

---

(१) कृष्णाय ।　(२) आत्मानं प्रकाशमाना ।
(३) एकत्रस्थितिं ।　(४) उत्तरकाले ।
(५) अहं ।　(६) प्रीतिः ।

यत्र तु तासां।—

नातृपत्कृपणा दृष्टिर्नात्राप्सीत्प्रापिता श्रुतिः।
नाताप्सीत्प्रार्च्छिता(१)नासा नातर्पीदर्पितं मनः॥

तदेवं गीतं "यद्यम्वुजाक्षे"त्यादि।

राधायान्तु तत्र याम-द्वयं चेतनाविरामतः प्राप्त-वाधायां वन्धुसमवाये च निवृत्तसर्व्वोपाये तूर्णमेव तदभ्यर्णं पूर्णिमा वृन्दया सह विन्दमाना वभूव॥

विन्दमाना च कष्टभागतिस्पष्टमाचष्ट॥

यदि मदुटजकुटज[२] मेतामेकाकिनीं याममा-त्रायाम(३)मवसरं वासयथ तदा मया नातिविरा-मया प्रति कर्त्तव्यमिति॥

ततश्च सर्व्वसम्मत्या कथमपि जातया तस्या-स्तत्र सङ्गत्या[४] स्फुरदत्यावेशमङ्गला मधुमङ्गलेन शार्ङ्गिणमानायितवती॥

आनाय्य चासनादिना सभाज्य स्मितस्फुरदु-पालम्भं सम्भाषते स्म॥

भवतु; भवता यत्कृतं तत्कृतमेव सम्प्रति तत्र सम्प्रतिपत्तिं विधेहि॥

---

(१) प्रार्थितेति वा पाठः। (२) वृक्षविशेषं।
(३) विस्तारं। (४) हेतुना।

कृष्णः समन्दाक्ष[1]मुवाच ।—

हन्त ? कीदृशं कथमिव ? ॥

पौर्णमासी उवाच ।—

आर्त्तानामस्माकं वहुवार्त्ता न वार्त्तत्वाय[2] वर्त्तते । किन्तु निजमूर्त्तिस्पर्शतस्तस्या मूर्त्ति[3]मपसारय ॥

कृष्ण उवाच ।—का सा ? ॥

मधुमङ्गलः सप्रणयरोषमुवाच ।—

अन्तरे[4] वसति यस्य चञ्चला<br>ज्ञायते न जलदेन तेन चेत् ।<br>व्यक्तिमीषदपि तर्हि सङ्गता<br>गोप्यते किमिति सा मुहुर्मुहुः ॥

पौर्णमासी तु स्मित्वा तस्य मुखं पश्यन्ती कृष्ण-मुखं पश्यति स्म ॥

श्रीकृष्ण उवाच ।—

स एष वातलतया[5] तरलः कामं जल्पतु नाम यदसभ्यानामभ्याख्यान[6]मेव च लभ्यं[7] ।

---

(१ मन्दाक्षं ह्रीः ।　　(२) निरामयत्वाय ।

(३) मूर्च्छां ।

(४) अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतार्थे । छिद्रात्मीयविना बहिरवसरमध्येतरात्मनि च ।

(५) वातुलतया ।　　(६) मिथ्याभियोगोऽभ्याख्यानं ।

(७) योग्यं ।

[ ८५ ]

भवतीनामाज्ञा तु नावज्ञातुं शक्यते । किन्तु युक्तमेव नियुज्यतां ॥

वृन्दाह ।—

गोकुल-कुल-पालकसर्व्वगोकुलकुलविलक्षणलक्ष्मीलक्षणा सा भवत्स्पर्शपरामर्शत एव वहिर्दर्शं प्राप्नोति चेत् का तव हानिः ।

हन्त ! हन्त ! ! ।

कृष्ण ! चेद्गत ! राधायामुदासीनो भवानपि ।
उदास्स्व[1] किमहं तत्र कठोरहृदया ब्रुवे ॥

क्षणं विभाव्य पुनरुवाच ।—

सातिश्री[2]र्भवतात्याजि श्रीवत्सा न भवांस्तया ।
वयन्तु सरला युग्मे युग्मं वोढुं[3] न शक्नुमः ॥

कृष्णस्तूष्णीं स्थितवान् ॥

पौर्णमासी उवाच ।—

व्रजजनव्रजजीवन ! वाचंयमता[4] माचरन्
कथमिव गिरं मम न सङ्गिरसे[5] ? ॥

श्रीकृष्ण उवाच ।—

अधर्म एवात्र मर्मभेदी भवतीति ॥

---

(१ उदासीनो भव ।　(२) श्रियमतिक्रान्ता ।
(३) रोढुं ।　(४) मौनं ।　(५) अङ्गीकरोसि ।

पौर्णमासी उवाच ।—

अधर्मः खलु मया स्वीकृत एव धर्मस्तु तत्र वर्द्धतां ॥

श्रीकृष्ण उवाच ।—

स्पर्शनं विनान्यदनुमन्यतां ॥

वृन्दाह ।—

दर्शनं तावत् क्रियतां । तन्मात्रेण सिद्धयात्रे सति कथमन्यदथ परमगुणपात्रे भवति प्रार्थयितास्महे ॥

"देहेन्द्रिय-मनो-बुद्धि-प्राणादीनां प्रियं प्रिये ! ।
त्वदनादरभाजो मे जातं सर्वमनादृतं" ॥

इति राधां प्रति चेतसि चिन्तयन्तं कृष्णमन्तः सतृष्णमपि वहिस्तूष्णीकतामेव पुष्णन्तं मधुमङ्गलः करसरसिजे गृहीत्वा कुटजकुञ्जगृहमेव नीतवान् । नीत्वा च तत्पर्य्यन्तभुवि वृन्दां रक्षित्वा वाह्यमवगाह्य पूर्णिमां चावाह्य तस्मिन्नन्तेगुरुतया(१) तत्रकीयं वृत्तं चित्रवदीक्षितवान् ॥

तत्र श्रीवृन्दावचनं यथा ।—

इन्दुरिन्दुभ्रमं याति दर्पणः प्रतिविम्बतां ।
मोहं पद्मालया यत्र कृष्ण ! तन्मुखमीक्ष्यतां ॥

(१) अन्ते गुरुर्यस्य तत्तया ।

ततश्च समावृताजस्रपुलकास्रतया स च तदालुलोके।

यथा चाद्यापि सख्यो गायन्ति ।—

तां रहसि गतां किसलयशयनशयानां ।
हरिरालोकत निजमुरलीकलकलया
चित्रितभानां[१]॥ ध्रु ॥

या निज-वदनामृतरुचिना
त[२]न्मुखविधुरत्न[३]मजस्रं ।
वहुलमशिस्रव[४]दिह यद्भातं[५]
प्रति पदसम्पतदस्रं ॥

यस्या हृदयं स्वान्तरमनु त[६]त्कायं
भजदवकलितं[७] ।
वहिरपि तं प्रतिविम्वव्याजाद्वया-
नञ्जा[८]त्मनि[९] वलितं

यस्यां दोषत्रयमिति मतिभिः प्रत्तं कुङ्कुमरागं[१०] ।
मेने मुररिपुरथ साक्षादिव यातं हृद्गतरागं ॥

---

(१) चित्रितवक्त्राणं यस्यां । मूर्च्छितामित्यर्थः ।
(२) कृष्णास्य । (३) विधुश्चेष्टं चन्द्रकान्तमणिश्च ।
(४) स्रावयामास । (५) यत् मुखविधुरत्नं । भातं दीप्तं ।
(६) कृष्णास्य । (१) प्राप्तं । (२) व्यञ्जितवान् ।
(९) ह्रदि ।
(१०) कुङ्कुमं कटुकं शिष्यशिरोरुग्व्रणजन्तु जित् । उष्णं
हास्यकरं वर्ण्यं व्यङ्गदोषत्रयापहमिति वैद्यके ।

यां पश्यन् स तु सात्त्विकभावं दधदपि
चित्तविकारं।
भेजे यत्र प्रति कृदपि[१] प्रतिकृति[२]-
रिति च विचारं॥
स[३] यया[४] प्रतिकृतिताभ्रममागादेवं भावनशाली।
भावपरीक्षणकृन्मे कृतकोऽप्येतामिन्द्रकजाली॥
तदपि[५] च यत्र स्पृहयन्नथ या मेनां मेने राधां।
कुन्दायाज्ञां प्रत्याचष्टं[६] च दधदपि दुःखाद्बाधां॥
स पुनर्यस्या हेतोः शोचन् व्याजितवृन्दावननं[७]
विदधे यद्धृदि निजपदपल्लवमभितो
जीवनजननं॥ इति॥

क्रमस्तु यथा।—

तत्र तस्य च दुर्निवारं विकारं निशाम्य काम्यमानमर्थमेव वृन्दा प्रार्थयामास॥

श्रीव्रजयुवराज-परमप्रेमवती खल्वसौ॥

यतः।—

हन्त! कृष्ण! तव यौवनस्थितौ
भोगतर्षमनुमाय तन्मयं।

---

(१) प्रतीकारकर्तापि। (२) प्रतिमेति।
(३) कृष्णः। (४) राधया। (५) तथापि।
(६) प्रत्याख्यानं निराकृतिः। (७) याचनं।

दुःखमात्मनि विकृष्य सन्ततं
स्वीयमर्मविजहाविवयं रमा ॥

तदेतदवधाय भवानप्येतदर्थं वेणुवादनादिकं कुर्व्वन्नेवास्ते ॥

तस्मादवधानं सन्धाय समाधीयतां ॥

श्रीकृष्णः सगद्गदमुवाच।—किं कर्त्तव्यं ? ॥

वृन्दाह।—हस्तमेव हृदि विन्यस्तं कुरु ॥

श्रीकृष्ण उवाच।—तदेतदत्यनुचितं ॥

वृन्दाह।—तर्हि चरणमेव तथाचर ॥

श्रीकृष्णस्तूष्णीं तस्थौ ॥

वृन्दा पादयोः पतन्ती;—

हन्त! मा विलम्वमवलम्वस्वेति काकुव्याकुला तयोरेकं वलादिव तस्या हृदि सम्वलयामास ॥

कृष्णश्च कम्पसम्पदा पदारविन्दं सन्दधदेव! वैवश्यवश्यतां विन्दति स्म ॥

ततश्च सञ्जीवनीपल्लवविन्यासवत्त(१)ल्लवस्पर्शत एव चक्षुःपुटयुगमुद्घटय्य तया स एव दृष्टः ॥

तदैव च।—

सुभ्रुवो मुररिपोश्च दृग्द्वयं
विम्वदम्भमविशत्परस्परं।

(१) चरण।

शोभया व्यतिविलोभतः स्फुटं
तावमुष्य[१] परिवृत्तिमैच्छतां ॥

तदैव स चात्रकीयापत्रपातः शिरसिवसना[२]-वरणः सहसा निर्गम्य पूर्णिमां प्रणम्य च चलित एवासीत् ॥

किन्तु स्खलन्निव चलन् कर्मणा नर्मणा च मधुमङ्गलदत्तावलम्वः सखि-कुलं सम्वलते स्म ।

सा च स्वप्नमिव पश्यन्ती वैवश्यत एव समुत्तिष्ठन्ती निरक्षरसुक्ष्मरोदनं चानुतिष्ठन्ती यदा वृन्दया सादरं कृतसान्त्वा तदा दर[३] शान्त्वा[४] पूर्णिमां नत्वा वृन्दया सह सुहृत्तमेच्छिततदागमे तस्मिन्नपराह्ण[५]-तमे व्रजं गत्वा कथमपि समयकातिपयान् गमयामास ॥

तदारभ्य तु स खलु परस्परं स्पर्शो ऽयं[६] स्पर्शायैव परं सञ्चक्लृपे[६] ॥

---

(१) इग्वयस्य ।

(२) अलुक्समासोऽयं ।　　(३) ईषत् ।　　(४)शान्ति प्राप्य ।

(४) सन्ध्यायां अलुगयं । घकालतनेपुकालनाम्न इति हि पाणिनिसूत्रं तरतमौघ इति संज्ञासूत्रंचतदीयं ।

(५) स्पर्शः स्प्रष्टापतमारि ।

(६) उपतन्तृरूपेण समायाते स्म ।

यतः सकृत्तादृशं सुखमुपलभ्य क्षणात्तद्वियुक्तया तया कथमिव प्रथमानं दुःखं स्तभ्यतां । तत्तु सुखं स्वसम्वेद्यमेव न तु निवेद्यं ॥

तथा हि ।—

तयोर्यावस्थासीद्द्वयतिमिलनशर्म्मप्रसजतो
कविः को वा तां स्यात्कथयितुमिह स्वल्पकमपि ।
ययोः काश्मीरं तत्पतितमपि पारं परिक्रम-
प्यहो ! पौलिन्दीनामपि तदिव शश्वद्द्वयतनुत ॥

तदेवं यदा हरेः पदारविन्दं विन्दमानानि कुङ्कुमपङ्कानि तृणेषु कृततदङ्कानि पुलिन्दीजातालङ्कारतया जातानि तदानीमन्यासां धन्यानां पूर्ववदपूर्वानुभवरचनपूर्वकं वचनमिदं ।—

"पूर्णाः पुलिन्द्य" इत्यादि ॥ अत्र चेदं व्यञ्जितं ।—

आस्तां सा दयिता यदीयकुचयुक्
श्रीकुङ्कुमं तत्पदं(१)
प्राप्तं तत्तृणमप्यहो ! विजयतां साक्षात्तु
त(२)त्सङ्गियत् ।
अस्मत्तस्तु पुलिन्दजातिसुदृशां भाग्यं च दूरे स्थितं
यास्तत्प्राप्य निजाङ्गलेपनसुखादासेदिरे पूर्णताम् ॥

(१) कृष्णस्य पदं । (२) चरणस्य ।

अथ कथकः समापनमाह स्म ।—

स ईदृक्प्रणयी लब्धस्त्वया राधे ! पुरा तु यः ।
नाना मनोरथं चक्रे रथवद्भवदाप्तये ॥

इति श्रीगोपालचम्पूमनु कुमारीवस्त्र
सुकुमारीसमस्तकर्षणं एकविंशं
पूरणम् ॥

———

# द्वाविंशं पूरणम् ।

अथ प्रभातकथायां प्रभातप्रथायां मधुकण्ठः स्फुरदुत्कण्ठस्तल्लीलान्तरं शंसन् संसदुपलब्धं[1] कर्त्तुमारब्धवान् ॥

तत्र श्रीदशमस्कन्धप्रबन्धसङ्गमनमङ्गलाचरण-पूर्बकं तत्कथनं ॥

यथा ।—

गत्वा काम्यकमद्रिधातुरुचियुक् कुर्वन् व्रजं दक्षिणां
घर्मत्तौं धवलानिखर्वंशततृण्निर्जिष्णुकृष्णां व्रजन् ।
वृक्षान् सुष्ठु पथि स्तुवन् धवलया
पीताश्च कृष्णां पिवन्
क्षुद्वयाजादधियज्ञपत्नि-करुणाकारी
हरिः पातु नः ॥

तथाहि ॥

अथ गोपैः परिवृतो यशोदानन्दनन्दनः ।
वृन्दावनाद्गतो दूरं चारयन् गाः सहाग्रजः ॥

---

(१) सभायां ज्ञातं कर्तुं ।

निदाघार्कातपे तिग्मे छायाभिः स्वाभिरात्मनः ।
आतपत्रायितान् वीक्ष्य द्रुमान्मित्राण्यभाषत ॥

तत्र च मेघनिर्घोषनिभगम्भीरतासम्भृतमधुरस्वरत एव हर्षमुत्कर्षयन् मित्रमुख्यान् प्रत्येकं रचिताभिमुख्यांश्चकार ॥

यथा ।—

"हे स्तोककृष्ण ! हे अंशो ! श्रीदामन् ! सुवलार्जुन ! ।
वृषाल ! वृषभौजस्विन् ! देवप्रस्थ ! वरूथप" ॥ इति ॥

तत एव च तानमृतकृताभिषेकानिव कृत्वा सकौतुकमुवाच ॥

मां सुखयन्त एवाभिमुखतस्त एते तरवो विराजन्ते ।
तस्माद्भवद्भिर्विलोक्य पृथक् पृथगुपश्लोकयन्तां ॥

सर्वे विहस्य प्रोचुः ।—

भवानेवास्मासु विस्मायकतया कविमण्डलाखण्डलगण्डमण्डनमस्ति । तस्माद्भात्मनैव वर्णयतु ॥

कृष्णः सस्मितमुवाच ।—

श्रूयतां नाम ।—

एतेनाङ्गत एव किन्तु गुणतोऽप्यद्धा महान्तो मता
यत्तापादिनिवारणैः स्ववपुषा जीवानवन्तः स्थिताः

एषामेव च जन्म यत्तु फलवद्दृश्येत तच्चेत्थम-
प्यूहध्वं यदशेषजीवनतया राजन्त्यमी सर्व्वतः ॥

किञ्च ।—

फलैः पुष्पैश्छाया-छदनःसमिदाद्यैश्च तरवः
स्वभावाद्विश्वेषामुपकृतिविधा धन्यतनवः ।
नराः कर्ह्यप्येके विधिवशतया तत्कृतिकृत-
स्ततो भक्ताः पूर्वे सुकृतमनु भाक्ताः[१] किल परे ॥

अत्र वृन्दावनवास्तव्यता[२] पुनरेषां स्तव्यता-मप्यतिक्रामतीति गूढमभिमतं ॥

सर्व्वे सस्मितमूचुः ।—

कविचक्र-चक्रवर्त्तिना भवता न किम्वा सुप्रशस्तंकरं[३] भविता ततो यदेव योजयिष्यते तदेव विजेष्यते ॥

तथाहि ।—

वाचो युक्तिपटुर्यत्र त्वं वदावदतां[४] गतः ।
वाचस्पतिश्च तत्र स्यान्न वाचःपतिरण्वपि ॥

---

(१) अद्धारचनयोर्भक्तिर्गौण्यां वृत्तौ च सेवन इति क्षीरः । ततो भक्त्यां भवा भाक्ता गौण्याः ।

(२) वासकर्तृता ।

(३) अकृच्छ्रेणाप्रशस्तं प्रशस्तं क्रियते यत् तादृशं ।

(४) वक्तृतां ।

कृष्णोऽपि सस्मितमुवाच ।—
भवतु कदाचिदेतदप्यनुभविष्यथ ॥

इति नानासुखवितरकरपुरुह(१) भूरुहाणां वन्यया मिहिर-कन्यातीरमुदन्यया(२) मुदा जगाम ॥

तत्रच ।—

व्यञ्जन्नङ्घ्रिपशंसनस्ववचनं यज्ञाङ्गना तु ग्रहं
चात्मीयागमि भोज्यवर्त्म स यदा सन्त्यज्य
कृष्णां गतः ।
तर्हि स्वच्छतरा हिमाः शुभकराः स्वादूरपः पीतवा-
नघ्न्यानां (३) निकरस्ततः स्वयमपुर्गोपालका-
स्तन्मुखाः ॥

ततश्च ।—

विदूरं समुज्झितातलिनफलिनतरतरुव्रजस्य व्रजराज्ञीप्रहितमाध्याह्निकभोज्यसम्पत्तिवियोज्यताभागुपसत्तिकस्य(४) कृष्णस्य तत्तृष्णातां वितर्क्य तद्भावभाविततया स्वयमप्यतीव तत्तृष्णाजः स्तोक-कृष्णादयस्तदभावभावना अपि प्रणयमयपर्य्युत्सुकतया व्यञ्जिततत्कृतभोजनवर्त्मवञ्चनाः । कराञ्चलचालनपूर्वकं तद्याञ्चामकुर्वत ॥

---

(१) प्रचुर ।  (२) उदकतृष्णाया ।
(३) गवां ।  (४) निकटस्य ।

"राम ! राम ! महावाहो ! कृष्ण ! दुष्टनिवर्हण ! ।
एषा वै वाधते क्षुन्नस्तच्छान्तिं कर्त्तमर्हथ" ॥ इति ॥

कृष्णस्तु सस्मितमुवाच ।—

अत्रालोकपथा[१] शोकवनिकायामनशनीयप्रसवाया[२]मशनायन्त[३]स्ते भवन्तः कुत्र वा प्सातव्यं[४] लप्स्यन्ते । आर्त्तिश्चेद्वारिवार्त्ति तर्हि निकटामपि कुटिलया शूरतनयाघटनया दूरायमाणामितस्तु दक्षिणाहि[५] या शूरसेनपुरी तामुत्तरेण[६] निरवद्यं यज्ञशालामालामालोकयन्त एवानेन सम्यगुपातिष्ठमानेन[७] पथा प्रतिष्ठध्वं[८] ।

गत्वा च तान् कार्मान्[९] कर्मठा[१०]चार्य्यानार्य्यतमस्य मम च नाम्ना याचध्वं ।

किन्तु भिक्षाकाणां तितिक्षामात्रमुचितमिति शिक्षा मनसि कार्य्या[११] ॥

---

(१) लोकस्य पन्था न भवति यः ।
(२) अभोज्यपुष्पादिकायां । (३) अशनमिच्छन्तः ।
(४) भोक्तव्यं । (५) दूरदक्षिणस्यां दिशीत्यर्थः ।
(६) तस्या अदूरोत्तरा । अदूर एनप् तद्योगे द्वितीया च ।
(७) पथिकर्तृके उपातिष्ठतेस्तङ् । तत्पर्य्यन्तं सङ्गच्छमानेन ।
(८) गच्छत । (९) कर्मशीलान् । (१०) कर्मप्रवीणा ।
(११) रक्ष्या इति वा पाठः ।

अथ नेऽपि केऽपि सम्वलिताश्चलिताः । स्वयमयन्तु तदीयगत्यागतिदृष्ट्यर्थमुपनद्धं[१] महाकुट्टिममधितष्ठौ[२] ॥

ततश्च ।—

सौरभ्यं धूमधारा यजुरनुपठनं शुभ्रशाला
द्विजानां
गत्यागत्यादिचेष्टाः शुभयुतहुतभुग्वेदिभा-
गृत्विजश्च ।
गत्वा नत्वाप्यभीक्ष्णं पुटितकरतया नादरे-
ऽप्यस्थुरेते
यस्माद्ब्रह्मण्यदेवस्वतुलितसुहृदः किन्त्विदं
मां दुनोति ॥

ततश्च तान् प्रकृतिश्लेषेण[३] केनाप्याकृतिविशेषेण च गोपान् ज्ञात्वा विप्रतागर्व्वपर्व्वतमारूढास्ते तु व्यूढ[४] वहुलस्थलदृष्टयस्तिष्ठन्ति स्म । तथापि सखायस्ते कृष्णस्य वुभुक्षासुक्षामतां साक्षादिवानुभूय दूयमानमनसः स्वयमेव निवेदयामासुः ॥

---

(१) नद्धाः समीपे । (२) अभ्यासव्यवायेऽपि षत्वं ।
(३) स्वभावयोगेन । (४) रचित ।

यतः।—

हुं फट् श्रौषड्वौषडित्येवमाद्याः
शब्दा यस्मिन्न क्वचित्कृष्णमुख्याः।
तस्मिंस्तेषां किं रुचिः स्यात्परन्तु
श्रीकृष्णार्थे किं न ते मानयन्ति(१)॥

अथ निवेदनं चेदं।—

भो! भो! भूमिदेवाः किञ्चिदेवावधानं विधीयतां राम-रामानुजौ खलु परमप्रभावयुजौ श्रुत(२)वद्भि-र्भवद्भिरवधारितावेव स्तः॥

तौ चात्र भवद्विधानां सन्निधानमेव धेनुसेवनानु-रोधादागतवन्तौ॥

किन्त्वद्य सद्य एवानवद्यक्रीडामयशूरताकौतुक-पूरतस्तत इतः सङ्गत्या प्रत्यासन्नापि श्रीगोपाधिभू(३) सदनभूर्विदूरायमाणास्माकं भाति स्म गृहलोकेन च न तथालोचयाम्बभूविमहे॥

तत एव साक्षाल्लक्ष्मीपतिगृहायमाणगृहाद्भोजन-संयोजनं विना क्रीडायुधि च क्षुधितावभूतां॥

ततश्च कुलपरम्पराप्राप्तव्यवहारं पर्य्यायतया(४)पि

---

(१) पूजयन्ति। (२) वेदाध्ययन।
(३) अधिभूर्नायको नेता। (४) परिलक्ष्मीकृत्य आयतया।

तृपर्य्याय[1]तया भवत्सु सङ्कोचमपर्य्यालोचमानौ पितृभवनादिव भवदीयसवना[2]दन्नं याचितमकुर्वातामिति ॥

अथ तथापि मनसि भक्तिरसिकतावसिकतया[3] त[4]दसत्कृत्य तूष्णीं भूष्णुषु तेष्वन्तर्वाणि[5]ष्वन्येषु तादृगधन्येषु पुनरमी मनसि मीमांसामासुः ॥

नूनमस्मानेते मूढान्मत्वा गूढानुभाषणा बभूवुस्तस्माद्युक्त्यन्तररचननिषिद्धभावाय सिद्धान्ततश्चामीषां सुष्टुमौनविद्धान्तस्तां कुर्म्म इति ॥

अथ स्पष्टं पुनरूचुः ।—

दीक्षाद्यग्नीषोमपश्वङ्गहोम-
प्रान्तं विज्ञैर्याज्ञिकान्नं न भोज्यं ।
सौत्रामण्यां सर्व्वदानेति विप्रा-
स्ताभ्यामन्यत्रास्ति तद्ग्राह्यमेवेति ॥

अत्र भवद्भवदनुष्ठानदूषित एवास्माभिस्तदवसरः स्फुटं निष्टङ्कित इति भावः ॥

(१) समानरूप ।　　(२) यज्ञात् ।
(३) शून्यतया । शून्यं तु वसिकं तुच्छं रिक्तमित्यमरः ।
(४) तेषां याचनं ।　　(५) अन्तर्वाणिस्तु शास्त्रवित् ।

तदेवं भिक्षानिष्ठानामिव तस्मिन्नुपतिष्ठमानाना[१] मपि शास्त्रार्थं नयमानानां[२] तदवधार्य्यैतेवार्य्याचार्य्या मनसि पर्य्यालोचयामासुः ॥

हन्त ! ब्राह्मणा एवास्माकमेतान् ब्रह्म[३] विचारमपि विशिष्टतया लोभादनुशिष्टवन्तः सन्ति ।

येन तत्रापि कृतमुखतया[४] मुखरतामापन्नाः ।

भवतु; तथाप्येते परमेभ्य[५]तयोपलभ्यमानाः किञ्चिद्दामरूपमवदानं[६] विना प्रत्युतादानाय परमत्रागताः ॥

अहो ! कलिप्रवेशदेशस्य देशरूप[७] मिदं ।

किञ्च ।—

केचिन्नु विपश्चितस्तयोरीश्वरतामारोपयन्ति ।

तर्हि वत ! गर्हितं क्षुदादिकं कथमेतावर्हतः ? ॥

तदेतद्विभाव्य दुर्विभावभावतया तथास्थितेषु वहुपचमतायामपि मितम्पचेषु[८] द्विजाततायामपि

(१) लिप्सायां तङ् । याचमानानां ।
(२) युक्त्या स्थापयतां, निर्णयतां । (३) वेदः ।
(४) वैज्ञानिकः कृतमुखःकृती कुशल इत्यपि ।
(५) इभ्य आढ्यो धनी स्वामी । (६) शुद्धकर्म ।
(७) न्यायः ।
(८) कदर्य्ये कृपणक्षुद्रकिंपचानमितंपचाः । कृपणेषु

यथाजातेषु[१] याज्ञिककितवतां यातेषु तेषु याञ्चायां वदमानता[२] कदनतः परस्परमीक्षित्वा मन्दं मन्दं मन्दाक्ष[३] मन्दतया श्रीगोविन्दमेव ते विन्दते स्म ॥

गोविन्दश्च तांस्तथाविधान्नत्रपथान् विधाय मनोहतान्[४] विज्ञाय च हसति स्म ॥

एहि[५] मन्यामहे याज्ञिकेभ्यः स्वलभ्यमभ्याददिध्वे(६) । यथा वृक्षेभ्य इति ॥

तेऽपि सस्मितमूचुः ।—

तत्तु भवन्त एव जानन्ति । वयमपि यत्प्रेरणासमीरणाविकीर्णमनसो जाताः ॥

कृष्णास्त्वन्तर्यज्ञपत्नीनां स्वावलोकप्रयत्नानां सज्ञानं[७]स्तत्र चावश्यलाभं प्रतिजानानः प्रहस्य प्रोवाच ।—

---

(१) मूर्खेषु । अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः ।
(२) यस्मै तद् ।
(३) लज्जा ।
(४ मनोहतःप्रतिहतःप्रतिबद्धो हतश्च स इत्यमरः । प्रार्थनीयाभिवारित इति क्षीरः ।
(५) अव्ययमिदं प्रहासे । (६) लिटो मध्यमपुरुषस्य बहुवचनं ।
(७) उत्कण्ठापूर्वकं स्मरन् ।

आ[1] एवं मन्यध्वे तर्हि भद्रं । मया तु पत्रिणा[2]-मेषां सत्रिणाञ्च[3] तेषां तारतम्यावधारणार्थमेव तत्र भवन्तः प्रस्थापिताः ॥

ततस्तु ।—

अमानिनां यथाधर्मः स्थितस्तद्वन्न मानिनाम् ।
अद्यापि चेन्न प्रतीथ द्राक् तत्पत्नीः प्रतीत[4]च ॥

भवन्ति च भवन्त इव यज्ञपत्नीजना मत्प्रेममात्र-सयत्नधनाः ।

ये खलु धृतमदनवलोकधर्षं[5] द्व्यहत्र्यं जलं पिवन्ति त्र्यहात्यासं[6] द्वित्रग्रासं भुञ्जते । सर्वे स वैलक्ष्यमाचक्षत ।—हन्त ! सत्यमेवेदं ? ॥

कृष्ण उवाच ।— वाढं ॥

सर्वे साश्चर्यमूचुः ।—

तर्हि कुतुकमिदं विदाङ्करवाम ।

इति कृष्णोद्य[7]मनु सोद्यमतया तत्र तन्निमेषत एव जिगमिषत्सु तेषु सप्रणायवत्सु कृष्णः सतृष्णमुवाच ॥

---

(१) पूर्वोक्तस्यान्यथाद्योतयत्वेऽपि आशब्द इति क्षीरः ।
(२) पत्रवतां वृक्षाणां (३) सत्रवतां द्विजानां ।
(४) प्रति इत गच्छत । (५) यथास्यात् ।
(६) द्व्यहमतिक्रम्य त्र्यहमतिक्रम्येति क्रमादर्थः । (७) वचनं ।

अन्नश्च तत्र श्रीमदार्य्यादिसहितमदर्थमर्पयध्वं ॥

अथ पुनरतीव कौतुकद्रवतः परस्परमतीत्य द्रवन्तः पत्नी-शालायां द्विजपत्नीर्विलोकयामासुस्ताभिर्विलोकयामासिरे च ॥

कृष्णात्प्रति[1] च निश्चिक्यिरे । विलोकनात्पूर्व-क्रमस्तु यथा ।—

सा कापि ध्वनिमाधुरीस्वरकला रागावलीवल्गुता
वर्णन्यासशुभंयुता कविजनस्तव्यार्थचित्रप्रथा ।
कंसारेर्गुणरूपकेलिकलना वाष्पादिभिः सार्द्रता
यज्ञस्त्रीकलिता क्रमादिह सखीनार्द्रानकार्षीन्मुहुः ॥

ततश्च ताः ॥

गवाध्वसम्बद्ध[2]निबद्धवस्त्रकान्
प्रशस्तवेत्रान्मुरलीपुरस्कृतान् ।
पिञ्छावतंसा[3] नवतंस[4]सुन्दरान्
विलोक्य कृष्णागममभ्यमंसत ॥
ततश्च यत्कृष्णसमागमं ते
व्यजिज्ञपन् विज्ञवराः प्रणम्य ।

(१) कृष्णस्य प्रतिनिश्चितयेत्यर्थः ।　(२) उचित ।
(३) शिरोभूषणं ।
(४) कर्णभूषणं । पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे ।

तास्तद्विरुक्तायितमप्यपूर्वं[1]
पूर्वं[2] च मत्वा न विदुः स्म कृत्यं ॥

यस्याजस्र[3]दिदृक्षया विदलितप्रायाः
सदामूः स्थिता-
स्तस्य प्राणसुहृद्वराः स्वयममी तत्प्रेरणादागताः।
त[4]त्सम्प्राप्तिमवादिषुः[5] पुनरदः
प्रार्थ्यञ्च किञ्चित्तद-
प्यन्नं तत्र कथं कथं कथयताः
प्राप्स्यन्ति धैर्य्यस्थितिम् ॥

ततश्च ॥

योग्यमत्र किमयोग्यमित्यमू-
र्नैयभोज्यविवृतावनिर्णयाः।
तत्तदीयमखिलञ्च भाजनं
क्षिप्रमादद्दत विप्रसुभ्रुवः ॥

अथ पुरस्कृतगोपसुतायुता
विविधभोजनभाजनमस्तकाः।
प्रतिपदक्रमणं कियदग्रतः
स इति तर्षिगिरः परिचक्रमुः ॥

---

(१) आश्चर्य्यं। (२) प्रथमं। (३) निरन्तर।
(४) कृष्णस्य। (५) उक्तवन्तः।

आमोदः कान्तिपूरः सुखदद(१)पदता
गर्जदुर्जस्विभाषा
विद्यु(२)द्विद्युद्‌घनश्रीः स्मितवदनविधु-
द्योतलक्ष्मीप्रचारः ।
आयान्त्वित्युक्तिहस्तप्रथनमधुरिमा-
यत्क्रमादाविरासीत्
कंसारातेस्तदासां प्रतिपदमुदभूद्गाढमाकर्षणाय ॥

यामुने सममशोककानने
गोपकैः स विहरन्मुदान्वितः ।
ऐक्षि भूसुरवधूभिरीक्ष्यतां(३)
ध्यानमेव गतमित्यमानि च

यत्र भूसुरभार्यास्तं सुरभाव्यपदं(४) ययुः ।
अशोककाननं तत्तु बभूवाशोककाननं(५) ॥

ततश्च ताः सपुलकपुलकतया तमवलोकयामासुः ॥

तथाहि लोकानां गीतं
कृष्णमपश्यन् पीतदुकूलं ।
विभ्रतमर्चिततममर्चि(६)र्नवघनचपलारुचिमूलम्
॥ ध्रु ॥

(१) ददातेः शः दद्‌धातोर्वा । (२) विद्योतमान ।
(३) दृश्यत्वं । (४) सुरैःपूज्यचरणं ।
(५) न विद्यते शोको यत्र तादृशं आननं यस्मात्तथाभूतं ।
(६) ज्वालाभासोर्मपुंस्यर्चिः ।

शिरसि शिखण्डावलिमुरसि
स्रजमपि दधतं गिरिधातुं ।
इन्द्रधनुर्युगमध्यमधुरतर-
सन्ध्यां ध्रुव(१)मतियातुं(२) ॥
उदयदरुणादरकिरणां
तम इव विरचितं चिरतरशोभं ।
नवकिसलयदलवलितं
कचकुलमनु(३)कलिता(४) खिललोभम् ॥
भालोपरिमिलदलक-तातिं
श्रुतिकुमुदमुद(५)ञ्चि कपोलं ।
स्मितमुखमुपमितलक्षण(६)-
तारायुगधरशशधरगोलम्(७) ॥
कृतनटवेषविशेषविलक्षण-
लक्षणमुपचित(८)रूपं ।
कर्त्तुमिवामृतवृष्टिमुदितमिह-
कञ्चनजलधरभूपम् ॥

---

(१) मन्ये। (२) अतिक्रमितुं।
(३) लक्ष्यीकृत्य। (४) कृत।
(५) हर्ष। (६) लाञ्छन।
(७) उपमितं तादृशं शशधरगोलं येन।
(८) समृद्ध।

चित्रं तत्र च मित्र-स्कन्धा-
र्पितवन्धावरहस्तं ।
निर्मलकमलविधूनन-दक्षिण[1]
दक्षिणाकररुचिशस्तं ॥ इति ॥

श्रुत्वा शश्वत् स्फुटमहह ! यं द्रष्टुमाशानिवद्धा
स[2]द्रागैक्षि स्वयमिति गतस्तत्कृत[3]स्तापवर्गः ।
यः[4] कश्चिद्वा व्यवहिततया तस्य[5] लेशस्तु शिष्टः
सोऽप्यावेशान्मिलनतुलितात्तासु न स्फूर्त्तिमाप ॥

अथ भोजनभाजनानि शिरस्तः[6] कृत्य स्थितासु तासु सकलभावविचक्षणाः स्मितावलोकलक्षणा[7] स्वमुखमाधुर्य्यधुर्य्यैः सुविचार्य्य यस्य कृते प्रयस्यन्ति स्म तास्तदेतदवधार्य्य तासां वाञ्छितं किञ्चिदञ्चयन् वञ्चयंश्च काञ्चनवसनः काञ्चन वाचमुवाच ॥

"स्वागतं वो महाभागा" इति। प्रायश्चायमस्याभिप्रायः ।

अहो ! वत ! महाभागा ! युष्माकं भूरिभारता ।
जाता सङ्कोचयत्यस्मान् पृच्छ्यध्वे स्वागतं ततः
॥ इति ॥

---

(१) प्रवीणा । (२) कृष्णः । (३) आशाकृतः ।
(४) लेशः । (५) तापस्य । (६) गतिसंज्ञकोऽयं ।
(७) दर्शनस्वरूप ।

तदेवमेहि स्वागतां[१] क्रियामाचर्य्य तत्प्रत्युत्तर सङ्कथने तासां सङ्कोचं विचार्य्य पुनरुवाच आस्यता[२] मिति ॥

अस्य चायमभिप्रायः । स्वागतपृच्छादिकमपि विश्रमकार्य्यं विलम्बितं तनुते । तस्मात्तत्परिपाटी-मजहां[३] भवतीभिरास्यतामेव इति ॥

ततश्च ।

प्रणयप्रणेय[४]तया विख्यातः सोऽयमासामसङ्कोचाय स्वयं भारमवतारयन्नेव समुपविशन्नेव च ताः सदेश एव समुपवेशयामास ॥

पुनरुवाच च ।—करवाम किमिति ॥

अत्र चेदं निवेदनमिव विभावितवान् ।

अस्मान[५]य[६]मुपकर्त्तुं वाञ्छति तद्वते तु सङ्कुचन्नास्ते । इति सङ्कुचितात्मनः स्वयमनुजानन्तु[७] तत्तु भूदेव्यः ॥

अथ तासामात्मदर्शनमात्रवाञ्छाविमर्शनपूर्वमुवाच ॥

(१) एहिस्वागतमिति यस्यां क्रियायां तामिति पूर्ववत्समासनिपातः । (२) उपविश्यतां । (३) त्यक्तवानस्मि । (४) वश्य । (५) यज्ञपत्नीरूपाः । (६) कृष्णां । (७) अनुज्ञां ददत ।

"यन्नो दिदृक्षया प्राप्ता उपपन्नमिदं हि व"इति ।

अत्र चायमर्थः ।

अस्मद्दर्शनमात्रं, यद्वोऽभीष्टं तदेवयुक्तञ्च ।
तत्र हि हेतुर्यूयं, तादृशसुष्ठुस्वभावाः स्थ ।

अथ तस्य स्वभावस्य सुष्ठुभावत्वं विभावयन्पुनरुवाच ।—

मद्विषया वःप्रीतिः, कौशल्यादेव नान्यतः
सचते[1] ।
यन्मयि कुशलाः सर्व्वे, वीक्ष्यन्ते प्रीतिकर्त्तारः ॥

तत्र कुशलानां कैमुत्यं प्रत्याययन्नुवाच ।—

पश्याम्यहमिह सर्व्वं[2], मत्प्रेमांशादशेषगप्रीतिं ।
निरुपाधि यन्मयि जन्तुः प्रीणात्यन्यत्र सोपाधि ॥

तदेवं साधारणतावधारणं तथा सन्निधानस्थितिविधानमुपसीदत्[3] प्रत्याचक्षाणः[4] प्राह स्म ।—

सर्व्वत्र तु मत्स्फूर्त्तिं, न भवति बत सर्व्वदेति
पूर्त्तिर्न ।
भवतीरनु सा नित्या, यैव च मत्सन्निधानरूपैव ॥
तस्मात्पतिसुतवलितं, निलयं त्वरया प्रयात ता यूयं ।
मम च ततः सुखमुच्चैः, सामञ्जस्यं हि सर्व्वतो वह्निम ॥

---

(१) मिलिता भवति । (२) जन्तुं । (३) प्राप्नुवत् ।
(४) प्रत्याख्यानं निराकृतिः ।

तदेवं व्रजदेवकुमारतः श्रुतं सुकुमारमपीदं वचनमापातसम्पात[1] हीनतया दुःसहरचनं मन्यमानाः प्रतिवचनमाचेरुः ॥

एतत्प्रकारमपि नार्हसि वक्तुमीशः
प्रादुर्भवानिव भवानिति तत्प्रसीद ।
सत्यं कुरुष्व करवाम किमेवमङ्गी-
कारन्निजाङ्घ्रिपरिवारदशां दिशस्व ॥

विहाय सुहृदः परान् व्रजनरेशगेहेश्वरी-
पदाम्बुजमुपाश्रिताः परिचरेम तं त्वा सदा ।
इमां वचनचातुरीं वत ! तुरीयपूर्तिं[2] गता-
मुरीकुरु पुरुश्रवः ! श्रवणमङ्गल ! श्रीपते ! ॥

अथ विकच[3] मानकमलसमानलोचनः सङ्कोच-मनयश्चालोचमानः सविनयमुवाच ।—

यथा वो बान्धवा नाभ्यसूयेरन्न च मज्जनाः ।
सुरेशाश्चानुमोदेरंस्तथा कुरुत नान्यथा ॥
युष्माकं विप्रभार्य्याणां परिचर्य्यार्थमाहृतिः ।
केनापि नानुमोद्येत प्रतीक्ष्यः समय[4] स्ततः ॥

(१) सङ्गति । (२) सम्पूर्णतां ।
(३) विजृम्भते विकचते विकासेविकसत्यपि इत्याख्यात-चन्द्रिकायां ।
(४) समयाःशपथाचारकालसिद्धान्तसम्विदः ।

तदेवं लोचनतृष्णास्पदाय च कृष्णाय ताभिर-स्थिरतां प्रत्यरोचमानास्तस्य सङ्कोचमालोचमाना-स्तत्र नातिविलम्बमानास्तदाज्ञामालम्बमानाः पत्रा-मत्रादिषु भोज्यं संयोज्य निजकुप्यपात्राण्याददमानास्तेन सादरं विसर्ज्यमानाः सखिभिरनुव्रज्य-माना मुहुः परावृत्य तमेव विलोकमाना भृश-सम्वर्द्धिकृच्छ्रं कलयमानाः कथं कथमपि गृहगतिं प्रति सचमानाः[1] स्ववंशप्रथमानां[2] यशःप्रथां प्रथयमाना[3] वेश्मान्तः प्रविशन्ति स्म ॥

किन्तु ।—

या यामाशा[4] महह ! वनितास्ता द्विजानामपश्यन्नाशापूर्तिं प्रतिपदमसा[5] वाचरन् तासु शीघ्रं ।
सा[6] हि श्यामं कनकवसनं वीक्षिताकारमासां वारम्वारं दृशि विदधती चित्रभावं चकार ॥

एवं चिरेण गृहं गृहीतवतीषु तु तासु ॥

अन्नपात्राणि पात्राणि रत्नानां वीक्ष्य सत्त्वणाः ।
गृहाणि च गृहाधीशा न हीशामासु[7] रूहितुं[8] ॥

(१) सचसमवाये । (२) पूर्वजानां ।
(३) विस्तारयन्त्यः । (४) दिशां ।
(५) दिक् । (६) दिक् ।
(७) वितर्कितुं न समर्था बभूवुः । (८) तर्कितुं ।

अनन्तरं तु ।—

बाल्यक्रीडाक्रीतफलेनानेन मणिपूरितान् ।
स्वगृहान् वीक्ष्य ते विप्राः स्वपत्नीमतिमन्वयुः ॥

ऊचिरे च ।—

तस्मै विश्वजनीनाय[1] यास्तद्भागोनमाहरन् ।
ता एवासन्नात्मनीना दीनास्तु वत ! मादृशाः ॥
मा जीवन्[2] यस्य कृष्णाय क्रमते[3] चक्षुरादि न ।
म्रियमाणा[4]श्च मा यस्य तस्मै तन्न प्रवर्त्तते ॥
स किञ्जीवः[5] सकुब्रह्मः सुपर्वहतकश्च[6] सः ।
राजीवनयनं यस्तु नाजीवनतया भजेत् ॥
अथ कृष्णाय तृष्णान्ते दधुर्वृष्णिगुरुद्विजाः ।
किन्तु धृष्णक्कंसभिया नाजग्मुः कृष्णमीक्षितुं ॥
एकेन केनचित्पूर्वं भार्यामार्यातिगामिव ।
निवार्य्य वार्य्यता[7] लब्धा वार्य्यतायामितिश्रुतं ॥

ततश्च तेषामुचितमेव यतः ।—

क्षणादुच्चैः क्षणान्नीचैर्गतिभाजां कनीयसां[9] ।
रेणूनामिव कार्मीणां[10] विषमा रीतिरीक्ष्यते ॥

---

(१) हितार्थे तद्धितोऽयं ।　(२) न जीवतु ।　(३) प्रवर्त्तते ।
(४) न म्रियतामित्यर्थः ।　(५) कुत्सितजीवः ।
(६) समासान्तोऽयं ।　(७) निषिद्धता ।　(८) वरणीयतायां ।
(९) अल्पानां ।　(१०) कर्मशीलानां ।

पूर्वी[१] कृष्णस्य सेवायामिष्टी[२] वा तत्र[३] यः सदा ।
अधीती[४] वा भागवते भक्तपूर्वी[५] स तं भजेत् ॥

अथ हरिरिदमन्नं सख्ययुक्तानसङ्ख्यान्
निजकरकृतपूर्त्तिं प्राशयन् धेनुसङ्ख्यान्[६] ।
स्वयमपि हसितेन श्लाघयास्वादनेन
प्रतिपद[७] मुपयुज्य स्फारपर्व व्यतानीत् ॥

तत्र च तैर्भोज्यमधुरादिभिरुपयोज्यमानः श्रीकृष्णं मधुमङ्गल उवाच ।—

सुष्ठु मिष्टमिदं पाकिमतापन्नमन्नजातं याचितक[८]मप्यमृतायते नेदृशमापामित्यकममृतं[९] वा ॥

यत्खलु भूमिस्खलितं सरजसं कणमप्यभ्यवहर्तुमीहामहे । तस्मादस्माकमेव पर्णशालाभ्यर्णे ताः कुटीर्विधाय तिष्ठन्तु तत्कृतमधुरपरिपाकपाकशाकसूपपूपपुटीस्तु सवयसो वयमेव युष्मभ्यमुष्णाः[१०]

---

(१) पूर्वं कृतं येन सः । (२) इष्टमनेन ।
(३) कृष्णे । (४) अधीतं येन सः ।
(५) भक्तं पूर्वं येन सः । (६) गोपान् ।
(७) प्रतिवस्तु ।
(८) द्वे याचितायाचितयोर्यथासंख्यं मृतामृते । याच्ञयाप्तं-याचितकं निमयादापमित्यकं ।
(९) अमृतंस्यादयाचितं । (१०) दक्षाः ।

कोष्णा एव समर्पयिष्यामः । तत्राप्याहं प्राग्रहर-तया[१] प्राग्रहर एव भविष्यामि ॥

इति स्थिते को वायं दोषः किन्तु रोषभिया न वक्तुं शक्ताः स्मः ।

कृष्ण उवाच ।—

आद्यून[२]नूनमुन्मदिष्णुतया पत्रपिष्णुतामप्यति चरिष्णुर्जातोऽसि ॥

अथ सर्वेऽपि हसन्तः प्रोचुः ।—

प्रियवयस्य ! यद्यसौ परान्न[३]तारोचनमापन्न-स्तर्हि स एष एव तुन्दपरिमृज[४] इव विप्रसुन्द-रीणां तासामुपासनां घटयमानस्तद्वाट[५] तटग-मुटजमधितिष्ठन् सम्भवदाशितम्भवा[६]न्मिष्टमिष्ट विघस[७]भोजनान्निजमिष्टं रचयतु ॥

कृष्ण उवाच ।—

साधूक्तं व्यक्तमिदं भगवती[८]विदितं विधास्यामः ॥

---

(१) श्रेष्ठतया ।
(२) आद्यूनः स्यादौदरिके । (३) पराान्नः परपिण्डादः ।
(४) अलसः । (५) गृहभूमि ।
(६) सम्भवदाशिम्भवन्ती तृप्तिर्यस्मात् । (७) उच्छिष्ट ।
(८) पौर्णमासी ।

मधुमङ्गलस्तु सक्रोधमिवोवाच ॥

युवराज! गर्द्धनतया[१] कुक्षिम्भरयस्त एत एव मुहुरशनायां[२]स्मरयन्तः सर्व्वत्र च घस्मरा भण्यन्ते। भिक्षायामक्षामसमुद्यमतया सर्व्वान्नी-ना[३]श्च लक्ष्यन्ते न तु वयं ॥

सर्व्वेऽप्यूचुः।—

वावदूकविप्रतया भवानेव यायजूकतायां[४] जञ्ज-पूकता[५] मासीदत्र पुरोडाशानां[६] दन्दशूक[७]-स्तदा स्वादाय जागरूकतामासादयति।

अस्माभिस्तु भवज्जातेर्द्विजातेः परीक्षैवाचरितेति।

तदेवं हसत्सु सखिसभासत्सु स्वयमाशित-म्भवेनो[८]दनसम्भारेण भुक्त्वा सुहितः[९] सर्व्वहितः आवितवेणुर्धेनूः प्राप्य तत्तत्कथाकौतुकतस्ततर्थ[१०]-मनुगव[११]मासादितद्दृष्टिव्रजं[१२]श्रीमद्व्रजमवाप्य निजविरहदहनं निर्व्वाप्य स्वकरूपामृतेनाप्याययामास ॥

---

(१) लोभनतया। (२) बुभुक्षां।

(३) सर्व्वाशीनस्तु सर्व्वान्नभोजी।

(४) निन्द्ययज्ञतायां। (५) निन्द्यजपतां।

(६) यज्ञपिष्टकानां। (७) पुनःपुनश्चर्व्वणकर्त्ता।

(८) तृप्तिकरणेन। (९) तृप्तः। (१०) श्रीकृष्णार्थं।

(११) गवामायामेन। (१२) वृन्दं।

सखायस्तु याज्ञिकेषु जग्मिवांसो जक्षिवांसश्च वयमिति सङ्कोचेन न कश्चिदप्यूचिवांसश्च ॥

अथ कथकः समापनमाह स्म ॥

सोऽयं श्रीगोकुलाधीश ! कुलाधीशस्तवोदितः ।
आकर्षणाद्गुणा यस्य सर्व्वाननुगुणान्[1] व्यधुः ॥

इति श्रीगोपालचम्पूमनुयज्ञभार्य्या-
सदुपचर्य्यापर्य्याप्तिर्नाम
द्वाविंशं पूरणं ॥

---

(१) अनुकूलान्

# त्रयोविंशं पूरणम् ।

अथ[1] रासारम्भे निजशपथसम्भेदं[2] वेदयंस्तदिदं याचनमाचिनोमि ॥

निजे काव्ये सर्व्वं रसवलनमस्तीति लिखता
मया धाष्ट्र्यात् स्पष्टीकृतमतिरहस्यं तु यदिह ।
तदेतद्गोविन्दं व्रजविजनकान्तानुचरणं
दधद्भिर्योग्यस्य श्रवसि परमर्प्यं न सदसि ॥इति॥

अथ रात्रिकथायां ग्रथ्यमानप्रथायां मधुकण्ठः स्निग्धकण्ठं स्निग्धकण्ठमप्यालम्बमानः सम्बभाषे ॥

यत्र प्रथममिदं प्राञ्जलि व्यञ्जयामास ॥

रासकेलिरजनिष्ट जागरं
स[3] स्फुटं भवतु त[4]त्कथा तथा[5] ।
कारणं भवति यस्य यद्विधं
तस्य तद्विधतया मता[6] स्थितिः ॥

तदेतदाकर्ण्य सानन्दं निर्वर्ण्य च सर्व्वेऽपि प्रोचुः ।

युक्तियुक्तमेव चेदमुक्तं ॥

---

(१) अथेत्यत्र इह इति वा पाठः । (२) संयोगं ।
(३) केलिः । (४) रास । (५) जागरजनिका । (६) सम्मता ।

यतः ।—

परमा या रसधारा, सा यदि मध्ये वियुक्तिमायाति ।
पूर्व्वापरसम्वलना, भावान्नैव स्वरूपमायाति ॥

तस्माद्यथेच्छमविच्छेदमेवेदं प्रस्तूयतां ॥

मधुकण्ठः सानन्दमुवाच ।—

मुखं शशिमुखीगणप्रचुरमोहसंरोहणं
दृशोर्युगममूदृशां मृगदृशां दृशां घूर्णनं ।
तनुः सुतनुमण्डलीधृतिविखण्डनी श्रीहरे-
स्तदाजनि यदा जनिं[१] मृगयते स्म रासोत्सवः ॥
मुखं विधु[२] विमोहनं नयनमञ्जदृग्लोभनं[३]
रुचिर्घनरुचीहितप्रथमसङ्गरङ्गप्रदा[४] ।
रमारमण[५] रामणीयकविभूषिरामावले-
स्तदाजनि यदा जनिं मृगयते स्म रासोत्सवः ॥

अथ पूर्व्वक्रमेण पूर्णिमाश्रमे "पूर्णाः पुलिन्द्य" इत्यादि वृत्ते निर्वृत्ते सत्यपूर्णा मन्यतया राधिका-मात्रकर्षाय हरिस्तर्षं धृतवान् । कथमहो ! निभृत-मिदं सम्भृतं स्यादिति ।

---

(१) जन्म । (२) श्रीकृष्णश्चन्द्रश्च ।
(३) अञ्जानामपि दृग् लोभनं । पक्षे ऽञ्जदृशःकृष्णस्यापि ।
(४) घना निविडा या रुचयस्तासामपि ईहितो वाञ्छितो यः प्रथमसङ्गरङ्गस्तत्प्रदा । पक्षे घनरुचेर्मेघश्यामस्येति ।
(५) श्रीकृष्ण ।

तत्र काचित्तत्कुङ्कुमलिप्तचरी वनचरी श्रीराधामनु करुणया तरुणारुणकमललोचनमुवाच ॥

तव मुरलीमिव नितरां
विषमशरः स विजितो भवता ।
अहह ! न जाने कथमिव
शुष्कां विद्धाञ्च तां कुरुते ॥

तदा च वनगीर्वाणीभिराकाशवाणीयमुद्भाविता ॥

शुष्का तप्तशलाकया च परितो विद्धा सुवंशोद्भवा
सेयं ते मुरलीप्रियेति नियतं[(१)] विज्ञातवान्मन्मथः ।
तां शुष्यद्वपुषं विधाय कुब्जां वाणैर्निजैः पञ्चभि-
र्विद्धाङ्गीं विदधाति हा! वकरिपो ! त्वत्प्रीतये सम्प्रति ॥

तत्रैव चाधीरतया भ्रमन् वनमाली क्वचन तमाले कुङ्कुमालेखमिममालोकयामास ॥

अनङ्गार्चि[(२)]र्भिन्ना त्वदतिशुभमाङ्गावृतमना[(३)]
मुरल्यां राग[(४)] श्री परिमलकुलं[(५)] सम्भृतवती ।

---

(१) मन्ये ।

(२) स्वपक्षे अर्चिर्ज्वाला । कृष्णपक्षे कान्तिः । ज्वालाभासोर्न-पुंस्यर्चिः ।

(३)तदाविष्ट इत्यर्थः । कृष्णपक्षे तवातिसुभगा या काचित्तस्या अङ्गावृतमनास्त्वं ।

(४) रागो ज्ञानविशेषः । पक्षेऽनुरागः ।

(५) आधिक्यं ।

सदा श्यामां कान्तिं दिशि विदिशि चाभावयमतो
मयाप्तं कृष्णत्वं[१] तदपि न[२] हि कृष्णत्वमभितः ॥

तदेतन्निशमन[३] पूर्वकान्निशामना[४]न्मुरशमनेन तदिदं विचारितं।

हन्त ! हन्त ! राधाया एवेयमसाधारणावागर्थवती लिपिः सेयं सम्भवेदेवमपि कुलजन्मतया तया मन्मथ-विकारमाच्छादयन्त्या स्थीयते।

तस्मान्निखिलावृतिध्वंसनं वंशीशंसनं परं मम शरणमिति।

तदेवं राधासुधादुर्भिक्षार्द्दितस्तितिक्षामभजन् स पुनर्वेणुशिक्षाभिक्षामेव केवलां सेवते स्म।

यत्र वर्षा अपि तर्षाकरतया व्यतीयुः। समृद्ध-गर्द्धनतया शरदप्यर्द्धं वर्द्धते स्म ॥

तत्राह रहः शिक्षा तु यथा।—

यह्यर्थाकर्षविधिं हरिर्मुरलिकाशिक्षासु तस्याः क्रमा-
त्तर्क्क तर्हि गता[५]श्चिरात्परपरक्षोभास्त एते तया।
कम्पो घूर्णनमासनाद्विचलनं द्वित्रक्रमावास्तुतो
निष्क्रान्तिर्वनवर्त्मवर्त्तनमुपव्रज्या च दूराध्वनि ॥

---

(१) अनङ्गार्त्तिभिन्नत्वादि लक्षणं कृष्णधर्म्मत्वं।

(२) न प्राप्तं।

(३) श्रवण। (४) दर्शनात्। (५) प्राप्ताः।

किञ्च ।—

राधाकर्षकृते कृता मुरलिकाशिक्षाथ या या तदा-
सा सा तेन सदाशया वलयितास्यासीदलं निष्फला ।
तामेतां नतकन्धरः सपुलकं वन्देऽहमुच्चैः सदा
या कृष्णस्य मनोरथावलिमहो ! पूर्णामकार्षीन्मुहुः ॥

तथाहि ।—

तदेवं प्रावृषि वेणुशिक्षापरीक्षातृष्णागसौ कृष्णः समयं प्रतीक्षमाणः शरल्लक्ष्मीमागतां लक्षितवान् ।

लक्षयन्नेव च विचारितवान् ।

इयं खलु स्वभावतः स्वच्छा मल्लीलापरिच्छदतां यदि गच्छति तदा प्रमदावलिमृच्छामः । किन्तु समयमयतया(१) सर्व्ववश्यकारिणामपि भावं(२) वश्यं कुर्व्वतीमेनां पश्यामि । यथा मामपि राधा । ततो यद्यस्यामपि(३) वश्यतां व्यस्यन्(४) भावान्तरभावितत्वं(५) भावयितुं प्रभवामि तदा राधायामपि तदाधानाय निर्व्वाधतां(६) गतवानस्मीत्यवदधामि ॥

(१) कालस्वरूपतया ।　(२) पदार्थं ॥
(३) शरल्लक्ष्म्यां ।　(४) विस्तारयन् ।
(५) युक्तत्वं ।　(६) समर्थयतां ।

तदेवं विचारयन्नग्रेचरं मङ्गलं विलोचयन्नुवाच।

अहो! श्वोवसीयस[1]मेवाध्यवसीयते[2]।

यतः।—

खञ्जनखेलाराञ्जित, कञ्जं नयन नयन् विधिः स मम।
राधामञ्जुलनेत्र, स्फुरदाननमाशु सञ्जायेता[3]॥

तदेतच्छुभशकुनमनुभवता यावत्पौर्णमासं[4] मासमेव सर्व्वत एव वेणुधरेण वेणुस्वनचर्य्या सञ्चार्य्यते स्म॥

ततश्च।—

वंशीकलादुदयतः शरदि प्रभाता-
न्मल्लीभिरप्यतुलफुल्लदशां गताभिः।
रात्रीर्निभाल्य मुहुरुल्लसिताः स राम-
भ्राता रतिं[5] रतिकृते कृतवल्लवीभिः॥

ततश्च तूर्णमेव पूर्णचन्द्रावहुतिथी[6] तिथिरतिथि-रिव तस्य प्रसन्नतां विधातुमासन्नवती॥

तत्र चाह्नायाह्नि वनविहारशाली वनमाली धेनू-रादाय व्रजागमनं विधाय सायं प्रत्यवसाय[7] निज-चन्द्रशालिकालिन्दं विन्दमानः स्फुटमादित्येऽस्तं

(१) मङ्गलं। (२) निश्चीयते। (३) मेल्यताम्।
(४) अव्ययीभावे समासान्तः पौर्णमासीपर्य्यन्तं।
(५) रुचिं। (६) बहूनां पूरणी। (७) भुक्त्वा।

गत्यस्थिते सतारासमुदयं तं सान्द्रचन्द्रिकं चन्द्रमुदयं तं पश्यंस्तद्दृश्यभावविशेषश्लेषत[१]स्त-दिदं चिन्तयामास ॥

जागुड[२]पिण्ड सपिण्डं[३], किम्विधुविम्वं तदेत-
दुन्नमति ।
किम्वा रोषारुणरुचि, मुखमिदमुद्भाति कामस्य ॥

पुनश्च ॥

कुङ्कुमरससङ्कुलमिव, किं विधुविम्वं पुरःस्फुरति ।
अथवा राधामुखमिद, मुदयति यमुनावनात्
पुरतः ॥

तत्र यदि विधुविम्वमेवेदं तदा तदिदं विभाव्यते ।
पूर्णश्चन्द्रोऽयमैन्द्रीं हरितमनुगतः प्रेयसीं दूरदशा-
दस्या वक्रं विलिम्पन् घुसृणशवलितेनेव
शश्वत्करेण ।
तद्दयाजान्मामसूदक् कृतिमुपदिशती वाद्य सद्यः
किशोरं
शुभ्रात्मा यस्तदीयं भवति विरचनं
सर्वतो भद्रमेव ॥

किञ्चायमिदमप्युपदिशन्निव सम्भाव्यते ॥

---

(१) योगबः ।　　(२) कुंकुम ।　　(३) तुल्यं

विधुरहं हरितः[१] प्रतिदिक्पति-
प्रणयिनी रमयन् जनशर्मदः ।
त्वमिह किं नु विधो ! स्थगितायसे
पररमारमणं प्रति सम्प्रति ॥

तदेवं सर्वथैव दैवानुकूल्यतश्चन्द्रचन्द्रिकासान्द्रित शुभस्तस्य ककुभमेव गन्तुं शन्तु[२]रस्मि ॥

यतः ।—

निखिलमेव वनं विधुनामुना
दिशि दिशि प्रतिरञ्जितमीक्ष्यते ।
मदनुकूलमिदं शकुनं भवे-
दिति गतिर्मम तत्र शुभावहा ॥

अथ यदि कामाभिधानस्य कोपधामाननमिदं तदा विषमवाणस्य तस्यानुयानमेव भवनिर्वाणं विश्राणयति[३] ॥

यदि च तस्या[४] एव कान्तिसदनं वदनमिदं विद्यते तदा तु सुतरामेव तद्दिशं प्रविशतस्तन्मम शर्म्म मर्म्म प्रविशतीति ॥

---

(१) दिशः । (२) मङ्गलवान् । (३) ददाति ।
(४) राधायाः ।

किञ्च ।—

प्रयाणे वर्त्तते चित्तं नृत्यत्पक्षि च दक्षिणं ।
तस्माद्वृत्तं[1] च नृत्यश्च कान्ताभिर्भविता मम ॥

तदेतदुदृङ्क्य निष्टङ्क्य च प्रणयपणासन्तुष्टं दामादि[2] कुमारचतुष्टयं सङ्गतः प्रसज्य तद्द्वारा निद्राव्याजादन्यान् द्वारपालकतया तत्रैव सम्वलय्य निभृतकृतप्रतीहारत[3]श्चरणविहारतस्तामेव हरितं हरिर्मुरलीधरकरतयानुसरन् दिनकर-तनयातीरमन्ववतीर्णवान् ॥

अवतीर्य्य च विचारितवान् ।

न कुहूकामाननमेतदस्ति
प्रयाति यच्छुभ्रदशामुदश्चन् ।
वियोगि राधास्यमिदं च न स्या-
द्यतः कलङ्कादि भवेद्विभेदि ॥

ततश्च मृगलाञ्छन एवायमिति निश्चित्य पुनर्विचारितवान् ॥

शार्वरं[4] शर्वरीशानः संहर्त्तुं सिंहतां गतः ।
पूर्वपर्वतमारोहन् सर्वं पर्वति[5] पर्वणा[6] ॥

(१) वर्त्तनं ।　(२) दामसुदामवसुदामकिङ्किणि ।
(३) द्वारतः ।　(४) शार्वरं त्वन्धतमसे घातुके भेद्यलिङ्गकं ।
(५) पूरयति ।　(६) पौर्णमास्या ।

किंतु ।—

चन्द्रमा राधिका-वक्त्रमनुकुर्वन्विराजते ।
तदाकारमिदं चेतः कथं मम विदूयते ॥

पुनर्विभाव्य चन्द्रं प्रति प्राह स्म ॥

अनुपमरुचिरस्मि सर्वलोके-
ष्विति भगव[1] न्नमृतद्युते न दृप्य ! ।
ननु भवदुपमा दशापि तस्या-
श्चरणनखा विलसन्ति राधिकायाः ॥

तदेवं विचिन्त्य समुचितस्थानं विचित्य दूरत-श्चतुरांश्चतुरः कुमारान् वर्त्मनि वर्त्तमानतया विधाय स्वयमुपसरित[2] मुच्चतरचत्वरमात्मना रूढं सन्धाय व्रजदिशमवधाय वेणुं मुखे निधाय वादयिष्यमाण-श्चिन्तयामास ॥

प्रथमं राधागमनमेव साधयामः ॥
तां विना फलस्य च विफलतां कलयामि ॥

तदागमनकमनीयतया तु रमणीनामन्यासा-मप्यागतिर्मम मनसि रमणीयतामायाम[3]-मानयति[4] ॥

---

(१) सोपहासे । (२) सरितः समीपे ।
(३) दैर्घ्यं । (४) द्विकर्म्मकमिदम् ।

किंतु तदेव भव्यं कथं भव्य[१]मित्येव प्रतिपत्तव्यं । आं आं वाणाविद्याप्रवीणेनैव वैणविकेन मया तथा योक्तव्यं यथा तेन सैवाशिष्टाकृष्टा च भवति नापरेति तदेवं सम्प्रधार्य्या[२]वधार्य्य च तेन वेणुमेवं वादयिष्यामीति यदा विचार्य्यते स्म ॥

तदा च ताभिः सान्द्रचन्द्रिकचन्द्रमसः सन्दृष्टिवशतया सांदृष्टिक[३]मिदं परामृष्टं हन्त ! स खल्वयमोषधीशोऽप्याधिव्याधितजनानस्मानद्य सद्यः प्रतिरित्सेदेव[४] न तु चिकित्सेदिति ॥

ततश्च तत्क्षणं किञ्चिद्विलक्षणं शशलक्ष्माणमालक्ष्य वृन्दा चेदं चिन्तितवती ।

हन्त ! हन्त !! ।—

तासां कृष्णवियोगाग्निवाष्पैर्विष्वग्विनिःसृतैः ।
आदर्श इव पश्यान्ध[५] श्चन्द्रमा मन्दतां गतः ॥

अथ चमूरुदृशाममूषां मुहुरपि सम्मुखतया वशीकृतिमिवापन्नः शशी स्वादिशि तदा मदादुन्नतेन कृष्णस्य गभस्तिशतेन तस्य स्फूर्त्तिं समानिनायेति तदवलोकनाय व्याकुलताकुलायमानासु तासु ॥

(१) भवनकर्तृ । (२) विचार्य्य ।
(३) सांदृष्टिकं फलं सद्यः । (४) हिंसेदेव ।
(५) मलिन इत्यर्थः । वाष्पैरन्ध इवादर्श इति पाठान्तरं ।

शारदेन शशिना हरिं प्रति
प्रस्थितिः सममयोजि सुभ्रुवां ।
प्रत्ययोजि किल तेन सा(१) तदा
मंक्षु तस्य मुरलीकलेन तु ॥

यतस्तदैव च ।—

अनुरागेण रागेण वर्णभागेन माधुरीः ।
कलयन्तं(२) कलं वेणोः कलयामास केशवः ॥

तत्रानुरागो यथा ।—

साश्रुकण्ठनयनं सकण्टकं(३)
कम्पसम्पदयनं स माधवः ।
राधिका-विरहजाधिबाधितः
श्रव्यवेणुकलभव्यमाजगौ ॥

रागो यथा ।—

रागमीदृशमसावचीक्लृप-
त्प्राप राग इव यः प्रियाहृदि ।
यः स्फुटं न रसितः पुरा भुवि
क्वापि नामृतवदङ्ग(४) विश्रुतः ॥

---

(१) प्रस्थितिः। (२) विस्तारयन्तं ।
(३) रोमहर्षेऽपि कण्टकः। (४) पुनः।

तत्प्रणाद[१] मयवर्णविभागो यथा ।—

अयि ! सुधांशुसुधामुखि ! राधिके !
मधुरभावधुरामधुमाधवि ! ।
मयि सदा दयिते[२] ! दयिते[३] ! चिरं
तव गुणैर्हृदयं मम दीर्य्यति ॥

अथ वाणा इव वेणुनादे प्रवीणाः स्वयमसावनेन[४] तस्याः सिद्धां विद्धतामवबुध्य सुध्यग्रणीरन्याश्च तन्न्यायमाजुहाव । तत्र वर्णविभागस्त्वेवं ।

अहह ! गोपसुता ! मम गीःसिता[५]
धरथ हन्त ! मनोरथदुर्धरां ।
इति भवामि भवज्जितलज्जित[६]-
स्तदुदयं सुदयं कुरुत प्रियाः ॥

अथ यदा पीतवसनेन गीतमेवमुद्गीतं तदा तासामेव कर्णाभ्यर्णतामागतं तत्र च यथायथमभिरुचितमेव चित्तीकृतं[७] रागादिकमवधार्य्य निवार्य्यतातिक्रमनिरतास्थिरताः प्रतस्थिरे ॥

तत्र च कृष्णाभिमुखतामेवातस्थिरे[८] नान्यत् किमपि ॥

(१) अनुरागजःशब्दःप्रणादः ।　(२) हे दयायुक्ते ! ।
(३) प्रिये ।　(४) वेणुनादेन ।　(५) वद्धा ।
(६) भवतीभिरादौ जितः पश्चाल्लज्जितः ।　(७) ज्ञातं कृतं ।
(८) अङ्गीचक्रुः ।

तथाहि ।—

या यत्र कर्मणि गतास्तदनु स्थितिं ता
विस्मृत्य तस्य मुरलीश्रुतिदिव्यनेत्राः ।
दृश्यप्रभं तमभिवव्रजुरश्रुनीर-
स्रोतस्वतीमयतया निजजीवनेशं ॥

तदा च ॥

गोकुलकुमुदाक्षीणां, कुमुद्वतीनां
तदा तथा कुमुदां(१) ।
अकुरुत कुमुदाधीशः, स तदा शतधा परां सुमुदं ॥

तदा च ।—

शुश्रूषन्त्यः पतीन् काश्चिन्निरुद्धाः प्रस्थितिं प्रति ।
कृष्णं तत्रैव ताः प्रापुरित्येवं मुनिजल्पितं ॥

अत्र च स्निग्धकण्ठेनान्ताश्चिन्तितं ।

ताः एताः खलु पाद्मोत्तरखण्डदृष्टदण्डकारण्य-गतमुनिवर्य्यतया साधकचर्य्यस्तदानीमपि लक्ष्मी-वर्य्याणां राधिकादिनित्यतद्भार्य्याणां स्वकाम्यं साम्यमनवाप्ता यथा त(२)दवाप्य श्रीकृष्णमवाप्ता-स्तथा वर्ण्यमिति स्थिते ॥

---

(१) कोः पृथिव्या मुदां हर्षाणां ।
(२) येन प्रकारेण । स्वकाम्यं साम्यं ।

"तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः[१] ।
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः" ॥
इत्येव प्रतिपत्तये कल्पते ॥

उक्तश्च पाद्मोत्तरखण्ड एव ।—

"ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले ।
हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात्"
॥ इति ॥

किन्तु "नासूयन् खलु कृष्णाये" त्युक्तदिशा[२] तदीयास्तु न तद्दूहितुमीशामासुरिति ज्ञेयं ।

यच्च "जिघांसयापि हरये स्तनं दत्त्वाप सद्गति" मित्यस्य सद्देशेन तमेव परमात्मानं जारबुद्ध्यापीत्यादिना साधनस्य निकर्ष[३]रूपमपेराभिधेयं फलस्य तु सर्वोत्तम[४]रूपत्वं प्रतिपद्यते ॥

तच्च युक्तं यतः ।

तासां कृष्णः परात्मा न तु पर इति[५] न
प्राप्नुयाज्जारतां त-
त्प्रान्ते प्राप्तः पतित्वं ददृशुचितमतिं
जारमत्यापि वित्तः[६] ।

(१) जार इति प्रतीत्यापि प्राप्ताः । (२) उक्तादेशेन ।
(३) निकृष्टता । (४) परमोत्तमेति वा पाठः ।
(५) हेतोः । (६) विचारितः ।

यद्वद्वक्यां जिघांसावपि समुचितम-
त्यर्पणाल्लाल्यभावं
लेभे धात्रीनिभायां स्थिरतममिह य-
द्युक्तितस्तत्फलं हि ॥

तथापि ।—

"उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ।
द्विषन्नपि हृषीकेशं किमुताधोक्षज-प्रियाः" ॥

इत्यनुसारात् प्रेमांशेन तु तासां महदेव वैलक्षण्य-मनुगतं ।

न च नित्यकान्तास्वपि प्रकटलीलायां जार-बुद्धिर्दृश्यत इति तस्याः श्लाघैव वाच्या ॥

यतः ।—

या नित्या एव कान्ता दनुजकुल-रिपो
राधिकाद्या न तासां
श्लाघां सा जारताधीरचिरजनि[१] रियात्
किन्तु रागः स नित्यः ।
तां[२] भित्त्वा विघ्नकर्त्रीं द्रुतमुदितवता
तेन[३] तं नित्यकान्तं

(१) तत्कालजन्मा । (२) जारताधियं । (३) रागेण ।

प्रापुस्ता नापरासा[१] मिव वपुरपरं
　　　　स[२]प्रतीत्तेत तासां[३] ॥ इति ॥
तदेतद्विचिन्त्य स्फुटं प्रोचे ॥ ततस्ततः ? ।

मधुकण्ठ उवाच ।—

अभिसृतवतीनां विशेषो यथा ।—

श्रुते मुरलिकाकले निजनिजाह्वयप्रापके
समं व्रजनतभ्रुवः सपदि फुल्लदेहा वभुः ।
अनङ्गमपि वर्द्धितं विहितवानहो यस्तदा
कथं न किल वर्द्धयेन्निजकलावलेनाङ्गनाः ॥

किञ्च ।—

सत्वरप्रसारवत्त्वसत्त्वधामहायिनी[४] ।
सर्वगुर्वहार्य्यकूटवारणातियायिनी[५] ॥
नाथमेकमन्वनेकदारसम्पदर्पिणी ।
ओघमोघ[६]मन्वनन्तभक्तलोकतर्पिणी ॥

---

(१) अन्तर्गूढ़गतानां ।　(२) रागः ।　(३) राधिकादीनां ।
(४) सत्वरं प्रसारवत्त्वं येन तथाविधं यत् सत्वं वलं तेन धाम निजस्थानं त्यजन्ती ।
(५) सर्वगुरूणां यो न हार्य्यः कूटः कौटिल्यं तेन यद्वारणं निवारणं तदतियायिनी । पक्षे सर्व्वतो गुरवो ये अहार्य्य-कूटाः पर्वतश्टङ्गाणि ।
(६) ओघो वृन्देऽम्भसां रये ।

लोलकेशशैवलाञ्चिकर्णपूरचक्रिणी(१) ।
पुष्पजातनिष्प्रपातशुभ्रफेनचक्रिणी(२) ॥
उच्छलन्नवीनमीननेत्रनीरगात्रिणी(३) ।
अग्रिमाध्वमात्रपात्रसम्मुखानुयात्रिणी(४) ।
मन्दचालवाहुनालपाणिपद्मशालिनी ॥
अच्छवालकच्चपाङ्गवत्सजन्म(५) जालिनी ।
जूति(६) धूतिकृ(७)त्कुटीर तीरधीर गामिणी ॥
ऊरुभूरुहालिपातसम्प्रपातकामिनी ।
काञ्चिकाञ्चि(८) कङ्कणादिशिञ्जदम्भसञ्जिनी ।
प्रायश(९) स्तु हंससङ्घशब्दितानुरञ्जिनी ॥

---

(१) लोलाः केशा एव यानि शैवलानि तदञ्चिनी ये कर्णपूराश्चक्रवन्मण्डलाकारास्तद्वती । पक्षे लोलकेशा इव शैवलास्तदञ्चिनः कर्णपूरा इव ये चक्राश्चक्रवाकास्तद्वती ।
(२) पुष्पसमूहानां यो निष्प्रपातः स एव शुभ्रफेणास्तेषां यः समूहस्तद्वती । पक्षे पुष्पजातनिष्प्रपातश्च शुभ्रफेणाश्च ताभ्यां युक्तं यच्चक्रं जलावर्त्तस्तद्वती। चक्रो गणे चक्रवाकः चक्रं सैन्यरथाङ्गयोः । ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि । अम्भसामपि चावर्त्त इति विश्वः ।
(३) उच्छलन्नवीनमीनानामिव नेत्राणां यन्नीरं तद्युक्तं यद्गात्रं तदस्यामस्तीति । पक्षे उच्छलन्नवीनमीना एव नेत्राणि यत्र तादृशं नीरमेव यद्गात्रं तद्यस्यामस्तीति ॥
(४) अग्रिमाध्वमात्र पात्रं स्थानं यस्य तादृशं यत्सम्मुखत्वं तद्यस्यां यात्रायां तद्वतीः ।
(५) उरो वत्सं च वक्षश्च । (६) जव ।
(७) दूरीकृत । (८) काञ्चिकया सङ्गमि । (९) मन्ये ।

तूर्णतूर्णघूर्णनादिसङ्कुलाङ्गनर्तिनी ।
पूर्णपूर्णभावगूर्णा[१] जाड्यजातवर्तिनी ॥
वेशवस्त्रसन्निवेशचञ्चलत्वभङ्गिनी[२] ।
तत्तदर्थवैपरीत्यकारिवेगसङ्गिनी ।
यन्निमित्तमात्मसर्वसङ्गभङ्गभाविनी[३] ।
यत्र सर्वनामरूपविस्मृतिश्च भाविनी[४] ॥
श्यामधामसुष्ठुवाममेतमत्रसद्भवं ।
सिन्धुतुल्यमुत्तरङ्गदङ्गमाशु माधवं ॥
पूर्व्वपूर्व्वभिन्नयाति[५] रुत्तरात्तसङ्गतिः ।
आपगा[६] लिसम्मिताप सेयमालिसंहतिः ॥

तास्तत्र च ।—

शुभंयु[७]वनमञ्जुले सवितृजारुचा सङ्कुले
प्रसूनगणराजिते भ्रमरकोकिलभ्राजिते ।
सुगन्धमरुदाश्रिते कुमुदबन्धुशोभाचिते
समस्तगुणनिश्चिते निधितया चिरं सञ्चिते ॥
स्थले मणिजचत्वरं समधिरुह्यतं सत्वरं
विचित्रमुरलीकलं विरचयन्नमुद्यत्कलं[८] ।

---

(१) उद्यतः ।　(२) भंगस्तरंग ऊर्म्मि ।
(३) भावयित्री ।　(४) भविष्यति ।
(५) गति ।　(६) आपगा नदी ।
(७) मनोहर ।　(८) उद्गच्छत्यःकला यत्र ।

घनाघनघनाश्रियं तडिदभीषु[(१)]वस्त्रप्रियं
मणिद्युति विकस्वरं ददृशुरङ्गिदिव्यस्मरं ॥

युग्मकं ।—

निर्माय कृष्णमभितः स्थितिमत्र गौरी
पंक्तिस्तदा तमवलम्बितुमुत्कचित्ता ।
मध्ये तमालमुपलभ्य सुवर्णवर्ण
वल्लीततिर्विलसतीति किल व्यलोकि ॥

अथ ।—

वंशीदूतिकया निमन्त्र्य कलिताः[(२)]
सौरभ्यधारासखी-
सङ्गैः साद्दतिभूरिदूरसरणौ रानायिताः सुभ्रुवः ।
प्राप्ताः स्वान्तिकमात्मरोचिरमृतान्यप्याशिताः[(३)]
प्रेयसा[(४)]
तृप्तिं नैव ययुर्न वा विरमितं तद्दानकर्मामुना ॥

प्रत्युत ।—

नव्याः कलाधराः शुभ्रा भ्राजिनक्षत्रमालिकाः ।
अराल[(५)]लोचनाः कृष्णचकोरं तृष्णजं व्यधुः ॥

---

(१) अभीषुः प्रग्रहे रश्मौ । (२) आहुताः ।
(३) भोजिताः ।
(४) प्राप्ताः स्वान्तिकमात्मकान्तिसुधया सम्भुक्तिमप्यापिता ।
इति वा पाठान्तरम् । (५) कुटिल ।

अथ कृष्णास्तत्र सतृष्णमचिन्तयत् ।—

अहो ! नवतारुण्यस्य पुण्यसम्पद एता वरलावण्यस्य मत्केतव्यनव्यपण्यश्रेण्यस्त्रिलोकीलक्ष्म्याश्चूडामणयः स्फुरन्मन्मथस्य जीवनौषधयः कुमुदायमानमदीयलोचनयोर्नवीनाश्चन्द्रकलाः सहावतीर्य रुचिं वितीर्य विराजन्ते ॥

तदेवं स्थिते ।—

कृष्णापाङ्गशरः साङ्गं भित्वापाङ्गशरं मम ।
मनोरथिनमुद्भेत्तुं किल प्राविशदन्तरं ॥

इति ताः प्रत्येकं प्रत्येतव्यं चक्रुः ।

वस्तुतस्तु । हरेस्तासु सर्वासु लतास्विव द्वित्रलवसेवनपूर्वकमपूर्वतया भ्रमन्नेत्रभ्रमरयुगलं कमलिन्यामिव राधायां निर्बाधां स्थितिमातस्थे । आस्थितवतीति च तत्रेदं स तु विचारयामास ॥

शोभायाः शुभदा शोभारमायाः परमा रमा ।
सेयं मल्लोचनस्यापि राधिकाचारुलोचनं ॥

तदेवं सति सा च तदीयतादृशदृशः स्पर्शतः कम्पसम्पदुन्मीलनरसप्रशरवशतया क्षोभं लभमानापि तं प्रति प्रहितलोभां शोभामुवाह ।

———

अत्र च प्रश्नोत्तरमयं पद्यं ।—

स्मेरयोः प्रति[1]विधूद्यदस्रयो
राधिकानयनयोस्तुलाम्वद ।
शारदं विकचमेचकोत्पलं
यन्मरन्दझरमोचि तत्किमु ॥

तदेवं स्थिते ताः पुरःस्थिता यद्यप्यनवद्यसम्वनन[2]प्रवीणवेणुविद्यामदिता लज्जामुज्जहति स्म ।

तथाप्यवितथाभिजात्यतया नम्रताकम्रामुनिव्रतमेवानुववृतिरे ॥

श्रीकृष्णस्तु यदा विशिष्टललनामध्यमध्यावसन्नेव मद्योतिष्ठ तदा तासां परमदुर्लभपरिमलमात्राणामपि वैणवमधुरगीतमधुमदिततया स्वयमेव कृताभियात्राणामागतिं दृशोः पथि निर्माय सनर्म्मस्मितस्तद्विधां वुद्धिमुपधया[3]लब्धशुद्धिमवधारयन्निव तन्मुखादुन्मुखानुरागजागरूकवागमृतमास्वादयितुं तासु च समुत्सुकतामासादयितुं निजान्तिकस्थितियाञ्चागर्भेण स्फुरदुपेक्षा सन्दर्भेण वचसा ताः क्षोभयामास ॥

---

(१) कृष्णास्याभिमुख्येन । (२) वशक्रिया सम्वननं ।
(३) उपधा धर्म्माद्यैर्यत् परीक्षणं ।

यथा ।—

महाभागा ! युष्मन्मिलनमभवन्नः शुभकृते
ततः पृच्छाम्यत्रागमनमिदमव्याहतमिति ॥
तदेतावत् क्लेशादभिगमनतः सङ्कुचितधीः स[1]
भूयः सम्पृच्छे भवदभिमतं किं नु करवै ॥

तदेवमत्रादरज्ञापनया ज्ञात्वाप्यज्ञानविज्ञापनया च स्वपूपेक्षापेक्षयोरेकतरतया तद[2]भिप्रायं प्रायशो वोढुमसमर्थासु तासु तत एवाभिव्यक्तकिञ्चिदर्थासु पुनः सनर्म च तथा वाचं प्राह ॥

पृच्छतोऽपि पुरतो मम भव्यं
मौनमेव कुरुथ प्रतिगी[3]र्यत् ।
तद्भवद्व्रजगृहे गृहभाजां
किं निरामयमथ प्रतिभाति ॥

ततश्च मिथः सस्मितनिरीक्षितासु तासु पुनरुवाच ।
तदिदं दुरभिप्रायं,वोढुं भवदीयमस्मि न समर्थः ।
स्वयमिह यूयं तस्मा,त्कथयत सङ्कोचमुद्धूय ॥

पुनरतीव सङ्कुचतीर्निरीक्ष्य योजनाविशेषश्लेषमयतयापि तथा प्रथयामास ॥

---

(१) अहं ।　　(२) कृष्णास्य ।
(३) गिरं गिरं प्रति ।

अथ न भवति कार्य्यं ब्रूथ त[1]न्नेति वुद्धं
व्रजमनु चलचित्ता यात नाध्वं[2] मयात्र[3]।
वनमिदमतिघोरं रात्रिरत्रातिघोरा[4]
स्वयमतिशयिघोरप्राणि-वृन्दैः[5] परीताः ॥

अत्र नाध्वमिति न यातेति वा योजना। पुनस्तद्वदेव श्लेषयितुं सोपानविशेषं चकार। न चेदृशी स्वैरता भवादृशी भवति।

यतः।—

मातापितरप्रमुखाः, सहजाः पतयश्च वः सन्ति।

इति॥ पुनः सहासमाह स्म।—

श्रूयन्तेऽपि तनूजा इति।

अत्र कथञ्चिन्तयामास।

वृन्दापौर्णमासी-सम्वादगतसिद्धान्तानुसारिधिया "सिषेव आत्मन्यवरुद्धसौरतः सर्व्वाः शरत्काव्यकथारसाश्रया" इत्यनेन प्रतिपन्नस्य तत्रकीयरमस्यालम्बनवैरूप्याद्वैरस्यापन्नताभिया च तदिदं परिहसितमेवेति विद्वन्मततया व्यक्तीकरिष्यामीति।

---

(१) तस्मात्। (२) न आध्वं। आसउपवेशने।
(३) निकटे। (४) रात्रि।
(५) पराणि यानि घोरप्राणिनां वृन्दानि तैः परीताः।

अथ तदेव स्पष्टमाचष्ट ।

तदेवं ताभिः सह रन्तुं कृतवंशीध्वनिः स तु सर-सानां शिरोमणिर्यद्यपि तासामुत्पतित एव स्व[१]-मात्रसात्कृतपतिभावानामत्यत्र पतिरिति प्रतीति-र्लोकसम्वदनवशम्वदतामात्रमयी केवलस्व[२] सङ्गम कामनाव्रतश्चापराङ्गसङ्गमरूपविरूपतानिर्जयीति विशदमर्थं तासु स्वीयकान्ताभावसमुत्पत्त्यन्यथानु-पपत्त्या सम्भावितवान् ॥

यद्यपि च तासामजातपुत्राणामपि देवरम्मन्य-पुत्रादिषु पुत्रताऽव्यवहारः केवलं सन्निहितवालक-विषयकवत्सलतास्वभावाकारस्तत्सम्वन्धाभिमानस्तु वहिरेवाचार इत्याप्तवचनान्निर्धारितवांस्तथापि तत्तदुल्लेखनकर्मणा नर्ममात्रमाचरितवान् ॥ तदाचर्य्य च तद्बन्धूनामन्धायमानानामपि तदन्वे-षणानिर्व्वन्धाद्भयं विचार्य्य सामर्षमिव विवक्षित-मुवाच । कथमिह तत्तद्भयं कुरुथेति ॥

अत्र च षष्ठी पञ्चमी वा समस्यते ॥

किञ्चात्र खण्डमखण्डञ्च पद्यं यथायथमनूढा ऊढाभासाश्च ता दृष्ट्वाचष्टेति गम्यते । तत्रानूढाः

---

(१) कृष्णा ।    (२) कृष्णा ।

प्रति सहजा इत्यन्तं। ऊढाभासाः प्रतिश्रूयन्तेऽपि तनूजा इत्यन्तं। अखण्डन्तु सर्व्वाः प्रतीति ज्ञेयं॥

पुनश्चार्थध्वनिसम्वलनया चित्तमान्दोलयामास॥

दृष्टं मद्दनमत्यपूर्व्वकुसुमैर्दिव्यर्त्तुना पूजितं
द्योतैश्चर्चितमिन्दुना यमुनया चात्मानिलैर्नर्त्तितं।
सामग्रीयमुदेति देवनिचितास्माकं विहारक्रमे
तस्मादेतदभावतस्तु व इह स्तव्या न वास्तव्यता[१]॥

किन्तु।—

दिष्टेना[२]त्र तत्र गत्वा स्व-गोष्ठे
कष्टेनापि स्वीयधर्मं कुरुध्वं।
पत्युर्भक्तिर्वालवत्सादिपाल्य
व्यक्तीनां यः पालनादिश्च दिष्टः॥

ततः कष्टसाध्यं तं धर्मं वाध्यमानं विधायात्राविकलसर्वधर्मफले मम सुखविहारस्थले प्रविशत। अन्यथा पुनरुद्यद्विधुवनमिदं भवतीनां विधुवनाय[३] सम्पत्स्यत इति याञ्चापत्त्ताभिप्रायः॥

पुनः स विमर्शमिव प्रोवाच।—

अहमहह ! न वुध्ये स्मेतिपूर्वं प्रलापं
चकर तदिह यूयं तद्विचार्य्य क्षमध्वं।

(१) वो युष्माकमिह वास्तव्यता वासकर्त्तृता न स्तव्या।
(२) भाग्येन। (३)कम्पनाय।

रतिविसरविलासैर्यन्त्रणादागताय
तदुचितमखिलं यत् स्निग्धतामभ्युपैति ॥

तदपि च यद्वद्विरहे, प्रीतिस्तद्वन्न सान्निध्ये ।
भवति ततो गृहयानं, भवतीनामौचितीं चिनुते ॥

अत्र च प्रीतिविषयाद्दूरे स्थितिर्न युक्तेति विरोधिलक्षणाया याच्ञापक्षः सङ्गम्यते ॥

ततश्च ।—

पूर्वं यच्चिरतस्पृहावलनया संक्लृप्तमासीत्पुनर्वंश्याकारणाया[१]वलादुपचितं तद्भग्नमुच्चैर्यतः ।
तच्छुत्वा दयिता-व्यलीक[२]वचनं वाढं न निश्चिक्यिरे
किं न स्मः किमुवाष्म इत्यपि तदा गोपालवामभ्रुवः ॥

तदासां निश्चलाङ्गीनां काञ्चीनामपि राजयः ।
समं समन्ततः क्लेशात्तूष्णीका[३]मेव सङ्गताः ॥

ततश्चः ।—

वाष्पव्याजादासां, प्रियकृतपरिहृतिसमूढसन्तापः ।
मन्ये हृदयाम्भोरुह,निवहः स्वरसान् मुहुश्च शुश्राव

---

(१) हूतिराकारणाह्वानं ।
(२) पीडार्थेऽपि व्यलीकं स्यात् । अपिशब्दादप्रियकार्य्यविलक्षविषयविपर्य्यय कामजपराभवेषु ।
(३) तूष्णीभावं ।

तत्र चैवं विचारयामासुः ॥

प्राणांस्त्यजाम दयितस्य पदे लुठाम
कुप्याम तत्र विनिवृत्य गृहं व्रजाम ।
कृष्णां विशाम च न वा कठिनायमान-
मेतं स्वभालमभिहत्य निचाययाम[१] ॥

तत्र तु ।—

शिरःपीडावाष्पव्यथितगलताहृद्गतमहा-
प्रकम्पः प्रत्यङ्गस्खलनमिति नानाविकृतयः ।
प्रिये रूक्षे जाता दलयितुममूरावव्रृतिरे
परं तद्वक्त्रान्तः प्रसदनमगात् पालयितृताम् ॥

मसीवलितदृग्जलस्रवतमोभिराराादुरः-
स्थलं वलितकुङ्कुमप्रचितिसन्ध्यमावृण्वतीः ।
अवाङ्मुखविधू[२]र्वधूः सपदि पौर्णमासीशशि-
स्फुरन्निशि च तामसीरिव चचाय[३] तस्मिन् हरिः ॥

ततश्च किञ्चिदमर्षे सति ।

श्वासदीर्णमधुराधरश्रियः
कोमलाङ्घ्रिदलकीर्णभूमयः ।
हन्त ! कान्तमपि तं नतभ्रुवो
विव्यधुर्नयनसायकास्त्रिभिः[४] ॥

(१) दर्शयाम । (२) अन्तःस्थितो मुखविधुर्यासां ।
(३) ददर्श । (४) अग्रभागैः ।

तदेवं क्षोभे सति दाडिमादक्तः सक्तरक्तवीजानामिव निजानां भावानां हृदयान्निष्कुला[१]कृतिः स्वयमेव जाता ॥

तथापि वैदग्धीदिग्धतया प्रियगीर्वदेव सन्दिग्धमूचुः ।

यदद्यापि गायन्ति ।—

इममिव मा कुरु पुनरतिवादं[२] । भक्तजनान्
भज मुहुरितरांस्त्यज विभुरिव रहितविवादं ॥ध्रु॥
पतिपुत्रादिकभजनमिहाधिकमिति यं वदसि
विचारं । स त्वय्येव हि तिष्ठतु न तु वहिरिति
विमृशामः सारं ॥

अनयोरर्थश्लेषोऽयमुभयमेव पक्षं विशेषयति ॥

अथ[३] धवसुतमुखगणतस्तव सुखमस्ति सतां
हृदि यातं ॥
तदपि च न हि भवदनुसरणं भव[४]दिच्छति
युवतीजातं ॥

अत्र सन्दिग्धकाकुपदं नहीति पदं तदिच्छानिर्द्धारणे यद्वा निषेधे ॥

---

(१) वहिर्निष्कासनं ।　　(२) पारुष्यमतिवादः स्यात् ।
(३) प्रश्ने ।　　(४) विद्यमान ।

स्वामाशामनुवर्द्धय वरतनु-ततिरिह लभतां शातं।
सततानश्वरवर ! वरदेश्वर ! न वितनु वितनूत्पातं ॥

अत्रानुवर्द्धयेति समे धने छेदने वा ॥

गृहकर्म्माण्यनुचित्तं, सुखतनुभवता नह्यपिनद्धं।
चरणौ प्रचलत इह न च, वलतः प्रतिगमनं किल वद्धं ॥

अत्र सुखतन्विति भवतेत्यस्य चित्तमित्यस्य वा विशेषणं। अपिनद्धमिति वन्धनाभावे वन्धने वा। नचेति पूर्वनहिवत्। किलेति निश्चये ऽनृते वा।

स्वभवतापभरममृतधराधररसभ्भरतः स्वत एव।
नाशय यदि न हि मादृशमपि स[1] हि संक्रमिता सखिदेव[2] !।

अत्र स्वभवेतिकामे स्वजाते वा। मादृशमित्यस्मत्सदृशे वा जनेऽस्मदर्थे वा।

लक्ष्मीसुखदमपि भवतः पदमहह ! पुलिन्दीभव्यं।
स्पष्टं यदवधि दृष्टं तदवधि सर्वं जगदपसव्यं[3] ॥

अत्रापसव्यं प्रतिकूलमित्युभयपक्षेऽपि समञ्जसं।
आक्षेपपक्षे पुलीन्दीभव्यमिति नीचगामित्वं व्यज्यते।

---

(१) तापभरः।
(२) सखिषु दीव्यतीति। (३) प्रतिकूलं।

लक्ष्मीर्व्रजमनुतुलसीवनमनुभवदुदयस्फुरदुदया ।
इश्यत इति तव पदधूल्याप्लवमिच्छत्यपि पति-
हृदया ॥

यस्यावीक्षणामपि वलितक्षणपार्षदवृन्दनिधामं[1] ।
तद्व[2]द्वयमपि हृदि वाञ्छामपि नह्यामः[3] सवितानं ॥

अत्रापिः समुच्चये पूर्ववत् काक्वा निषेधे वा ।
तत्त्वं सुकृपय कृतवृजिनात्यय ! तव याश्चरणे
रक्ताः ॥
ता भवतः स्मितवीक्षणविस्मितचित्ताः कुरु
निजभक्ताः ॥

इहमुभयत्र च योग्यं ॥

अलकावृतमुखकुण्डलधृतसुखहसित-
विभूषितनेत्र ! ।
दत्ताभयभुजवक्षः श्रीयुज[4] ! दास्यो वयमपि
ते ऽत्र ॥

अत्र चापिः पूर्ववत् ।—

तव मुरलीकलमपि च रूपबलमनुभूयाभवदेव ।
द्रुमकुलमपि पुलकाङ्कुरसङ्कुलमिह का नारी देव! ॥

---

(१) निधिरूपं । (२) लक्ष्मि वत् । (३) वर्द्धनीमः ।
(४) इगुपधज्ञाप्रीकिरः कः

अत्र केति कैमुत्ये निषेधे वा ।—

व्यक्तं व्रजभयहरलीलाचयदेवस्त्वमसि स कोऽपि ।
तन्नो निजकरमपि शिरसि च धर दासीनां
भ्रमतोऽपि ॥

अत्र न इति नो इति वा छेदः ॥

उत्तरत्र पक्षे दासीनामपीत्यन्वयः। तदेवं स्थिते।—

तथा विलापतापेन न तासां विव्यथे हरिः।
यथा राधा प्रेङ्खित[1] भ्रूधनुरिङ्खि[2] दृगाशुगैः ॥
अथ व्यथितमानसः प्रथितभावकारुण्यतः
प्रहस्य मुदिताननः स्वकरहस्यमुल्लासयन्।
प्रतिस्वमनयत्प्रियाद्रुतमतिः स्वपार्श्वं वली-
वलादपि वलानुजो वलयति स्म लीलां प्रति ॥
आमृशन्नङ्गुलीः पाणिं प्रकोष्ठं वाहुमप्यथ।
तासां हरिकरस्तृप्तिं नागाद्धनमिवाधनः ॥
यदपि च राधा तासु, स्वमभिजुगोपायुतादि
सङ्ख्यासु ॥
तदपि च हरिणा स्पष्टं, दृष्टा तारासु चन्द्रलेखेव।
राधा यर्हि स्वकर,स्पृष्टा जाता मुरारातेः ॥

---

(१) वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते।
(२) चलत्।

अतिविस्मितये[१] यज्ञे, तर्हि च सा तत्र
चन्द्रलेखेव ॥

गोप्यः कृष्णां तत्र कृष्णाश्च राधा-
माश्लिष्योच्चैराव्रजन्मर्मशर्म ।
भावश्रेण्यः स्थायिभावं स्वभावो
यद्वत् पुण्याद्वासनां पूर्व्वलब्धां ॥

तत्र काश्चिद्भीरुरिव निभाल्य वनपाल्यः परीहा-
सतः परस्परमूचुः ॥

जलदे विलसति विद्यु, द्विभ्यति हृदयानि
भीरूणां ।
किं परिहससि सखि ! त्वं किं न हि पश्यसि
पुरश्चित्रं ॥

आत्मारामा अप्यहो ! यस्य[२] गन्धा-
द्ब्रह्मानन्दं बाढमाच्छादयन्ति ।
पूर्णानन्दः स स्वयं हन्त ! ताभिः
स्वानन्दाय क्रीड़नाय प्रयेते ॥

---

(१) दुर्लभ स्पर्शतयेतिभावः ।
(२) कृष्णस्य ।

अथ समापनं ।—

ईदृगप्ययि ! राधे ! यस्तासां मुखनिरीक्षकः ।
त्वदुत्कर्षरसायासीदिव तासु परीक्षकः ॥

इति श्रीगोपालचम्पूमनुप्रथमसङ्गरङ्ग-
जवाकोवाक्यभङ्गीसङ्गीतं नाम
त्रयोविंशं पूरणम ॥

———

# चतुर्विंशं पूरणम् ।

ततः स्निग्धकन्ठ उवाच ।

अथ संक्षेपेण[1] वर्णितं यथा ॥

"ताभिः समेताभिरुदारचेष्टितः
प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ।
उदारहासद्विजकुन्ददीधिति[2]-
र्व्यरोचतैणाङ्क इवोडुभिर्वृतः" ॥ इति ॥

तत्र प्रथमचरणः प्रथमं श्लोकसात् क्रियया-लङ्क्रियया परिचर्य्यते[3] ॥

कान्तस्य ताभिः स्वकरं स्पृशन्करः
सर्पन् परश्चावयवं वितर्कितः ॥
कीर्णश्च तस्यान्तरमन्तरं व्रजन्
दृष्टः पुनस्त[4]ज्जितकाशितां[5] गतः ॥

---

(१) श्रीशुकेन इति वा पाठः ।

(२) कान्तिः ।

(३) श्लोकसात्क्रियया श्लोकीकरणेन यालंक्रिया परिष्कारस्तेन परिचर्य्यते सेव्यते ।

(४) तस्मात् ।

(५) जितकाशी जिताहव इति चीरः ।

अथ द्वितीयचरणः।—

प्रियं नियुतशोऽप्यमूर्नहि विलोकमानः समं
निमेषमुपसेदिरे यदियमेव दिव्या स्थितिः।
प्रियेण निजमर्पितं यदवलोकशुद्धामृतं
समं बुभुजिरे पृथक् तदधिकं तु किं वर्ण्यतां॥

अथ सिंहावलोकन्यायाद्द्वितीयतृतीयचरणौ च यथा।—

यथादृशं दिशि दिशि ता दधुर्मुहु-
स्तथा हरिस्तदभिमुखं दधे दृशं।
यदान्वभूदरहितचातुरक्ष्यतां
तदाहसीत् स्फुटमसकृत् कृतक्रमं॥

त[1]दुत्तरार्द्धञ्च।

कविभिः कृष्णे शशिता, तासु च नक्षत्रता
कविता[2]।
किन्तु स्मितसुखदीव्य,द्विलसितवृन्दैरमी[3]
वरिताः[4]।

ततश्च नानानर्मकर्मठतया हठवत्तया च कृष्णेन किञ्चिदसङ्कोचे विरचिते प्रायशः सर्वावयवे चाव-

(१) सिंहावलोकन्यायात्। (२) वर्णिता।
(३) असौ श्रीकृष्णश्च ताश्च। (४) उरूकृता।

लोचिते निचोलादिविपर्य्यये च परिचिते साम्रं वहु विहस्य तदिह सर्वमेव यथावत्पर्य्याचित[१]-माचेरे।

तदेवमाचर्य्य ससुखमुदङ्मुखगतिचर्य्ययायमुना-तीरवनश्रेणीं शोभयन्नेणीदृशस्ताः स्वकान्ति-भिराचकर्ष।

यत्र लब्धहर्षश्चन्द्रमसमपि निजदक्षिणतः समाकर्षन्निव सङ्गितयाङ्गीचकार॥

तदनु च सर्व्वाभिरर्वाचीनयौवनाभिस्तमेकमनु-सरन्तीभिरत एव परस्परं सङ्गमपरिहरन्तीभिरत एव सहसानुपलब्धानुरहसकणिकाभिरत एव तन्मिलनविशेषाय कलितपुरुत्कलिकाभिः सह स हरिस्तादृशता[२]मेव परामृशति स्म।

अथान्यथानुपपत्त्या सङ्गानसुखमेवावलम्वमानः केवलं चञ्चच्चञ्चरीकलुलित[३] ललितसुकुमार-कुसुमाञ्चितं वनमेवायं सर्वगुणशाली वनमाली चञ्चति स्म॥

---

(१) निवेशितं। (२) सोत्कयठतां।
(३) चालित।

किन्तु ॥

सङ्गानं तदिदं परस्परगुणग्रामानुभूतिः स्वतः
शर्माप्यत्र मनोरथान्तरकृतेः शश्वद्बभूवास्पदं(१) ।
यत्रालिङ्गनचुम्बनादिविषये तासां हरेरप्यदः(२)
सौख्यं लक्ष्यमभूत्परावृतिविधां(३) चावेशिता
निर्ममे ॥

तदेतद्वर्णितं यथा श्रीबादरायणिना ।—
"उपगीयमान उद्गायन् वनिता-शतयूथपः ।
मालां बिभ्रद्वैजयन्तीं व्यचरन्मण्डयन् वनं ॥इति॥
गानविशेषश्च श्रीपराशरेण ।—
कृष्णः शरच्चन्द्रमसं कौमुदीं कुमुदाकरं
जगौ गोपीजनस्त्वेकं कृष्णनाम पुनः पुनः ॥
तथा हि ।—
विधुरयमागतवान् शरदं प्रति सम्प्रति ।
इतवान् विधु(४)रथ नहि भवतीः प्रति ॥
माधव! जय गोकुलवीर ! जय जय कृष्ण !
हरे ! ॥

---

(१) आश्रयः ।
(२) गानजन्यं । (३) परावरणप्रकारं ।
(४) श्रीकृष्णलक्षणः स्वयं ।

कुमुदाकरचलनं न भवेदिति सेयं ।
कौमुदिकागादिदमुन्नेयं(१) ॥
केशव ! जय शर्मशरीर ! जय जय कृष्ण !
हरे ! ॥

कुसुमवनीमधुपैरियमञ्चति कान्तिं(२) ।
मदभीषुभिरिव भवती कान्तिं(३) ॥
श्यामल ! जय हार्दसमीर(४) ! जय जय कृष्ण !
हरे ! ॥

पुष्पितकुञ्जचये वृन्दार्चितशोभा ।
भवदनुगतये किल कृतलोभा ॥
मोहन ! जय सम्विदि(५)धीर ! जय जय कृष्ण !
हरे ! इत्यादि ॥

तदेवं गायते प्रियाय प्रतिगृणतीषु(६) तासु नवयुवतीषु पुनः श्रीशुकवचनातिरहस्यं यथा ।—
"नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकं ।
युष्टं तत्तरलानन्दि कुमुदामोदवायुना ।

---

(१) ज्ञेयं ।　　(२) रोचिः ।
(३) अभिलाषं । मम भवतीषु प्रथयतु कान्तिमिति वा पाठः ।
(४) प्रेरक ।　　(५)प्रतिज्ञायां ।
(६) श्लाघमानासु ।

वाहुप्रसार-परिरम्भ-करालकोरु-
नीवी-स्तनालभन-नर्म-नखाग्र-पातैः ।
क्ष्वेल्यावलोक-हसितैर्व्रजसुन्दरीणा-
मुत्तम्भयन्नतिपतिं रमयाञ्चकार"॥ इति ॥

तदेतद्यथा ।—

तदेवं भ्रामं भ्रामं जातप्रसरे[१]ऽप्यलब्धावसरे । सतृष्णाकृष्णासहितमहितमहिलाविसरेऽभिलषित-विलसिताय विरलता न जाता ॥

अजातायां च तस्यां कृष्णाया तरङ्गकरनिकराचितमहरहरवकलितं[२] पुलिनविशेषमेव त[३]दुचितं प्रवलमवकलयामास[४] बलानुजन्मा यः खलु हिमवालुके[५]व वालुका यस्मिंस्तादृश इति परम-शुभ्र[६]शुभ्र[७]गुणतया विभ्राजते स्म ॥

यत्रैव च तादृशसर्वगुणपूर्णपूर्णिमानिजाद्विजराज-विराजमानसुषमासुषम[८]प्रतिसंक्रमपरभाग[९]-

---

(१) प्रसरः प्रणयः समौ । (२) दृष्टं ।
(३) क्रीडा । (४) विचारयामास ।
(५) कर्पूरः । कर्पूरमास्त्रियां । घनसारश्चन्द्रसंज्ञःसिताभो हिमवालुका ।
(६) शुक्ल । (७) उज्वल । (८) रम्य ।
(९) परस्परशोभा ।

जागरूक[१] महामहसा सहसा नयनानि नाभ्युदय-दयनानि भवन्ति स्म ॥

यत्रैव च तूलिकावदनुकूलिका वालुका वस्त्रमात्र-मास्तरणमपेक्षते स्म ।

यत्रैव च कलिन्द-तनया स्वयं वलितसखीनया[२] सौगन्धिक[३] सुगन्धगन्धवाहवहतादिना सेवां वहति स्म ॥

तत्र चात्र श्रीकेशवः प्रवेशमनुभूय प्रतिप्रेयस्यपि युग्मीभूय वाहुप्रसारादिलीलां शीलयामास ॥ सा चेयं परमरहस्येति रहस्येव किञ्चिद्व्यस्यते ।

यथा मिथस्तत्तन्मिथुनं ।—

वाहुप्रसारमकरोत्परिरम्भणाय
वाहू तु तत्करणतां चिरमीयतुर्न ।
यो यस्य[४] नैति वशतां स कथं नु तस्य
प्राप्नोतु साधकतमस्थितिमञ्जसैव ॥
कृतं च परिरम्भणं न परिहर्त्तुमीशावमू
वभूवतुरघारितप्रियवधूजनावात्मना ।

(१) प्रकाशमान ।
(२) सखीरीतिः ।　　(३) शुक्लकुमुदं ।
(४) वाहुस्तम्भो जात इति भावः ।

कथञ्चिदपि वीरुधा भवति चेत्तरोः सङ्गम-
स्तयोः कथमपृक्तता स्वयमनीहयोर्जायतां ॥
सखीनामप्यास्या[१] रहितसमये यत्प्रिणयिनोः
परीरम्भारम्भात्प्रवलसुखमूर्च्छा समजनि ।
तयोस्तां विच्छेत्तुं परमहह ! नानाविलसित
प्रतीक्षासुप्तेव स्वयमथ जजागार परितः ॥

ततश्च ।—

रहसि सङ्कुचती पुनरप्यसौ
निजकरेण हरेरकिरत्करं ।
व्यथिततामिव तां तु विवृण्वतीं
तदनुमृष्टिमिशादयमस्पृशत् ॥

वदनं तव वृण्वते वत ! भ्रमरा नानुगतास्ति काचन ।
इति लालयति स्म सच्छलादलकानां
ततिमप्यमूमनु ॥

उरुस्पर्शे निरस्तेऽपि नीवीमस्पृक्तदच्युतः ।
निःशङ्कयाचकानां हि तथाचरितमीक्ष्यते ॥

कलयति[२] सम्वस्त्रयति,[३] स्वं हस्तयते[४] स्म
तस्य या रामा ।

---

(१) स्थिति । (२) कालिं गृह्णाति ।
(३) स्वं वस्त्रेण समाच्छादयति । (४) हस्तं निरस्यति ।

प्रणयी स हरिस्तस्याः
स्पृशति च चोलीं वितूस्तनव्याजात्[1] ।
मधुसूदनतां मुखाम्वुजे
हरितां हृद्भवकुम्भिकुम्भयोः ॥
गतवान्-वत ! नन्दजः कथं
रतिनाथ-प्रभवाय नार्हति ॥
अथ यत्कथनीयतोचितं
कथितं तत्प्रार्थितं च किञ्चन ।
यदथाकथितं द्विकर्म्मकं[2]
स्मृतिरीत्या[3]तदवेहि पाणिनेः ॥

इत्येवं स्थिते ।—

गोप्यस्ताः प्रतिपद्य सर्वविषयश्रेयांसमात्मप्रियं
स्वाधीनं सपदि प्रतिस्वमसकृत्तत्रातिगर्वं दधुः ।
लोकश्चेद्बहुराजराष्ट्रवसतिर्जङ्गन्ति[4]भङ्गं[5]तदा
तस्यां तर्हि तताहितेति किल सोऽप्यन्तर्दधे
माधवः ॥

---

(१) तूस्तं धूलिः धूल्यपसरणव्याजात् ।
(२) द्वयोर्दम्पत्योः कर्म यत्र तत् ।
(३) अकथितं चेति कारकसूत्ररीत्या ।
(४) गच्छन्ति ।  (५) ग्राममर्द्दनं ।

तेन च विचारितं खल्विदं ।

अहह ! मम परममुद्देश्यमेव विस्मृतदेश्यमभूत् । यतः सर्वाभिरेव निर्विशेषं रममाने मयि रमा-शिरोमणीयमाना राधापि साधारणतां गता ।

किञ्च स्वमनोरथप्रथनायां(१) राधायाः प्रथमा(२) प्रथमानागमनता सम्प्रति प्रतिपन्ना(३) । तस्मान्-महामह एव मम हिताय महीयते(४) ।

स च शारदताविशारदतायामस्यां पौर्णमास्यां रासरस एव तूर्णं पूर्णतामर्हति ॥

एष तु सर्वासामैकमत्यप्रतिपत्त्यनुसारत एव सारतां(५)प्रसारयति । ऐकमत्यं च प्रत्येकं साभि-मानान्तरासु परासु किञ्चिन्मदुदासीनतापरं दासीकर्तुमासीदति । तस्मादशेषगुणाधिकां राधिका-मादाय तिरोधाय स्थास्यामीति ॥

तदेतद्विभाव्य भाव्यमर्थं साधयन् माधवस्तत्र तत्रा-लसकरचरणादिक्रियां प्रियां प्रियां प्रत्युवाच ।—

नूनं वञ्चितकाञ्चीध्वानितया कयाचिदप्यत्र स्थीयत इति नास्थीयते(६) तच्च मम भवदेकानुचारिविहारि-तया विचारितीक्रियते ॥

---

(१) विस्तारे । (२) आद्या ।
(३) प्राप्ता । (४) पूजितो भवति ।
(५) श्रेष्ठतां । (६) न प्रतीयते ।

तस्मादत्यायासवत्या भवत्या स्थीयतां । मया तु समया[1]मृगयमाणतां निर्माय नातिसमयविराम-मागमनीयं ।

तदेतदभिधाय ततस्ततः सर्वतश्चान्तर्धाय राधया सह सहसा जगाम ।

अथ समयकतिपयव्यत्ययमसहमाना सा च ततस्तत उत्थाय प्रस्थाय च तमन्विच्छन्तीति भ्रमणात् क्रमश एकद्व्यादितया[2] परस्परमिलिताः । मिलिताश्च ताः परस्परमप्रतीतितः शपथं प्रथयमानाः कृष्णपथमेवान्वेषयामासुः ॥

किन्तु ।—

अन्वेष्टुं कृष्णमिष्टं निकटमतिगतं
चिन्तयित्वा प्रदूताः
कर्त्तुं तन्नैव शेकुः परमहह ! गताः
क्लान्तिमेता निपेतुः ।
स्थित्वा तद्वच्चिराय स्फुरणमयममुं
प्राप्य सर्व्वाः समन्ता-
न्मत्वान्योन्यं तमेव प्रतिहतमतय-
श्चक्रुरालिङ्गनादि ॥

---

(१) निकटे ।　　(२) एका वा द्वे वा एकद्वा तत्तया ।

ततश्च।—

यास्तु तृष्णाकुलतया कृष्णाभाववशं गताः।
कृष्णायन्ते स्म ता एव सर्व्वपालकतामिताः॥

अथ कथञ्चिदनुसंहितवहिरर्थाः समयं गमयितुमसमर्थाः पूर्व्वाभ्यासवशान्निजरत्नायावशा[१] न्निखिलसुखदशीलां वाल्यादिकतल्लीलां गातुमारब्धास्त[२]दावेशपरिरब्धा वभूवुः॥

तत्र च कृष्णमन्विच्छन्त्यस्ततत इतो गच्छन्त्यस्तरुवल्लीपल्ली[३]मपि मुहुरपि पृच्छन्ति स्म।
उन्मादवृत्तेरनुवृत्तेः। यथा।—

लीला गायंस्तत्तदावेशवश्य-
स्तत्तद्भावं प्राप गोपी-निकायः।
चित्रं कृष्णावेशितामाप या या
गौराङ्गी सा कृष्णवर्णा प्रतीता॥

अद्यापि स्मृतमुत्तप[४]त्यहह! मच्चित्तं यदेता मुहुः
पृच्छन्ति स्म हरिं वियोगविधुरा हाहा! तरूनप्यहो!।
आस्तां तन्मम हृद्यरुन्तुद[५]मिदं गीताभिरेतत्कृते
घोराद्गीतिभिरुन्मदिष्णु हृदया घोरानुकारं दधुः॥

(१) वशाःकामे। (२) लीला। (३) परम्परा।
(४) अत्र स्वाङ्गकर्म्मकत्व एवात्मनेपदं स्यात् स्वाङ्गकर्म्मकत्वे चित्तस्य स्वाङ्गत्वं नास्ति अमूर्त्तत्वात्।
(५) मर्मव्यथयितृ

तदीदृशलीलावेशः परपरगच्छ[१] पृच्छाभिनिवेशतः क्रमशः प्रचित[२] निष्क्रमीकृतीमवाप । यत्पृच्छाभिनिवेशश्चैवमपगच्छति स्म ॥

काश्चिद्विकासिकुसुमैरुपहासभावान्
काश्चिन्नताग्रवलनैर्विमुखीकृतास्यान् ।
काश्चिन्मदालिविरुतैरुषितोक्तियुक्तान्
मत्वा तरूंस्तदनुयोगरसाद्विरेमुः ॥

ततश्च क्षितिमेव प्रश्नलक्षितीकृतवत्यः ॥

यथा ।—

अहो ! किमकरोस्तपः कियदिहोर्वि ! यच्छ्रीहरेः
पदस्पृगनुविन्दसे पुलकरूपनानाङ्कुरान् ।
त्रिविक्रमजविक्रमात् किमिव तत्त्वया सम्भृतं
वराहपरिरम्भतः किमथवा क्वचित् किन्तु न ॥
पृथ्वी क्षमा च नाम्ना त्वं तत्पदाङ्कमुद[३]ङ्किता ।
तस्मात्त्वामेव तं प्रष्टुं तवेयं गतिमागताः ॥इति॥

तदेवं सर्वासु तर्वादिकं पृच्छन्तीषु तत इतश्च गच्छन्तीषु तदीयं सौरभ्यं परिरभ्य जगत्प्राणेषु सन्निधानं प्रति प्रणीतप्रयाणेषु तद्वदग्धीदिग्ध-

(१) वृक्षपर्याये गच्छोऽपि ज्ञेयः ।
(२) तत्पृच्छाभिनिवेशस्त्यक्त इत्यर्थः । (३) मोद् ।

स्निग्धहृदया राधासखीसमुदया हरिणीं प्रति कृत-प्रणायाः सानुमोदतया हारि व्याहरन्ति स्म ॥

अप्येण-पत्न्युपगतः प्रिययेह गात्रै-
स्तन्वन् दृशां सखि ! सुनिर्वृतिमच्युतो वः।
कान्ताङ्ग-सङ्गकुचकुङ्कुमरञ्जितायाः
कुन्दस्रजः कुलपतेरिह वाति गन्धः ॥
वाहुं प्रियांस उपधाय गृहीतपद्मो
रामानुजस्तुलसिकालिकुलैर्मदान्धैः।
अन्वीयमान इह वस्तरवः प्रणामं
किम्वाभिनन्दति चरन् प्रणयावलोकैः ॥

अत्र खलु एणीति पत्नीति सखीति पदत्रयेण हे प्रशस्तनेत्रमादृशमानुषीसदृशं विचारसञ्चरित-वृन्दावनक्षेत्र तत्तदस्मदीयसुखप्रख्येण सुखेन लब्ध-मद्विधसख्ये इति व्यज्य सुखरज्यमानहृदयाः प्राहुः। प्रियया सममच्युतः श्रीकृष्णः श्लिष्टतया तस्याः सकाशादविश्लिष्टः सन्नदसी(१)यशोभाकृतासङ्गैरङ्गै-र्युष्माकं तादृशां दृशां केवलस्व(२)दर्शनजानन्दा-दप्यतिशयितमानन्दमुत्कर्षयन् किं युस्मत्समीप-माप ॥

---

(१) अदः कान्ता सम्बन्धि। (२) कृष्ण।

तत्र तन्मिथुनश्लाघागर्भवचनेन हेतुं रचयन्ति । कान्तेति ॥

गोकुलराजकुलतिलकस्य या कुन्दमाला तस्याः कुत्राप्यलभ्यं सौरभ्य[१]मिह तद्वारमिलज्जवभङ्गनिभवायुसङ्गतः प्रसरति । कीदृश्या मालायाः कान्तापरमपुण्येन परमसर्वसाद्गुण्येन तस्यापि लालसस्य या परमास्पदरूपा तस्या अङ्गसङ्गे कुचकुङ्कुमपङ्ककुलसङ्कुलायाः ॥

अतः सन्ततपरिचयविशेषेण तत्सौरभ्यविशेषं परिरभ्य स्फुटमस्माभिस्तथा समुपलभ्यत इत्यर्थः ॥

अथ तां त[२]द्दर्शनजातेन हर्षेण सम्प्रति तद्वियोगजातेन तर्षेण स्थगितवचनामाशङ्क्य तेन[३] च तयोः[४] सङ्गम[५]मेव निश्शङ्क्य परमानन्दतस्तदीयविलासविशेषं वन्दमानास्तत्र तत्र पल्लवादिभरनम्राणां कम्राणां पुरूणां तरूणामपि तदीयसौविदल्ला[६]दिभृत्यविशेषभावेन तद्वन्दनमुत्प्रेक्ष्य प्रियया सह विहाररतेन तेन तेषामभिनन्दनं

---

(१) कर्तृ । (२) तन्मिथुन । (३) हेतुना ।
(४) दम्पत्योः । (५) मृग्या ।
(६) अन्तःपुररक्षक ।

सन्दिहानास्तयोस्तादृशविलासावेशातिशयमाहुः[१] वाहुमिति ॥

अथ तस्यामुदासीना वदन्ति स्म ।—

लता इमाः पृच्छतया न लोकिताः
पुरातरुश्लिष्टतयापि पुष्पिताः ।
सम्प्रत्यमूः स्पर्शवशाद्बकी-रिपोः
पुष्पान्वितास्तन्नखचित्रमत्र हि ॥

अथ तस्माल्लब्धविस्मये पुनरकस्मादखिल-शुभपदानि तदीयपदनलिनयोरमलिनानि पदानि[२]-दधाना वसुधासुधामिव सुधामावलिं तासामन्या-सामपि तदप्रतीतिस्पृशि दृशि किरति स्म यानि प्रेक्ष्य चामूभिरुत्प्रेक्ष्यते स्म ।

इयं क्षितिर्मुनिचरिता तदुत्तरं
ददे[३] न हीत्यवमृशती[४]पुनर्ददे[५] ।
ध्वजाम्बुजाद्युपवलिताङ्घ्रिलाञ्छन-
प्रदर्शनादिव लिखती तदागमं ॥

कियद्दूरे तु ताभिस्तदपदान्तराण्येव[६] पदान्त-राणि प्रतिपन्नानि ॥

---

(१) राधासख्यः ।
(२) लक्ष्माणि । अमरनानार्थे । (३) अहं ।
(४) क्षिति । (५) दत्तवती । (६) अव्यवहितानि ।

तथाहि ।—

तदनु तस्य पदं पदमन्तरा
पदमनीदृशमाददृशे परं ।
अनतमल्पममध्यकृशं ध्वजा-
द्युपचितिं विपरीतदिशि श्रितं ॥

तत्र चेदमनुमीयते स्म ।—

मृगाक्ष्या लक्ष्यं स्यादिह चरणचिह्नं हरिपद-
प्रसक्तं वैशिष्ट्यादपि तु न हि पूर्वत्र किमपि ।
स्फुटं तस्मात्काश्चिद्धृदि विदधदत्रार्पयदसौ
प्रसिद्धा स्तेनानां जगति हि कृताङ्कप्रशमिता ॥

असव्यसव्यौ यूनोर्यत्पदाङ्कौ व्यतिमर्द्दिनौ ।
तत्तर्क्यते मिथः स्पष्टमंसन्यस्तप्रकोष्ठता ॥

तदेवं साधारणीनां वर्णनमाकर्ण्य राधासख्यः पुनरालपन्ति स्म ।—

परस्परकरग्रहस्फुरदमन्दखेलास्पदं
प्रमत्तकरिदम्पतिस्थितितयोस्तु यूनोर्युगं ।
यदत्र विजने वने विगतशृङ्खलं लीलया
विधास्यति परं महस्तदतिसुष्ठु पुष्णाति नः ॥

———

अथ तत्र सुहृदां वचनं।—

"अनयाराधितो नूनं भगवान् हरिरीश्वरः।
यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः॥इति॥

अयमर्थः।—

नूनमनया परमनयया कोऽप्यनश्वरशक्तिरङ्गीकृत-भक्तभक्तिरीश्वर एव निर्वाधितमाराधितः। न तु देवतामात्रं।

स च सकलहरित्पति-पतिः श्रीहरिरेव।

न च हरः सृष्टिकरश्च। हरितायामपि सर्वावतार विस्तारवान् स्वयं भगवानिति सम्भावितीभवति न चान्यस्तदंशतयापि लब्धप्रशंसः॥

तादृशचमत्कारकारणमप्यवतारयन्ति यन्न इति। यां खलु गुणरूपमहसा सहसा निखिलहृदयं विन्दमानः श्रीगोविन्दः स्वयमयं निनाय। न तु न इव न निनाय। त[1]त्परिपाटी च प्रत्युरसं[2] विधाय प्रीतिरीतिपरीततया कृता। न तु त[3]द्वि-परीततया प्रीतिरपि स्मरमहःप्रवह रहः[4] संहततया। नतु सामान्यतामान्यतया। रहः संहनन[5]

(१) नयन। (२) उरः प्रति वर्त्तमानं। (३) प्रीति।
(४) रहः शृङ्गारगुह्ययोः। (५) मिलनं।

मपि शर्मसम्पदं हृति[१] बृंहितगुणावंहिततया[२] नत तदसंहिततया[३]। तच्च सर्वगुणविस्मारयिकानामप्यस्माकं त्यागजागरूकसमयत एव ननु तद्विनिमयत[४] इति स्वयं यं गच्छन्नेव निनायेति ।

तदेवमेव मन्यामहे । या खलु धन्या राधाभिधा विधात्रा निःसाधारणनामगुणरूपतया निर्मिता । सैव दैवकृतानुकूल्या भवितुमर्हति । तत्र यद्यपि तादृशभगवदाराधनसाधनतया तन्नामनिर्वचनं सचितरचनं भवेदथापि फलसम्बन्धनिर्वन्ध एव श्रेयानिति राधयति गोविन्दं गोविन्देन वा राध्यत इति निरुक्तिरेव युक्तिमतीति मतिगम्य[५]मिति ॥

अथ पुनस्तस्यामुदासीनाः प्रोचुः ।—

अयि ! कलयत एते रेणवोऽप्यत्र धन्या
यदजितपदपद्मस्पर्शभाजः स्फुरन्ति ।
ध्रुवमघमपहर्त्तुं ब्रह्मभर्गा[६]ब्धिकन्या[७]
दधति शिरसि यांस्तद्दर्शभाग्यं स्तवाम ॥

---

(१) दान ।  (२) बहुलीकृततया ।
(३) अमिलिततया ।
(४) त्यागकालपरिवर्त्तात् कालान्तरत इत्यर्थः ।
(५) बुद्ध्या गम्यं ।  (६) शिव ।  (७) लक्ष्मी ।

अथ काचित्तस्यां प्रतिस्पर्द्धिनी वर्द्धमानमत्स-
राग्निर्धूमशिखायमानं वचनमुज्जगार ॥

भवति सुखदमस्मिन् श्रीहरेरङ्घ्रिचिह्नं
यदि न सजति तस्या हन्त ! दुर्नीतिमत्याः ।
कलयत बत धार्ष्ट्यं सुष्ठु भावत्कभोग्यं
तदधरमधुयुष्टं कुर्वती सा निलिल्ये ॥

अथ तस्याः सख्यः पुनरूचुः ।—

कथमहह ! पदानि तानि तस्याः
सुभगतराङ्कपदानि न स्फुरन्ति ।
अपि हृदि दधदेव तां निनिन्ये
सखि ! दयितां दयितः सुजातगात्रीं ॥

अथ पुनः प्रतिस्पर्द्धिनीवचनं ।—

पश्योत्सङ्गकृताङ्गनावलयिनः कामातुरस्यासकृ-
त्तद्वस्त्रादिकसम्वृतिप्रथनया व्यग्रस्य लक्ष्मागयतः ।
निम्नव्यस्त(१) पदानि माल्यघुसृणास्तीर्णानि घर्माम्भसा
भूयः सिक्तमानि वेल्लित(२)लता-त्तुपान्तवर्त्मानि च ॥

(१) विस्तृत । (२) वेल्लितं वक्रमित्यपि ।

अथ सखीनां वचनं ।—

न्यग्जानुद्वयलक्षणस्य पुरतः सूक्ष्मं पदाङ्क-द्वयं
वैमुख्येन धृतं व्यनक्ति सुदृशस्तस्यास्तदूर्व्वोः स्थितिं ।
इति ॥

अथ स्पर्द्धिनीनां ।—

तस्मिन् गर्भकमाल्यखण्डपतनादुद्दण्डमालक्ष्यते
कामिन्याः किल कामुकेन रचिता केशस्य
वेशक्रिया ॥

किञ्च ।—

अत्राप्रगुणता[1] वद्धा[2] मिथः पद्धतिपद्धतिः[3] ।
राधामाधवयोः क्रीडां निर्व्रीडां वेदयत्यसौ ॥

अथ ताः सनिजवृन्दया वृन्दया परिष्कृतस्य लतामन्दिरवृन्दस्य द्वारं तयोः प्रवेशद्वारं विविक्षन्ति स्म[4] ॥

तत्र तया समधुतया मधुरं पुष्पवृन्दं तथा प्रवेशदेशे निवेशितं यथा तल्लोलुभ[5] शुभंयुमधुकरनिकरा एव दौवारिका इव निवारका जाताः ॥

---

(१) व्यस्ते त्वप्रगुणाकुलौ ।
(२) सम्बद्धा ।　　(३) पद्धतौ पदाभ्यां हतिः ।
(४) प्रवेष्टुमिच्छन्ति स्म ।　　(५) समौ लोलुपलोलुभौ ।

[ ९६ ]

ते हि प्रवेशारम्भत एव धृतसंरम्भाः प्रविशता-मभिमुखं धावन्तः स्वकशिलीमुख[१] तामर्थान्तरे-णापि प्रथयन्ति स्म ॥

अथ कथञ्चनश्लथतां चिरतः प्रथयमानेषु तेषु क्रमशः सर्व्वास्तर्वादिपल्लववेल्लनपूर्व्वकमाविद्ध[२] पद्धतितया प्रविश्य परमपूर्व्वं तद्धाम निशामया-मासुः ॥

यथा ।—

पिकप्रथितपञ्चमं भ्रमरपूर्णामन्द्रस्वरं
मरुच्चलितपल्लवप्रकटवाद्यमुद्यत्प्रभं ।
भुजङ्गरिपुनर्त्तनज्ञपितचञ्चला वारिभृ-
द्विभावलिततद्द्वया[३]तुलसभासदङ्गीकृतं ॥

विचित्रकुसुमैश्चितस्थलमनल्पतल्पाकुलं
वहुव्यजनचामरं सुरभिवीटिकासत्पुटं ।
स चन्द्र[४]वरचन्दना[५]गुरुगुरूरुपत्रान्वितं
लतागृहरहःपुरं ध्वनयति स्म ताः प्रत्यदः ॥

---

(१) अलिवाणौ शिलीमुखौ ।
(२) कुटिल । (३) श्रीराधाकृष्णा ।
(४) कर्पूर । (५) कुङ्कुम ।

युग्मकं ।—

अयं कुसुमसञ्चयश्चरणपातजात[१]श्लथ
स्तदेतदपि तल्पकं विघटिताङ्गभङ्गिस्थिति ।
इदं व्यजनचामरं गलितयन्त्रजान्दोलनं
तथा सुरभिवीटिकाद्यपि विभुक्तमुक्तीकृतम् ॥
ततः किमिव पृच्छथ स्ववदवेत[२] मामुज्झितं
परं द्रुतमितः परं व्रजत तत्र तं प्राप्नुत ।
अमी पिकमुखा मम स्फुटमुपेयुरुत्पित्सुतां
स्वयं भवति दुःखिते भवति कस्य व्यङ्गीकृतिः ॥

युग्मकं । किंच ।—

इदं मृगमदावृतं घुसृणबिन्दुमन्दोक्षितं[३]
क्षितं[४]शयनकं ततः सपरिवृत्तिलक्ष्माप्यदः ।
परस्परविपर्य्ययप्रथितिशालि यद्बान्धवं
कुलं कथममुष्य[५] न स्फुरतु पारिभावी[६]दशा ॥

अथ तयोर्वृत्तमनुवृत्यताम् ।

यदा तु निकुञ्जपुरद्वारि प्रवेशकृतावेशानां तासां कोलाहलविकलतावकलिता तदा सम्भ्रमवलितेन

---

(१) समूह । (२) स्ववत् आत्मवत् अवेत जानीत ।
(३) सिक्तं । (४) क्षीणं । (५) सुहृत् कुलस्थ ।
(६) पराभवसम्बन्धिनी ।

राधालालितेन तेन ततः प्रचलनकलनाय तस्याः स्वस्य च चेलसम्भालनादिकमारब्धं न तु लब्धं ॥

किन्तु ।—

उत्कर्णतासमवकर्णनवस्त्रवेषा-
धानानि या विवशता निजगार ताश्च ।
तूर्णीर्यदा निगिरति स्म तदा मुरारि-
र्लब्धक्षणः प्रणयिनीवलितं निलिल्ये ॥

अथाग्रिमकथाः प्रथनाय परामृश्यते । न चैवमपि तासां तस्य च कामुकतासामान्यं मन्यतां ॥

तन्निकामकतानिवारणस्य करणस्य कारणं स्वरूपं तावन्निरूप्यते ॥

प्रेतप्रायशरीराः[१], सर्वे ते कामुकाः कलिताः ।
कृष्णः सान्द्रानन्द,स्तस्य च राधामुखाः शोभाः ॥

यथोक्तं ।—

"त्वक् स्मश्रुरोमनखकेशपिनद्धमन्त-
र्मांसास्थिरक्तकृमिविट्कफपित्तवातं ।
जीवच्छवं भजति कान्तमतिर्विमूढा
या ते पदाब्जमकरन्दमजिघ्रती स्त्री" ॥

---

(१) मृतप्रायमानुषदैवशरीराणां मूत्रादिधारित्वनश्वरत्वाभ्यां प्रेतप्रायता ।

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्णइत्यभिधीयते ॥

नराकृति परं ब्रह्म । "त्वय्येव नित्यसुखबोधतना"
विति "ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः ।
व्यरोचताधिकं तात ! पुरुषः शक्तिभिर्यथे"ति च ॥
भावश्च न कामतां भावयते ।

किन्तु तन्निभप्रेमविशेषतामेव ।

यतः ।—

उत्कण्ठाप्राप्तियोगः प्रतिपदमिलना-
श्लेषचुम्बादिकेलिः
श्रीगोपीकृष्णयोरप्यवरतरुणयोरप्यमी
तुल्यरूपाः ।
किन्तु प्राचोर्मिथः स्युर्निरुपधिहितता-
मात्रशर्मप्रधाना-
स्ते (१)ऽर्वाचोरात्मतृप्तिप्रवलनपरता
मात्रक्लृप्ताः प्रथन्ते ॥

यथैव स्वयमेव तास्तत्प्रेमदेवता वदिष्यन्ति ।
"यत्ते सुजातचरणाम्बुरुहं स्तनेषु
भीताः शनैः प्रिय ! दधीमही"त्यादिना ।

(१) उत्कण्ठादयो भावाः ।

तस्माल्लक्षणविशेषात्तत्प्रेमविशेष एवासौ कामावशायत इति कामतयोपचर्य्यते न तु वस्तुतस्तत्तया स्मर्य्यते । अतस्तत्केलिश्रुति[१]फलश्रुतिरपि तथा विश्रुतिः ।—

विक्रीडितं व्रजवधूभिरिदञ्च विष्णोः
श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद्यः ।
भक्तिं परां भगवति प्रतिलभ्य कामं
हृद्रोगमाश्वपहिनोत्यचिरेण धीरः" ॥इति॥

तासामेष च भावविशेषतः खलु सर्वेषामपि महतां महत्तराणां महत्तमानामप्यन्वेषणपदवीमनवच्छिन्नतया नवीकरोति ।

यथा च प्रथयिष्यति श्रीमदुद्धवेन ।—

"एताः परं तनुभृतो भुवि गोपवध्वो
गोविन्द एवमखिलात्मनि रूढभावाः ।
वाञ्छन्ति यद्भवभियो मुनयो वयञ्च
किं ब्रह्मजन्मभिरनन्तकथारसस्य" ॥इति॥

अतएव तादृशतत्प्रेमतृष्णः श्रीकृष्णश्च तेन स्वस्य वशतामुरीकरिष्यति ॥

---

(१) श्रवण ।

"न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्य"मित्यादिना ॥

तदेवं सति तासु सर्व एवान्येऽपि गुणाः स्वत-एवानुगुणा भवन्ति ॥

"यस्यास्ति भक्तिर्भगवत्यकिञ्चना
सर्वैर्गुणैस्तत्र समासते सुरा" इतिवत् ।

ततश्चैवं वर्ण्यते ।—

यदमितरसशास्त्रे व्याञ्जि वैदग्ध्यवृन्दं
तदणुमपि न वेत्तुं कल्पते कामिलोकः ।
तदखिलमपि यस्य प्रेमसिन्धौ न किञ्चि-
न्मिथुनमजितगोपीरूपमेतद्विभाति" ॥

तदेवं सति च-सर्वासु तासु श्रीराधा पुनरसाधारणतां धारयति ॥

यथोक्तं ।—

"अनयाराधितो नून"मित्यादिना ॥

तदेवमाकलिते(१) निर्गलिते फलितमवकलितं क्रियते ।—

एवं राधाप्रेमधामा(२) ययासा-
वात्मारामोऽप्याप्तकामोऽप्यदभ्रं ।

(१) लब्धतात्पर्ये ।　　(२) बहुव्रीहिः ।

रेमे यस्मात्कामिनां कामिनीनां
न्यक्कारोऽभूदात्मनैवेति मन्ये ॥

आत्मारामता ह्यत्र परमानन्दरूपतया । आप्त-कामता च परमलक्ष्मीलक्षणगोपीलक्षणवल्लभता विलक्षणतया ॥

अदभ्रता च ताः परित्यज्यापि तस्यामखण्डित-तया व्यज्यमानतयेति प्रसज्यते ॥

तत्र च सति ।—

अन्योन्यानुगतिं यदप्यनुसृतौ प्रेम्णः प्रवाहौ तयो
राधामाधवयोस्तदप्यनुपदं कौटिल्यमासीदतः ।
यो गाम्भीर्य्यमपां जवं च दधति पूरः सहि प्रेक्ष्यते
सावर्त्तप्रचयस्ततः परतरः सारल्यकैवल्यवान् ॥

यथोक्तं ।—

"अहेरिव गतिः प्रेम्णः स्वभावकुटिला भवेत्
अतो हेतोरहेतोश्च यूनोर्मान उदञ्चति" इति ॥

तदेवं स्थिते तन्मयविलासविशेषो वर्ण्यते ।—

दरमुकुलितनेत्रा तिर्य्यगालम्बिकण्ठी
शिथिलितभुजयुग्मा स्तब्धसक्थीय(१)मासीत् ।

(१) स्वाङ्गादक्षिसक्थिभ्यां समासान्तः ततःकमलाक्षीवदिदं ।

तदपि च मधुहन्त्रा जानता स्वं कृतार्थं
मुहुरपि हसिता किं भ्रूकुटिं नापि कुर्यात् ॥

तदेवं वृत्ते वृत्तेनेतरि चानुनेतरि मानवत् तस्याः किञ्चिदहम्मानस्पर्शोऽपि सुदर्शो वभूव ॥

यथा च तथा पूर्वं नात्यूहापोहसामर्थ्यमासीदित्यधुना खल्विदं भावितं ।—

एतावन्तं दिष्ट[१]मज्ञासिषं न
प्रेयःसङ्गात्किन्त्विदानीं तदूहे ।
प्रेयान् सर्वाः प्रोज्झ्य मामेव रम्यं
सङ्गम्यान्तःकाननं यन्निनाथ ॥

ततश्चाग्रिमगमनाय व्यग्रेण नाथेन प्रार्थितापि सा लालित्येन किञ्चिदालस्यमपि व्यञ्जयामास ॥

यथा ।—

त्वद्गात्रस्पृष्टतामात्रश्लथाङ्गगतितां गतां ।
स्पन्दाय[२]चातिमन्दां मां यत्र तत्र स्वयं नय ॥

तदनु च तदुदासीनताधीनभावसमूहमूहमानः प्रणयवानपि प्रणयमानवानिदं सोपालम्भपरीहासलम्भमुवाच ॥—

---

(१) कालं ।　　(२) स्पन्दे किञ्चिच्चलने ।

कथं भवत्यामुह्यते। मम स्कन्ध एव सनिर्बन्धमारुह्यतामिति ॥

तदा च तज्जया सेर्ष्यलज्जयाधःसज्जदाननमस्याः पश्यन्नन्तर्हित[१]वानपि सकौतुकमन्तर्हितवान् ॥

सहसान्तर्हिते च तस्मिन् विस्मिता विस्मिता[२]च सा विधुरहिता कुमुदिनीव विधुरिता[३]बभूव ॥

तत्र किल सानुलापं[४]विललाप च।—

हा! नाथ! हा! रमण! हा! प्रियता[५]तिकान्त!
हा! हा! क्व गच्छसि महाभुज! हा! क्व वासि।
दास्यां सदा कृपणताजुषि नन्वमुष्या-
मात्मोपकण्ठमपि सूचय जीवितेश! ॥

अत्रास्तु तावत्तव रूपनिरूपणं त्वन्निकटभूबोधघटनयापि धीरतां धारयामीति ध्वनितं ॥

ततश्च।—

यद्यप्येवमपि चतुरशिरोमणिना तेन विचारितमस्ति स्म ॥

यथा।—

यद्येतस्याश्च मया परित्यागः परित्यक्ताभिः

---

(१) अन्तःप्रेम। (२) विगतस्मिता। (३) दुःखिता।
(४) अनुलापो मुहुर्भाषा। (५) प्रेमा।

सम्प्रति प्रतीयते मया[१] पृथगेनया च संगम्यते तदा परस्परमासत्त्यां सत्यां महारासमहः सम्पद्यत इति ॥

तथापि स्नेहवशान्मूर्च्छन्तीं तामागच्छति तस्मिन्नच्छहृदये मृगयमाणा मृगलोचना द्रुतमागच्छन्ति स्म ॥

ततश्च सम्भ्रमतः प्रच्छन्नतां गच्छति श्रीकृष्णे ॥

एषा चम्पकमालिकात्र पतिता किं चन्द्रलेखाथवा
कान्तीनामधिदेवता भवति वा वृन्दावनश्रीरुत ।
हा ! कष्टं न हि चेष्टते किमियमित्युद्विग्नधीवृत्तय-
स्तामावव्रुरमूश्चमूरुनयना भृङ्गीनिभाः पद्मिनीं ॥

तत्रान्यास्तु सखीनिभाः समभवं-
स्तस्यां द्रवन्मानसाः ॥
प्राणप्राणसमाः समानमनसः
सख्यश्चितं[२]तत्यजुः ।
यस्मिन्नास्त्यवलम्बनं किल किमप्यस्मिन्
विधिःसद्विधि-
स्तादृक्षेषु विलक्षणेषु वलयत्यन्यच्च धन्यं बहु ॥

(१) पृथग्योगे ।　　(२) चैतन्यं ।

कृष्णाप्रसङ्गपरिवासितमङ्गनाना-
मङ्गं यदा तु नसि सङ्गतिमङ्गति स्म ।
सारङ्गलिङ्गिमदृशः परमङ्गसङ्गा-
नाचेतिषुः सवयसोऽपि तदाङ्गतुल्याः ॥

तदा तु ।—

काश्मीरार्द्रं कापि सिन्दूरलिप्तं
क्वापि च्छिन्नं क्वापि भिन्नं क्व चापि ।
अन्तःपीताच्छादनं तन्निचोलं
पश्यन् सङ्घःसङ्गिनीनां ननन्द ॥

स्वयमपि यदपि तदा सा
हरिपरिमलभागथापि तासां तु ।
आगन्तुकसुबहूनां
गात्रात्तद्भागुवाह वैलक्ष्यं ॥

तदेवं सर्वा एव हृद्यसौहृद्यविस्रब्धास्तामौत्मकध्य[१]मागतां मध्यमध्यास्यतया सहपरस्परपरीरम्भबद्धाः सुदुस्तरदुःखनद्धाः पुरु रुरुदुः। सुदुस्तरं रुदित्वा च तामभूस्तु पप्रच्छुः ॥

अस्माकं खलु न दुःखं पञ्चभिः सहेतिकल्पेना[२]-नल्पमपि दुःखं कल्पत्वाय[३] नाकल्पतकल्पं[४] ।

(१) एकभावतां । (२) न्यायेन ।
(३) सामर्थ्यायं । (४) ईषदसमाप्तौ कल्पः ।

ततस्तन्नातिप्रष्टव्यं भवतीत्यनन्यगत्या भवत्यास्तु तत्यागः कथमिति कथ्यतां कथं वा विकलताहेतुः केवलता जाता तदपि च ॥

सा पुनरनुतापविपदुत्तरमुत्तरमुवाच ।—

कुतः कथं कुत्र च तेन नीता
चकार किं वाहमिदं न जाने ।
अनेन हीना तु विचारयामि
स्वीयं तु दौरात्म्यमनर्थहेतुः ॥

ततश्च धैर्य्यपर्य्ययत[1] पुनः क्रन्दनमनुविन्दमाना खिन्नतानतिभिन्नसखीकाभिः काभिश्चित्कृतसान्त्वना मार्ज्जितानना वेशनिवेशकृतमानना सा सममुन्न-मयामासे ॥

तया च सम[2]मुन्नयन[3]मयामासे सम्प्रति च कुत्र स प्रतिलभ्यत इति ॥

सा चोवाच ।—

नातिदूरमक्रूरचेताः स तु कुतुकितया विलसति न तु कितवतया ॥

---

(१) पर्य्ययःस्यादुपात्ययः ।
(२) सह ।　　(३) विचारं ।

यतः ।—

गोकुलराजकुमारः, शुचिरतिगम्भीरधीर्ह्रीमान् ।
तदपि[१] च मर्य्यादां नः, स्वीकारायात्यजत्करुणः ॥
तस्मात्तदीयचरणचरितवर्त्मानुचरणमेव नः श्रेयः ॥

तदेतद्वचनं रचयमानाः वनप्रचयं पुष्पावचयपरा इव विचिन्वन्ति स्म ॥

ततो ध्वजादिपदानि पदपद्मचिह्नानि क्रमतस्तावदमूरन्वक्रामन् यावत्तानि स्पष्टानि दृष्टानि ॥

परतस्तु परिवीरु[२]न्महीरुहनिविडतमारण्यघरन्यन्धतमप्रविष्टानि दृष्ट्वा न्यवर्त्तन्त नच तत्रावर्त्तन्त ॥

तत्र चेदं विचारयामासुः ॥

नूनमस्मज्जया लज्जया सज्जन्नसाविह सहसा न साक्षाद्भवितुमध्यवस्यति । तस्मात्तदवरोधनिरोधनिरोधाय भूरियं दूरतः परिहरणीया । परिहृत्य सा पुलिनधरणिरेवानुसरणीया ॥

यत्राहमत्रास्मि तत्र भवत्यस्तु कुत्रत्य[३]तामिता इत्यपदेशादपत्रपामपनयन्नयमपरोक्षतां प्रपनीपद्यते[४] ॥

---

(१) तथापि । (२) वीरुद्भिःपरिणद्धं ।
(३) कुत्रभवः कुत्रत्य । (४) प्राप्यते ।

तदेतद्विचार्य्य समाचर्य्य च पर्य्यन्वेषणा[1]स्त-मुद्दिश्य दिश्यं दिश्यं वनं प्रविश्य स्वयमान्विच्छ-न्तामिव सञ्चरन्तं दैन्यसैन्यमयमतिगानवितान-माचरन्ति स्मेति ॥

तदेवं तेषां सभासदां कथासमाधेरवधये कथकः समापनमाह ।—

ईदृगेष वरः कृष्णस्तव वृन्दावनेश्वरि ! ।
त्वां विना तु परःकोटीरपि नाङ्गीचकार यः ॥

इति श्रीगोपालचम्पूमनु श्रीराधासौभाग्य-
श्रवणसुभाग्यं नाम चतुर्विंशं
पूरणम् ॥

———

(१) अन्वेषणात्परिग्लानाः ।

# पञ्चविंशं पूरणम् ।

अथ मधुकण्ठ उवाच ।—

तच्च गानमवधीयतां । यथा ।—

व्रजविधो ! दशास्माकमीक्ष्यतां
व्रजविधो ! दशास्माकमीक्ष्यतां ।
जयति तेऽधिकं जन्मना व्रजः
श्रयत इन्दिराप्यस्य भूरजः ॥
तदपि हाजहा नस्त्वमत्र भो !
वयमिमः[१] कथं वान्यतां[२] प्रभोः ! ।
परमजातिभागुत्तमं स्वतः
शरदिजश्च यत्पङ्कजं ततः ।
दलकुलावृतः कान्तिदेवतां
हरसि यद्दृशा शश्वदेव तां ॥
कथमहो ! वयं स्वच्छतामिता
भवितुमीश्महे त[३]द्बहिःस्थिताः ।

---

(१) प्राप्नुमः । (२) व्रजादिति ज्ञेयं ।
(३) नेत्रस्य ।

अपि किल त्वया याञ्जया सिताः[१]
स्वयममूर्वरेणापि सन्दिताः[२] ॥
इति गतास्तव प्रेष्यतां पुनः
किमु तया दृशा हंसि तास्तु नः ।
यदिह शस्त्रतः केवलं वधः
स्फुरति नाञ्चितस्तन्मतं त्वधः ॥
वहुविधाद्भयाद्यत्त्वयावितं
सकलगोकुलं काननान्वितं ।
तदपि मन्महे स्वावनं यत-
स्त्व[३]दनुरागतः सोऽपि किं हतः ॥
कृपणपालक[४]श्रीव्रजेश्वरी
तनुजयोग्यर्भारस्ति नश्वरी ।
इति तवात्मवल्लिप्तिरिक्तता
परगपीडया[५] भाति तिक्तता[६] ॥
त्वमसि नान्यवत् कोऽपि कोपनः
स्फुरसि यत्प्रभो ! विश्वगोपनः ।

---

(१) वद्धाः ।　　(२) वद्धाः ।　　(३) त्वद्विषय ।
(४) एवुल्कोपधत्वात्पुंवत्त्वाभावेऽपि पुंवत्कर्मधारयजातीयदेशी-
यष्विवत्यनेन पुम्वद्भावः ॥
(५) परपीडकत्वेनेत्यर्थः ।　　(६) तिक्ततयाभातीत्यर्थः ।

तदिह पद्मजाभ्यर्थितः स्वभूः
परमसात्त्वतादन्वयादभूः ॥
इति तवेशितुः सुष्ठु यः करः
प्रथितसंसृतेर्भीतिभीकरः ।
शिरसि नः कुरु श्रीकरग्रहं
तमिह नान्यथा भावयाग्रहं ॥
व्रजगभीहृतौ वीर ! योषितां
शमयसि स्मितेनैव रोषितां ।
तदिह नान्यथा दण्डनं कुरु
प्रकटयानन-श्रीमहः पुरु ॥
यदपि ते पदं श्रीनिकेतनं
वृजिनजिन्महापुण्यकेतनं ।
तदपि गोगणस्यानुवर्त्तनं
विषभृतः शिरोवर्त्तिनर्त्तनं ॥
(१)यदधि तत्तदप्यात्तदुःस्थितिः
स्वयमभूत्ततः शान्ततास्थितिः ।
अहह ! तन्मनाङ्गस्तु वक्षसि
स्वविरहज्वले(२)किं न रक्षसि ॥

---

(१) तत्रतत्र तत्तदधिकृत्य यत् आत्तदुःस्थितिः स्वयमभूत् ततः शान्तातास्पदमेव तत् नोअस्माकं वक्षसि किं न रक्षसि !।

(२) स्वविरहेण ज्वलति इति तस्मिन् ।

मधुरलीलया कर्णरम्यया
विशदवाक्यया व्यक्तगम्यया ।
मुखसुगन्धितासात्म्य[1]या चिरा
त्तृषमिता वयं हन्त ! ते गिरा ॥
तव कथामृतं तप्तजीवनं
कविभिरीडितं कल्मषार्द्दनं ।
प्रवितरन्ति ये तेषु दुर्जनाः
सपदि नः कृते ज्ञप्तवर्जनाः[2] ॥
प्रहसितं तव प्रेङ्खिलोचनं
विहरणक्रमाद्भावरोचनं ।
मुरलिकारुतं सर्वशोचनं
विपिनतस्तु नः प्राणमोचनं ॥
चलसि यर्हि वा धेनुचारणे
दलति धीस्तु नस्तत्र कारणे ।
शिलतृणाङ्कुरैर्याविसन्नता
किल भवत्पदोः सा[3]स्मकान् गता[4] ॥
अहह ! जाज्वलत्यन्तराणि नः
स्मर निजान् जनान् दीनमानिनः ।

---

(१) स्वभाव ।    (२) ज्ञापितनिषेधाः ।    (३) अवसन्नता ।
(४) प्राप्ता ।

चरणपङ्कजं हृद्यमूद्दशं
रमण ! हे त्वयाधीयतां भृशम् ॥
अहह ! यर्हि यास्यहि काननं
कुटिलकुन्तलं श्रीमदाननं ।
मुहुरपश्यतां[१] तर्हि स क्षणः
स्फुरति सर्वदा कल्पलक्षणः ॥
किमिह तच्च वा वाच्यतां व्रजे
निमिरपीह यच्छुप्यते व्रजे ।
कथमहो ! वयं तास्तु गोपिका
न हि भवाम वा तत्र कोपिकाः ॥
विततगीतिकाजालसन्दिताः[२]
स्वकजनानतिक्रम्य चार्हिताः[३] ।
करमिता[४] महारण्यभूद्दिशि
च्छलमय ! स्त्रियः कस्त्यजेन्निशि ? ॥
प्रहसितं प्रियं प्रेमवीक्षणं
विलसितादिकं वल्गुलक्षणं ।
वृहदुरःश्रियो धाम वीक्ष्यते
निजविमूढतास्माभिरीक्ष्यते ॥

---

(१) जनानां । (२) बद्धाः । (३) आगताः ।
(४) प्राप्ताः ।

द्दिनलयेऽलकध्वान्तमेकतः
प्रसृतगोरजःसन्ध्यमन्यतः ।
मुखतया मतं यामिनीश्वरं
दर्शयन्मुहुर्यच्छसि स्मरं ॥
स्वरतिवृद्धितोऽनन्यकांक्षिणी
भवति वंशिका यत्र साक्षिणी ।
तमधर-द्रवं शोकनाशनं
वितर वीर ! भोः ! प्राणदाशनं ॥
इति तु यत्त्वया कामकल्पनं
किल कलावलात्तच्च कल्पनं[१] ।
वयमनारतं स्नेहभावनाः
कथमयामहे जातु कामनाः ॥
प्रकटता तु ते गोष्ठवासिनां
वृजिननाशिनी प्राणभासिनां[२] ।
वितर नः सकृत्त्वत्स्पृहायुजां
यदिह सूदनं स्निग्धहृद्रुजाम् ॥
तदेतदुद्गाय तदप्येतदित्याहुः ।—
"यत्ते सुजातचरणाम्बुरुह"मित्यादि ।

(१) वचनं ।     (२) प्राणेन भासते ।

अत्र चेदं गद्यं ॥

यत्किल कमलतः कोमलतायुगलं तव चरण-युगलं स्तनावनुस्नेहतः संहननायेहमानाश्च वयं तावतिकर्कशाविति तर्कतश्च स्तम्भमानाः शनैरेव तयोस्तद्दधीमहीति वाञ्छामस्तदहो ! कठिनमनस्तया दुरटामटवीमनुघटयति त्वयि कूर्पादिभिस्तत् किं न व्यथते ? किन्तु व्यथत एव । यतस्तद्भावनाजुषां भवदेकायुषामस्माकं मनसि तन्मङ्क्षु संक्रामति ॥

तस्मात्तदटनमेवास्माकं हृत्पीडातच्छालनमेव तच्छमिति तच्छालनमेव देहीति भावः ॥

तदेवं सति ।—

गीतेरासीद्विपरिणमनं तर्हि तासां विलाप-
स्तस्याप्युच्चैरुदितमिति यन्नाद्भुतं तत्तु तासु ।
कृष्णं द्रष्टुं प्रभवति बलाद्यस्य तृष्णातिधृष्णक्
तस्यान्यस्याप्यहह ! शतधा दृश्यते तत्तदत्र ॥

अथ तथा मसृणमसृणिकमश्रुनुदतीषु(१) रुदतीषु तदनुषङ्गत एव तमसः सङ्गतः क्रमशस्तन्निशामयन्निशामयन्मुरशमनः स्वकसलिलकलिलतया

---

(१) स्निग्धं यथास्यात्तथानिरङ्कुशमश्रु विक्षिपन्तीषु ।

नयनलक्षेणाप्यलक्षित सहसा महसावृतः सर्वासां मध्यमध्यासितवानम्वरावृततया स्वप्रथामावृतवांश्च ॥

एका तु तत्र तस्य मनागागमनाधिगमकमननयनापि पूर्ववदिदमपूर्वस्फुरणापुरस्कृतमिति केवलं कृष्णा कृष्णोत्पलं कलकलतया कलं कलयामास ॥

आकर्णिततद्वर्णकर्णाश्च वरवर्णिन्यस्तन्निर्णयकखाभ्यर्णतन्निर्वर्णनास्तूर्णमेव पूर्णतामवापुः ॥

महाघन(१)घनाघनघन(२)सङ्गमान्निदाघद्राधीयस्तयातिहृसदोघा हृदिन्य इव । उभयत्र हि गतप्रायजीवनताभिप्रायमागता ॥

तन्निर्वर्णनं च यथा ।—

आविस्तासु वभूव नर्म तदिति व्यञ्जन् वियुज्यापि स
स्मेरः सङ्कुचदन्तरं स्वमधिपन् पीताम्वरप्रावृतः ।
कर्णु सद्विनयं स्रगंशयुगलं हस्तद्वयेनामृशन्
स्रग्वी मन्मथमन्मथस्थितिरतिश्रीणां(३)गतिः
श्रीपतिः ॥

ततश्च ।—

प्रियस्त्यागव्रीडाद्विदधदिव ताटस्थ्यमभितः
स ताभिः कान्ताभिस्त्वरिततरमासादि परितः ।

---

(१) देह । (२) निविड । (३) व्रजदेवीनां ।

समुद्रः सङ्कोचं समयकलितं चेद्दलयते
तदा नद्यः सद्यश्चपलगतितां सन्निदधति ॥

तत्राहं प्रथमिकया[१]समुपेतासु तासु प्रथमतः श्रीपराशरेण कथिता काचित्; यथा ।—

काचिदायान्तमालोक्य गोविन्दमतिहर्षिता ।
कृष्ण कृष्णेति कृष्णेति प्राह नान्यदुदैरयत् ॥

इयं भद्रानाम्नी ॥

अथ श्रीबादरायणिवर्णिता वर्ण्यन्ते ।—

काचित्करं मुरारातेराचचार निजाञ्जलौ ।
नवपल्लवपात्रान्तर्यथा कमलतल्लजं[२] ॥

एषा चन्द्रावली ॥ तथा ।—

एका तदङ्घ्रिकमलं व्याजतः कुचयोर्दधे ।
लब्धवाञ्छितनिष्पत्तिः कुर्वतीव शिवार्चनं ॥

एषा पद्मा । तथा ।—

काचिदञ्जलिनागृह्णात्तन्वी ताम्बूलचर्वितं ।
यदा तदीयरागस्य पात्रीवाचरति स्म सा ॥

इयं सैव्या । एताश्च दक्षिणतःस्थिताः । तथा ।—

काचिद्दधार तद्बाहुमंसे चन्दनरूषितं ।
या देहतः स्नेहतश्च व्यानञ्ज स्वसमर्पतां ॥

---

(१) अहं प्रथमेति यस्यां क्रियायां तया । (२) श्रेष्ठ ।

सेयं श्यामला वामतः ॥ तथा ।—

अपगमितनिमेषा या तु तस्यास्यमञ्जं
नयन-युगमलीन्द्रद्वन्द्वमुच्चैरपीप्यत्(१) ।
अवकलितमकार्षीद्रूपकं तत्तदेषा
रसरसनविभूतेर्जिग्यतुस्ते तु यद्यत् ॥

असौ ललिता ॥ तथा ।—

तस्मिन् काप्यवलोकमात्रवलबल्लज्जाप्रसज्जन्मना
मीलन्नेत्रतया विचित्रपुलका चित्रायमाणा स्थिता ।
तामन्तर्वलितप्रियां प्रति ममाश्चर्यं वियोगस्थिते-
र्मध्ये योगमिहा(२)पि भोगमितव(३)त्यषेति या चिन्त्यते ॥

एषा खलु विशाखा ॥ तथा ।—

प्रेमा कोऽयं प्रसवति वृथाप्यस्त्रमत्रास्ति नेत्रं
तच्च स्थानादचलमपि सद्विध्यदुद्धाति दूरं ।
वेधश्चासौ व्रणमपि विना श्रीहरेः क्लेशदः स्या-
देवं यस्याः किमपि चरितं तामिमां वर्णयेत्कः ॥

असौ तु श्रीराधा ।—

(१) पाययामास । (२) योगे । (३) प्राप्तवती ।

ता एताः सम्मुखतः । तथा ।—

कृष्णमेघागमोल्लासपल्लव[१]द्वदन-श्रियः ।
सर्व्वाश्च लब्धपर्व्वाणः[२] सद्यः सिद्धाः
पुनर्नवाः[३] ॥

एताः सर्व्वतः ।—

अतिपरिमितिशोभाभाजनं कृष्णरूपं
न यदनुपमकान्ति यौवतं तद्विरेजे ॥
इदमुपमितिशून्यं यत्तु काव्यं समाप्तं
स इह न मम दोषस्तद्धि तत्त्वं तथैव ॥

तदेवं तासां तस्य च परस्परं परममदनमद-प्रदवदननयननिलयलीलया चन्द्रचकोरशीलता-लतावदुत्फुल्लतां गता ॥

तथा च क्षणकतिपये लब्धक्षण[४]प्रचये ताः सादरमादाय जलजातजात[५]समीरण[६]समीर-सरणि[७]तरणिजा-तरलतरतरङ्गरङ्गनिभनीरसनी-ड[८]तीरसरसैक[९] सैकत[१०]पुलिनान्तरं निर्व्रीडं क्रीडन्नेव वृन्दावनदेवः सेवयामास ॥

---

(१) पल्लव इवाचरत् । (२) पक्षे लब्धग्रन्थयः ।
(३) पक्षे ओषधिविशेषाः । (४) महोत्सव ।
(५) कमलसमूह । (६) प्रेरक । (७) मार्ग ।
(८) समीप । (९) श्रेष्ठ । (१०) वालुका ।

तदेव खलु प्रशस्तभङ्ग-सङ्गलक्षणेन हस्त-लब्धेन परमधन्यया स्वयमेव रविदेव—कन्यया कञ्जकिञ्जल्कपिञ्जलता[१] मञ्जुलगन्धगन्धवाहपरि-रम्भकोमलसिताभ्र[२] शुभ्रवालुकाभिरतिनिश्चित-चित्तयाचितं तत्र च शारदसुधाकरकरनिकरसुधा-लिप्ततया दूरतोऽपि तमस्तोमशमनं जलस्थल-कुसुमसमुदयामोदा[३] मोद[४] मदितमुखरमधुकर-मधुरीकृतमुरीकृतवान् ॥

उरीकृते च तस्मिन् परमोदये[५] नादेये[६] पुलिने स्मितविलसितनेत्रः स्वनाम्ना सितशतपत्रनेत्रः सर्व्वासामर्व्वाचीनवयसां सवयसां स्वहस्तविन्यस्त-प्रशस्तकुङ्कुमपङ्क नवस्तनवस्त्रविस्तृतिकृतस्वास्ति-कासनस्तत्र स्तोत्रभङ्गीसङ्गीतकलारङ्गभूमिताम-वाप स तापनोदनः ॥

यथा ।—

ऊर्द्ध्वं ग्लौरातपत्रं तलमनु पुलिनं हीरचूर्णाचिताङ्गं
श्रीमत्पीठं समन्तात् कुसुमवनशतं तोरणानीव यस्य ॥

---

(१) मिश्रिता ।　(२) कर्पूर ।　(३) सौरभ्य ।
(४) आनन्द ।　(५ उपादेय ।　(६) नदीसम्बन्धिनि ।

तं दिव्यस्वर्णवर्णव्रजकुलजरमा-राजिविभ्राजिदेहं स्नेहश्रीकाम्यगेहं हरिमणिरुचिरं प्राणनाथं स्मरामि ॥

ततश्च वृन्दावनसेविकाभिर्वृन्दाप्रधानकाननदेविकाभिः परमप्रयत्नपाल्यमाल्यदिव्यगन्धसन्धचन्द्रचन्दनमधुरमधुमदानुकूलताम्बूलाद्यं ददानाभिर्मुहूर्तार्द्धं वर्द्धमानपरिहासविलासं प्रेयसीसहितः प्रेयान्महितमहत्तया शुशुभे ॥

शोभमानश्च निगूढमामाभिरमूभिर्व्रजघमूरुदृग्भिः सम्वादमकलृप्त ॥

ततश्च तासां वृथात्मपरित्यागदोषलब्धपोषरोषमयाभिप्रायकतया जातं चित्तशोषं मोषं नयन्तीनां तोषप्रायं व्यञ्जयन्तीनामनुनयगर्भनानाविनोदसन्दर्भवार्त्तां वर्त्तयति तस्मिन् ॥

काचित्करं चरणमस्य परा तथोरु-
मन्यावलग्नमपरा मृदु मर्द्दयन्ती ।
अन्तर्निगूढकुपिता वहिरच्छभावा
भ्रूलोचनप्रसृमरस्मितमभ्युवाच ॥

केचिदेवं च वर्णयन्ति ।—

नयनवलनैश्चिल्लीचालैर्निगूढमृदुस्मितै-
र्ललितलपितैरन्तर्भङ्गैर्वहिर्वलितार्जवैः ।

चतुरमनसस्तस्मिन्[1] कृष्णां प्रियं वशवर्त्तिनं
प्रणयनयतः प्राहुः प्रक्त[2] प्रहेलिकमङ्गनाः ॥

अयि ! चतुरपुरन्दर ! प्रहेलिकाकालिकामेकां विकासय ॥

यथा ।—

भजन्ति भजतः[3] केचिन्नान्येऽन्यानेव केचन ।
उभयां[4]श्चापरे केऽपि नोभयानगतीन्[5] परे ॥

श्रीकृष्णस्तु चित्ते तदवबुध्याभिधत्ते स्म ॥

अर्थज्ञाः कृतहन्तारो धार्मिका धर्मगार्थिनः ।
विमूढपूर्णमुक्ताश्च दयावन्तश्च ते क्रमात् ॥

तच्छ्रुत्वा च परस्परमसरलाञ्चिल्लिभिरमूभिश्चिल्लीवल्लीवेल्लनेनेदं ज्ञापितं ॥

चातुरीभिरिह यस्तु कर्षतो
धर्म्मधाम दिशतः समुज्झतः ।
निर्दयं[6] पुनरमुष्य शिष्यते
येन नास्मदतिदःखमीक्ष्यते ॥

अत्र चातुरीभिरिति तस्यानर्थज्ञता धर्मधाम दिशत इत्यधार्मिकता तदुभयाभ्यां[7] च तदुभय

(१) स्थाने ।　(२) युक्त ।　(३) जनान् ।
(४) भजन्ति ।　(५) भजन्ति ।
(६) दयाया अभावः ।　(७) चातुरीधर्मोपदेशाभ्यां ।

रहित(१)ता पुनश्चातुरीभिरिति विमूढता। ताभिर्नस्तु कर्षत इति पूर्णतामुक्तता च तत्र स्वकृतानुद्देशेन कृतहन्तृता च निषिद्धा ॥

त्यागे चास्मद्दुःखवीक्षणाभावेन निर्दयता तु शेषितेति श्लिष्यति(२) ॥

स तु तदेवमवबुध्य स्वशुद्धयवगमनाय पुनरुवाच ।—

नाहं तेषां सदृगपि तु मां लुब्धमूहध्वमृद्धौ
प्रेम्नस्तां(३)त(४)द्विषयविरहं हन्त! कृत्वापि वश्मि(५)
युष्मान् वाच्यं किमिह मयकामायितावत्प्रतीते-
रेतद्यन्मे व्यसनमसकृन्माञ्च दुःखाकरोति ॥
यूयं हित्वा निखिलमनिशं कामयध्वे परं मां
मत्काम्यास्तु प्रयुतनियुतं प्रेमभेदेन सन्ति ।
तस्मान्न प्रत्युपकृतिकला-लेशकल्पं विधातुं
शक्नोमीति प्रथयत निजैः सद्गुणैरेव तुष्टिं ॥

तदेवमनवद्यं(६)कृष्णामवधार्य्य ।—

मनोज्ञत्वेन न परं सुरूपत्व(७)मिहान्वभूत् ।
बुधत्वेनापि कृष्णस्य सतृष्णोऽयं प्रिया-गणः ॥

---

(१) अनर्थज्ञत्वाधार्मिकत्वरहितत्वं । (२) युज्यत इत्यर्थः ।
(३) वृद्धिं । (४) प्रेम्नः । (५) कामये ।
(६) वचनं । (७) प्राप्तरूपसुरूपाभिरूपा बुधमनोज्ञयोः ।

तत्र गीर्वाणीना[(१)]मानाशतः परिहासवाणीयं ।—

रुचिमनु कुटिलालीणां, स्तुतिमनु जिह्मं ब्रुवाणानां ।
माधव ! गोपवधूनां, गुणतः कस्मान्मुदं तनुषे ॥
स एको जयतान्मानमातङ्गो व्रजसुभ्रुवां ।
हरिणा निर्जितस्यापि यस्य वीर्याद्विभीयते ॥

अथ समापनं ।—

वैदग्धीदिग्धबुद्धीद्धः[(२)] सोऽयं राधे ! सखा तव ।
अलम्भूष्णुं तत्र मेने यस्त्वां तूष्णीं स्थितामपि ॥

इति श्रीगोपालचम्पूमनु विप्रलम्भस्तम्भन
श्रीकृष्णालम्भनं नाम पञ्चविंशं
पूरणम् ॥

———

(१) देवस्त्रीणां । (२) दिग्धबुद्ध्या इद्धः दीप्तः ।

# षड्विंशं पूरणम् ।

अथ स्निग्धकण्ठ उवाच ।—

सुवचनमघशत्रोः शृण्वती श्रेणिरासां
विरहजनितदुःखं पूर्वसिद्धं व्यधावीत् ।
परमिह न तदेव व्याधुनोत्किन्तु शङ्का-
न्तरमपि यदमंस्त स्पष्टमायत्तमेतं ॥

तदेवममूरुत्फुल्लवदनकञ्जसदनमञ्जुनयनखञ्ज-रीटाः स पुनर्मञ्जुलमाभाषते स्म ॥

युष्मत्कृते स्म सुचिरान्मनसास्मि[1]दूय-
मानेन यूयमपि तस्य मदर्थमेव ।
तस्याथदुर्लभतमस्य मनोरथस्य
प्राप्ताविहानुरहसं महमाचराम ॥

स च रासरसरूप एव निरूप्यते ॥

तथाहि ।—

दीपः शारदभूरिपूरितशशी यत्रास्ति वृन्दावनं
रङ्गः श्रीव्रजनायिकाः स्वयमिमा यूयं कलाकोविदाः ।

---

(१) अस्मि स्मेत्यन्वयः ।

तं चेमं समयं समेत्य मुदितः सोऽहं हरिः किं परं
कर्त्तास्मि च्चण[1]मन्तरा तमपि किं रासं विना भोः !
प्रियाः ! ॥

इतिक्षीणतमा[2] व्रजजलधिसम्भवात्त्तीणचन्द्रमाः सर्वा अपि ताश्चकोराचीरषडत्तीण[3]युगपदालिङ्गनादिना सुखलक्षलक्षितीकृत्य वलवदादृत्य रासनृत्यविधये निर्जम्वाल[4]मस्तम्वजालमवन्धुरं[5] बन्धुरं[6] कमलवन्धुजा-पुलिनमावृत्य परस्परकरसम्वलनया वलयाकाराश्चकार ॥

कृते च वलये ॥

कृष्णायाः पुलिनं गतेन रमणेनापूरि कामस्तदा
तेना[7]मुष्य मनस्तथा प्रतिपदं तेन[8]द्वयं चक्षुषोः ।
तेना[9]ङ्गस्फुरदङ्गनासमुदयस्तेनाथ पूर्वं परं
सर्वं पर्व च तद्ब्रुवे किमपरं नाद्यापि विश्राम्यति ॥

तदेवं स्वकलितचये वलये वनमाली शोभानिचयमुपलभमानश्चिन्तयामास ॥

---

(१) उत्सवं । (२) तमस् ।
(३) अषडक्षीणो यस्तृतीयाद्यगोचरः । (४) निष्कर्दम ।
(५) बन्धूरन्तून्नतानतं । (६) बन्धुरबन्धुरौ रम्येति विश्वः ।
(७) कामेन । (८) मनसा । (९) चक्षुर्द्वयेन ।

उपरि यथोज्वलमिन्दो, र्वलयं पुलिनं तथा भुवि च।
किन्तु कलङ्कस्तस्मि,न्निर्मलरमणी-कुलान्यत्र ॥

तदहो ! चामीकरमणिसराकारोऽयं रमणीय-रमणीवलयः प्रतियुग्ममध्यं यदि महामरकताय-माननायकसम्वध्यमानतामावध्नाति तदा हृद्यता-मापद्यते ॥

तच्च तथावेशेन मत्प्रवेशेन परं सिद्ध्यतीति-निध्याय स्थितः सन्नकस्माद्यथामनोरथाकारमेवाव-स्थितवान् यथा स्वयमपि कथमिति न तत्प्रथन-मवाप ॥

ततश्च ।—

हरिहारिणाक्षीवलितं,पुलिनं तद्वल्गु भाति स्म ।
स्वप्रतिविम्वेनादा,द्यद्विधुविम्वाय सारूप्यं ॥
सुहृदिन्दोः पुलिनं त,त्पुलिनस्याभून्नतभ्रुवां प्रचयः।
तत्प्रचयस्य च वलनं, श्रीयुतगोपालमूर्त्तीनां ॥

यत्र च ।—

परस्परकरावलिग्रथितमण्डलीमण्डनी-
रनुस्वमवलामिलन्नुभयतस्तदा माधवः ।
तदीयभुजपाश्यया कलितमृष्टपृष्टस्तथा
तदंसनिहितात्मदोरभवदेष रासोद्यमे ॥

गौरीकृष्णौ गौरीकृष्णावित्थं लक्ष्ये लक्षे युग्मे ।
वृत्ताकारे[1]वंशीशंसी राधासङ्गी तस्थौ मध्ये ॥

रासं प्रारभत स्वयं हरिरसौ कैशोरकं मानय-
न्नित्येवं स पराशरोऽपि भगवान् प्रावोचदुच्चैर्यतः ।
तस्माद्गोप-वधूभिरेव सफलं तज्जातमित्थं तु मे
हंहो पश्यत वच्मि वा किमपरं रोमाञ्च जातं महः ॥

सविविधवनिता-वृन्दै,र्यदपि वहुप्रेयसी[2]तदा जज्ञे ।
तदापि च राधाज्ञप्ति,[3]र्मन्ये तस्यापराः कृतयः[4]॥

तदेवं ।—

अनङ्गमङ्गेन निजेन साङ्गं
कृत्वाधिरङ्गक्षितिसङ्गमस्य ।
अङ्गीचकाराङ्ग[5]तमङ्गहारै-
र्नव्याङ्गनासङ्गममङ्गलाय ॥

कलितकनकभासः[6]स्मेरनेत्रा विधूति
क्षुभितवलयवीथीशिञ्जितव्यक्ततालाः ।
विविधगतिविहारानङ्गसाराङ्गहारा
हरिहरिमणिमूर्तीरन्तरा ता विरेजुः ॥

---

(१) वर्तुलाकारे ।
(२) वह्वयः प्रेयस्यो यस्य ।　(३) ज्ञानं शक्तिः ।
(४) क्रियाशक्तयः ।　(५) पुनः ।
(६) कृष्णपक्षे आलिङ्गितकनकाङ्ग्यः ।

ततश्च ।—

नवीनविनतभ्रुवां निजनवीनकान्तच्छवी-
जुषां नटनचातुरीकुलधुरीणलीलायुजां ।
चलद्वलयशृङ्खलावलितनूपुराणां ध्वनि-
र्नटाध्व[1]निधितालतां ध्वनयति[2]स्म यावद्दिवं ॥
रासे शिञ्जिततालजालमुदभूत्तद्वद्यथा खेचरा-
नप्याकृक्ष[3]दहो! विदूरतरतः कृत्वेव पूर्वस्थितान् ।
द्योयानाभिधमञ्चसञ्चयगता वाद्यश्च गीतश्च ये
सभ्यत्वञ्च समं मदाद्विदधतः स्वं नात्र निश्चिक्यिरे ॥

तत्र देवीनां सञ्जल्पः ॥

पश्य पश्य ।—

हरिणा गानमासादि गानेन रमणीकुलं ।
रमणीभिरथो गानं गानेन स हरिः पुनः ॥
पुलिनं विलसत्कृष्णं, कृष्णं सालिङ्गनाङ्गनं कलय ।
आङ्गन[4]मभिनवगीतं,गीतं सङ्गीतसङ्गिसङ्गीतं ॥
तत्र स्वयमारम्भे लास्यसम्भेद एव जातः ॥

यद्यथाभिनयं[5]यथा ।—

अङ्गहारचलदङ्गहारिषु
स्वान्तहारिविलसद्विहारिषु ।

(१) मार्ग । (२) व्यञ्जयामास । (३) आकृष्टवान् ।
(४) अङ्गनासमूहं । (५) अव्ययीभावोऽयं ।

लास्यकारिषु चलास्यमाचरन्
भ्रूनटीघटितनेत्रा नर्तकाः ॥

तौर्य्यत्रिक[१]शौर्य्यवराणां खेचराणां वाद्ये तूद्भूते ताण्डवमण्डलश्च साभिनयं यथा ।—

उद्यद्दुन्दुभिमड्डुडिण्डिमडमर्वाद्ये मृदङ्गं गते[२]
वाद्ये द्योपदविद्यवेद्यन[३]दने सद्योऽथ विद्योतिते ।
ते तद्युद्धटनाट्यनीतिघटनासङ्घट्टनिष्कुण्ठता-
सू[४]त्कण्ठाः पदपाणिकण्ठकटिसम्मोटालिकोटिं
दधुः ॥

तत्र च शस्त्रप्रशस्तानामिव तेषां कृतहस्तकानां[५] पुनर्लक्ष्यादव्यय एव लक्षितः ॥

तथा हि ।—

हित्वा हित्वाप्यत्र हस्तालिबन्ध-
तालालम्बाहस्तकानि प्रदर्श्य ।
गौरी श्यामा लाघवात्पूर्णमाना
रासोल्लासे तद्वदासन्पुनश्च ॥
पुष्प-वृन्दमपतन्मुहुर्मुहुः
कृष्णगौरतनुमण्डलीमनु ।

---

(१) तौर्य्यत्रिकं नृत्यगीतं वाद्यं ।　(२) प्राप्ते ।
(३) विद्यावान् ।　(४) कुण्ठस्वभावं प्रसूते ।
(५) कृतहस्तः सुप्रयोगविशिखः । पक्षे कृतं हस्तकं यैस्तेषां ।

वृष्टिरूर्द्ध्वमधरत्र नीरभृ-
द्विद्युदालिरिति यत्र चित्रता ॥

अत्र देवा देव्यश्च भव्य(१)भाव(२)भवान्नव्यपरिभवात् कमलाक्षं साक्षादिव सम्बोधयन्तस्तथा योगमाया-या योगतः परं स्वस्वयोग्यमन्तः समधिगम्यरम्य-मिदं वाद्यकोलाहलावृतमुज्जगुः ॥

तदेतदेकीकृत्यानुगीयते ॥—

जय जय सद्गुणसार ! ॥

जगतिविशिष्टं कलयितुमिष्टं गोकुलसदवतार !
॥ ध्रुवं ॥
कमलभवेश्वरवैकुण्ठेश्वरपत्नीचिन्तितसेव ! ।
राजसि रासे वलितविलासे निजरमणीभिर्देव ! ॥
नटवत् परिकर ! निखिलकलाधर !
रचितपरस्परमोद ! ॥
आलिङ्गनमुखविततमहासुख !
वल्लववधु(३)हततोद(४) ॥
व्यतिवीक्षणाकृतसात्त्विकपरिवृतमण्डलमनु-
बहुमूर्त्ते ! ।

---

(१) शुभ । (२) प्रेम ।
(३) इको ह्रस्वोऽङ्यो गालवस्य । (४) व्यथा ।

व्रजतरुणीगणरचितनयनपणसांचितवशी-
कृतिपूर्त्ते ! ॥
चरणकञ्जधृतिकरपल्लवकृतिचिल्लीवलित-
विहारान् ।
मध्यभङ्ग[१]ततिमणिकुण्डलगतिपुलकस्वेद-
विकारान् ॥
कलयति[२]भवता[३]घनसाम्यवता तडिदिव सर्वा-
ललना ।
अपि वः परिमितितरतमता[४]मिति सेयं ज्ञपयति
तुलना[५] ॥

सुमधुरकण्ठे नृत्योत्कण्ठे तव रतिमात्रप्रीते ।—
त्वत्स्पर्शामृतमदचय सम्वृतचित्ते भावक्रीते ।
युवतीजाते गीतजशाते नावृतविश्वप्रभवे ।
यस्त्वं राजसि तत्सुखभागसि नम एतस्मै प्रभवे ॥
या सह भवता विस्मयमवता स्वरजातीरतिशुद्धं ।
गायति सेयं निखिलैर्गेयं कलयति[६]
निजगुणरुद्धम्[७] ॥

---

(१) भङ्गी । (२) रचयति । (३) सह ।
(४) तासां कृशाङ्गतां तव पुष्टाङ्गतां इत्यर्थः ।
(५) उपमा । (६) करोति । (७) परिभूतमित्यर्थः ।

तत उत्कर्षं वलयितहर्षं[१] वलयति येयं गाने ।
सा श्रीराधा वलिताराधा भवता कलिता माने[२] ॥
येयं रासे श्रमजविलासे विगलन्मल्लीवलया ।
सा भवदंसे लसदवतंसे धरति करं वरकलया ॥
या चांसं परिभुजपरिघं परिचुम्बति तव सविनोदम् ।
हृष्यति सेयं तन्न गणेयं[३] यद्रोम च सामोदम् ॥
चलकुण्डलधरगण्डमुकुरवरसमिषस्पर्शविधाने ।
ताम्बूलद्रवपरिवर्त्तोद्भव[४]मयसे चुम्बनदाने ॥
एषा नर्तनकीर्त्तनवर्त्तनशिञ्जितजातसुताला
तव रामानुजकरमतुलाम्बुजमिषमाधाद्धृदि वाला ॥
अथ रासक्रमपरिवलितश्रमवनितालम्बितदेह ! ।
परितो भ्रमणाकगणाविश्रमणाकसमुदितपरमस्नेह ! ॥
कविकृतनिश्चयशुभ्रयशश्चयमालासमुदयहारिन् ! ।
जय जय जय जय, जय जय जय जय
जय जय रासविहारिन् ! । इति ॥

"राजसि रासे वलितविलास" इत्युक्तं रूपमेवं निरूपयन्ति ॥

---

(१) प्रति । (२) सम्माने ।
(३) गणनीये तु गणेयमित्यमरः । उणादौ गणेरेय इति क्षीरः ।
(४) परिहासं ।

रूपं यन्निजनित्यसौभगशिरोरत्नं नराकृत्यसा-
वानीयात्र यदीयशक्तिविभव-
स्याढ्यां स्थितिं प्रैत्तयत् ।
चित्रं विस्मयते यतः(१) स्वयमपि स्वाशेषसम्वेदिता
तस्मिन् भूषणभूषणोऽप्यधुरमूः
शोभां स्वया शोभया ॥

तदुक्तं ।—

"यन्मर्त्यलीलोपयिकमि"त्यादि "तत्रातिशुशुभे" इत्यादिकं ।

तदेवं सति श्रीराधिकायां तु कैमुत्यमेव स्तुत्यं जातं ॥

युवतीजात इत्यादावेवं वर्णयन्ति ।—

तासां व्रजकिशोरीणां नित्यमप्रसवात्मनां ।
गुणैः सप्रसवैः पूर्णं विश्वमप्यन्वयै(२)रिव ॥

या सह भवतेत्यादावुपश्लोकयन्ति च ।—

शर्वब्रह्मसुरेशमुख्यादिविषद्वृन्दानि यद्ध्यानतः
शश्वन्मोहमयुस्तमेव दयितं कृत्वानुगं या जगौ ।
सार्द्धं तेन पराश्वमन्क्रतिपरास्तां निर्मिमाणामपि
व्यर्थीकृत्य विविक्तरागवलनां वन्दामहे राधिकां ॥

---

(१) रूपात् । (२ वंशैः ।

तामेवोद्दिश्य चलकुण्डलेत्यादौ च कवयन्ति ।—

तदधररसमाचान्तं, प्रागकृत द्विर्यदेष तद्युक्तं ।
द्विजसंस्कृतताम्बूलं, कथमद्यादन्यथा तस्याः ॥

किञ्च ॥—

कृष्णः स्नेहस्य मूलं किल लसति वपू-
रूपामित्येवमस्मिं-
स्तादृग्(१) नन्दव्रजान्तर्जनसदसि सदै-
वानुभूतिप्रचारः ।
सोऽयं यासाममंस्त प्रणयमय ऋणा-
न्यात्मनि प्रेयसीनां
तासामप्यूर्द्धमूर्द्धप्रथितनिधिमणिं(२)
राधिकामेव नौमि ॥

राधा स्वकान्तं वशितं विधाय
निःशेषमाक्रीडति तेन सार्द्धं ।
नाहं तथेतीव शिवाशिवान्त-
स्तनौ निलीनार्द्धतनुच्छलेन ॥

---

(१) महास्निग्ध ।
(२) उर्द्धा या मूर्द्धप्रथिता मणिस्तद्रूपां ।

अथवा ।—

अर्द्धेनार्द्धेन तन्वा व्यतिमिलनवतो रुद्रयोरेष भावः
काव्यज्ञैस्तर्क्यते यः स पुनरिह मया
मन्यतां भण्यमानः ।
प्रेम्णा यौ पूर्णरूपौ त्रिजगति विदितौ
राधिकामाधवाख्यौ
पूर्णाङ्गत्वं तयोरप्यतितदसमयोर्नाविपीत्यौचिती न ॥

तदेवं सति ।—

वाद्ये गीते च दिव्ये प्रमदशिथिलिते
भूषणानामलीना[१]-
मप्यासीद्ध्वानवर्गः[२] प्रतिनिधिसमये[३]
तस्य[४]तस्यापि तत्र ।
खेदे जाते तथागात्प्रवलनटकला
लास्यतां येन केश-
स्वर्णोत्तंसावतंसप्रमुखवरसभातद्वदुल्लास्यते स्म ॥

एवं परिष्वङ्गकराभिमर्श-
स्निग्धेक्षणोद्दामविलासहासान् ।

---

(१) भ्रमराणां ।　　(२) शब्दवर्गः ।
(३) समयाः शपथाचार इत्यमरः ।
(४) वाद्यादेः ।

समं प्रियाभिर्व्यतिकृत्य नृत्य-
न्यास्त्रौदसौ स प्रतिविम्वविम्वम्[१] ॥

ततश्च।—

मालाः केशालिवेशान् कुचयुगलपटी[२]
मण्डनान्यन्यवासां-
स्यप्येता नैव शेकुः कलयितुमसकृद्रासपर्वावसाने।
ध्याते यत्रापि सम्प्रत्यपि मुनिविततिर्
विस्मरत्येव सर्वं
चित्रं तत्प्रेयसीनां तदिह भवति किं
तादृशे तत्प्रसङ्गे ॥

तं दृष्ट्वाप्यथ रासमम्वरगता रामाश्च कामार्दिता
मोहं प्रापुरदश्च तावदभितोऽप्यास्तां परं श्रूयतां।
चन्द्राद्यैरुपलक्षितं नभसि यद्भ्रम्यते सर्वदा
ज्योतिश्चक्रमिदं च विस्मयकरी
चस्कम्भयन्माधुरी[३] ॥

तदेवं लीलालुब्धासु परमावेशतः सप्रियासु तासु विलुभित[४]क्रियासु रासविलासः समुपरराम ॥

---

(१) प्रतिबिम्बविम्वयोः सादृश्यं।
(२) हृदयगत इति वा पाठः।
(३) अव्ययीभावः कर्त्ता। (४) व्याकुलित।

उपरमति च तस्मिंस्तत्तदननुसन्धानसन्धिमनु तानि मिथुनानि यथावत् कुञ्जाय कुञ्जाय पृथक् पृथगन्तर्दधिरे ॥

अन्तर्धाय च तत्तन्मिथुनं परस्परपरिकरपरिष्कारपरायणतामाससाद ॥

तत्र च प्रत्येकं तेषामालिङ्गनादिसाचिव्यं वचनादिरचनमेवमासीत् ॥

यथा ।—

हन्त ! मामन्तरा कान्तमन्तराप्तं तमस्त्वया ।
इति ब्रुवन्तं श्लिष्यन्तं तं सा सिञ्चन्निजाश्रुभिः ॥

ततश्च ।—

हन्त ! क्लमः समजनि स्फुटमद्विहारा-
दस्या नवीनतरुपल्लवकोमलायाः ।
ज्ञातश्च हन्त ! न मयेति पृथक् स तासां
साश्रुर्ममार्ज मुहुराननघर्मविन्दून् ॥

वाष्पे मृज्ये हरिर्वाष्पं स्वेदे स्वेदं तदा दधे ।
गोपालकुलसुभ्रूणां श्रमे रासविलासजे ॥

तत्र वहुलसामग्रीवाहिनीनां वृन्दासखीवाहिनीनां कृतप्रभवृन्दायां वृन्दायां व्याकुलितं श्रीकृष्णवर्णनं ॥

---

यथा ।—

सास्त्रालोकनमश्वलानिलकृतिर्व्वक्रालकाद्युन्मृजा
गण्डान्तःपरिचुम्वनं पटयुगाधानं तनूचर्चनं ।
ताम्वूलार्पणमत्यपूर्व्वमधुरालापः स्तवप्रक्रिया
सेयं रासपरिश्रमप्रशमनी कान्तासु कृष्णक्रिया ॥

अथ कान्तावर्णनं यथा ।—

चक्रस्मेरविलोकनं नवदलैः सम्वीजनं मार्द्दवा-
दङ्गानामभिमर्द्दनं विघटितस्रग्वस्त्रसंयोजनं ।
सम्यङ् मर्म्मगनर्म्मशर्म्मरचनं ताम्वूलचन्द्रार्पणं
सेयं रासपरिश्रमप्रशमनी कृष्णे प्रियाणां क्रिया ॥

ततः स्वयमागत्य प्रत्यक्षीकृत्य चान्यथामन्यमानायां तस्यां सस्मितं पुनरमूरूचुः ॥

दृष्टं देवि ! मिथो हरिव्रजवधू-द्वन्द्वव्रजेनामुना
स्वीकृत्य प्रमदात्प्रयत्नविधिना नेपथ्यमङ्गे धृतं ॥
एतद्यत्र सखि ! क्षणादपगतं किं ब्रूमहे तद्वरं
गीर्नः साभवतान्मृषा ननु रहस्तद्व्यक्तिमापद्यतां ॥

अथ वृन्दा सस्मितं चेतसि चिन्तयामास ।

सत्यमाहुरिमा यत्पुनःपुनः श्रमापनोदनं सर्व्वेन्द्रियामोदनं शुभवेशं गानविनोदविशेषमारभमाणानि तानीमानि मिथुनानि मृश्यन्ते ॥

अथ स्निग्धकण्ठः समापनमाह स्म ।—

राधे ! त्वद्वल्लभः सोऽयं सर्वेषामपि दुर्लभः ।
वरीतुं त्वामन्तरङ्गामन्या गोपीर्वृतीयति[1] ॥

इति श्रीगोपालचम्पूमनु रासविलास
प्रसारणं नाम षड्विंशं पूरणम् ॥

---

(१) वृतिमिवाचरति ।

# सप्तविंशं पूरणम् ।

मधुकण्ठ उवाच ।—

अथ विलसितखेदस्वेदकुल्या[1]यमानाः
सहहरिवरगौर्य्यः सूर्य्यपुत्रीं समीयुः ।
यदमितशतमेताः सा भजन्ती स्रवन्ती[2]
सरभसरसपूर्त्तिं तत्क्षणादेव भेजे ॥

अतिक्रम्य स्वमर्य्यादां श्यामः श्यामाश्च मां ययुः
इतीव यमुनाश्यामा द्रागतिक्रामति स्म तां[3] ॥

अथाङ्गरुचा घन[4]चपला घनायमाना वाचा च चातकभणितस्तनितायमाना घनागमलक्ष्मीरिव लक्ष्मीलक्ष्मीपतीनां सभासा मिहिरजाप्रवाहनभसि परस्परं हस्तग्राहमवगाहमाना भासते स्म ॥

मिथः प्रहसितप्रथाकलकलः समाकर्षणं
मुहुः स्तिमितगात्रतापृथुलवेपथुप्रक्रमः ।

---

(१) कुल्याल्पा कृत्रिमा सरित् ।
(२) स्रवन्ती निम्नगापगा ।
(३) मर्य्यादां ।  (४) निविड ।

तदेतदथ यत् स्थितं वत जलावगाहात्पुरा
तदेवमनुमीयते समुदियाय तस्य (१)च्छविः ॥

यदा जलं न हि विविशुर्नतभ्रुव-
स्तदामुना प्रसिषिचिरे समं तथा ।
अमुं यथा लघुगतिमत्र मेनिरे
विभूमवन्नुदकभृदश्नतीति ताः ॥

जलादेवं सिषेचामूर्घनं(२) घनरसप्रदः ।
विविशुर्जलमेवामूर्यथा(३) सारशरार्दिताः(४) ॥

तदावलग्नदघ्नं(५)वार्मग्नाश्चपललोचनाः ।
कृष्णसारवधूरूपाःपुरस्ताद्गतिमद्विषन् ॥

यदा तासां नेत्रप्रतिफलनमिश्रा झषगणा
मुहुर्नैवागच्छन् परिचितिविधानं कथमपि ।
तदा स्पर्द्धां वद्धा इव मृदुलमङ्गं भृशममी
स्पृशन्तो भीरूणां मुरहरदृशोः कौतुकमधुः ॥

हंसा गतीश्चक्रखगाः पयोधरा-
न्मीना दृशः सारसनानि सारसाः ।
तासामुपेत्यापगता यतस्तदा
तेषां(६) तु साम्राज्यमपूरि सर्वतः ॥

---

(१) जलावगाहस्य । (२) यथास्यात् ।
(३) एवं सिषेच यथा जलं विविशुः । (४) सत्यः ।
(५) मध्यपर्य्यन्तपरिमाणं । (६) गत्यादीनां ।

मुखवृन्दं खलु तासां
कमलान्यभिभूय वभ्राजे ।
तज्जातिषु(१) तदधिकता
विधुता वा किं निदानमस्ति स्म ॥

ततश्च लोचननिकोचं हसन्तीषु तासु स्वयं तेन नागरचन्द्रेण प्रवर्त्तिता व्यात्युक्षी(२) यथा ॥

मेघं विद्युद्विद्युतं चात्र मेघः
सिञ्चत्युच्चैर्मेघतुल्ये प्रवाहे ।
चित्रं चित्रं चित्रमेतत् किमे-
न्नाद्यं पश्येत्यूचिरे व्योमरामाः ॥

ततश्चाकण्ठनिर्मग्ना महिलाः कमलाननाः ।
मधुसूदनसंसक्ताः कमलिन्य इव स्थिताः ॥

गणे गौराङ्गीणां हरिरचितधर्षात्परिभवं
गते तत्र स्वर्णाम्बुजघनवनी निह्नुतिमदात् ।
विपर्य्यासो यर्ह्यस्फुरदिह च नीलाम्बुजवनी
तदा तस्यापह्नुत्यपचितिकृतेऽभूदनुपदं ॥

अम्वुजगन्धि तथाम्वुज, रूपं मधुयुग्यथाम्वुजं तदिव ।
तासां तस्य च वदनं, किं जलकेलावदाद्भ्रमं न मिथः ॥

---

(१) निर्द्धारणे सप्तमी ।　　(२) परस्परसेचनं ।

कथञ्चिदपि या लब्धा हरिणाम्भोजकानने ।
किमपि व्यञ्जयामास तस्या हा ! हा ! कृतिः परं ॥

स्मितविलसितनीलाम्भोजमासीद(१) देका
मुखमनु(२) हरिवक्त्रस्फूर्त्तिसन्दिग्धचित्ता ।
इह च वरमरन्दस्वादमासद्य सद्यः
समरुचियुवतीभ्यः शङ्किनी स्वं जुगोप ॥

दुर्लभं यदजनि स्वयं ग्रहा-
लिङ्गनं तदिह जातमञ्जसा ।
यर्हि मग्नमनया गभीरवा(३)-
रुज्जहार हरिरप्यमूमथ ॥

द्रुतमथ वररामा वारि वक्षोजदघ्ने
युगपदयि ! भवत्यः प्राणनाथं विजेतुं ।
स्थगितगतिकराभ्यामिच्छवःसेक्तुमुच्चैः
कथमथ वत जिग्युर्जिग्यिरे वा कथं नु ॥

पद्मिन्या मुखपद्मं, मुद्रितमपि स
मधुसूदनः पिवति ।
इति मिषकलया सुदृशः, स्खलितदृशस्तद्वदाचरत्
कृष्णः ॥

---

(१) प्राप्नोत् ।   (२) स्वीयमुखं लक्ष्यीकृत्य ।   (३) जलं ।

हरिणा हृदये तासां वितीर्णा नखरत्नरणाः ।
अद्भुतं सहसा श्लिष्टा मदनेषु कृतव्रणाः ॥

औपजानुकभुज[1]स्तु यदासौ
पार्श्वतीय[2]मुखतीयतया[3]सीत् ।
औपकर्णिकदृशां[4] स तदासा-
मौपनीविक[5]करोऽप्यजनिष्ट ॥

यदा राधा वारिकेलौ सखीनां पुरतो गता ।
विनापि सेकं स तदा जडतामभजत्प्रियः ॥

राधापुरःसरतया जलकेलियुद्धे
कृष्णं चकार जडमुद्यममन्तरापि ।
नैतद्विवेद वनिता निचितिर्मिथस्तु
स्वीयामजिह्मपदसौ जितकाशिताश्च[6] ॥

अलकवलयिनेत्रं कञ्जनेत्रेण कीर्णं
स्वमनु मधुपतीक्ष्णं कञ्जमुन्नीय[7]तस्या ।
सभयमवगतायां तत्र सेनाधिपायां
स तु तदनुगसैन्यं प्राविशच्चाविशच्च ॥

---

(१) तासां जानुसमीपगतभुज आसीत् ।
(२) पार्श्वस्थिततया । (३) सम्मुखस्थतया ।
(४) कर्णसमीपगतदृष्टीनां । (५) नीवीसमीपगत ।
(६) जितकाशिजिताहवः । (७) वितर्क्य ।

ततश्च ।—

नीरकेलिभृतरागचक्षुषा
मट्टहासनिभहासरोचिषां ।
मारयुद्धलसदुद्धतश्रियां
रौद्रवद्व्यजनि सोऽप्यसौ रसः ॥

ततः क्रीडायुद्धं दधदघरिपुर्नीरविहृति-
प्रथायामेकाकी व्रजयुवतिकोटीभिरभितः ।
तथा कृत्वा तीरं प्रसभमितवान् सम्प्रति यथा
पुरा कात्यायन्या भजनकृतिकन्यास्वकुरुत(१) ॥

ततश्च ।—

मरालकूजिता नीरवसना नीरजाननाः ।
चञ्चद्भ्रमरका नीरजानां नाल्य इव स्थिताः ॥
अथ हा ! हा ! हासशब्दाःप्रवृत्ता नीरतीरयोः ।
एके चातकगीस्तुल्याः परेऽल्पस्तनितप्रभाः ॥

ततश्च वहुधा परिहस्य विनोदविशेषाय सख्या-
तिरेकविवेकाविवेकाय च द्वाभ्यां द्वाभ्यामेकमेक-
मंशुकं दत्तवान् हरिस्ताः सर्वा वस्त्रैकैकवेष्टित-
द्विद्विकाययष्टीरुत्थिता निरीक्ष्य प्रतिमुखं परीक्ष्य
वहु जहास ।

(१) वस्त्राणि जहारेति भावः ।

हसित्वा च तासामुत्त[१]मुत्तमं वासस्तथा[२] धारयन्तीनां चञ्चलतासम्भृतं तिर्य्यगञ्चलतासम्भृतं सम्भवदरुणगुणं मध्ये मध्ये स्तम्भनिपुणं क्वचन क्वचन चाकस्मिकस्मितलम्भं विनापि दृगम्भः क्रन्दितेन बिलोकितदम्भं विलोचनसंरम्भं[३] लम्भ लम्भं त्रिलोकीमोहने चिकीर्षिततदीयरुचिदोहने कुसुमासारकारिणी विमानचारिणी संहतिः प्रशस्तवस्त्रालङ्कारमाल्यादीनां पुटीः पेटा[४]श्च तत्पुरतः शनैः पातनमनैषीत् ॥

कृष्णस्तु ताः सर्वस्तु ताः समुन्न[५]वस्त्राः पश्यन्नतिसमुन्नतानन्दवश्यः स्वयमनुरज्य समुपयुज्य विभज्य च तानि वस्त्रादीनि प्रत्तवान् ।

तत्र प्रथमतः स्वल्पेनैव तेन तेन विच्छित्ति[६]र्जाता ।

यथा ।—

मज्जनेन तनुरोचिराचितं
सूक्ष्मशुभ्रवसनं स तच्छवि[७] ।

---

(१) उन्दी क्लेदने । आर्द्रं । (२) तेन प्रकारेण ।
(३) विशेष्यपदम् । (४) पिटकः पेटकः पेटा मंजूषाश्च ।
(५) आर्द्रं । (६) शोभा । (७) रोचिश्छवियुक्तं ।

चित्रकं[1] द्युतिविचित्रमित्यदः
प्रायवेष[2] मरुचन् हरिप्रियाः ॥

वहुभिर्भूषणैस्तु तत्र तत्र मिथुने परमशोभा-नेत्रलोभाय जायते स्म ॥

तथाहि ।—

सदा सदा नूतनवेशयौवनं
तथाविधाभिः समभीक्षते हरिं ।
मत्वा तदा नव्यवधूवरानमून्
दिव्यो जनः पुष्प-कुलानि वर्षति ॥

अथ वनविहाराय हरिणाक्षीणां ततिरेवमादि व्याजं व्याजहार ॥

अनङ्गो नाम सेनानीः कृष्ण ! कस्तव विद्यते ।
हन्त ! दर्शय तं नित्यं सखीयं मां ब्रवीति यं ॥

श्रीकृष्णस्तु गूढस्मितमूचिवान् ॥

तत्र श्रीराधां प्रति यथा ।—

राधे ! मैषीर्द्रष्टुमनङ्गं ॥

तस्य तु पश्य गुणं कृतसत्कृतसुकृतसुलम्भित-सङ्गं ॥ ध्रु ॥

---

(१) तिलकं ।　　(२) यथा स्यात् ।

तरुवल्लीततिदम्पतिपल्ली भवतीमतिथीयन्ती[१] ॥
आकारयति चलन्नवपल्लवपाणिभिरात्मीयन्ती[२] ॥
सा पुनरिह कुसुमानि किरति पथि रचयितु-
मास्तरचर्य्यां।
कोकिलकुलमपि तव हूतिं किल कलमनु कलयति
वर्य्यां ॥
भृङ्गारेण च भेरीशब्दं भ्रमरा विदधति ससुखं।
शिखिशतमपि वत ! तनुते नर्त्तनमभितश्चाली[३]-
प्रमुखं।
निजरुचिदीपं परितः प्रथयति सोऽयं रजनी-
स्वामी।
एष च पन्थाः स्वं विस्तृतवांस्त्वत्पदरजसां कामी
॥ इति ॥

अथ सवितृसुताया धन्यवन्याप्रदेशे
चिरचितवहुवेशे ता विरेजुः सकान्तं।
तमनु परपरस्मिन् वासरे कार्य्यमन्य-
द्विलसितमनुकान्तं[४] सूचयामास कान्तः ॥

---

(१) अतिथिमिच्छन्ती। (२) आत्मीयवदाचरन्ती।
(३) नृत्यविशेष। (४) कान्तां कान्तामनु।

अथ भ्रमरदम्पतिव्रजजनः[(१)] प्रतिस्वं निजा-
लयादनुगतिं दधद्विकगीतवद्गीतवान् ।
अहो ! किमिव सो[(२)]ऽपि तं[(३)] निजरमायुतं दद्वन-
प्रभुं प्रमितवान[(४)]नुव्रजति तत्र सर्वत्र च ॥

अथ स्निग्धकण्ठः पप्रच्छ ।—

रात्रिः किञ्चिन्मात्रशेषत्वमागा-
द्भ्रम्यन्ते स्मापि तस्मिन्[(५)] सपत्न्यः ।
क्रीडा-तृष्णा धृष्णगेवाङ्ग[(६)]जाता
हा ! किं चक्रे तत्र कृष्णाङ्गनाभिः ॥

तत्र मधुकण्ठ उवाच ।—

ततश्च तद्वनस्य निर्वर्णन[(७)]पूर्वकं वर्णनं विधाय केलिकलापे विधीयमाने ॥

अन्योन्यं निह्नुतान्वेषणकृतिविहृतिं
प्रेयसीभिर्मुरारि-
र्यां चक्रे सा रहस्तन्मिथुनमिथुनता[(८)]-
कारणं जायते स्म ।

(१) भ्रमरदम्पतिव्रज एव जनः ।
(२) भ्रमरदम्पतिव्रजजनः ।
(३) कृष्णं । (४) ज्ञातवान् सन् । (५) रात्रिशेषे ।
(६) पुनः । (७) दर्शन । (८) मिथुनस्य युग्मता ।

यत्रान्विष्यानुयाता विविधगतिवपुः-
स्फूर्त्तिना तेन या या
कुञ्जान्तस्तं गृहीत्वा पृथगपरदृशां
दूरतां साञ्चति स्म ॥

कथञ्चन ददर्श या क्वचिदपीह कृष्णान्वितां
वधूं रहसि कामपि स्वयमिदम्विधा काचन ।
प्रतीतिमगमन्नहि स्फुटममूं तमालान्वितां
स्फुटत्पुरटयूथिकां सपदि मन्यमाना हृदि ॥

शिञ्जितं विहगकाकली-कुलै-
र्गानमन्यभृतसम्भृतस्वरैः ।
रूपमप्यथ तमाल-चम्पक-
श्रेणिभिर्मुहुरवारि तादृशां ॥

यत्र सन्तमसमस्ति सन्ततं
तद्वनं न परदुर्गमं परं ।
कुञ्जमध्यलसदोषधीश्रिया
तत्र तत्र मिथुनर्द्धिवर्द्धि च ॥

अथ रहसि गिरां विलासकम्रं
चलदमलाङ्गविकासिलोमहर्षं ।
स्मरवलयिकलास्पृहातिलोलं
दिदिवुरलं युगलानि तानि तत्र ॥

अथ क्रमवशादद्भुत-भयानक-रौद्र-वीभत्स-वत्सल-करुणा-वीर-हास्य-शान्त-शृङ्गाररसाः शृङ्गारानुकूलतया यथायोगं रसयितुमासादिताः ॥

यथा ।—

क्वचिदहीनतुहिनमरीचि[1]मरीचि[2] विरोचमानकानने परिचितापरिचितनानाविधमृग-पक्षि-वृक्ष-वल्ली-विलक्षणताविलोकनाय कृतपरिभ्रमणं[3] ॥

क्वचिदपि मदाकुलभ्रमरकुलसङ्कुलगूढकुडुङ्ग[4]-कुसुमचय-चयनाय कम्पमानप्राणप्रणयिनीजनस्य प्रकटचाटुताघटनाय तत्र वलादिव विरचितप्रवेशनाभिनिवेशं। क्वचिदपि धृष्टषट्पददष्टतालव्यकष्टस्पष्टदुष्परिहरवाष्पललनावकलनादुद्दण्डितेन सनालकेलिखरनालदण्डेन[5]तद्दण्डनाय मकरकुण्डलतुण्डपर्यन्तस्पर्शि रोक[6]कोकनदायमाननेत्रपुण्डरीकं । क्वचिदपि ललितविलासवलितानन-ललनावपुरनुभूय युगुप्सितीकृतस्थलकमलस्थलावलोकनं । क्वचिदपि शुक-निकराधिगमनीय[7]रम-

(१) चन्द्र ।　　(२) तरङ्ग ।
(३) क्रियाविशेषणानि इमानि ।　　(४) कुञ्ज ।
(५) लीलाकमलदण्डेन ।　　(६) दीप्ति ।
(७) अध्यमीय ।

णीयवाणीविलासकलनाय[१] सलालनकलितकल[२] कलाकलापं। क्वचिदपि निजलीलामिलदुल्लल[३]-भावविलुलित[४] सुललितमुकुलकुललतावकलनेन विकलतया विगलितनयनजललेशं। क्वचिदपि प्रौढतासमूढगूढगर्वपर्वखर्वणाय सदम्भरम्भोरू-वरूथ[५]मनु निर्व्यूढ[६]प्ररूढमारसम्प्रहारं[७]। क्वचि-दपि मिथुनमिथः केलिकलानुकृतिनियति[८]वलित-प्रतिच्छायावलोककौतुकवाह्नितया विहितवहुदासं। क्वचिदपि परस्परमपरस्परस्पर्शसुखपरामर्शजात-विषयजातनिवृत्तिचित्तवृत्तितया निमीलद्विलोचन-रोचमानं। क्वचिदपि निर्यन्त्रणारमणश्रमपरतन्त्र-तन्द्रायामपि तदेव रमणं भूयः समनुभूय राग-सागरायमाणजागरं। स एव केशवः प्रेयसीभिः सह विललास ॥

भ्रमरमिह निभाल्य दत्तचुम्बं
व्रततिषु कीरमपीह दाडिमीषु।
पुनरपि रमणो मनोज-वश्य
स्थितिरमणाय वभूव वल्लवीषु।

(१) शिक्षणाय। (२) ध्वनौ तु मधुरास्फुटे।
(३) चञ्चल। (४) मर्दित। (५) समूह।
(६) रचित। (७) कामयुद्धं। (८) निश्चय।

अलिरिह वदनोपदंश[1]मासी-
न्मधुरसपानकरः सरोजिनीनां ।
यदजितरमणी-ततिर्निरीक्ष्य
स्फुटमभजन्मदनं विदूरतोऽपि ॥

तच्च तच्च न वर्णयितुमात्मशक्तिं निर्वर्णये[2] ॥

यतः ।—

तां ज्यौत्स्नीं तच्च वृन्दाविपिनमपि च त-
त्कुञ्ज-वृन्दं तथा ताः
शय्या द्वे द्वे च ते ते हरि-हरिणदृशौ
ताश्च सप्रेमलीलाः ।
पश्यत् पश्यन्मनो मे सपदि विषयिता[3]-
मुज्झदत्रानुमुह्य-
त्पश्य द्राग्याति तत्तद्विषयवलयतां[4]
हन्त ! पश्यानि केन ॥

तदेतदिह सामान्यतया वर्णितं, विशेषतः पुनरेवं ।—

अन्या वर्ण्याः सन्ति यत्र स्फुरेन्न
श्रीराधायाः कापि सौभाग्यलक्ष्मीः ।

---

(१) वदनमुपदंश्य । (२) न पश्यामि ।
(३) इन्द्रियतां । (४) मण्डलतां ।

तस्याः स्फूर्त्तौ वर्णनायां न शक्या
सायेवं चेदन्यवार्त्ता तु दूरे ॥

ततश्च परस्परं परपरागमनातङ्कया मङ्क्षु सङ्कुचितलीलाविलासाः सविश्लेषं वेषं संश्लेषवलितं विधाय वल्लीगृहपल्लीनां वहिर्वर्त्तिसन्निवेश[1]वेषं स्थलीविशेषं क्रमतः क्रामन्ति स्म ॥

यत्र कृष्णास्याप्यैकध्यमुद्बुध्यते स्म ॥

तथा च तं क्रान्त्वा च दारुणातापदारुणप्रकाशसान्निध्यं निध्यायन्ति स्म ॥

ततः ।—

पूर्वस्यां दिशि काचनारुणरुचिश्छायावृणोच्चन्द्रिकां
चन्द्रोऽप्याशु तदा पतन्निव करैरालम्बतास्ताचलं ।
इत्थं कैरविणी-कुलं किल दर ग्लानिं ययावित्यमू-
स्तद्भासाङ्कितरात्रिशान्तिविबुधा मम्लुश्च कृष्णप्रियाः॥

तत्र खेचर-स्त्रीणां वचनं ।—

नीचभाववलयी बलाद्व्रज-
न्नूर्द्धतां निपततीति निश्चितं ।
पश्य गोपसुमुखीमुखातिगः
पुष्करात्स्खलितवानसौ विधुः ॥

---

(१)सन्निवेशो निकर्षणमित्यमरः । पुरादेर्वहिर्भूर्निहरणभूरिति क्षीरः ।

किंच ।—

अह्रियत कुवलय[१]माला, लीला गोपाङ्गनापाङ्गैः ।
इति किल दूनितबन्धुः, कुवलयबन्धुःपपात हा! सिन्धुं॥

अव्रजदेवीनामपि ।—

ताराणां वृन्दमामृद्नन्नस्माकमपि सर्वतः ।
अयमाक्रमते[२]ऽनूरु[३]र्व्योम चाक्रामति द्रुतं ॥

ततश्च तासां तथाभावं विभाव्य भव्यस्वभावः स श्रीमान्नव्यकिशोरतानव्य[४]सद्भावः प्रतिस्वमालिङ्गितानां दर्शितप्रणयसम्पादिङ्गितानां वक्त्रकमलं स्रवदस्रं ममार्ज ॥

सान्त्वयन्नेव चेदं सान्त्व[५]मुवाच ।—

अच्छिन्नं समयं वहामि भुजयोरन्तः सखि! त्वामिति
प्रत्याशा यदि सिद्ध्यतीह तदपि स्वान्तं न मे तृप्यति।
सिद्धौ तत्र तु विघ्नजातमतुलं बन्ध्वादिसम्भालनं
तस्माद्गेहगतेरवश्यवलने मा म्लानिरासाद्यतां ॥

इति पूर्ववदेव प्रत्येकं हस्तेन व्यतिषज्य सज्यमान[६]-विहारतया व्रजवर्त्मानुवर्त्तते स्म ।

(१) कुमुद ।　(२) उपक्रमते ।
(३) सूर्य्यसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ।
(४) स्तव्य ।　(५) अत्यर्थमधुरं सान्त्वं ।
(६) सङ्क्रम्यमान ।

यद्यपि वनितावशता, मन्तर्यातस्तथाप्यसौ कृष्णः ।
भजति स्निग्धानन्यान्, सत्पुरुषाणामियं शैली ॥

अथ लब्धपरस्परविच्छेदेषु च तत्तत्पल्लीवर्त्मभेदेषु प्रायेण प्राप्तगणसङ्गमत्रोटतामधिककोटतया[1] भाविनीसमुदयः स्वयं न भावयितु[2]मीशाम्बभूव ।

क्रमेण चात्यन्तरङ्गतत्तदङ्गनागणे गणायतयावशिष्टे तेन सह निजनिजोपवनान्तर्वर्त्तिगेहाङ्गनवर्त्मभेदमासाद्य त्वणां गमनाद्विरराम रेमे च ।

तत्र च ।—

गाढोपगूढचिरतां पटु चुम्बितं त-
द्विस्रम्भभागभिहितं वहुमानितञ्च ।
तासां गतौ रचयता व्रजराज-पुत्रे-
णाकारि किं न किमितो[3]गणानां न वेद्मि ॥

ततश्च ताः सगद्गदं जगदुः ।—

सम्भावितं न वलते स्म यदस्मकाभि-
स्त्वत्प्राप्तिरत्र भवितेति तया च जातं ।

---

(१) कोटितोऽप्यधिकतया समासान्तत्वात् ।
(२) चिन्तयितु । (३) हेतोः ।

विज्ञापनन्तु न इदं शृणु कृष्ण ! तस्मि-
न्नङ्गीकृतं परिहरन्ति न जातु सन्तः ॥

ततश्च ।—

मिथो[1] मिथुनमुत्तरं विरहमूहमानं मिथः[2]
पतन्नयनवारिभिः समभिषिक्तमाश्लिष्यत ।
तदेवमखिलं वपुर्नियतमार्द्रमासीद्बहि-
स्तदस्य हृदयं पुनर्व्यजनि तादृगन्तर्बहिः ॥

ततश्च ।—

सहकान्तः कान्तासमुदयः शकुन्त[3] कुलकल-
कोलाहलात् प्रातरिति कलितचमत्कारः कम्पस-
म्पत्सम्पतदस्रमजस्रभावनानिदानं कथञ्चिदेव
विश्लेषमियेष ॥

तथा विश्लिष्य च ।—

तिर्यक् पश्यन्मुहुरपि मिथस्तत्र तत्रापि सा स्त्री-
भावाद्व्यग्रं मिथुनमथ तत् कृष्णराधादिनाम ।
गेहं गच्छद्यदिह गमनायाशकन् तन्न चित्रं
धन्यानां स्यादुचितमखिलं यत्प्रयत्नं विनापि ॥

अजनि वहुव्यथतान्त-
र्वहुदयितानां वियोगतस्तस्य ।

---

(१) अन्योन्यस्य ।   (२) अन्योन्येन ।   (३) पक्षि ।

सर्वावरकरुगन्तर-

मिव(१) जज्ञे सा तु राधिकावियुतिः ॥

ज्यौत्स्नीं शारदिकां विहृत्य विविधं

तस्मिन् वलादागतं

वीक्ष्य ब्राह्ममुहूर्त्तमुल्लधिय(२)

श्छन्ना(३)ध्वमूर्त्तिक्रियाः ।

तत्तत्केलिकलाविलासवलित-

स्वान्ताः सकान्तप्रियाः

सान्तस्तर्षमनन्तरीषदुदित-

श्रान्तिव्रजं प्राविशन् ॥

स एष रासोत्सवविशेषश्च निवृत्त इति वहिरेव वृत्तं नान्तः ॥

यतः ।—

रासोत्सवं किल समाप्य गृहादिकृत्य-

व्यग्राश्च तन्मयतया व्रजवामनेत्राः ।

नानाविलासमयनर्त्तनगीतवाद्यं

साक्षादिव व्यदधतात्र च तत्तदेव ॥

नेता येषु तु रासकेलिषु भवेत् कृष्णाः स्वयं नायिकाः

श्रीजैत्रव्रजसुभ्रुवो रसकथास्तत्रैव निलाञ्छनाः ।

(१) रुग्विशेषमिव । (२) चञ्चलधियः ।

(३) विविक्ते विजनच्छन्न ।

त[1]त्तद्दर्शनमेव काव्यविवुधाः कात्स्न्र्येन कुर्युः परं
किन्तु श्रीशुकसम्मतं न यदिदं पूर्य्येत तैः सर्वकैः ॥

स्निग्धकण्ठ उवाच ।—

हन्त ! चत्वारस्ते कुमारकाः क्व गताः ? ॥

मधुकण्ठ उवाच ।—

पूर्वमारूढमहातरवः पश्चान्निजप्रभोः स्वगृहवर्त्मानुवर्त्तनमवधाय दूरचरिष्णुतया तूष्णीमेवानुवर्त्तिष्णुतामवापुरिति ॥

तदेवं मधुकण्ठः प्रथितमपि रासलीलावर्णनं त्रियामानियमतः संक्षिप्य तदीयसमाधेर्विक्षिप्यमाणता[2]सञ्जनाय साञ्जलि व्यञ्जयामास ।

स ईदृग्वल्लभो लब्धस्त्वया श्रीमति ! राधिके !
यं भेजे रासरभसात्त्रिलोकी नाय[illegible]निभा ।

अथ कञ्जनेत्रः कृताञ्जलितया प्रतीक्षितानुज्ञासारौ सूतकुमारौ स्वान्तिकमाहूय भूयः[3] परिचस्कार निजानामङ्गानामङ्गनानामपि परिस्कारद्रव्येण ।

---

(१) तस्मात् ।　　(२) वहिर्भावता ।
(३) अधिकं यथा स्यात् ।

यदनु दानपर्वणासर्वं एव भासमानः सभासज्जनः प्रत्येकमेकव्यक्तिरपि क्रियालाघवाद्बहुविधनिभां व्यक्तिमवाप ॥

ततो ब्राह्ममुहूर्त्ते मुहूर्त्तविश्रमाय सर्वं एव स्व-स्व-धाम जगाम ॥

इति श्रीगोपालचम्पूमनु रासप्रपञ्चपञ्च-
पूरणीपूरणं सप्तविंशं
पूरणम् ॥

———

# अष्टाविंशं पूरणम् ।

---

अथ प्रत्यहवत्प्रभातभासमानायां सभायां स्वावसरजातप्रसरः(१) स्निग्धकण्ठः सोत्कण्ठमाह स्म ।

मधुकण्ठ ! श्रूयतामनन्तरं हरिचरितं ।

ततः सर्वानन्दवर्षे हरेर्नवमे वर्षे परुत्ता(२)दप्यधिकतया यत्नादैषमस्त्ये सामस्त्येन कृतविस्तारे गिरियज्ञसारे निर्वृत्ते मासकतिपये च वृत्ते विलक्षणालक्षणशिवक्षणादातिप्रचुरं जनसमाजमाजहार ॥

किन्तु प्रायशो यशोधनादिकामनया सामानाधिकरण्यादम्बिकारण्याय सममम्बिका-पतिपूजनार्थं जना वर्षं वर्षं प्रति सहर्षं गच्छन्ति ॥

यच्छन्ति च विविधानि धनानि, किमुत तस्यां योगविशेषादसमायां समायां। यत्र कुतूहलावकल-

---

(१) प्रसरः प्रणयौ समौ ।

(२) अनन्तरगतसम्वत्सरभवात् ।

नादिलीलाकल्लोलिनी[१]कल्लोल[२]लोल[३]श्रीगोपाल-चालितचित्ता गोपालाः; किं वहुना गोपालक्षिति-पालचरणाश्च तद्यात्रास्पृहापात्रतामवापुः ॥

सञ्चेरिरे च ते चिरेण महारम्भसम्भार[४]भारहार-विशङ्कटशकटवारनिःसारणाया ॥

तत्र जनै[५]र्नानासामग्रीरगर्ह्यवह्या[६]नडुहश्चानांसि वाहयन्तः कोलाहलकुतूहलमन्वभूवंश्च ॥

यत्र पुत्रानुरागपरिमलानिर्मलपात्री व्रजधरित्री क्षितिपालयित्री नानागोपकलत्राणां[७] सुखसत्रा-यमाणतया तैः सत्रा[८]यात्रां चकार ॥

किं वहुना; गोगोकुलपालनकृतेहा[९]नुपनन्दाभि-नन्दादीनृते सर्वे एव पर्व पूर्वं चलन्ति स्म ॥

यत्र लाल्यभावतः सन्नन्दनन्दनावग्रजमनुव्रजतः स्म, लालकभावात्त[१०]ज्जन्मानमनु च ॥

---

(१) तरङ्ग। (२) नदी। (३) चञ्चल।
(४) सामग्री।
(५) जनैः कर्त्तृभूतैर्नानासाग्रीर्वाहयन्तः। तथानडुहश्चाणयन्त-कर्त्तृभूताननांसि वाहयन्तः।
(६) वह्यं करणे। (७) कलत्रं श्रोणिभार्ययोः।
(८) सह। (९) इच्छा। (१०) श्रीकृष्ण।

तत्र विशेषतस्तु ॥

मुखकमलविराजन्नाद्यदृक्खञ्जरीटा[1]
स्तनकनकजकुम्भभ्राजिपत्रावलीका ।
चरणसरसिजानां हंसकस्वानरम्या
व्रजजनिमहिलाली तत्र भव्यं वभार ॥

ततश्च ।—

न परं चाक्षुषमासी,त्तद्व्रजजनचलनं विदूरतः किन्तु ।
शकटघटाटननादा,द्वादादप्यन्धवेद्यश्च ॥

सुराणां नृणां च प्रतिपदवहूभाव[2]मयतां
सवाद्यैर्गीताद्यैः सह कुसुमवर्षैर्जयरवैः ।
मुकुन्दालोकाय प्रथितपथिकालीशवलनैः[3] ।
समन्तात्सङ्घट्टैरभिययुरमी आम्बिकवनं ॥

तत्र च ।—

भ्रात्रा सत्रा हरिस्तत्रारुह्य कम्वलिवाह्यकं[4] ।
विचित्रमित्रगन्त्रीणां वृत्तं पृतनया[5]ययौ ॥
कदाचिदुन्नतं तत्र शकटं घटयन् पृथक् ।
अभीष्टं द्रष्टुमुत्कण्ठी स स्म सुष्ठु प्रतिष्ठते ॥

---

(१) मुखकमले विराजन्नाट्यं येषां एवम्भूता दृक्खञ्जरीटाः ।
(२) अभूततद्भावे च्वि । (३) मिलनैः ।
(४) सूक्ष्मशकटं । (५) सेनया ।

सखिवल्लवलवान् विहारचर्य्यां
पथि विदधत् कुतुकञ्च लोकमानः।
मुहुरुपचरितः स्वयं जनन्या
बकारिपुराम्बिककाननं विवेश॥

तत्र च।—

जङ्घाला[१]स्ते लक्षशो लोकसङ्घा-
स्तीर्थं याताः कृष्णमापुश्च दैवात्।
तृष्णादीनाः पाथसस्तत्प्रयाताः
सौधीं यद्वद्वृष्टिमन्ते लभन्ते॥

तस्मिन्निदमद्भुतमभूत्।—

उत्फुल्लनेत्रकमलं पुलकप्रसार
शैवालमश्रुमिलदूर्मि जनप्रवाहः।
आक्रम्य सेतु[२] मधिगम्य[३] सुरम्यकृष्ण-
शोभामहाम्बुधिमगाज्जलता[४] मपीह॥

ततश्चाभिख्या[५] मात्रतः कृतसर्ववशीभावस्य तस्य तदासेचनक[६] रूपनिरूपणात् पश्य पश्येत्ये-

(१) जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ।
(२) मर्य्यादां। (३) प्राप्य। (४) जडता।
(५) प्रसिद्धिं।
(६) तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्॥

वास्मिन्[१] पश्यति लोके कथञ्चित्कृतनिवारणे च तस्मिन् कोलाहलकारणे व्रजवासिजनः सर्व एव यथायथमावासमाससाद ॥

आसद्य च पुरोहितहितसहिततया कृतस्नानदानव्यापारे श्रीव्रजराजविराजमानसमाजवारे कुतुकतस्तैर्थिक[२]सार्थ[३]दर्शनार्थं स्नातानुलिप्तादीप्तः सखिरामारामरमणः कमनकमललोचनस्तत्र तत्र भ्रमणक्रममाचचार ॥

यत्र नानादेशजानां वेशनिवेशनिर्वेश[४]सम्वेश[५]भाषाभिनिवेश[६]क्रियाविनिवेश[७] विशेषाननुभूय वहुलकुतूहलमाकलयाम्बभूव ॥

यत्र च कृष्णं पश्य रामं पश्य श्रीदामानं पश्येत्यमी पश्यन्तः कोलाहलं वंहयामासुः ॥

यत्र च तदीयवृन्दानि गोविन्दीयसुन्दरतामरन्दनिस्यन्दममन्दं नयनरसनया रसयन्ति मोहातिशयवन्ति विहितहितसर्वस्वात्मनिवेदनं[८] सास्रनम्र-

(१) पुनः पुनः पश्यति लोके ।
(२) तीर्थे चरति । (३) समूह ।
(४) निर्वेशो भृतिभोगयोः । (५) शयन ।
(६) आग्रह । (७) परिपाटी ।
(८) विहितः कृतो हितस्य सर्वस्वस्यात्मनश्च निवेदनं यत्र ।

कम्रवदनं[1] सदनसदनादासीदन्ति[2] च सञ्जिताञ्जलितया तस्थुः ॥

श्रीकृष्णस्तु त[3]दङ्गीकृत्यापि शीलवृत्त्या तदीयस्नेहं साङ्गीकुर्वन् मदीया एव भवद्भवदीयार्था मत्प्रत्यर्पणातः प्रतिस्वं यथानिष्ठ[4]मवतिष्ठत्वामिति सन्तोषयन् क्रमशो निजाश्रममेवाश्रममाजगाम ॥

आगम्य च सायन्तनमशनं सङ्गत्य मातुर्मानसमानन्देन वितत्य प्रशस्तवस्त्रमालालङ्कारसारं परिकृत्य सखिभिरात्मानं परिवृत्य सर्वभागवतशिवप्रदस्य भागवतपरम्परापरमगुरोः शिवस्य वरिवस्यायां शिवरात्रियात्रिभिः पित्रादिभिरेकाग्र[5]तया स्वमङ्गलकृते कृतजागरं स्वीयपरकीयरागकीयजनकीयवहलकोलाहलप्रकारं शिवागारमनु नानाविद्याविस्मापकतया विद्यमानान् सम्पश्यति स्म ॥

सर्वे व्रजजनास्तत्र कल्पवृक्षसमा वभुः ।
अधिदेव इवादीप्यद्धन्यः पर्जन्यनन्दनः ॥

---

(१) यथा स्यात् ।
(२) प्राप्नुवन्ति सर्वे शतृप्रत्ययान्ता नपुंसकलिङ्गाः ।
(३) हितादीनां निवेदनं । (४) निष्ठामनतिक्रम्य ।
(५) अनाकुलेऽपि चैकाग्रः । अपिशब्दादव्याहितेऽपि ।

प्रभाते च प्रभाते वदान्यताप्रचाराहूतविप्रादीनामगणेयगणाय गुणागुणितान्नादिदानतः सम्मानिताश्च वितानित[1]यशसि श्रीव्रजराजसदसि तेषु तत्तीर्थयात्रिशतेषु च चिरपरिचितचरवत्परमप्रीतिस्फीतीभावननीतितः कथमपि प्रस्थापितेषु तस्याममावास्यायां तस्मिन्नेव व्रजवसतिभिः सह पितृभ्यां लालितः स हरिर्वासतेयी[2]मुवास ॥

ततः सा च रात्रिर्यात्रिकजनप्राचुर्य्यपूर्य्यमाणा नासीदिति कोलाहलापगमेन ह्यस्तनजागरक्लमेन च सुप्तिः सर्वतश्च निर्भरमेवाविर्भवति स्म ॥

यत्र दनुजामित्रस्तु क्रीडातः क्रीडातश्च किञ्चिद्दूरगतः सखिजनजनितसुखं निद्रायते स्म ॥

अथ तस्यां निशि दिशि दिश्यपि दर्शिततमासि रहितदन्तगरः कश्चिज्जरदजगरः सर्पः सर्पन् व्रजराजचरणराजीवं निजगार ।

तेन च वीर्य्यवत्तया निगीर्य्यमाणे चरणे शरणेच्छुर्व्रजधरणीशः सन्ततकृष्णस्फूर्त्तिपूर्त्तिप्रचितचित्ततया जाग्रदेव कृष्णमुद्दिश्य चुक्रोश ॥

---

(१) विस्तृत ।　　(२) रात्रि ।

यथा ।—

कृष्ण ! कृष्ण ! वत कृष्ण ! कृष्ण हे !
तात ! मामजगरो ग्रसेत किं ।
इत्यसौ स्मरणातस्तनूजने(१)-
स्तस्य मोहमयभावमाययौ ॥

अथ तत्पार्श्ववर्तिनः शूरचक्रवर्तिनश्चन्द्रहास(२)-मादाय समुत्थिताश्चन्द्रमसं ग्रसमानं राहुमिव वाहुशालिनस्तं पश्यन्तः प्रत्याथिताव्यर्थीभूततत् प्रहारप्रयासास्तदुपायान्तरमपश्यन्तश्च व्यग्रता-क्वथिताः शरारुभि(३)र्ज्वलदग्रोदग्र(४)दारुभिर्जघ्नुः ॥

तथाप्यत्यजति तत्राजगरे प्रथमशब्दादेव जाग्रद्व्रजराजतनूजः सुरगजराज इव धावंस्तत्रैवा-जगाम ॥

आगच्छतश्च तस्य स दीर्घतरदीर्घपृष्ठः पुच्छमनु-वाढघटितन्यायेन चरणपल्लवस्पृष्टतां प्राप । तत्स्पृष्ट-श्चायं विसृष्टतच्चरणः स्वयमकस्मात्सर्पाकारादुत्-सर्पन् वपुरन्तरमन्तरेण विद्याधराकारं धारयति स्म ॥

---

(१) तनूजस्य । (२) खड्गं ।
(३) हिंस्रैः । शरारुर्घातुके हिंस्रे । (४) उत्कट ।

तत्करपल्लवस्पृष्टचरणाः श्रीव्रजराजचरणाश्च यथावद्विराजमानतामापुः ॥

ततः साश्चर्यं कृतावलोकेषु सर्वलोकेषु सुदर्शन-नामधरः स तु विद्याधरचरः पुनर्लब्धस्वरूपवरस्तं प्रशंसन् स्वशापवृत्तान्तं शंसंस्तदीयां क्षमामाशंसंस्तदनुज्ञातः स्वाधिष्ठानमेव प्रतिष्ठते स्म ।

ये पूर्वं तत्रापत्रपामपहाय श्रीव्रजपतिपत्नीप्रभृतयः कुलस्त्रीजनाः किमुतान्ये संसृज्यमानतयानुसृत्य कृत्यमूढतामनुवभूवुः ॥

सम्प्रति तु ते यथायथं मिथः समुपगूढाः केवलमूढरोदना वभूवुः ॥

यथा ।—

तातं कृष्णश्च रामश्च कृष्णं रामञ्च मातरः ।
मातृश्चान्यास्तथान्योन्यमन्ये शिश्लिषुरुन्मदाः ॥

तदेवं कृतक्षपणायां क्षपायां तत्क्षणमेव तूर्णगमनमनसः समनः[१] समूहमारोहन्तश्चिरगन्तव्यं पन्थानमन्तिकमिवातिक्रान्तवन्तः ॥

प्राप्तवन्तश्च निजव्रजं ।

---

(१) क्लीबेऽनः शकटोऽस्त्री स्यात् ।

यत्रोपनन्दादयः सनन्दनं सहजमात्रं श्रीमन्नन्दराजमनवद्यवाद्यगीतपरीतवेदघोषानुगतसर्वघोषा यथायथं संसज्य नीराज्य च व्रजोपवनमावास्यस्नपनादिभिरुपास्य च तत्रैव निजगृहजनं प्रापय्य पाकं समापय्य च सर्वानेव सम्भोज्य सुखेन संयोज्य च वर्त्मवार्त्ता सम्पृच्छ्य हर्षधर्षादिकं समृच्छ्य च स्वस्ववसतीमनुवसतीं(१)वासयामासुः ।

अथ समापनमाह ।—

ईदृशस्ते व्रजाधीश ! पुत्रश्चित्रयशाः शशी ।
यदङ्घ्रिनखरज्योत्स्नातमः सर्वमनीनशत् ॥

इति श्रीगोपालचम्पूमन्वम्बिकावनगमनसम्विधानमष्टाविंशं पूरणम् ॥

---

(१) रात्रि ।

# ऊनत्रिंशं पूरणम् ।

अथ रात्रिकथां पुनः स्निग्धकण्ठः प्रथयामास ॥

यदा रासाद्वासं रहसि ययुराभीरवनिता-
स्तदा शङ्कां जग्मुः स्वयमपि तु नासां गृहजनाः ।
यदान्यास्तद्रूपाव्यधितहरिमायाप्रतिगृहं
यथामीभिर्ज्ञातं निववृतिर एताः पथ इति ॥

अथ तदनन्तररात्रिसन्ततीर्नानारसरासविलासादिभिरतिवाहयति श्रीगोविन्दे वृन्दा तु विविधसाहायकं समाहरति स्म ॥

यथा ।—

उपव्रजं न्यस्यति सा तमालान्
दीप्रौषधीश्च व्रजदूरदेशे ।
इत्यादि तत्राभिसृतौ सवृन्दा-(१)
वृन्दा हरेः सेवनमाचचार ॥

तदा च ।—

अचीचकासद्विपिनान्याजीहय(२)दिह प्रियाः ।
रासायातत्वरद्रात्री(३)रत्रामूरजजागरत् ॥

(१) सगणा । (२) मोहाकृतौ । आगमयामास ।
(३) व्याप्य ।

आररम्भत रम्भोरूर्लम्भं लम्भं ततो हरिः ।
हारानिव विहारांस्तान् कारं कारं दधे हृदि ॥

युग्मकं ॥

कदाचन चौर्य्यचर्य्यया तासां गृहमायाति ।

तत्रेयं दिक् ।—

साहाय्ये ललितायाः कलयन्[1] वेशं विशाखायाः ।
विपरीते विपरीतं, हरिरविशत्तमसि वेश्म राधायाः ॥

तत्रान्धे तमसि काम्यमानवाम्यामालिं प्रत्यालिच्छलवचनं ।

सुसखीयति ते सुभ्रूरसौ गोपमतल्लिका[2] ।
शपे तुभ्यं लपेयञ्च स्वयं सख्यमुरीकुरु ॥

तत्र कथञ्चिदपि तदागमने वृद्धाभिः किञ्चिदिवावगते कुञ्जानेव स्वलीलया कञ्जलोचनस्ताभिः समं रञ्जयति। तत्र तत्प्रेयस्या वृद्धाभिवञ्चनाचञ्चुता[3] यथा ।—

यस्त्वां रात्रिषु वृद्धे ! मामपि देवो विभीषयते ।
स तु मन्त्रिभिरुत्कलितो, गोष्ठात् कुञ्जान्
विमर्द्दयति ॥

---

(१) गृह्णन् ।　　(२) गोपश्रेष्ठः । पक्षे गोपीश्रेष्ठा ।
(३) प्रवीणता ।

तस्मादत्रान्यथा मावगा[1]स्तत्र च मागा इति ध्वनितं ।

अथ सख्याः ।

सत्यं जरति मदाल्या
वर[2]युजि गण्डे मकरवतंसाङ्कः ।
न मया लिखितः कुतुका-
न्न मृषामुष्याः सपत्नी च ॥

अत्र मम सखीत्वेन तस्याश्च सपत्नीत्वेन विरोधलक्षणाप्राप्तेर्मयैव लिखित इति तया ध्वनितं । तदनुवादिना कविना तु तस्य[3] मृषात्वमिति ॥

अथ व्रज एव विघ्नविघ्नतया प्रोषितभर्तृकावर्ण्यते ।

तत्र श्रीकृष्णस्य भावना ।—

राधां पश्यसि जल्पसि स्पृशसि च
स्वात्मन्नथालिङ्गसि
स्वस्मिंस्तत्तदनु क्रियामपि तयारब्धां भजन्नन्दसि ।
विस्रम्भं न हि मन्यसे तदपि चे-
दन्यां दशां यामित-
स्तत्प्राप्तिं मनुषे तया कथय भो !
किन्ते सुखं सेत्स्यति ॥

---

(१) न जानीहि । (२) कुङ्कुम । (३) ध्वनितस्य ।

श्रीकृष्णं प्रति सखीवचनं ।—

भूषणमग्निप्रायं, भूषणनिभमग्निमप्यसौ राधा ।
त्वद्विरहे या कलयति, सा कथमन्यैः समाधेया ॥

तस्याः प्राणा भवान् सा च भवत्प्राणा इति स्फुटं ।
एतद्वाचा लघूकर्त्तुं प्राणान्तां मान्तु धिक् प्रभो ! ॥

अथोत्कण्ठिता ।—

तत्र च तं प्रति सखीवचनं ।—

तामेव प्रेरयत्युच्चैरुत्कण्ठा त्वान्तु नैति सा ।
इति तस्यामसौ कृष्ण ! वितृष्णा[1] शर्म नाश्नुति ॥

अस्रैः कम्पैर्विवर्णच्छविकुलवलनैर्गद्गदैरोमहर्षैः
स्वेदैः स्तम्भैर्विमोहैर्मुरहर ! दलितप्रायदेहां विधाय ।
न त्यक्तुं न ग्रहीतुं कथमपि सुशका प्राणघातावरोधा-
दुत्कण्ठाकण्ठलग्नाशनकवलनिभा-
तान्तु दुःखाकरोति ॥

परमगुण[2]स्त्वं माधव,! दोषपूर्ण[3]प्रभावोऽसि ।
कथमिव तां गुण[4]रूपा,कृतिमधिचित्तं समादध्याः॥

अभिसारिका ॥

तत्र तां प्रति कस्याश्चिदुत्प्रासवचनं[5] ।—

---

(१) सती । (२) पक्षे परं अगुणः ।
(३) पक्षे अपूर्णा । (४) पक्षे गुणशब्देन गौणमुच्यते ।
(५) सोत्प्रासः सुमनाक् स्मितं । हास्यवचनमित्यर्थः ।

सन्ध्यायां क्व नु यासि लोलनयनाप्यग्राय नैकाग्रहा
तत्राप्यग्रतमं स्थलं किमपि तच्चेतस्यलं विभ्रती ।
सा चैषा न हि बुध्यते तव गतिर्दृष्ट्वा तमालं मुहु-
र्विष्टब्धा धृतभाङ्गिसङ्गिसवयो मध्ये मुहुर्लीयसे ॥

अम्वरमणिसम्वलितं, चरमाचलमधिजगन्थ(१)
पूर्वाद्रिं ।
शङ्के यन्निजकृत्यं, कर्त्तुं कृष्णान्तिकं यासि ॥

तत्राभिसारो यथा ।—

अन्याश्चाभिसरन्ति भाववलिताः शुभ्रक्षपायां कृतैः
शुभ्रैर्वेषवरैर्विधाय पिहितं स्वं सत्यमेतद्वचः ।
तस्मिन् गोपवराङ्गनाः पुनरमूः कान्ताङ्गसङ्गस्मृते-
र्जातानन्दतया स्मितद्युतिवृतास्तेषां व्यधुर्व्यर्थतां ॥

सामानाधिकरण्यं, तेजस्तमसो रहोकलितं ।
कवयन्त्यपि यत्कृष्ण, भाति तमसि व्रजस्त्रीणां ॥

आरम्भादपि कम्पते हृदयकं प्रस्थानतः स्तम्भते
पादद्वन्दमहो ! मनस्यनुमिलन् देहं निरुन्धे प्रियः ।
यासां गोपनतभ्रुवामभिसृतौ तासां परं कारणं
दैवं यन्नयते तदन्तिकममूस्तं वा वलात्कर्षति ॥

---

(१) अधिगतवत्यसि ।

कदाचित्काचित्काश्चिद्दिवापि कृष्णसमीपं छलतः सम्वलयति ॥

यथा ।—

आलि ! पश्य परितः शिखि-वृन्दं
भीतिरीतिरहितं नटदस्ति ।
वाढमस्य विहरन्नधिमध्यं
नव्यनीरदवरः प्रतिभाति ॥

अत्र निर्जनत्वं मध्यस्थितकृष्णत्वं च ध्वनितं ॥

अथ वासकसज्जा ।—

पुष्पाण्याचिनुते विचित्य चिनुते तल्पं व्रजस्याङ्गना
यन्नास्ति त्रिजगत्यपि स्फुटमहो ! वैकुण्ठवीथिष्वपि ।
एवं वासकसज्जिका लसति सा छाया द्वितीया यदा
सङ्गिन्याचितसङ्गतिः पुनरसौ वेत्तीव किञ्चिन्न हि ॥

तत्र चोत्कण्ठावश्यायां तस्यां तं प्रति सखी-वचनम् ।—

तल्पं कृत्वा भवदभिगमं चिन्तयन्ती समन्ता-
त्तत्रादृष्टे भवति समयत्तेपलेशात्तमा सा ।
चक्रे चक्राङ्कितकरमहाकम्पसम्पाद्विहस्ता
शस्ताकल्पं कृतमपि च तत्कल्पयन्ती विशीर्णं ॥

अथ विप्रलब्धा ॥

तत्र च तं प्रति सखी-वचनं ।—

भुक्तिं[1] मुक्तिं[2] च तनुते न परं भवदागमः[3] ।
भक्तिं[4] व्यनक्ति च व्यक्तं सुहृत्सु परमेश्वरः ॥

अथ खण्डिता ॥

तत्र च तं प्रतिसखीवचनं ।—

कुर्य्यास्त्वं खण्डिता काचिन्नखराद्यङ्गसङ्गतः ।
तं विना यां तथाकार्षीस्तत्र ते महती कला ॥

खण्डितां प्रति तस्याः सुहृदुपालम्भरचनं ॥

तद्दूती-वचनं ।—

मानिनि ! वच्मि त्वामह-
मिह सुहृदां तव शृणोतु वृन्दश्च ।
सहजा या निजवृत्ति-
र्गोविन्दे स्वयमुपास्स्व[5]ता[6]मेव ॥

तत्र कठोरायमाणां प्रति च ।—

मानाग्निमयदृग्वाणं मुञ्च त्वं किं नु गर्वसि ।
राधे ! कृष्णश्च दृकूपर्य्यक्[7] पर्जन्यास्त्रं
विमोक्ष्यति ॥

---

(१) सुरतं । (२) सुरतान्तं ।
(३) पक्षे शास्त्रं । (४) पक्षं भङ्गं ।
(५) कामयस्व । (६) निजवृत्तिं ।
(७) सर्वतोगामि ।

अथ सम्भ्रमादागतस्य नखरादिस्पर्शात् क्षताय-मानरक्तिम्ना समक्तस्य कान्तस्य वचनं तस्याः प्रति वचनञ्च ।—

दयिते ! दयित ! कथं त्वं, मलिनमुखी धिग् न वेत्सि हा ! किमिदं ।
नखरदनक्षतमूहे,त्वयि सुप्ते सुप्तिराक्षसी चक्रे ॥

अथ तस्याः सख्या सम्वादः ।—

जलदे विलसति विद्यु,द्बिभ्यति हृदयानि भीरूणां ।
हससि हरिं किमु मुग्धे ! न हि हृदि चित्रं स्तुवेऽहमेतस्य ॥

अथ तस्याः कृष्णं प्रति ।—

आवृणुतामरुणांशु,र्नखपदसिन्दूरचिह्नानि ।
अञ्जनमपि कृष्णाभा तत्तु तवौष्ठः स्फुटं कुरुते ॥

पूर्वां हरितमाक्रम्य निष्क्रमन् कृष्णनीरदः ।
निह्नुते शशभृल्लेखां हरिदन्तरलज्जया ॥

स्त्रीभाव[१]माकलयितुं कमठानुकारं
गच्छन्महाद्रितलमाश्रितवान् भवान् यत् ।
तच्चाजितस्य न तवानुचितं यतस्त्वं
स्वां देवतां रमयितुं सुधयोद्यतोऽसि ॥

(१) पक्षे मोहिन्यवतारं ।

मामपि हित्वा[(१)] क्रीडसि,तामपि हित्वे[(२)]ति
नानृतं वचनं ॥

एकं तत्र जहाते,रन्यद्रूपं दधातेर्हि ॥
नीरसा सरसा वेति विविक्तिर्नातिकामिनां ।
पश्य वंश्या मुखं नायं पिवन्नुज्झति माधवः ॥

तत्र श्रीकृष्णस्य वचनं ।—

राधे ! वपुषा तन्वी, कोमलहृदयातिसूक्ष्मधीरसि च
मानः कथमेतावा,न्माति त्वयि तन्नु पृच्छामि ॥
मुखमब्जं तव रसना,पल्लवपत्त्री कथं वचः क्रूरं ।
श्रां ज्ञातं किल यस्मा,त्तन्मूलं भाति हृद्वजूम् ॥

भवतु च ।—

यथा मे रोचते मानो न प्रसादस्तथा तव ।
यत्र स्वाधीनताव्यक्तिं कुरुषे ताडनेन च ॥
अर्दितोऽपि रुषा राधे ! लीलाब्जेनास्मि नार्दितः
हन्त ! मत्कण्टकै[(३)]रेतत्त्वदङ्गिसुहृदर्द्यते ॥
तदेवमुपवदमाने[(४)] तस्मिन् पुनस्तस्या वचनं ।
निर्वृत्य[(५)]म्बुधिकुम्भजः[(६)]स्थितिमहा-
मेघावलीमारुतः

---

(१) आगत्य । (२) धृत्वा । (३) रोमहर्षेऽपि कण्टकः ।
(४) उपमन्त्रयति रहसि लोभयतीत्यर्थः ।
(५) सुख । (६) अगस्त्यः ।

प्राणानां पवनाशनस्तनुवनीनैदाघदावानलः ।
सोऽयं ते विरहो यया वत ! मया
सोढस्तया वा कथं
सोढुं हन्त न शक्ष्यते नवनवः पद्मापते ! दुर्नयः ॥

एवं रुदन्तीं सखीमालक्ष्य सखी तं प्राह ।—

अनुरागवती सन्ध्या स्वच्छो ऽयं वासरस्ततः ।
स्थाने[1] तया तस्य सङ्गो न रात्र्या मलिनात्मना ॥

त्वयि तु तदेतद्विपरीतं प्रतीयते ततो न स्वच्छतेति व्यञ्जना ।

ततः सा मानिनी पुनस्तामाह ।—

दीपज्वाला मम हृदिगता स्नेहमुद्भूय वक्रे !
चक्रे येन प्रतिहतिमिता[2] तं कथं निन्दसि त्वं ।
निर्द्वन्द्वाहं सपदि भवितास्म्येव सोऽप्येष नाना
गोपीसङ्गात्प्रमदमयि ता हन्त ! किं कस्य दुःखं ॥

अथ तस्य तद्वाप्यापसारणाय व्याजरचनं वचनं ।-

मीनादपि तन्मुक्ता,फलमुद्भवतीति रत्नशास्त्रार्थं ।
पश्यन्निव मम हस्त, स्तव ! मुखमभियाति
मानिनि ! प्रसभं ॥

---

(१) युक्तार्थे करणार्थे च स्थाने स्याद्व्ययं पुनरितिविश्वः ।
(२) नाशं प्राप्ता चक्रे ।

ततश्च सा विमुखीभवन्ती मनसीदं वदन्ती कलहान्तरिता-भावमाससाद ॥

ऐषीस्त्वं यदि मानस, मानेनामुं वशीकर्त्तुं ।
वशगेऽप्यस्मिन् कृष्णे, त्यजसि न किं तं वृथाभूतं ॥

तदा च सखी तमुवाच ।—

या तव हृदयविदारं, नखैररकरोन्मुराराते ! ।
तां मनुषे प्रियदयितां, ज्वलति तु तस्माद्धृगस्माकं ॥

या खलु मानममानं[१], दध्रे त्वन्मान[२] जीवना दयिता ।
घटते गोपीवल्लभ !, तस्याः स्फुटमसु[३]गमः सुगमः ॥

इति सखीषु पराङ्मुखीषु बहुतटस्थतां[४] घटयन् दूरदेशीयदेश[५]मटति स्म यदासौ तदा तु ॥

राधाया दृष्टमानायाः सृष्टरोमाञ्च सञ्चयाः ।
वेणावध्वनिजातीया जीयासुः कीचकस्वनाः ॥

तदवगम्य वामाया वचनं ।—

न वदसि परुषं रुषं न धत्से
मनसि च तत्र कथं कृतापराधे ॥

---

(१) अपरिमितं । (२) त्वत्कृतसम्मान । (३) प्राण ।
(४) ईषदूनत्वे तद्धितोऽयं । (५) अल्पदूरं ।

हरिहरि सततं विमानिताहं
त्वयि वत शर्म कदापि नापराधे ॥

तत्र तस्या मनः-कथा।—

मानं कुर्विति वक्ति सा प्रियसखी
मानं न वेद्मि स्फुटं
कौटिल्येन यदि प्रसिद्ध्यति स[1] तत्
कौटिल्यमेवात्र किं।
हा ! तस्य स्मितकञ्जचारुनयनं
श्यामस्य मन्मानसं
द्रष्टुं वाञ्छति हन्त ! कष्टमपरां
स्फूर्तिं कथं गच्छतु ॥
आगस्कृतेऽपि तस्मै, रज्यति हृदयं खलं तदेतन्मे।
त्यक्तुं तदपि न शक्यं, कथमिव स हरिः
परित्याज्यः ॥

ततश्च।—

वलान्मानं शिक्षयन्तीरपि तत्र सखी-ततीः।
राधया सार्द्धमाकर्षन् जीयाद्वेणुकलस्वनः ॥

तस्या मुखमवकलय्य तत्तदुपमाजातीयतया संशय्य स्थितवन्तं कान्तं प्रति सखीवचनं ॥

---

(१) मानः।

अस्मिन्नपि विधुबुद्धिं, कर्त्तुं मा कृष्ण ! साहसं कार्षीः ।
सर्वं जेतृतदेत, द्भ्रूधनुरनु नेत्रबाणमुत्क्षिपति ॥

ततश्च ।—

भ्रमरीवाम्बुजारण्यं शफरीव जलाशयं ।
कृष्णां लब्ध्वा पूर्व[1] मेव दृष्ट्वा साभून्नतूत्तरं[2] ॥

अथ स्वाधीनभर्तृका ।—

नित्यं या याचितापि प्रियतमहरिणा
नेच्छति स्पर्शमात्रं
वाचा सेयं मुहुस्तं निर्दिशति रसना-
मप्यहो ! सम्वरीतुं ।
तन्मन्ये नूनमस्यावयवसमुदितिर्दिव्यसीधुप्रकारः
सङ्गादप्यङ्ग यस्य प्रभवति मुहुरुन्मादलक्ष्मीरमूदृक् ॥

तत्र च ।

वक्तिरूपं[3] यदा कृष्णस्तदा सा राधिकाधिकं ।
शृणोति नैव तत्तस्य पश्यन्ती रूपमद्भुतम् ॥

एतदनन्तरं सखीनां निभृतालापः ।

अपि लीलायितमनया, चम्पकलतया तमालाधः ।
प्रागल्भ्यात्पुनरेतां, तदुपरि रमण-स्पृहां वेद्मि ॥

---

(१) पूर्वं कालं व्याप्य ।        (२) उत्तरं कालं व्याप्य ।
(३) प्रशंसायां रूपं ।

अथ श्रीमत्परमरूपगुरूपदेशमयस्वप्नकलितं प्रातस्तनललितरागसम्वलितं ललिता-गीतं ॥

जागरणादथ कुञ्जवरे ।
वीक्षितभास्कर-रुचिनिकरे ॥
कान्ता-निद्रा-भङ्गकरे ।
अपि सङ्कलितस्व-परिकरे ॥
ममधीर्मज्जति कंसहरे ! ।
मौलिशिखोपरि-पिञ्छधरे ॥ ध्रुवं ॥
मुहुरुल्लासित[1]युवतिकरे ।
सममनया बहिरयन[2]चरे ॥
घनगहनाध्वनि गमनपरे ।
तत्र च वहुकृतसुखवितरे ॥
आशास्तम्भितविरह-गरे ।
धाम्नि[3] सनातनशर्मसरे ॥ इति ॥

दिनान्तरे सखीसौभाग्यं ।—

किञ्चिद्विलोक्य कुञ्जे, सख्याः प्रागल्भ्यमेकान्तात् ।
स्मेराकरमनु मुरलीं, प्रादाद्बर्हावलिं शिरसि ॥

---

(१) उन्नमित । (२) वर्त्म । (३) गृहे ।

तां प्रति श्रीराधा किमपीदमाचर्य्य प्रोवाच ॥

शेते मञ्जुनिकुञ्जतल्पमनु स प्रेयानिति प्रेयसि !
त्वां वेणुं किल हर्त्तुमस्य कुतुकात्प्राहैषमस्मि[१] द्रुतं ।
तन्तु त्वं परिहृत्य चागतवती श्रान्तेव च प्रेक्ष्यसे
तद्वर्त्मान्यदुरीचकर्थ रभसाद्यन्मादृशा दुर्गमं ॥

तदेवं तासां तस्य च प्रावृषिजकृषिवद्वैववश्यत एव वशे[२]वशम्वदे[३]तदनन्तरं वसन्तपञ्चमीमनु वसन्तरागं जनयन् गोपालजनीभिर्मिलित्वा श्रीमान् गोपालः खलु खेलति स्म ॥

तथाहि ।—

तस्यां पञ्चम्यामुत्कण्ठितषट्पदखण्डिततुण्डमुद्राकुलमुकुलमण्डलतया प्रथममुन्मीलितेषु केषुचित् पुण्ड्रकेषु श्रीमन्माधवराधादीनामवाधमागमनमसम्भाव्य भृशमुन्मनायमानायां वृन्दायां सुमनायमाना काचिदालिपालिरागम्य तामुल्लासितवती ।

सखि ! वृन्दे ! कथमिव मन्दतां विन्दसे ?
आगम्य रम्यमिदमवगम्यतां ॥

---

(१) अहं ।　　(२ वश कान्तौ अभिलाष इत्यर्थः ।
(३) आयत्ते ।

वृन्दाह ।—कीदृशं ?॥ सा प्राह ।—

याद्दशं भवदभिरुचितं ॥

वृन्दाह ।—कथ्यतां तथ्यं ? ॥ सा प्राह ।—

काचिदालिर्माधवी–मण्डलमनु माधवं माधव-प्रकाशदर्शनतः समुज्जृम्भितराधाविप्रलम्भ-वाधं निभाल्य तामुल्लोलयामास ।

उल्लोल्य च सङ्गतश्चलन्ती सखिभिरिदं वसन्त-रागेण गायन्ती वल्लभमपि लम्भयामास ।

गानं यथा ।—

कृष्ण-वनं सखि ! भाति सरङ्गं ।
भवतीमिव लघु नेतुमधीशं सेवितमधुरससङ्गं॥ध्रु॥
जागरमितमिव माधविका-शतमनु कृतजृम्भाभङ्गं ।
चुम्वति मधुपगणे कृतभङ्गि स्मारयति प्रियसङ्गं॥
सरसरसालजमुकुलकुलं परिपुलकयदिव सममङ्गं ।
आकारितमिव तव कुरुते पिककलमनु कलयदनङ्गं॥
त्वाश्वेलाकलिचन्दनमरुतावासयतानुलवङ्गं ।
कर्षति मधुरिपुमधुपवोदितवीणावेणुमृदङ्गं ॥
नीतायां त्वयि माधवि माधवमाधवगानतरङ्गं ।
किरति परागचयं लोचनमिव नटयति चारु कुरङ्गं ॥

———

इति सा लब्ध्वा वल्लभमनिशं मनसा वलितासङ्गं ।
जयति निरूपय रूपिणि मध्ये यमुनामानसगङ्गं ॥

अत्र च पद्यमेकं गद्यते ।—

वनरुचिरुचिरः श्रीमान्
मदनविनोदाय नुन्नगोपीकः ।
अभितः सुरभितदेशः
सुमुखि ! विलोकस्व माधवः स्फुरति ॥

तदेवं निशम्य तत्र विन्दमानां वृन्दामनु पुनरेवं दर्शयामास ॥

यथा ।—

राधा हरिरपि पुलकिवसन्तं ।
गायति निजमुदमनु विकसन्तं ॥ ध्रु ॥
उपदिशते दिशि दिशि गुणयन्तं ।
पिकमनु पञ्चममतिचिरयन्तं ॥
वासन्ती-मधु रहसि धयन्तं ।
शंसति मधुलिहमनुगायन्तं ॥
मधुरसमनु गानं रमयन्तं ।
रसयति विनिमितमधरमयन्तं ॥
मलयजसुरभिधुरं खञ्जन्तं ।
कवयति गन्धवहं प्रसजन्तं ॥

वाद्यगणं गुणवलितदिगन्तं
अनुनृत्यति मदलोलदृगन्तं ॥
चपलाघनसमरुचिमनु तं तं।
नटयति शिखिगणमपि निपतन्तं ॥
किरति चूर्ण[१] मनुपूर्णदनन्तं[२]।
समम।ली ललनाभिरनन्तं ॥
श्रमजलकणगणमनु विलसन्तं।
वहति परागभरं रुचिसन्तं ॥ इति ॥

अथ तावतीं गतिमप्यसहमानाः सहमाना[३] गुरवः कुरव[४] माचर्य्य पर्य्यवस्थया[५] तासां स्वतन्त्रतामावार्य्य सर्वतो निरोधमुद्बोधयामासुः ॥
यत्र खलु रक्षिणीवर्गस्ताः सर्वतः समचक्षिष्ट[६]।
येन स्वत एव कृष्णस्य च तद्दृश्यता जाता ॥
तदेवं विधुरेण[७] सर्वत्र च तत्र विधुरे[८] सति।—

---

(१) चूर्णानि वासयोगाःस्युः।
(२) अनुपूर्णन्ती पूर्णोवाचरन्ती अनन्ता पृथ्वी येन।
(३) सगर्वाः। (४) कुत्सितं रवं।
(५) पर्य्यवस्था विरोधनं। (६) वर्जयामास।
(७) विधुरन्तु प्रविश्लेषे। (८) विधुरो दुःखजीविते।

पद्यां पश्यति वेणुमाकलयति प्रेष्यादिकं प्रेषय-
त्यन्यं कृत्स्नमुपायमाचरति यत् कान्तः सकान्तः(१)
पुरा ।
तद्गुर्वादिनिरोधवन्धविधिषु प्रौढेषु हाकर्षणं
जज्ञे निष्फलमेव येन च तयोर्मर्माणि भेदं ययुः ॥

तत्र चोभयोर्मनः-कथा यथा ।—

न प्राग्दृष्टिरमुष्य यत्प्रियजनस्यासीत्तदुच्चैः सुखं
मन्ये सा बत ! साम्प्रतं समभवद्यत्तस्य तद्दुःखदं ।
तस्य स्वस्य च या क्रमेण ममता जाताधुना सा द्वयं
चूर्णीकर्त्तुमथेच्छतीह किमहं
कर्त्तास्मि कर्त्ता स किं ॥
रात्रावद्यातिमात्रं प्रणयिजनमहं तं ददर्शाप्यसौ मां
नैतावन्मात्रमत्र प्रतिनवमदनं
हन्त ! पस्पर्श च द्राक् ।
यद्येष स्वप्न एव स्फुरति न हि तदा-
प्यात्मनः प्राणरक्षां
मन्ये जाग्रद्दशा वा तदपि न हि हहा !
कृष्णकान्ते ! (२)क नु त्वं ॥

---

(१) कान्ताभिः सह ।
(२) हे कृष्णस्य कान्ते । पक्षे हे श्यामवर्णा ! ।

श्यामाङ्ग[१]मन्तरा देहः सुहृदः सर्वे[२]एव च ।
अन्तर्मनोभिद[३]स्तापं दधते[४]वह्निजालवत् ॥ इति ॥

एवं सञ्चुक्रुधु[५]स्ते ते रुरुधुश्च वधूर्यदा ।
तदा कृष्णस्तीर्थयात्रां तृष्णया च्छद्म निर्ममे ॥

यदा कृष्णानुरक्ताभिः सा यात्रा ताभिराकलि ।
मनोराज्यं तदा प्राज्यमचायि[६]निरचायि[७]च ॥

यदा प्रतस्थे गोविन्दो विन्दन् शकटमुन्नतं ।
तदा दृक्पक्षिणां ताभिर्लक्षिता वन्धविच्युतिः ॥

रात्रिं रात्रिं वसन्ति स्म यत्र ते तत्र निश्चितं
अभूदमूषु सम्प्राप्तिर्विधोर्दाक्षायणीष्विव[८] ॥

तथाहि ।—

ताभिः स्वस्य विदूरगाभिरभिसारोद्यन्मदाभिस्तदा
गत्यर्थं कृतवासकाभिरुदितप्रोल्लासितत्केलिभिः ॥
काभिश्चित्परिवञ्चिताभिररतिव्याप्ताभिरुद्वासित-
द्वन्द्वाभिर्विविधस्वकेलिमभजत्तस्मिन् स कृष्णः पथि ॥

---

(१) पक्षे श्यामाया अङ्गं । पक्षे हे श्यामवर्ण ! ।
(२) एकवचनं वहुवचनं वा ।
(३) क्पप्रत्ययान्तं क्विवन्तम्वा सन् पक्षे सन्तः ।
(४) धाञो दधेर्वा ।  (५) क्रुधद्रुहोरुपसृष्टयोः कर्म ।
(६) अदर्शि ।  (७) निश्चितश्च ।
(८) अश्विनीप्रभृतिष्विव ।

यर्हि च तीर्थं याता, गोकुललोकास्तदा हरिर्विदधे ।
गुणजीविस्त्रीवेषं, तासामासक्तिसौख्याय ॥

तत्र ज्यौतिर्मन्त्रयोगतन्त्रविदुषीवेषो यथा ।—

सर्वज्ञे किं त्रिलोक्यां सुखकरसदनं
कृष्णगोष्ठं किमस्मि-
न्नाजीव्यं कृष्णगानं किमतुलविभव-
प्रापणं कृष्णलिप्सा ।
किं भोग्यं कृष्णरूपं परिणतिरिह का
कृष्णलब्धिः समन्ता-
दित्येवं राधिकायां प्रतिवचनकृती
पातु नः कृष्णदम्भः ॥

दूतीवेशो यथा ।—

कासि प्रेष्या किमीया तव तमनुगता
किंगुणा तस्य तुल्या
तत्र स्यात् किं प्रमाणं विजनगृहगता
पश्य मे सर्वमङ्गं ।
इत्येवं दिग्वितानप्रणिहितिवलितं
सस्मितं तन्निदिष्टा
राधागीर्भङ्गिमात्रात्परिचितिमकरो-
दस्तु तत्काम्यवस्तु ॥

तदेवं श्रीराधया तद्विरहचिन्तासम्बाधयापि गत-तद्बाधया क्वचिदन्यथाऽन्यथा च रजन्यन्तरे पुनः पुनरन्यवहुविधवेशं केशवं निशाम्य भणितं ॥

यथा ।—

सेयं भिषगसिताङ्गी, मम हृद्दाहं चिकित्सितुं लब्धा ।
स्पृशती सखि ! करनाड़ी, मन्याङ्गं
धिक्कुतः स्पृशति ॥

श्यामा वैणविकीयं, विदूरवासा निशार्द्धमुद्भूतं ।
सख्यः स्थलमिदमल्पं, तन्मम तल्पन्तु सङ्कुचद्भवतु ॥

कविरियमतुला भवतु, श्यामाख्यक्तिः स्वधीतसद्विद्या ।
अस्माकं रह एषा, कथमिव जानाति तन्न जानामि ॥

श्यामा चित्रकरीयं, चित्रं विजने प्रकाशयति ।
मामिव कामपि यत्र, स्वतुलितपुंसान्वितां सखि !
व्यधित ॥

रहसि तदेतद्वच्मि, त्वयि सखि ! न परत्र कुत्रापि ।
ताम्बूलिकीयमसिता, मोहनमन्त्रं विजानाति ॥

सेयं मालाकारी, मूर्त्तिर्मालाः प्रसारयति ।
तस्य श्यामलमूर्त्तेः, कस्मात्पुष्पेषु वासनां तनुते ॥

फलविक्रयिणी श्यामा, फलमिह विविधं प्रसारयति ।
विल्वं केवलमथ किं, गृह्णत्यस्मान् विलोकयति ॥

सेयं श्यामा न सती,हारव्यतिहारसम्भवद्धत्या ।
अपरिचितापि स्वेन हि, मणिसरपरिधानं वष्टि ॥
यदवधि तदगुरुसत्वं, तस्या जानामि गन्धजीविन्याः ।
तदवधि गुरवो मयि सखि !, कृष्णामकृष्णाञ्च न
ब्रुवते ॥

अत्र श्रीवत्सलक्षणस्याप्येतदुपलक्षणं वहुरचनं वचनं लक्षणीयं ॥

यथा ।—

सीवनविज्ञा स्वयमपि, परशिल्पानां
विलोकनात्कर्त्री ।
साहं प्रणयिव्यक्ति, र्लोकय गोपि ! स्वहृद्वतां चोलीं ।
अहमिह रञ्जनकारी, श्यामाभिख्या जगद्गतख्यातिः ।
या मम वस्त्रं वस्ते,विकसति हृत्कञ्जरञ्जनाप्यस्याः ॥
दर्पणकार्मुकविद्रुम,मुक्ता विक्रेतुमीहसे स्पष्टं ।
गूढं सम्पुटयुगलं,क्रेतुमहन्तु व्रजस्त्रि ! पृच्छामि ॥
सम्वाहननिपुणात्मा,सुतनुरहं तव निषेवणं लिप्सुः ।
मत्स्पर्शांशजसौख्यं,सुभगे ! ब्राह्मं सुखं जयति ॥

तत्र च सति ।

कङ्कणकारिस्त्रीव, द्वेशं केशवमुपेत्य याः काश्चित् ।
दक्षिणवामचरित्रं, तेनुस्ता न हि कवामहे सद्दस ॥

अन्धकारमयपच्छलाच्चिता-
मम्बिकावनगतिं विधाय तां ।
यद्यदिष्टमभवन्मुरारिणा
मिष्टमिष्टमतनिष्ट तद्वहु ॥

तदेवं च सति ।—

कंसारेर्हृदयाब्जसम्भवदलीवीथीयमाना व्रज-
प्रेयस्यः स्फुटमन्तरान्तरपदं याताः क्रमादन्ततः ।
एवं चेद्भवतान्न तत्र च वयं सन्दिह्य विब्रूमहे
राधा यत्किल कर्णिकास्थितिमगादस्माकमत्रा-
ग्रहः ॥

अथ समापनं ।—

सुदर्शनस्य शापान्तकारी राधे! सुदर्शनः ।
अतिकान्त(१)स्तवैवातिकान्तः सोऽयं वकान्तकः

इति श्रीगोपालचम्पूमनु रहःकूतूहलवह-
वहलरहःक्रीडाख्यमेकोनत्रिंशं
पूरणम् ॥

---

(१) कान्तामतिक्रान्तः ।

# त्रिंशं पूरणम् ।

अथ मधुकण्ठः प्रभातकथां क्रमतः प्रक्रमते स्म ॥

अम्बिकावनगतिर्बभूव सा
केलिकर्मणि हरेः समर्द्धनी ।
आगतावपि तदा पुनर्व्रजे
होरिकाप्रमदपर्वपद्धतिः ॥

तत्र च पर्वणि सर्व एव स्त्रीपुंसजनः प्रमत्तगण इव गायन्नृत्यन्युध्यन् क्रीडतीति मध्यदेशतः समुदाचारः प्रचरति ।

भविष्योत्तरपुराणप्रामाण्यस्य पुराणानां(१) मान्यतया ।

अथ तत्र यदा पूर्णगुणफाल्गुणपूर्णिमा-निशायां कुतुकतृष्णक् कृष्णश्च रामश्च ढुण्ढापरपर्याय होरिकागृहगृह्यायां(२) भुवि रमते स्म तदाकस्मादुत्तरस्मादागतः कश्चिद्यद्यपि गुह्यकाधिपसंग्राह्यस्तथापि गुह्यकगर्ह्यतया कंसशुभाशंसनस्तत्र क्रीडन्ती-

(१) प्राचीनानां ।  (२) बाह्यप्रदेशरूपायां ।

व्रजयुवतीः प्रति दुर्दृष्टिं विधाय तदाकृष्टिं चिन्तितवान् ॥

चिन्तयन्नेव च सहसा तत्र प्रविष्टः स खलु दुर्ध्यानाविष्टस्तस्मादकस्मादङ्गनानां गणमुदजव[1] ज्जवतः कालयामास[2] ।

अथ साग्रजः सोऽयं गदाग्रजस्तमसभ्यस्वभावमुपलभ्य पूर्वं तत्पर्वरसिकवैहासिक[3] वेषविशेषं दघृषं[4] मन्वानः स्थगित इवासीत् ॥

ततश्च ।—

प्रतिहरिगतिचेष्टा शङ्खचूडेन रुद्धा
दृगपि रुतिरपि द्राक् कृष्णरामेति तासां ।
यदयमतुलवेगद्रोहिरूपातिशब्दैः
प्रतिपदमनुवर्त्ती वृत्तिलोपं चकार ॥

अथ तत्र श्रीकृष्ण-वाक्यं ।—

प्रत्यायान्त्योऽप्यतिजवभरादस्य घोरान्निवृत्ताः
पश्यन्त्यो नावपि धिगमुतस्त्रासविध्वस्तनेत्राः ।
क्रोशन्त्योऽपि प्रतिरुतिकृतानेन नीरुद्धशब्दा
भ्रातस्तर्ह्यप्यहह ! किममू रक्षितुं न द्रवाव ॥

---

(१) पशुप्रेरणावत् । (२) चालयामास ।
(३) विदूषक । (४) धृष्टं ।

तदेवं निश्चिन्वानौ तं भीषणारम्भतया स्तम्भयितुं विचिन्वानौ सहसा शालद्वयं सहसा[1] त्रोटयन्तौ पुनस्तद्विटपादिकमपि प्रमोटयन्तौ[2] सुदृढ[3]-भुजाग्रजाग्रत्तद्युगलतया प्रवलतया च तावनु-दुद्रुवतुः । तदनुविद्रववशादन्येऽपि सम्विद्रते[4] स्म ॥

तदा च ।—

इत्थं न तर्कितं लोकैरनयोः शालहस्तयोः ।
शालौ किं लघुतां यातौ विग्रहौ गुरुतामुत ॥

ततश्च ।—

अग्रे शुभ्रं रौहिणेयं विधाय
श्रीगोविन्दः प्राद्रवच्छङ्खचूडं ।
कीर्तिस्तोमप्रायतां तस्य तन्व-
न्नेष प्रायस्तं पुरस्तात् करोति ॥

विलोक्य सवलं हरिं परमविक्रमं सक्रमं
विसृज्य वनिताजनं त्वरितमद्रवद्गुह्यकः ।
वलस्य किल कालताममत मृत्युतां यद्धरे-
र्युगं तदुचितं यतः स स जगाम तत्तत्कृतिं ॥

---

(१) वलेन ।　　(२) मुट प्रमर्दने ।
(३) शक्तस्थूलौ त्रिषु दृढौ ।
(४) अनुभवन्ति स्म । शीङो रत् वेत्तेर्वा ।

तेन विसृष्टायां चावलावलावयं बलाभिधस्तत् सम्वलनाय तत्र स्थितः ।

अथ श्रीमान् दनुजगजसिंहस्तदनुजस्तु स-विक्रमं विक्रममाणः प्रहस्य स्फुटमौत्तराहस्य[१] च तस्य दाक्षिणात्यं पलायनमवेत्य दूरेत्यं तं[२] प्रत्य-वज्ञया तरुयष्टिं हस्ताद्विभ्रष्टां चकार ।

विहृत्य लब्धसनीडः पुनरसौ विक्रीडनचतुरचित्त-स्तत इतस्तं विद्राव्य चेष्टितेन वेवेष्टि स्म ।

नृसिंह इव हिरण्यकशिपुं रिपुं स निग्रह[३]मेव जग्राह च ॥

ततस्तं हस्तरोधं[४] गृह्णन्नह्नाय मणिगृहीतये स्फुरन्नुरसिलः करसरसिजेन तच्छिरसि कक्खटी-भावविघटितदधीचिमुन्यस्थिजेन गृहीतसंग्राह[५]-सारं प्रहारमाजहार ॥

---

(१) उत्तरादागतस्य । (२) दूरे स्थितं तं ।

(३) निग्रहस्तु निरोधः स्यात् । नियमाय ग्रहणमितिक्षीरः ।

(४) हस्तेन रुद्धाः ।

(५) मुष्टिबन्धस्तु संग्राह इति सङ्कीर्णवर्गोक्तं क्रियायामेव पर्य्य-वस्यति । संग्राहो मल्लस्येति क्षीरस्वामिना च तथैवोदाहृतं । संग्रहो मुष्टिरस्य य इति तु क्षत्रियवर्गे फलकाङ्क्षत्वेनापि पृथग्दर्शितं ।

उत्तरस्मिन्ननेहसि[१]मृतदेहप्रतीकादानमनुत्तर[२]-मितीव भ्रंशयामास च तस्य तमुत्तंसं ।

स पुनराततायी दुर्मायी मणिमनु प्राणानपि व्यक्तमेव त्यक्तवान् ।

तद्धनमात्रजीवनयात्रः खल्वसौ । ततश्च ।—

जीवो रत्नं वेति भेदात्तमं त-
ज्ज्योतिर्मात्रं वस्तु यत्नादगृहीत्वा ।
पश्यन्तीनां योषितां कंसवैरी
निन्ये कामं रामसायुज्यमेव ॥

तं चाभिपन्नं[३] मुखं व्यादाय विन्न[४]पातं पन्न[५] मणिं व्यापन्नं[६] दृष्ट्वा श्रीकृष्णाभिप्रायमभि-प्रयद्भिर्दिविषद्भिरुपहसितं ॥

यथा ।—

स्त्रीरत्नं पुरुपरकीयमादिथा[७]स्त्वं
स्वं चूड़ामणिमपि हारयाञ्चकर्थ ।
अत्यार्त्तीर्वत ! निजजीवनञ्च धिक् त्वां
व्यादाः किं मुखमथ वक्तुमत्र यक्ष ! ॥

---

(१) कालो दिष्टोऽप्यनेहापि समयोऽपि । (२) अश्रेष्ठं ।
(३) अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गतावपीति नानार्थे ।
(४) लब्ध । (५) स्कन्नं पत्तं च्युतं गलितं ।
(६) मृतं । (७) आत्तवानसि ।

तदेवं कर्णरसनया रस्यमानमावर्य्यरहस्यं विहस्य च स्निग्धकण्ठः पुनः सवाष्पकण्ठमुवाच ।—

तत्क्षोभणं तद्द्रवणं तथा त-
द्विक्रीडनं तद्धननं स्व-शत्रोः ।
तद्रक्तरज्यन्मणिपाणिरोचि-
र्मय्यद्य सद्यःप्रभमस्य भाति ॥

पुनर्मधुकण्ठ उवाच ।—

तदेवं दलितचूड़े शङ्खचूड़े निष्पीडिते क्रीडिते च व्रीडितेन[१] निवृत्ते कोलाहलपरम्परातः कातरताविरतप्रकृतयः सर्व एव व्रजोर्वी-पतिप्रभृतयः समागत्य विस्मित्य च तादृशदुष्टनष्टीभावतः पुनर्भयसन्देहेनास्पृष्टाः स्पष्टानन्दसन्दोहदोहास्तत्पर्वक्रीडां निर्व्रीडा इव विवव्रुः[२] ।

विवृत्य च शास्त्रविप्रतिपत्तिविप्रयोजयितृविप्रेभ्यः सूतसर्वानन्दगुणप्रभूत[३] सूत—मागध—वन्दिभ्यश्च परमावदानानि[४] दानानि वहूनि चक्रुः ॥

ताभ्यश्च[५] शस्तवस्त्रादीनि प्रस्थापयामासुः ।

---

(१) लज्जया ।
(२) विस्तारयामासुः । (३) प्रचुर ।
(४) परमशुद्धानि । (५) श्रीगोपीभ्यश्च ।

स्वस्थायमानाः समाजग्मुश्च कृष्णकृष्णाग्रजौ पुरस्कृत्य निजं व्रजमिति ॥

एवंविचित्रविक्रीडः पुत्रस्ते गोष्ठनायक ! ।
तं क्रोधवह्नौ ढुण्ढाग्रे यक्षोरभ्रं जुहाव यः ॥

अथात्र रात्रिकथायां मधुकण्ठस्तां होरिकाकथामेव विशेषतः सेवयामास ॥

शिवक्षपायामथ यापितायां
वल्गूत्सवा फाल्गुनपूर्णिमागात् ।
पक्षद्वयस्यास्य यथैव कान्तिः
पर्वद्वयस्यास्य च तद्वदस्ति ॥

हिमे गते हिमरुचिरुज्ज्वलं वभा-
वफल्गुनि[1]स्वमहसि फल्गुपर्व च ।
न वाभवन् कथमथ तत्र गोपिका
मदोत्करादपि परिभूतगोपिकाः[2] ॥

अथ वलक्षपक्षसपक्षकैरवप्रकरशोभाकरक्षपाकरकरनिकरकरम्बितां स्वमनोरथप्रथनावलम्बितां क्षपामन्वीक्ष्य सर्वास्तत्पर्वानर्वाचीनसमुदाचारगर्वान्मुदा वहिराविर्भवन्ति स्म ॥

(१) अतुच्छे ।　　(२) रक्षिकाः ।

यथा ।—

मुहुरगणितगौरवाः समन्तात्
प्रणयमदात्परिधाय दिव्यवेषं ।
अपि वत ! जनतासु होरिकायां
हरिमभिसस्रुरहो ! व्रजस्य नार्य्यः ॥

तदेवं सद्मसद्मनां सखीपद्मवरूथिनीभिः सह यूथनाथाः कवचास्थितिरचनकञ्चुलिकादिवस्त्रैः सुरभिकषायमोचनयन्त्रप्रभृतिशस्त्रैर्वहुलकाहलादि वादित्रविचित्रकुतूहलैः सकेलिगालिरीतिमयगीति-कोलाहलैः सार्वत्रिकतत्पार्वणरीत्या निर्ल्लज्जतया सज्जतया च व्रजपुरद्वारपुरःस्थितहोरिकायतना-ग्रीयसमग्रायतप्राङ्गणविहारसङ्गररङ्गभुवि सङ्गता वभूवुः ॥

याः खलु वलवलानुजयोर्यथास्वं पृथक् पृथगनु-रागधरणाद्विभागमागतास्तत्तन्निष्ठद्दष्टितया तिष्ठन्ति स्म ॥

तत्र ताभिरीर्य्यमाणां(१) वर्द्धितशौटीर्य्यपरिमाणां कलकलमाकलय्य जय्यता(२)मय्यस्ता इति भावनां

(१) कथ्यमानं । (२) जेतुं शक्यं जय्यं ।

पर्य्यवसायसाहाय्याय सखिघटया कटकं सङ्घटय्य तद्वदेव सज्जतया बलबलानुजावपि वल्गुवलान्तौ तत्रैव गच्छतः स्म ॥

गतौ चानवद्यवाद्यघोषेण घोषं बधिरयन्तौ प्रतिसेनामवधीरयामासतुः ॥

येन समुद्दीपितमाना प्रतिसेनायमानाश्च तास्तथा वाद्यतः सम्मुखतामासाद्य परितस्तानपि सर्वानतिचित्रयामासुः ॥

यत्र प्रतिस्पर्द्धया वर्द्धमानयोस्तयोर्यूथवरूथिनीप्रमाणयोरेकत्र माधवः परत्र तु राधा राजायते स्म जायते स्म च तेन जनानामतिविस्मयः ॥

तथाहि ।—

यद्वच्छुभ्रतरप्रकीर्णकमणिच्छत्रादिकं श्रीहरे-
रासीत्तद्वदमूभिरप्यथि तदा श्रीराधिकायामपि ।
किञ्चाभ्यां न परस्परं नयनयोः प्रान्तश्च सेहे यथा
जेतृत्वं क्व नु जेयता च भविता कुत्रेति नात्रोहितं ॥

तदेवं परस्परमुत्सहमानतामसहमानतामप्यधिकृत्य कृतकृत्यतासमाहारयोर्मनोहरणायाभिहार(१).

(१) अभिहारोऽभियोगे च चौर्ये सन्नहनेऽपि चेति क्षीरः ।

विहारयोस्तयोरनीकिनीसहितयोः सर्वमहितयोः समञ्जसतामिव सञ्जयन्ती व्रजराजसवयः पुरोहितश्व शुरावरजदारतया गन्तव्यपक्षं नर्मशर्मणा रञ्जयन्ती काचिदर्द्धवृद्धा तत्प्रेमसमृद्धा मध्यस्थपदवीमध्यास्य प्रगल्भतया(१) गत्यावात्यायमानाराधावर्गमध्यात् तत्प्रतिपक्षस्य क्ष्माधवं श्रीमन्माधवं सन्निहितवती ॥

सन्निधाय च यथायथं प्रथमानस्मिततया कृतेऽभिवादनेऽभिवदने च तेषां सर्वेषां श्रृण्वतामब्रवीत् ॥

अहं किल प्रज्ञा प्राज्ञा च महाधराधीशगणकृताराधायाः श्रीराधाया दूतकर्मणि प्रभूततामासन्नास्मि ॥

तदेतदवधार्य्यतां ।

इत्युक्तमात्रामेतां मधुमङ्गलः सहासमाह स्म । "किमुक्तमवधार्य्यता"मिति । तच्छ्रुत्वा सर्वस्मिन् प्रहसति सोवाच ॥

"वधिरोऽयं भवतां सभासदि"ति ॥

---

(१) प्रगल्भःप्रतिभान्विते ।

मधुकण्ठ उवाच ।—

युक्तं तवेदं निरर्गलत्वं ॥

यतस्तस्या धराधीशाया वशा[१]भवती कस्य वान्यस्य वशा भविष्यति ॥

श्रीकृष्णस्तु सगाम्भीर्य्यमुवाच ।

निकाममेव निवेद्यतां ॥

दूती तु तया शिष्टाचारप्रतिपालयित्र्या विशिष्टमिदमादिष्टमित्यङ्गीकृते विष्णुविष्णिवत्युक्त्वा प्रोवाच ॥

शचीजयितदीयसचिववराभिरिदमादिष्टं । सर्वत्र प्रसृमरसमज्ञा[२]मस्मदीयराज्ञीमवज्ञाय दूरतश्च किमुत पुरतश्छत्रादिकधारणं भवतामसाधारणं[३] ॥

अथ कृष्णः सभाभिः सह हसित्वा प्रोवाच ।—

सत्यं तदादेशतस्तदभिनिवेशं त्यजामः । किन्तु युद्धं विना राज्ञां नेदं वेदवुद्धं स्यादिति युद्धाय सन्नद्धया भवत्या भाव्यमित्येव वक्तव्यं ॥

अत्र मधुमङ्गलःसम्मुखं गतस्तदिदमाह स्म ।—

---

(१) श्लेषे हस्तिनी ।　(२) यशः कीर्त्तिःसमज्ञा च ।
(३) अयोग्यं ।

देव! तदिदमेव समाकर्ण्यतां जातितः स्त्री चास्त्री यो जनस्तस्मिन् वामतारामे नाममात्रेण रामापदमागतेनार्जवचर्य्यया कार्य्यमर्य्यते(१)। तस्मादार्जववर्जनादूर्जस्विनस्ते वयमेव दूत्याय स्थापनीयाः प्रस्थापनीयाश्च। अस्मासु चाहमेव प्रहापणीयः। यतः कोविदोऽस्मि॥

दूती सहासमाह स्म।—

लालाटिक!(२)भवान् यदि कोविदस्तर्ह्यन्यः कोऽविदः(३)॥

मधुमङ्गलः सोत्प्रासमुवाच।—

जल्पाकि! कल्पयामि; भवती तस्याः सभाया विन्दु(४)रस्ति। तथापि त्रयीतनो(५)र्ममाग्रतः स्थितिरपि तव न स्थिरतां लभेत॥

दूती सावज्ञमुवाच।

विशारदाया(६) मम पुरतः शारदस्त्वं कियद्वा वदितासि॥

---

(१) लभ्यते।
(२) लालाटिकः प्रभोर्भालदर्शी कार्य्याक्षमश्च यः।
(३) मूर्खः। (४) विन्दुर्विज्ञाता प्रवलश्च।
(५) सूर्य्यस्य। त्रयीतनुर्वेदात्मा सूर्य्यश्च।
(६) विद्वत्सु प्रगल्भौ विशारदौ प्रत्यग्राभिनवौ।

तस्मान्नीवाक[1]वलितमाकलय ॥

मधुमङ्गलः सरोषं श्रीकृष्णमवलोक्य वक्ति स्म ।—

परवक्तव्या[2] खल्वियं वक्तव्या भवतीति नास्माकं वक्तव्या[3] भवितुमर्हति । किन्तु सेयं तावदत्र निरुध्यतां । यावदहं तद्वृत्तमवबुध्य सुध्यग्रणी-र्भवन्तमवरुणध्मि ॥

दूती सहासमुवाच ।—

नूनं भवतां दूतः सोऽयमग्रत एव व्यग्रतामवाप । यन्मामत्र रुन्धन्नेव तत्र जिगमिषति तस्मान्न मादृगिव निःशङ्कं सोऽयमिति भवतां कलङ्काय परं प्रतिपत्स्यते ।

युक्तमेव च तत्तदावयोः । स्वामिगुणा हि परि-जनमनुयन्ति[4] ॥

कृष्ण उवाच ।—

भामिनि ! स्वामिगुणत्वं पुनः प्रकारान्तरेण मन्तव्यं । सा खलु वामा वयन्तु दक्षिणा इति ॥

---

(१) नीवाको वचनाभाव इति क्षीरः ।
(२) गर्ह्याधीनौ च वक्तव्याविति नानार्थे ।
(३) वक्तुं योग्या । (४) प्राप्नुवन्ति ।

दूत्युवाच ।—

यूयं खल्वपसव्या[१] इति सत्यमेव । यतः स्वेषां दक्षिणातावाचित्वेऽपि प्रतिकूलतां न जहीथ ॥

मधुमङ्गलस्तु तदशृण्वन्निव प्रोवाच ।—

महाराजवामा त्वमेव खलु तासां वलाय कल्पते यस्मादवलाः ॥

दूत्युवाच ।—

दोषज्ञाः[२] खलु भवन्तः कथमिव गुणा[३]नुसन्धानं कुर्वन्तु ? ॥

मधुमङ्गल उवाच ।—

दोषैकदृक् पुरोभागीत्येवं यच्छ्राब्दिकैर्मतं ।
तस्मात्त्वमेव पुरतः सुधीभिस्ताभिराहिता ॥

दूत्युवाच ।—

असङ्ख्यावतां[४] भवतां पुरतः कथमेक[५]सङ्ख्यावती प्रत्युत्तरं दद्यां । भवांस्तु तत्रानुवन्ध[६] एव ।

---

(१) अपसव्यं दक्षिणं प्रतिकूलं च ।
(२) दोषज्ञःपण्डितो दोषानुसन्धाता च ।
(३) पक्षे गौणा । (४) संख्यावान् पण्डितः संख्यायुक्तश्च ।
(५) एकशब्दो संख्यायां श्रेष्ठे च ।
(६) मुख्यानुयायीत्यर्थः । दोषोत्पादे ऽनुवन्धः स्यात् प्रकृतस्यानुवर्त्तने मुख्यानुयायिनि शिशौ ।

तथापि सर्वे शृण्वन्तु । तासामवलात्वं खलु विरोधिलक्षणाया। यतः शस्त्रशरीरत्वमेव दृश्यते । तदेतच्च तन्मुख्यामुपलक्ष्य लक्ष्यतां ॥

केशाः पाशाःश्चलनयनयुगं वाणयुग्मं नमद्भ्रू-
श्चापः(१) कर्णावरि(२)परिदधतौ नासिका दिव्यशस्त्री।
दन्ता वज्राण्य(३)परतदपरं तर्क्यमेवं तदेत-
च्छस्त्रैराधा स्वयमुदयवती को वलीयानतोऽन्यः ॥

अत्र को वा वलीयानतोऽन्य इति कृष्णमेव कटाक्षेण पश्यन्ती प्राह स्म ॥

एवं विवदमानयोरनयोः कृष्णस्तु तया प्रस्तुतं तस्याः सौन्दर्य्यमवधार्य्य क्षणं धीरतां सन्धार्य्य प्रोवाच ॥

दूति ! जातित एव प्रतीपदर्शि(४)न्यसि किं ब्रुवे ।
किन्तु मदीयदूतनिर्मिता राजनीतिरियं
न तु भीतिः ॥

ततो भवती तावदत्र स्थितिमनुभवतु । मम दूतस्तत्र गच्छतु ॥

---

(१) भ्रुश्चापश्च ।　(२) चक्रं ।
(३) हीरकाणि पक्षे भिदुराणि ।
(४) नारी, पक्षे प्रतिकूलदर्शिनी ।

ततः सञ्चारकारणा[१]माचारेण समाचारेण समाचारे लब्धप्रचारे यथायथमाचरितव्यं ।

पुनर्मधुमङ्गलं प्रत्युवाच ।—

भद्रं स्वयमेव तत्र गम्यतामिति ॥

दूत्युवाच ।

न्याये युक्तौ प्रमाणे च स्थितो मध्यस्थ[२] उच्यते ।
परं[३] मध्ये स्थितो यः स्यात् स मध्यस्थावरः[४] स्मृतः ॥

सोऽयं पुनश्चेक[५]एव ततः शिक्षामपि नार्हतीति स्वैरमेव गच्छतु ॥

मधुमङ्गलस्तु विशस्ता[६] खल्वियं कथं शस्तं वदतु नामेति निवेद्य "यथादिशन्ति महाराज-महाशया" इति प्रस्थितवान् ।

प्रस्थाय च तासां स्थानमासीदन्नाशी-राशिभिः प्रसादमासादयामास ॥

सर्वाश्च नमस्कृत्य सस्मितं कृत्यं पृच्छन्ति स्म ॥

---

(१) दूतानां ।
(२) न्याये मध्यः, अन्तरे युक्तप्रमाणे चेति नानार्थात् ।
(३) परं केवलं । (४) मध्यः स्थावरः । पक्षे मध्यस्थावरः ।
(५) बिदग्धःपशुर्वा । (६) धृष्टा ।

मधुमङ्गलस्तु भवति नामेतन्नृत्यदर्शनमेव कृत्यमिति प्रोच्य प्रत्युवाच।—

किञ्च भवतीनां दूती तत्र गता वर्त्तते ब्रूते च।

अस्माकं राज्ञी सार्वभौमं भवन्तं मिलितुमिच्छतीति।

तदवधार्य्य विस्मयादस्माकं राज्ञा चाज्ञापितं।

सा खलु परानुगता जातास्तीति श्रूयते।

तस्मादेतन्न श्रद्दध्याम। अतः स्वस्य स्वसा काचिदस्मासु कस्मैचन विवहनाय दीयतां। तदा तस्याः श्वोवसीयसाय[१] स्यादिति॥

सर्वाः सभ्रूविजृम्भमाहुः स्म।—

वाचाट[२]तापाटवमयधूर्त्ततामूर्त्तिरेवायं स्फुटमन्यथाकारं वदन्नस्मान् वञ्चयितुमेवानञ्चिवानस्ति[३] स कदाचिदेवं कद्वदायेत[४]। सा पुनरस्माकं सञ्चारिका[५]नेमां कुचर[६]तामाचरेत्। किन्तु वद्धेति सम्वद्ध्यते[७]॥

---

(१) मङ्गलाय।

(२) वाचाटो वहुगर्ह्यवाक्।

(३) आगतवानस्ति। अञ्चेः क्वसो रूपमिदं।

(४) गर्ह्यवादी तु कद्वद।

(५) दूती।

(६) समौ कुत्सादकुचरौ।

(७) सम्भाव्यते।

विशाखोवाच ।—

यथाकारं तथाकारं वा वदतु सोऽयं कथङ्कारं यूयमिदं विचारयथ ॥

यतो विप्रस्यास्य कृतं खलु विप्रकृत(१)मेव भण्यते कथमिव प्रकृतं स्यात् ॥

मधुमङ्गल उवाच ।—को वात्र मम लाभः ॥

विशाखोवाच ।—

अये ! भद्रविप्र ! लब्धमपि तथैवानुसन्धेयं(२) ॥

तदेवं प्रत्यादिष्टस्तु(३) मधुमङ्गल उवाच ।—

सर्वक्लमथ(४)मथनानां शमथदमथ(५)सत्पथप्रथन-पराणामथ कथं न भवत्यस्माकमेवायं दोषः ॥

यत्खलु सन्ध्यनुसन्धानं एताभिस्तु युद्धमेवानु-बद्धमस्ति ॥

अथ श्रीराधिकाभिदधाति स्म ।—

किम्बलः सम्बलते भवदीयः स राजा । यस्मा-देतावद्गर्वायसे ॥

---

(१) वञ्चन । (२) विप्रकृतसमानार्थत्वात् ।
(३) प्रत्याख्यातो निरस्त इत्यर्थः । (४) क्लमथः क्लमे ।
(५) शमथस्तु शमःशान्तिर्दान्तिस्तु दमथो दमः ।

मधुमङ्गल उवाच ।—

उच्चाटनं गुणगणप्रथनाद्विकृष्टि-
र्वंशीकलाद्विकलनं वररूपवृन्दात् ।
स्तम्भो विलासवलयाद्वशता च वाणी
माधुर्य्यतः सुमुखि ! यस्य वली ततः कः ॥

किञ्च ।—

द्राघिष्ठ[1]क्षेपिष्ठ[2], प्रेष्ठ[3]वरिष्ठ[4]स्थविष्ठ-[5]
वंहिष्ठाः[6] ।
अस्मन्नृपतेः पुरतः, सर्वे गर्वेण रिच्यन्ते ॥

अपि च ।—

वृन्दिष्ठ[7]क्षोदिष्ठ,[8]ज्येष्ठ[9]गरिष्ठ[10]ह्रसिष्ठ-[11]
साधिष्ठाः[12] ।
अस्मन्नृपतेरग्रे,विपरीताभापरीताः स्युः ॥

अथ श्रीराधा तु तदवधारणादन्तःप्रेमबाधां कथमपि समाधाय ललिता-मुखमीक्षितवती ॥

ललिता तु सविप्रलाप[13]माललाप ॥

---

(१) दीर्घतम । (२) क्षिप्रतम । (३) प्रियतम ।
(४) उरुतम । (५) स्थूलतम । (६) बहुलतमाः ।
(७) श्रेष्ठतम । (८) क्षुद्रतम । (९) वृद्धतम ।
(१०) गुरुतम । (११) वामनतम । (१२) बाढतमाः ।
(१३) विप्रलापो विरोधोक्तिः ।

स वेणुर्मूकवधिरो यत्रागाद्वावदूकतां ।
तत्रायं किं न वाग्मी स्याद्ब्रह्मवंशसमुद्भवः ॥

किन्तु यथास्माकं दूती निरुद्धा तथा तमेतमपि निरुध्य युद्धाय सन्नह्यामः ॥

अनन्तरं तु परमप्रचण्डाः स्वपितृपुरोहितपोगण्डाः समादिश्यन्तां ॥

ते च स्त्रीवेशमेवास्य वलात्कुर्वन्तु । कृते च तद्वेषे श्रीव्रजराजपुरोहितभागिनेयः सोऽयं न चार्भकस्तत्र गच्छन्नस्मदीयसन्देशवर्णांस्तत्कर्णाभ्यर्णान् करोतु ॥

अस्माकमन्या कन्या न विद्यते । किन्तु सिंहलद्वीपाद्दीपाभा पद्मिनीयमेका जितसर्वातिरेका नीतास्ति सा तु स्वयं राज्ञा परिणीयतां ॥

तत्र पद्मिनी प्रायेण दुष्कुलसद्मजेति नावज्ञातव्या ॥

"विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनं ।
नीचादप्युत्तमा विद्या स्त्रीरत्नं दुष्कुलादपि ॥
इति हि स्मर्य्यते ॥

मधुमङ्गल उवाच ।

ननु भवत्यश्च पद्मिन्यस्तर्हि ता एव कथं कुले नानार्हिताः ॥

ललिता सरोषमुवाच ।—

आवृता जगति पद्मिनी यया
पद्मया जितवती सदापि तां ।
राधिकादिरपि पद्मिनी तया
भण्यतां ततिरहो ! मृगीदृशां ॥

अथ श्रीराधा हसित्वा चिल्लीचालनया लसित्वा च स्वपितृपुरोहितबालकानां पञ्चाशतं तद्देशायादिश्य राजपुरोहितस्वस्त्रीयेण च तथा सन्दिश्य युद्धकौतुकायाभिनिविश्य तस्य स्त्रीवेशस्य पुरतः स्थितिं निर्दिश्य चामूभिश्चमूरुचक्षुश्चमूभिरभिक्रान्तवती[1] युद्धाभिमुखतया च स्थितवती कृष्णाश्च मनस्याहितवती ॥

तत्र च ।—

अवीभषदयं होरीमवभाषदियं तथा ।
अदिदीपदसौ भावमसौ च तमदीदिपत्[2] ॥

ततश्च राजायमानगोकुलयुवराजस्तं निकारप्रकारं वटुमुखतः कटुनिभं कर्णपुटमानीय तां दूतीं स्वपक्ष-

---

(१) अहितान् प्रत्यभीतस्य रणे यानमभिक्रमः ।

(२) हरिर्गणं प्रयोज्य होरीं भाषयामासेत्यर्थः । राधापि गणं होरीं भाषयामास । तस्या राधाया असौ कृष्णो भावमदिदीपत् उद्दीपयामास असौ राधा च तं अदीदिपत् ।

रक्षिताभिः काभिश्चित्प्रगल्भतालक्षिताभिस्तादृश-स्त्रीभिः पुरुषवेषां विधाय तेन वटुना सन्दिदेश । "तस्याः कन्यायाः सोऽयमेव धन्यो वर" इति ॥

सन्दिश्य च तामपि मधुमङ्गलवत्पुरःप्रणीया-भिषेणयामास(१) ॥

तदेवं मिथः कृते नियातने(२) तयोः काभिश्चि-दन्याभिः कुतुककृते तटस्थतया तत्र सङ्कटमानाभिः प्रकटहठतया द्वयोस्तत्तद्वेषविशेषिणोः कृतसन्धे पटाञ्चलवन्धे जाते चोभयतश्च नानाहासप्रवन्धे श्रीराधापक्षलक्षिताभिर्मृगाक्षीभिरिदमाख्यायि ॥ वर्षीयसानेन वरेणास्मत्पद्मिनीयं धर्षिता । तस्मा-द्युद्धार्थमुद्यमः सम्वध्यतां ॥

ततः सम्वद्धेषु शुषिरादिभिः सार्द्धं युद्धवाद्यार्थ-मानद्धेषु ॥

नर्माङ्गणालिरुदकक्षिपयन्त्रयुक्ति-
र्दण्डीप्रपातननिवर्त्तनकेलिरीतिः ।
कान्ता कृतिव्यतिकृतप्रहणां सखीनां
साहायकं युधि बभौ हरि होरिकायाः ॥

---

(१) सेनयाभिमुखं जगाम ।

(२) अवनायस्तु नियातनमित्यमरः । खलीकार इति चीरः ।

चिरतश्च कृष्णकेलिकलावकलनकेवलतया विकलित[1]स्वस्वकेलिकलहप्रलापेषु राम-श्रीदाम-सुदामादिकलापेषु तल्लीलातृष्णाकृ कृष्ण एव स्वप्रेयसीभिः सह सहसाहवनिभं[2] विहरति स्म ॥

प्रथमं तावदसावमूश्च परस्परं स्निग्धा व्यतिषज्य व्यतिविद्धा वभूवुः ॥

यतः ।—

भ्रूकार्मुका नेत्रबाणा ये तेषां मार-संयति[3] ।
अङ्गास्त्राणां हन्त! किं स्यादपराद्धपृषत्कता[4] ॥

अथ पुनर्दण्डादण्डिखण्डनपूर्वकं वाहावाहवि वहुलमेवायं हरिराहवमुवाह ॥

तथाहि ।—

दोरान्दोलनमङ्गुलीपरिमलं[5] केशग्रहं वेशनुत्
पाण्योश्चञ्चलतां तथा परपरं वाचां विचारात्परं ।
कुर्वंस्तत्परदारसैन्यमविशत् कृष्णस्तथा स्वं यथा
कुत्रागादिति वेद न स्म जनता साप्यस्तु
नापि स्वयम् ॥

ततश्च क्रमशः परपरातिक्रमपूर्वकमपूर्वोत्साह-

---

(१) दूरीकृत। (२) युद्धतुल्यं। (३) युद्धे।
(४) अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः।
(५) विमर्द्दनं परिमले इति सङ्कीर्णवर्गे।

वृतयोः सखीभिरावृतयोरसाधारणक्रीडारणजवयो राधामाधवयोरेव व्यतिषङ्गः प्रसङ्गमायातः ॥

तत्र च ।—

यथायथं तत्कौतुकावकलनतः स्वस्वव्यापारं परित्यज्य व्यज्यमानचित्रतया(१) चित्रायमाणा वरवर्णिन्यः सौवर्णवर्णा(२)कारतया वृण्वाना(३)मिथस्तद्वर्णयामासुः ॥

तथाहि गीतं ।—

पश्य पश्य सखि ! होरीयुद्धं। राधामाधवकृतमनुरहसं सुचिरं भवदनुरुद्धं(४) ॥ ध्रु ॥

दण्डादण्डिगते परिखण्डिततरतमतो व्यतिरोधं।
व्यतिषञ्जनमिह भाति तडिद्धनरुचिजयलसदुद्बोधं ॥
मस्तकवस्त्रस्खलनारम्भात्रिहिते तन्मुखयुगले।
भ्रमरवरायितमेकेनास्मिन्नन्यास्मिन् वहुकमले(५) ॥
भुजभुजगेन हरेर्वहुधारचि हृदि तस्याः फणलीला।
चक्रवाकयुगगीर्णि(६)रवाकलि(७) यत्र मुहुः कृतिशीला ॥

---

(१) आश्चर्यतया। (२) प्रकारो वरणः शालः।
(३) आवृण्वत्यः। (४) भवतीनां वाञ्छितं।
(५) कमलकल्पे। बहुच्प्रत्ययान्तोऽयं।
(६) गिलितं। (७) दृष्टा।

अपि पुनरस्मिन्नवकलयत किल
निरवनिरुहततिदेशं
अभिनवकनकलतापरिवलयित-
तरुणतमालकुलेशं ॥
तं युवती-कुलसाहायककृतवलराधावशवालिनं ।
रचयति नयति च निजविषये दिशि
रभसरसादपि वलिनं ॥
नीतं तं नवपीतपटं मृगनाभिजलैरभिषिक्तं ।
तनुते सुतनूततिरिह वितनुप्रमदमदादतिरिक्तं ॥
सेयं राधा स्वयमिह मुरलीं यद्रत हरति सयत्नं ।
न तदद्भुतमिव यदहरदस्य प्रथमं हृन्मणिरत्नं ॥
अथ रामादिः सखि ! तातं पश्यन्ती विनिरुद्धं ।
सन्धिमधित्सत विसृजन्ती ताः प्रतिदूतं गुणशुद्धं ॥
रामः स यदा फाल्गुणपर्वणि देयं मेने दातुं ।
प्रतिभुवमादायाथ तदा हरिराभिरमन्यत रातुं ॥
जाते सन्ध्यावाखिलेनापि च शंसति दिव्ये लोके ।
निजनिजकान्तामोहविरोहण-
गीतिः स सविलुलोके ॥ इति ॥

एवं स्थिते परस्परं चर्चरिकारचनानिचायने विस्मायके जाते समाजद्वये च मिथः किञ्चिद्दरं

याते कस्मादप्यकस्मान्मूढधीः शङ्खचूडः समागतः स तु विगीत एवेत्यलमतितद्विस्तरेण ॥

अथ समापनं ।—

शङ्खचूडं निहतवान् यन्मणिं दत्तवानपि ।
राधे ! कान्तस्तवायं तत्कृतवांस्तत्कृते द्वयं ॥

इति श्रीगोपालचम्पूमनु निर्व्रीडहोरिका-
विक्रीडनं नाम त्रिंशं पूरणम् ॥

———

# एकत्रिंशं पूरणम् ।

अथ स्निग्धकण्ठः प्रभातकथां प्रथयामास ॥

तदेवं प्रतिक्षणमेव परमप्रेमक्षणलीलाफुल्लदुल्लासतः सगोकुलवन्धुर्दशमं सम्वत्सरं सम्वलते स्म ॥

स तु नृशंसः कंसः क्रमशः सर्वेषु निर्मितनिजगर्वेषु तर्हि निस्तर्हितेषु(१) वैरशुद्धिं(२) प्रति प्रतिगतवुद्धिः सर्वतः श्रेष्ठतया रक्षितावरिष्ट-केशिनावाहूय संरम्भमाणतया(३) सभयतया चाभिहितवान्। मयावज्ञया नातियोग्या एव तत्र विनियोग्याः कृताः। स तु दारक इति वुद्ध्या। किन्तु स्फुटमसौ सर्वेषां दारक(४) एव जातः ॥

ततः कौसीद्य(५)खिद्यमानतया भवन्तावनुयुज्येते(६) किमिह युज्यत इति ॥

---

(१) मारितेषु ।

(२) वैरशुद्धिः प्रतीकारो वैरनिर्यातनञ्च सा ।

(३) सक्रोधतया । (४) विदारक ।

(५) कौसीद्यमालस्यमजिगीषुतेति चीरः । (६) पृच्छ्यते ।

तावूचतुः ।—

देव ! तदेतदेव प्रतीक्ष्य स्थिरतयाभीक्ष्णं वर्त्तामहे ॥

साम्प्रतं तु साम्प्रतमाज्ञाप्यतां । अथवा किमाज्ञापनया ।

विनापि तां विनियुक्ता एव युक्तसेवकतया वयमित्युत्थाय साभ्युत्थान[१]प्रणामं प्रस्थितयोस्तयोः कंसः शशंस ।—

अरिष्टस्तावत् प्रतिष्ठतां । इष्टापत्तिविपत्तितस्तु केशी च तत्प्रतिवेशी भविता ॥

तदेतदवधाय तौ च गृहमागत्य सातत्यत एव तदर्थमाजगृहतुः[२] ॥

अथ कदाचिल्लोहितायमाने सायं मार्तण्डरश्मिमण्डले नाम्नारिष्टः सर्वदिविषदरिष्टः सर्वत्र च रंहसा जङ्गन्यमानः[३] सर्वाश्चाघ्न्या[४]जेघ्नीयमानः[५] श्रीमन्तं गोष्ठद्वारन्त[६]माजगाम ।

यदा हि चित्रायुतपूर्णचन्द्रां पूर्णिमामनु तूर्णितचेताः स्वसुखवर्द्धनगोवर्द्धनविलोकनकामनया श्रीराम-कनिष्ठः किञ्चिद्दूरं प्रविष्ट आसीत् ।

---

(१) अभ्युत्थानन्तु गौरवं ।　　(२) आग्रहं चक्रतुः ।

(३) कुटिलं गच्छन् ।　　(४) गाः ।

(५) पुनः पुनर्हिंसन् ।　　(६) निकटं ।

ततश्च ।—

भूकम्पक्रमणान्महीध्रचलनं तस्यागतेर्वारिभृ-
द्विक्षोभं नदनान्निशाचरवरं वैकृत्यभागाकृतेः ।
तद्रूपाद्रिविनिश्चयं ककुदि वार्मुग्वृन्दसङ्घट्टना-
दुन्नीय[1]व्रजगप्रजा दिशि दिशि
द्राक्‌ कान्दिशीक्यं[2] गताः ॥

किञ्चित्किञ्चिन्मूत्रणादापगानां
गूथत्यागाद्गण्डशैलावलीनां ।
सृष्टिं कर्त्ता पश्यतारिष्टनामा
देवारिष्टः पर्वतात्मा प्रतीतः ॥

वृषदम्भी ससंरम्भं[3]रम्भणां[4]यद्व्यधादसौ ।
तेनासीद्व्यक्तसन्दर्भः[5]स्वयं गोगर्भपातिना ॥

वप्रं[6]यदापस्किरते[7]स्म शृङ्गा-
दिभिर्विकुर्वाण[8] तया वृषः सः ।

---

(१) ज्ञात्वेति भूकम्पादिषु योज्यं ।
(२) कान्दिशीको भयद्रुतः ।
(३) साटोपं । (४) गवां शब्दः । (५) मर्म ।
(६) पुंनपुंसकयोर्वप्रं केदारक्षेत्रं ।
(७) विक्षिपति स्म । चतुष्पात्कर्तृकहर्षपूर्वकविक्षेपे किरतौ सुट् ।
(८) हर्षमाणो विकुर्वाणः ।

तदाखिलं गोकुलमाशु मृद्भिः
प्रच्छन्नमासीद्वनमण्डलञ्च ॥
यत्र यत्र खुरमादधाति स
क्ष्मापि तत्र वलते विदीर्णतां ।
नेत्रतुल्यविलतः समुच्छ्रितं
वारिरोदननिभं बिभर्त्ति च ॥

तत्र लोकानां बचनं ।—

जातु[१]मातु[२]गिरिरेष समन्ता-
दुच्चलन्नपि तथाबिधमूर्त्तेः ।
किन्तु श्रृङ्ग-तलगं रबियुग्मं[३]
हा ! व्यसिष्मयत[४]गोकुलल्लोकं ॥ इति ॥

एवमुद्घ्नता[५]गवामुद्धा[६]न्निघ्नता च सर्वं वस्तु-प्रस्तुम्यता[७]चारिष्टेन कृतादाक्रुष्टात् कष्टमनु स्पृष्टवन्तस्ते गोष्ठनिष्ठा[८]गोनरप्रकृष्टाः[९]कृष्णाय मुहु[१०]र्विक्रुष्टवन्तः ॥

---

(१) कदाचित् । (२) मातु परिमाणं प्राप्नोतु । मा माने ।
(३) लोचनरूपं । (४) विस्मापयते स्म ।
(५) गर्वं कुर्व्वता । (६) प्रशस्तान् ।
(७) प्रस्तुम्यतां गोकर्तृकहिंसायां । गोकर्तृकायां हिंसायां प्रस्तुम्यतिः सुडागमादित्याख्यातचन्द्रिका ।
(८) गोपाः । (९) प्रधाना । (१०) कृष्णमाह्वातुं ।

सूरतः[1] स तु दूरतस्तेषामवगतविक्रोशनलेश-मात्रः कुत्राप्यकृतयात्र इव सम्मुखत एवावतस्थे ॥

अवस्थाय च माभैष्टेत्यभयमुद्दिष्टं विधाय क्रोधाविष्टस्तमरिष्टमाजुहाव ।—

वलीवर्द्द ! क्रोधवर्द्धन ! नर्द्द विशेषेण ॥

तदिदन्तु तं प्रति सम्प्रति सुकराईनस्त्वमसीति ज्ञापनाय ॥

अथ चोवाच । यथा ।—

"सपालैः पशुभिर्मन्द ! त्रासितैः किमसत्तम !
मयि शास्तरि दुष्टानां त्वद्विधानां दुरात्मनां" ॥इति॥

पुनश्च ।—

पिण्डीशूर ! विदूरः सन् क्रूरतां त्वं किमृच्छसि[2] ।
सामुद्रपुर इव मां कुम्भजातं[3]प्रपूरय ॥ इति ॥

तदिदं च तस्य गाम्मन्यस्य जिघांसया लोकानां गोत्वभ्रमाय गमनया चोक्तवानिति गम्यते ॥

किञ्च ।—

आस्फोटनं कृतमनेन तदा यदस्मा-[4]
दास्फोटनं समभवद्दनुजश्रुतीनां ।

---

(१) दयालुः ।
(२) प्राप्नोसि । (३) कुम्भसमूहं श्लेषेणागस्त्यं ।
(४) आस्फोटनात् ।

कोपं चकार स तु यद्वृषभस्तदुच्चैः
कोऽयं च वर्षशिशुवन्नहि जाहसीति ॥
कृष्णः सख्युः स्कन्धदेशे स्वबाहुं
निक्षिप्यासावुद्धसन्नेव तस्थौ ।
येन क्रोधं वर्द्धयामास[१] तस्य
प्रेयोवर्गाणां च सन्देहसङ्गी ॥
वृषस्त्वसौ रज इव पुच्छमार्जनी-
परिभ्रमैर्घनगणलक्षमुत्क्षिपन् ।
क्षितिं क्षतामथ खुरवज्रविज्वल-
त्खनित्रकैर्विदधदगाद्धरिं प्रति ॥
स वज्रति स्म न परमाशु विद्रवं
प्रतिद्विषत्पतिरुततीव्रतां प्रति ।
न केवलं हरिरिह हा ! समाययौ
सखापि यः परिकृततद्भुजांसकः ॥
तादृशतया स्पष्टमविप्रकृष्टे च तस्मिन् श्रीमान्
कृष्णस्तु शृङ्ग-द्वयमेवाभिजग्राह ॥

यथा ।—

शृङ्गे ये पूर्वतां नीते जयाय वृषरक्षसा ।
स्वसन्दानाय[२] ते सृष्टे कृष्ण-दोष्णोर्वशं गते ॥

---

(१) पक्षे वर्द्धच्छेदने । (२) बन्धनाय ।

वाहुपाशसित[३]तीव्रशृङ्गकः
स स्फुटं प्रतिमुखं सरन्नपि ।
प्रत्यगष्ट दश च क्रमान् वला-
द्दित्यपत्यरिपुणापयापितः ॥
अयमुद्धुतस्तदिह नास्ति भारता
न फलं विनोदन[१]कलाविनोदतः ।
इति माधवः स्फुटमरिष्टमुत्क्षिप-
न्नतिरीढया[२] वत विवृत्तिमाटिटत्[३] ।
व्यवर्त्तत हरिक्षिप्तः परं नोक्षासुरः क्षितौ ।
हासावेशवशे क्षिप्तः स्वर्गेऽपि स्वर्गिणां गणाः ॥
पपात पुच्छं भुवि शृङ्गयोर्वला-
च्छृङ्गे तु पुच्छस्य निपेततुर्भुवि ।
पृष्ठाङ्घ्रि चैवं वृषरक्षसस्तदा
युक्तं तदस्मिन् विपरीतिकारिणि ॥
तज्जा लज्जाप्युत्थिता तस्य सोऽपि
प्रत्युत्तस्थावभ्ययुंक्तापि भूयः ।
कृष्णस्त्वेनं पातयन् वामशृङ्गे-
णोत्कृत्तेना[४]मुष्य वक्त्रं चुकुट्ट ॥

---

(३) वद्ध ।　　(१) प्रेरण ।
(२) रीढावमाननावज्ञा ।　　(३) उत्तानतां प्रापयामास ।
(५) उत्पाटितेन ।

शृङ्गोत्पाटनं घटयंस्त्विदमाचष्ट ।—

अभद्रस्यापि भवतो भद्रा[१]कृतिविधारिणः ।
विषाणमुण्डनाद्भद्राकृतिरेव प्रशस्यते ॥

अथार्द्रवसनं यथा परिनिष्पीडयन् जीवनं[२]
विकर्षति जनस्तथा तमकरोदरिष्टं हरिः ।
मलानि स यदा किरञ्छकमलमूत्ररक्तादिका-
न्यसौ परमशुद्धतामपि जगाम कैवल्यतः[३] ॥
लयं परममागतस्तदपि यत्पदं नैष्कृतं
यथावयमिति स्मृतं मुनिभिरेतदुच्चैरुषा ।
प्रसूनमथ यन्मुदा ववृषुरादितेयास्तद-
प्यमित्रविलयाद्भवेदुचितमीदृशात् किं पुनः ॥

अत्र च श्रीगोकुलप्राणाभिप्रायमभिप्रयद्भिस्तदेव चानुवदद्भिर्दिविषद्भिरुपहासितं ॥

वत्सं लघुं दैत्यतयावगच्छन्
जघान बाल्येऽप्यहमुक्षदैत्य ! ।
प्रौढः कथं त्वामतिभीष्मवर्ष्म
प्रष्ठं[४] न जानानि न घातयानि ॥ इति ॥

---

(१) उक्षा भद्रो बलीवर्द्द ऋषभो वृषभो वृषः ।
(२) जीवनं जलं प्राणनञ्च ।
(३) केवलत्वात् मलाद्यमिश्रत्वात् पक्षे मोक्षात् ।
(४) अग्रगं ।

अत्र गोकुलजनस्य गोकुलजीवनस्य च भावमाविशन्नेव श्रीशुकदेवस्तदिदं बदति स्म ॥

"एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः।
विवेश गोष्ठं सबलो गोपीनां नयनोत्सव"इति ॥

आयाते व्रजमच्युते रिपुजयस्वस्तिप्रशस्तीडिते
सर्वेऽप्युन्मदतां गता वहुविधं सम्वादमुन्निर्ममुः।
किन्तु द्राक् पितरावमुष्य वदनं तद्वीक्ष्यमाणावमू
स्वैर्वाष्पाम्बुभिराप्लुतं ममृजतुर्विक्रुश्य मूकाविव ॥

अथ समापनं।—

अयं स स्तवभाक् सूनुस्तव गोपनराधिप!।
पुषिता(१)स्त्रिदशा येन मुषिता(२)स्त्रिदशारयः ॥

अथ रात्रिकथायामपि स्निग्धकण्ठ एवाभिदधे ॥

एवं होरिकाप्रान्तकान्तक्रीडान्तरानुसारेणाभीरवीरसरसिजाक्षीणामक्षीणानङ्गानां वृत्तकृष्णासङ्गानां वहुधा निर्वृत्तं रात्रिवृत्तं स्वयमेव सखीभिरनुसन्धीयतां ॥

वासरावसर(३) आयं मदुक्तिनिदिग्धादिग्दर्शनतः परामर्श(४)मानीयतां ॥

(१) पुषितं पुष्टं।
(२) मुषितं मूषितार्थकं। अस्य द्विकर्मत्वाद्धस्तुस्वामिन्यपि कर्मत्वं।
(३) प्रस्तावः स्यादवसरः। (४) नीञो द्विकर्मकत्वात्।

यथा चाह श्रीपराशरः ।—

"स तथा सहगोपीभिररराम मधुसूदनः ।
यथाब्दकोटिप्रतिमः क्षणस्तेन विनाभवत्" ॥

यथा च श्रीशुकः ।—

"गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः ।
कृष्ण-लीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान्"
॥ इति ॥

तथाहि ।—

यदा खल्वहरहरह्नः क्षयमासाद्य वाद्यगीतनृत्यं विवृत्य सहचरसङ्गिनीभिः शृङ्गिणीभिः सह स हरिर्व्रजजनस्नेहधनः स्ववेश्म प्रविशति तदा विगत-परिमाणा विमानानुचारिणः सर्व एव समुपर्य्यु-परिचारिणः सह गणेन कणेहत्य(१) स्पष्टं द्रष्टु-मिच्छन्तस्तदभावलब्धकदनाः सदनान्तपर्य्यन्त-मायान्ति । कृतवेश्मप्रवेशे तु तस्मिन् विस्मय-स्थगिततया स लालसतया च तत्र तत्र चित्राय-माणा रात्रिं गमयन्ति ॥

शरण(२)न्तरात्पुनर्यावन्निःसरति स एष शरणा-गताया गतानुसरणः ॥

---

(१) तृप्तिं यावदित्यर्थः ।　　(२) शरणं गृहरक्षित्रोः ।

तदेवं यदा निःसरति निःसृत्य च गोपगोगण-सञ्चरणाय वेणुं रणयति तदातनं चरितं गोचरतामतिचरदपि निजभावप्रभावसम्पदा चक्षुषीव-रचितं विधाय श्रीमदाभीरभीरुभिरभिगीतं ॥

यथा ।—

अवधारय सखि ! तव सखि-वृत्तं । विरहिजनानां
जनयति हृदयं विदयतया बत कृत्तं[१] ॥

ध्रुवमिदं परपरत्रापि ।

वामभुजाकृतवामकपोलकमुल्लचिल्लीभासं ।
सुकुमाराङ्गुलिविलसितमुज्ज्वलवेणुमुखं मृदुहासं ॥
रागकलाकुलिताखिलभूचरगानकलैरनुविद्धं ।
व्योमगयानजनीजनमोहनमनुगमिताखिलसिद्धम् ॥

ततश्च मुहुरपि तावन्मात्रे तासां गानपात्रे सति वनव्रजयोर्मध्यमध्यास्य हर्षं तर्षञ्च धास्यन् वंशं शंसयति स्म ॥

ततश्च ताभिर्गीतं यथा ।—

चित्रं लक्ष्मीरेखासौ हृदि चपला[२] न भवति चपला[३]
मणिमम्बरमणिमनु तारावलिरपि सा राजति
तरला ॥

---

(१) छिन्नं ।  (२) विद्युत् ।  (३) चञ्चला ।

यस्य स चायं वेणुकलामृतवर्षी कलयति[१] गव्यां ।
सतृष्णकदशनामुन्नतकर्णामत्रामर्थिषु भव्यां[२] ॥

ततश्च तुच्छपिच्छगुलुच्छपुष्पगुच्छधातुच्छविभि-मल्लपरिच्छदं गच्छति स्म । श्रीगोपिकानां प्रच्छन्न-रमणः ।

तं मत्वा च सत्वरप्रथमपयःपायनाय गङ्गा-यमुनादिनाम्ना गाः सुविकस्वरसरसिजं सरः प्रति क्रमाद्वेणुगानतः समाकारयति । तस्मिन् व्रजरमा-नाथे वुद्धनिजाकारणा इव रुद्धप्रवाहप्रसरतया स्थिरतामुत्कलिका[३]मप्यनुसरति ॥

विदूरचरसरिद्विसरे च पुनरासां गीतं यथा ।—

चन्द्रकधातुदलस्तवकादिककृतमल्लोत्तमवेषं ।
आकारयति स गाः सरिदाली लभते तत्र विशेषं ॥
कम्पितभङ्गभुजा किल तत्पदरज आशुग-तातिनीतं ।
लघु सुकृतास्माद्दृगिव स्पृहयति विदतीस्वमन-
भिनीतं[४] ॥

अथ तदा तदाहूतिकृतामानन्दविभूतिमारभ्य तच्चरितमुपलभ्य कदाचिद्व्रजधरित्री शित्रीसदासि-

---

(१) करोति । (२) पाचकरूपां ।
(३) स्यात्कल्लोलऽप्युत्कलिका । अपिशब्दादुत्कण्ठायाश्चेति क्षीरः । (४) अयोग्यं ।

गताभिः काभिश्चन ताभिरुत्कण्ठया सुष्ठु प्रतुष्यमाणाभिरपि निजभावं पिधाय भावान्तरसाधारण्यं विधाय तदिदं तद्वर्णनं तन्निर्वर्णनमिवासीत् ॥

तत्र गानान्तरं यथा ।—

आदिपुरुष इव वैभवशाली । अनुचरवर्णितवीर्य्य
समुन्नतिरयमुदयति वनमाली ॥ ध्रु ॥

स गवाकारणमुरलीकलमनुतनुते(१) यत्र(२)वनश्च ।
तद्रूपान्तर्यामिस्फुरणजभावान् कलयति(३) पश्च ॥
पुष्पहसितमधुवाष्पनवाङ्कुरपुलकततीरतुयातं ।
एजन्नमदपि शाखाततिभिर्यत् किल कलयति शातं ॥
तदेवमानिङ्गाना(४)मपीङ्गाना(५)मिव शश्वदिङ्ग(६)व्यङ्ग
विहितवान् ॥

अथ समासन्ने विनोदेनाह्ना यवन्मध्याह्ने क्वचिन्महासरसि सरसिजसौरभसरसेन घनरसेन स्नानलीलामभिनिविश्य केवलतिलकवनमालावलितवेशभङ्गि(७)सङ्गितापूर्वकमपूर्वे तस्मिन्नेकान्ते कुसुमितवनान्ते कान्ते महाशैलप्रान्ते पल्लवलसदुरुतरतरुतल-

---

(१) निरन्तरं विस्तारयति ।  (२) अनुतनुते ।
(३) गृह्णाति ।  (४) अजङ्गमानां ।
(५) जङ्गमानां ।  (६) इङ्गितं ।
(७) विच्छित्तिः । रचनेति यावत् ।

विलसितशिलायामुपविश्य विराजन्नुस्रावार[1]चारं प्रति भूरिदूरीभावमितेषु मित्रेषु निजसौरभरभससमुदितमुदितमधुरमधुकरनिकरगानकृतावधानस्तद्धूङ्कारकारणास्वरसारमनु कुतुककृतानुसन्धानस्तदनुसारिवेणुचारिरणितेन सुरचितसारसादिरसाधानः[2]सोऽयं रमते स्म ॥

तच्च यथा ।—

रम्यतिलकनवतुलसीदलभववनमालातिविकासी ।
निजसौरभवशमधुपगीतमनुगायति वेणुविलासी ॥
अथ सारसयुतहंसायुततातिरलमनुगम्य परीता ।
परितो न्यविशत तामाविशती रुतिमिह
या हरिगीता ॥

ततश्च ततस्ततः समागते साग्रजे समग्रे सखिवर्गे तदानीन्तनवर्हिप्रवर्ह[3]वर्हादिनाना वन्यनेपथ्यप्रथ्यमानशोभलोभनीयरूपवरीयस्तया प्रशस्तस्रजीयस्तया[4] च विस्तृतशातस्य तस्य गोचारणचरितं प्रचारणीयं ॥

---

(१) धेनुसमूह । (२) अर्पणं ।
(३) मुख्यवर्य्यवरेण्याश्च प्रवर्हानवराघ्र्यवत् ।
(४) मालातिशयवत्तया ।

तथाहि ।—

क्वचिदपि क्षितिभृत्तिवृक्षशून्यक्षितिगतपुण्यतृणां धेनुषु चरन्तीषु वर्द्धीयमानमाध्याह्निकललाटन्तप-[1] तपनतापापनोदाय वेणुं वादितवान् ।

यत्र वलाहकाः[2] स्तत्प्रतिमल्लनिभमल्लारराग-बलादाहृतास्तेषां शीतलतावलनाय बभूवुः ।

यच्च वाद्यमुद्भवत्पुरुगुरुगरिमगिरिद्रोणीः प्रतिध्वन-यत्तत्परम्परया च सर्वमपि तथा रणायत्त्रिलोकी-लोकमपि तत्कौतुकालोकनायाकर्षति स्म ॥

तथा च सति तत्तदनुभूय भूयश्च ताभिरिदं तस्यामेव सभायां वर्णितं ॥

धृतवनमाल्यवतंसलसद्वनवेशततिर्विलसङ्गी ।
गिरितटमनुगोचारणकारणवेणुविनोदनरङ्गी ॥
विश्वं भ्रमयति कर्षति वर्षति मुदमपि
घनगणहारी ।
सान्द्रच्छायामनु शीतलतनुरनुसखि[3]
सुखसञ्चारी ॥

---

(१) सूर्यः ।　　(२) मेघाः ।
(३) सखायं सखायं प्रति ।

कुसुमं वर्षन्निजरुचिवितरणसौहृदमेनमुपास्ते ।
अम्बुधरः स्फुटमपगन्ता न च किन्तु
छत्रमिवास्ते ॥

ततश्च तत्रातिघने घनच्छाये विहारं विच्छायति[१]
स्म ॥

तदेतच्च व्रजराजजायासमाजमनु साधारणसम्प्रधा-
रणतया[२] ताभिर्वर्णितं ॥

यथा ।—

स्वसुतं कलयतकेलिकलावुधमात्मोपक्रम[३]वेणुं ।
विधिशिवमोहनविविधस्वरमयरागानिवर्त्तितधेनुं ॥
इति ॥

तदनन्तरञ्च प्रायशः काश्चिद्व्रजदेवीर्व्रजादहि
चापह्नुत्य व्याजं व्यज्य वा तदागमनवर्त्मनि तदनु-
वर्त्तनाय वर्त्तमानास्तं पश्यन्तीः पुनरपश्यन्तीरिव
दूरात्परिहरन्तीरित्थं काश्चिद्दूतिकाः परिहसन्ति ॥
मदान्धे! राजते पिञ्छी[४]न स पिञ्छी[५]पुरस्तव ।
वेणुध्वानी जगत्प्राणः[६]स जगत्प्राण[७]एष न॥इति॥

---

(१) विच्छ गतौ । (२) सम्प्रधारणा तु समर्थना ।
(३) स्वयमारब्ध । (४) मयूरः । (५) पिच्छचूडः ।
(६) वायुः । (७) कृष्णः ।

श्रीकृष्णाञ्च छलेन विज्ञापयन्ति ॥

यथा ।—

ज्योत्स्नां तनोति ललितं दधते विचित्रां
शाखां दधाति निखिलं जयतीतिभङ्ग्या ।
चन्द्रावलीश्च ललिताश्च विशाखिकाश्च
राधाश्च ताः सखिसदस्यपि सूचयन्ति ॥

तत्र काश्चिद्देव-पूजाव्याजेन दुष्प्रापपुष्पादिकमव-चिन्वाना वहलकलहमूलतां प्रयान्ति ॥

काश्चित्तु नव्यभव्यगव्यादिकं तदर्थमेवानयन्ति ।
तथापि नात्मना तस्मिन्नर्पयन्ति ॥

तत एव कृत्रिमदानचत्वरदेशमपदेश[1]मवरुध्य[2] वर्त्म विनिरुध्य पृच्छन्तं तं प्रति क्रयविक्रयिक-रीत्या[3]न्यथा ख्यापयन्ति ।

दिव्यादपि दिव्यमेतद्विज्ञाय यज्ञपत्नीरनुकृतयत्नासु क्रयिकतामाश्रयमाणासु यज्ञभुक्पतिव्रतासु[4]

(१) व्याजं । (२) प्राप्य ।
(३) क्रयविक्रयाभ्यां जीवति यस्तस्य रीत्या ।
(४) देवीषु ।

सत्याकृति(१)कृतिनीवाक(२)परीपाकमाकलय्य कृत्स्नं वस्नं(३)च सङ्कलय्य विक्रेतव्यमिति ॥

तत्र पुष्पावचये प्रणयिना सह वाकोवाक्यं यथा ।—

का यूयं वनदेवताः कुरुथ किं पुष्पाणि सञ्चिन्महे
किं निर्मास्यथ देवतार्च्चनमतो यूयं कथं देवताः ।
तच्च क्रीडनमेव नः स्फुटमभूदस्माभिरीदृग्विधै-
रैकात्म्यं व इति प्रसह्य विहरन् हारी हरिः पातु वः ॥

कदाचिच्च ।—

का यूयं वनदेवताः कुरुथ किं पुष्पाणि गृह्णीमहे
राज्यं नस्त्रिदशैर्विहापितमिदं देव्यो वनस्यात्र काः ।
अस्मज्जातिभिरर्पितं यदि तदाप्यस्माकमुच्चैःस्थितिः
स्यादेवं सविवादमङ्गजरणः कृष्णस्य ताभिर्बभौ ॥

कदाचिच्च कस्याश्चिद्दूत्या सह कृष्णस्य वाकोवाक्यं ।—

---

(१) मूल्यक्रिया ।
(२) विपुणा । नीवाकस्तु प्रयासः स्यात् इत्यमरः । तुलाकृत-न्यूनाधिक्यं क्रयादरो वेति क्षीरः ।
(३) मूल्यं ।

इयं का[१] स्त्री स्त्रीत्वं भवति कथमीषत्पदमिदं
किमस्थाने[२] सिद्धं तव वचनमस्थानकमिदं ।
न काकोरुद्भूतं भवति[३] तदहो काकुरिह का
तदेवं दूतीवाग्जयति हरिणाक्ष्या हरिमनु ॥

अथ गव्यविक्रय-व्याजतः क्रीडाविवादो यथा ।—

का यूयं किल गव्यविक्रयिकिका-
लक्ष्मीमतीत्य स्थितिं
प्राप्तानां न तदस्ति सम्भवपदं
युष्माकमासां क्वचित् ।
मूल्यं तामतिपत्य[४] तस्य विदितं तस्मान्न तद्दूषणं
दानं तर्हि ममापि तद्वदमितं दत्ताथ घट्टेशितुः ॥

अथ सखीन् प्रति श्रीकृष्णस्यादेशः ।—

गृह्णीध्वं पूर्वमासां फल[५]मतुलबलाद्धट्टचर्य्याविघट्ट-
कर्त्रीणां तस्य चान्ते वितनुत परितो
रोधनं बोधनञ्च ।

---

(१) केति किमः परं ।
(२) किं शब्दस्य स्थाने वैकल्पिकविसर्गलोपात् ।
(३) कापदं कुपदादुद्भूतं न भवति ।
(४) लक्ष्मीमतिक्रम्य ।
(५) लाभोऽधिकं फलं । अधिकं धनं लाभः फलञ्चेति चीरः ।

बुध्येरन् यद्यमूर्न स्फुटतरमटवीकारयाधारयिष्या-
म्येताः किम्वा हरिष्ये स्वयमथ पिहिताः
सम्यगन्विष्य नीवीः[1] ॥

तदेवमुदित्वा मुदित्वा च तत्तदाचरितवति तस्मिन् कथञ्चिद्गृहमागत्य गत्यन्तरेण सखीषु तत्प्रख्यापयन्तीभिरिदमपि गीतं ।—

तं शृणु मद्विधमोहनकरणं[2] । ध्वजवज्राङ्कुश-
कुशलपदार्पणभूरुहपुनरङ्कुरणं ॥ ध्रुवं ॥
गजगति विहरति गायति नृत्यति वादयते च स वंशं ।
अस्मत्पद्धतिमावृणुतेऽपि च नाथति घट्टगमंशं ॥

तदेवं नौकया रमणमप्यवगमनीयं ।—

यदा हि क्वचिदमूश्चमूरुदृशस्तदीयसौन्दर्य्यसारावलोकनकुतुकिदृशः समूहव्यूहमाचर्य्य विहारचर्य्यया तमुपसद्य च परिहासतः परतश्चरणाचर्य्यामाचरन्ति । तदा चतुराननविमोहनः स च खलु सहचरसहस्रविस्रम्भमहकरः सहचरतया सर्वतः पर्वतनिर्झरानेकीभावेनावर्ज्य[3] स्फुटमर्ज्यमानमुखतया मध्ये तासां वामतायुजां मोहनाय कूल-

(१) नीवी मूलधनं परिधानीयवस्त्रसूत्रञ्च ।
(२) मद्विधमोहनमेव करणं कृतिर्यस्य ।
(३) एकधारां कृत्वा ।

मुहुर्जां दुर्ध्यानकारणां दुर्निवारणां सरिद्वरां प्रवर्त्तयति ॥

प्रवर्त्त्य च पुरुषद्वयद्वयसी[१]यमिति व्यवसीयमानतया तस्यां नाव्यतया[२]भाव्यायां बहुलपलाशदलमयीं महातरणिं सरणि[३]मनु सखिभिरखिलमणिः प्रणाय कर्णधारायमाणस्ताभिरातर[४]वितरविस्तारादिकातराभिः प्रणयमयनयतया प्रणीतकलहं बहुलविलासं निचुलिता[५]लङ्कारकलनाय[६] कलयति ॥

तदपि गीतं यथा ।—

सरितं नावं रचयति च द्रुतमस्माकं पथि तस्यां ।
आरोहयते पारयितुं नः स्पृशति मिषादपि यस्यां ॥

ताभिरेवात्र श्लोकितं यथा ।—

आरोहाय विधाय संस्तव[७]मिलत्पर्य्यकूस्तवं तद्वचः
साहाय्यं विरचय्य नः सखि ! नदी-
मध्यं यदा जग्मिवान् ।

---

(१) प्रमाणे द्वयसच् तद्धितः ।
(२) नौतार्य्यतया । (३) वर्त्म ।
(४) तरपण्य । (५) आच्छादित ।
(६) अद्भुणाय । (७) संस्तवः स्यात्परिचयः ।

वृण्वन् दुर्वितरं(१)तदातरपणां विष्कभ्य नौकां न कां
चक्रे वक्रकलाकलापकलनां चक्राङ्कपाणिः स तु ॥

तदेवं साक्षात्कृतमनोरथततिः समभीप्सितगृह-
गतिः सखिभिश्चरितजल्पः पुनः स्नानादिरचिता-
कल्पस्तत्रैव च कुत्रचन तटिनीतटे कदापि
यमुनानिकटे पयःपायनाय सङ्कटितां गोघटां
घटयन् क्रमशश्च गणनया गणशः प्रकटयंस्त-
न्मननचरितार्थतया जगौ ॥

तच्च ताभिरनुपठितं यथा ।—

मणिमालाकृतगोगणगणनापूरणमनु सानन्दं ।
प्रणयितरांसगभुजमुद्गानं(२)हृतहरिणीकममन्दं ॥
कृष्णं कलयत मोहनमन्त्रग(३)मेणीमेणीनयनां ।
न यदि तदा कथमुभयव्यक्तिं वीक्षे तदपृथगयनां ॥
इति ॥

ततश्चेतस्ततः सखिभिरखिलैः प्रणीता(४)नीता-
मन्दमकरन्दसुन्दरकुन्ददामभिर्मुकुन्दः कृतालङ्कृ-
तिर्यथा विजहार । श्रेणीकृतगोसमाहृति(५) र्यथा
चाससार तथा वर्णितं ।

(१) कृच्छ्राद्देयं ।
(२) उच्चैर्गानं यस्य । (३) मोहनमन्त्रं गायतीति ।
(४) रचिता । (५) संग्रहः ।

किन्तु तद्विलम्वतः कातर्य्यपर्य्याकुलायाः श्रीव्रजेश्वर्य्याः समागततया स्वभावगोपनया ॥

तथाहि ।—

आगतमिव हरिमचिरं । कलयत सुहृदां दयया
यदसौ नगमपि दध्रे सुचिरं ॥ ध्रु ॥
कुन्दस्रगवितकौतुकवेषं गोगोपैर्विहरन्तं ।
मृदुमृदुमरुदनुवीजितमनुलवमखिलमनांसि हरन्तं ॥
सुरवन्दिभिरभिवन्दितमवहिततत्कृतनर्त्तनवाद्यं ।
मुनिसमुदयनुतिगुणितं[1] गुणिता[2]निपुणां जगदभिवाद्यं[3] ॥
अथ गोधनगणमनु सममनुगैस्तद्वर्णितगरिमाणं ।
श्रमकान्तिभिरपि सुखकारिणमितवेणुकलावरिमाणं ॥
खुररेणुप्लुतमाल्यमनोहरमीषद्घूर्णितनयनं ।
एतं पश्यत निजजनमानदमीप्सितगव्यानयनं ॥
कुण्डललक्ष्मीभृतपाण्डुद्युतिगण्डं गजपतिखेलं ।
क्षणदापतिवत्प्रमुदितमुदितं प्राग[4]धिसन्ध्यावेलं ॥
इति ॥

(१) अभ्यस्तं । (२) गुणित्वं ।
(३) नमस्यं । (४) पूर्वस्यां दिशि ।

अथ वैष्णवं वाराहमपि पुराणं प्रमाणमनुसृत्य गत्यन्तरं प्रत्याययिष्यामः ॥

एवं समयन[1]समयानवलोकतः समयाकरणाय[2] तद्दर्शनावगाहरोचनासु कर्णजाह[3]विलोचनासु चेतसि रचिततदीयशोचनः श्रीकमललोचनः समागम्य यथायथमवितथरम्यसुखधारया सर्वं सुखाकुर्वन्नपि तासां विरहदहनज्वालाविशेषावशेष-सन्तप्तभङ्गुरापाङ्गपत्त्रि[4]सपत्राकृत[5]स्तदपसारणाय मुरलीकलीकलया गोधनालय—गोवर्द्धनाचलयो-रन्तराले ता एवानन्यगतितया सङ्कलय्य निर्वृतिं परिकलय्य च वसन्तसन्ततरासाय युक्तिमुक्तिविषयं सम्वलय्य तासामाशासानानामाशां[6]ददमानः स्वव्रजतः प्रगर्जदरिष्ट[7]कृतारिष्टकष्टतः प्रकट-माक्रुष्टं श्रुतवान् ॥

श्रुतमात्रे च तत्र निजनिजवर्त्मना ताभिः सह सहसा व्रजमाववाज ॥

तदनन्तरन्तु वृत्तं पूर्वमेव वृत्तमस्ति ॥

---

(१) मिलन। (२) कालक्षेपाय। (३) पर्य्यन्त। (४) पत्रिणौ मृगपक्षिणौ। (५) पत्रावधिविद्धः। (६) सतृष्णानामवकाशं। (७) अरिष्टे तु शुभाशुभे।

तत्रेमां गाथां प्रथयन्ति ।—

गतस्य रासविक्रीडामागतस्य वृषासुरं ।
देवैर्न दृष्टः कृष्णस्य सम्भ्रमः किमुत श्रमः ॥

यदा खलु रिष्टः[1] सोऽयमरिष्टस्तदापि तदरिणा हरिणा निजाविष्टता नापकृष्टा । वीर्य्यस्य वहुविकीर्य्यमाणतामवाप्तस्य पर्य्याप्तविषयतां सोऽयमनासीदन् दितिसूनुरासीदिति ।

अनपकृष्टायाञ्च तस्यां सरङ्गभूभागस्तत्सङ्गमतः सागस्क इव पार्ष्णिप्रहाराज्जृम्भितविदरतया[2] विभागमागमितः । य एव त्रिभागस्तीर्थतां समर्थयन्निखिलपुरुषार्थं प्रत्यर्थतामाससाद ॥

यत्र च श्रीहरिरयं स्वयमखिलैः सखिभिर्मज्जन् सज्जनानामाचारं प्रचारयामास ॥

पातालान्महातीर्थमिदं समुत्थितमितीत्थं व्यज्य निमज्ज्य समुन्मज्ज्य वहुविसर्ज्य[3] च सर्वव्रजजनतया जनितशर्मागीतरिपुविजयकर्माव्रजमेवाववाज ॥

आव्रज्य च श्रीव्रजराजादीन् प्रणयविनयाभ्यां

---

(१) हिंसितः ।
(२) विदरः स्फुटनं भिदा । (३) दत्त्वा

सुखभाज्य विश्रमणाऽयाजतः शय्यागृहमासज्य सङ्केतितवेणुसङ्कणितेन परमानुरागसागरः सर्वतः श्रेयसीरमूः प्रेयसीः पूर्वकृतव्रजव्रजवाह्यविभाग-मध्यां मह्यां सङ्कलय्य केनाप्यव्यज्यतया पुनरपि रासायासादितवान् ॥

तत्र च ।—

राधयास्वादिता यासीन्माधुरी माधवाधरे ।
सैवानुभूता मुरलीकलीखुरलिकामनु ॥

तत्रैव च ।—

अभिसारे चलचेला,व्रजतन्वीनां ततीरुरुचे ।
अपि किं विजयपताका, दधिरेऽनङ्गस्य सङ्गतिं पुरतः ॥

यत्र च पथि प्रथमलब्धनिर्गमया परमरमया निखिलकलितारा‌धया राधया सममेकान्ततः कान्तस्य नर्म महदेव शर्म पुपोष ॥

यदा हि चिन्तासन्तापतान्तस्वान्ता सा कान्ता तादृशविपत्तिमुत्तीर्णा तं कान्तं रहः संहितवती तदा लज्जामर्यादामप्यसजन्ती परिष्वज्य व्यज्यमान-स्तम्भमुखसात्त्विकसम्भवाचिरं विचाररहिततामा-चरति स्म ॥

---

स च तथैव तामनुचरति स्म ॥

ततश्च । सखीभिः कथञ्चनसान्त्वितयोः कान्तयोः कान्तस्तु स्वनिर्मितं तत्कुण्डं तासां दृष्टिकिर्मीरितं[१] निर्मिमाणः सनर्मकान्तां व्याजहार ॥

पश्य पश्य मम कमलाकरोऽयं सागर इव गिरिराज[२]मासज्य कमलोद्भवं[३] भासयिता[४] सुधाकर इवैकदेशस्थित्यापि निजरुचिभिः कुमुदवनं[५] विकासयिता ॥

दम्भोलिपाणिरिव सदम्भोलितया[६] विलासी ।
अम्भोजजनिरिव भुवनविसर्जनेन[७] प्रभासी ॥
त्रिपुरजिष्णुरिव सहसागरमानशमनः[८] ।
श्रीमान् विष्णुरिव परमहंसचक्रा[९]श्रयताकमनः ॥

---

(१) विषयीकृतं । (२) गोवर्द्धनं । सागरपक्षे मन्दरं ।
(३) कमलं । सागरपक्षे कमला । (४) शीले तृन् ।
(५) कौ पृथिव्यां मुदामवनं । पक्षे कैरववनं ।
(६) उत्तमजलभ्रमरतया । पक्षे सवज्रतया ।
(७) जलदानेन । पक्षे लोकसृष्ट्या ।
(८) हृ स्फुटं सागरगर्वखण्डकः । पक्षे सहसा विष-मानशमनः । सागरमानशमनेन सह वर्त्तमान इति वा ।
(९) हंसानां चक्रवाकाणाञ्च । परमहंसानां जीवन्मुक्तानां यच्चक्रं समूहं तस्य आश्रयेण कमनः सुन्दरः ।

श्रीराम इव रोहिणी[१]सुखसञ्चारी ।
किं वहुना श्रीरामानुज इव च शिष्टकष्ट-
प्रदपापारिष्टहारी[२] ॥

तदेतन्मया खलु कृतसुकृतप्रसरं सर इदमचिरं विरचय्य चरितार्थता लब्धा भवत्या तु नेदृशनैपुण्यं पुण्यं कृतमिति गुण्यनुगुणता कथमाप्स्यते ।

अथ तस्याः सवयसस्त्विदं परिहसन्ति स्म ।
न वयं वृषघ्नतानिघ्नतया[३] विघ्नमवाप्ताः ।
येन प्रायश्चित्तत इव लोकस्य प्राय[४]श्चित्तमाराध-
यामः ॥

कृष्णः सहासमाह स्म;—न खल्वसौ वृषः ।
किन्तु वृष[५]विरोधी वृषतामिषवानसुरः ।

तस्मात्तत्पक्षपातितया भवतीनामेव वृष[६]घ्नता पर्य्यवस्यतीति भवतीनामेव निष्कृतिः कृतिविषयतामर्हति ।

तत्र च "प्रजाकृतं राजनी"ति राजनीति[७]न्यायेन

---

(१) रोहिणीनां गवां । पक्षे तन्मातुः ।
(२) पक्षे अरिष्टं दुःखं । (३) अधीनतया ।
(४) प्राय इति चित्तमिति च्छेदः ।
(५) धर्मे । (६) धर्मे ।
(७) राजनि इति या राजनीतिः ।

भवदीयराजायमानायामस्यामेव सा[१]जायमाना स्यादित्यसावेव तत्र[२] प्रधानतयावधीयते ॥

सख्य ऊचुः ।—

भवतु तथापि यथाकथमपि भवत्प्रसङ्गत एव सङ्गतः[३] खल्वयं दोष इति तन्मोषकृते भवत्कृतमेवानुकर्त्तव्यं ।

या खलु भवन्मङ्गलतः सरसीभूतायाः सवयसः सरसी भविता सा पुनरमरतरङ्गिणीव कृष्णा[४]ङ्गरागविलासिनी । अमृतनिधिप्रियावलिरिव वहुलताराङ्गताभासिनी[५]। सुत्रामगृहनेत्री[६]-वोपेन्द्रदेवरता[७]मोदातिरेकिणी । सावित्रीमुखविचित्रश्रुतिरिव नालीकिनी[८] । उमामूर्त्तिरिव गिरिराजा-[९]दुद्भवधात्री। मामूर्त्तिरिव हरि-हृदि विलासपात्री ।

---

(१) वृषघ्नता ।　　(२) निष्कृतौ ।
(३) प्राप्तः ।　　(४) पक्षे यमुना ।
(५) वहुलं तारयति अङ्गं यस्य तत्तया विराजिनी । पक्षे वहुलास्तारा अङ्गानि यस्यास्तत्तया ।
(६) गृहिणी ।
(७) उपेन्द्रदेवस्य रतं रमणं तत्र य आमोदः । पक्षे उपेन्द्र एव देवरो यस्यास्तत्ता ।
(८) न मिथ्याभिधायिनी । पक्षे कमलयुक्ता ।
(९) गोवर्द्धनात् । पक्षे हिमालयात् ।

रामशक्तिरिव गाम्भीर्य्यतः प्रलम्बमानमदमञ्जनी[१]
किं वहुना? राधेव रधान्ति[२]मपूर्णविधोर्वशतासज्ज-
नीति ।

अथ सतृष्णः श्रीकृष्णस्तु राधा-चिवुकं करेणा-
दरेण दराप्युन्नम्य स्मितरम्यमिदमाह स्म ॥

तद्वक्त्रं यदि को विधुः स्मितकला
सा चेत्प्रभा निष्प्रभा-
स्ते दन्ता यदि भानि धिग्यदि च ते
नेत्रे चकोरैरलं ।
इत्थं सर्वजनादसौ सहगणं
स्वं प्रत्यवज्ञा-वच-
स्त्वत्प्राशस्त्यमयं निशम्य हृदये
राधे ! मुहुर्म्लायति ॥

अथ पुरतश्चलित्वा क्रमतः सर्वपथीनाभिः[३]
सर्वाध्वनीनाभिः[४] सर्वाङ्गीनकम्पाभिः[५] सर्वाभि-

---

(१) दानवस्य । पक्षे प्रलम्बस्य तत्र लम्बमानस्य यो मानमद-
स्तन्मञ्जनी ।
(२) नक्षत्रमिव राधस्य वैशाखस्य अन्तिमो यः पूर्णो विधुश्चन्द्रः ।
पक्षे श्रीराधा तस्या निकटस्थितो यः पूर्णविधुः कृष्णस्तस्य ।
(३) सर्वपथान् व्याप्नुवतीभिः । (४) सर्वाध्वानमलं चलन्तीभिः ।
(५) सर्वाङ्गव्यापिकम्पाभिः ।

मिलित्वा विधुविधूततमसि यामिन्यां सपर्वतः पर्वत-राजमनु ऋतुराजविराजमानकाननगतं सर्वतो-ऽप्यधिकविलासविततं रासमुल्लासयामास ॥

तत्र देवीनां वाणी ।—

इयं विद्युदिदं शक्र-धनुः सोऽयं नवाम्बुदः ।
शश्वद्घनरसं वर्षन्नमूः कर्षति चातकीः ॥

तत्र वयःसौभाग्यं यथा ।—

कान्तिः कान्तिसमूहजातधनजिल्लावण्यमीदृग्घन-
प्रोद्यन्मौक्तिकजेतृरूपवरिमा विश्वादिकृन्मोहनः ।
एवञ्चेदजितस्य सार्वदिकता कैशोरके वा तदा
पूर्णो कः कवितामियान्नवनवास्तत्रापि यत्र श्रियः॥

यथा च ।—

पुरस्त्रीजनोदितमनुमोदितं श्रीवादरायणिना ॥

"गोप्यःस्तपः किमचरन् यदमुष्य रूपं
लावण्यसारमसमोर्द्धमनन्यसिद्धं ।
दृग्भिः पिबन्त्यनुसवाभिनवं दुराप-
मेकान्तधामयशसः श्रिय ऐश्वरस्य" ॥इति॥

कान्तीनां मथनाद्भवन्तु जलदाः
कोचित् कदाचित् क्वचि-
त्तेऽप्युच्चैर्विलसन्ति तर्हि तडितः
क्रीडन्ति चेत्तादृशाः ।

इत्थं कृष्णाधने तडित्तुलनया ता वर्णयन् श्रीशुक-
स्तासामव्यभिचारिशोभयितृतां व्यानञ्ज पश्य स्फुटं ॥

तथा च तेन तद्वर्णनं ॥

"पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासै-
र्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः ।
स्विद्यन्मुख्यः कवररसनाग्रन्थयः कृष्ण-वध्वो
गायन्त्यस्तं तडित इव ता मेघ-चक्रे विरेजुः"॥इति॥

तत्र च सम्प्रति यथा ।—

प्रतिक्षणममी गुणा हरिरमासु वृद्धिं गता
दिनं दिनमिति ब्रुवे किमिह सर्वदैवंस्थिते ।
नवे वयसि किन्तरामिह च तत्र वा किन्तमा-
मरिष्टशमनान्तनिश्यजनि यत्र सा चर्चरी ।

रासोत्सवोऽयमपि यथा ।—

यदा पूर्वं वृत्तः शरदमनु रासः किल तदा
बभूवाद्यारम्भाद्विविजमपि वाद्यादिसचिवं ।
यदान्ये[१] तत्पश्चाद्वयरचिषत ते तर्ह्यखिलजि-
न्महासङ्गीतार्हं व्यरचि हरिराधादिभिरदः[२] ॥

---

(१) रासाः । (२) वाद्यादिः ।

उपर्य्युडुगणाः क्षितौ सुरभिचित्रपुष्पावलि-
स्तथा तदनु(१) चन्द्रिका विविधरत्नलक्ष्मीरिह(२)।
स तत्र(३) शशलाञ्छनीविमलवक्त्रसङ्गा इत-
स्तदेवमुभयोः स्थितिर्गगनरासरङ्गश्रियोः ॥
दिव्याः काननवीथयः क्षितिधनं गोवर्द्धनक्षौणिभृ-
न्नानारत्नविलासिरासवलयं शुभ्रांशुशुभ्रा निशा।
लक्ष्मीवन्दितलक्ष्मयोषिदुपमाचारूपमापुंलस-
ल्लास्यं(४)राधिकयाधिकं निखिलकं
तत्केन किं वर्ण्यतां ॥

यतः।—

ज्यौत्स्नी सा दिद्युते सेव सरङ्गः स्वतुलाधृतः।
सुदृशोऽमूरमूदृश्यः कृष्णाः स्वोपम एव सः ॥
सौन्दर्य्यमिव साद्गुण्यं सर्वोर्द्धं यत्र दीव्यति।
साद्गुण्यमिव सौन्दर्य्यं राधिका साखिलाधिका ॥
स एष एव महारासरसः किञ्चिदागमकृता चावगमितः ॥
वसन्तकुसुमामोदसुरभीकृतदिङ्मुखे।
गोवर्द्धनगिरौ रम्ये स्थितं रासरसोत्सुकं ॥ इति ॥

(१) नभोऽनु। (२) क्षितौ। (३) नभसि।
(४) लक्ष्मीवन्दितलक्ष्मयोषिद्भिः उपमाचारूपमारूपेण पुंसा च लसत् यत् लास्यं।

अथ तद्वसन्तरासविलासरजन्याः प्रातरेव सखी-
भिरगण्याभिः कृताराधया तदीयसाहायकसम्बा-
धया श्रीराधया स्वकरकमलकलिते ललिते सर्वसु-
खं वलयितुमुल्लले तस्मिन् पल्लले तयोः कान्तयो-
रलमेव सुखपरिमलः समुल्ललास ॥

तथाहि ।—

कदाचित्कुण्डस्याम्भसि विहरते कर्ह्यपि वहिः
कदाप्यन्तः कुञ्जे क्वचनसमये रासवलये ।
समं राधादेव्या हरिरखिलसख्यालिसुखदः
पुरा तत्तन्नित्यं स्मरयति मनो नः स्वमभितः ॥

किं वहुना ? तत्रेयमपि पुराणानां गाथा ।—
"यथा राधा प्रिया बिष्णोस्तस्याः कुण्डं प्रियं तथा ।
सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा"॥ इति ॥
पुनः स्मृतिमभिनीय समापनं पद्यं निजगाद ।—

अन्योन्यं मिलनस्पृहामिलनमप्यस्याहृतिर्दानवा-
द्यस्मात्तद्धृतिरात्तनर्ममिलनं कुण्डद्वयस्य क्रिया ।
सर्वासामधिमध्यमुज्ज्वलतया रासान्तरालस्थितिः
श्रीराधाजितयोर्मनो मम मना-
गद्यापि नैवोज्झति ॥

इति वैवश्यपारवश्यमासीदन् सीदन्निव मूर्च्छा-मूर्च्छन् स्निग्धकण्ठः सर्वानेव च तद्भावभावनान् भावयामास ॥

तच्च युक्तं । यतः ।—

अतिपूर्वं यदपूर्वं, निजमतिदुर्लभमतीव हृद्यञ्च ।
वृत्तं तत्प्रतिनवतां, प्रयाति भूयोऽनुभूयमानञ्च ॥

तदेतद्वर्णयित्वा स्निग्धकण्ठः समापनमाह स्म ॥

राधे ! त्वद्वल्लभः सत्यं सर्वैरपि सुदुर्लभः ।
सुलभोऽप्यधुना योऽयं भवत्या मन्यतेऽन्यथा ॥

अथ कथञ्चिदपि जातसान्त्वने तन्मन-सान्त्वनैकविकारे परिमनोरथपथमखिलशोभा-शुभपथ्य(१) नेपथ्यसारतन्यमानदानतस्तौ सूत-कुमारावाराधयामासुराशु राधारमणप्रभृतयः कृतसाधारणातिक्रमप्रकृतयः सदःसदः(२) सदय-तया शुभाशीर्भिरभ्युदयमासादयामासुश्च ।

ततश्च पूर्वपूर्ववदेव सर्वे स्वधाम समासन्नाः स्वप्र-

---

(१) हित ।　　(२) सभासदः ।

तश्च तत्तदनुभवन्तश्चरितजागरा इव वासरादि-मासादितवन्तः ॥

इति श्रीगोपालचम्पूमनु नानाराग-
विचित्रचरित्रचित्रमेकत्रिंशं
पूरणम् ॥

---

# द्वात्रिंशं पूरणम् ।

अथ पुनः प्रातःकथां यथावत् प्रथयिष्यामः ।

यथा मधुकण्ठः प्रथमतः कण्ठरवमकृत्वा मनसि निर्णिक्त(१)मिदं विविक्तवान् ।

एतदनन्तरं यद्यपि ये खल्वस्मासु बाल्यादेव स्तुहिकृष्णातां(२)गतास्तेषां भगवल्लीलासुखवर्षि-देवर्षिवरचरणानां कंसं प्रति शंसनं(३)शंसनीय-तामासन्नम् ।

तथापि भगवल्लीलाधिकृतिमनु वर्त्तमानानां सर्व-दोपाकुर्वाणानां(४) न तूदाकुर्वाणानां(५) तेषां तत्रौ-चितीमप्यनौचितीं चित्तीकुर्वन्त्यविपश्चित इति तथैवैषां परमविपश्चितामपि व्रजवासिनां विनि-श्चितनिजप्रेमजातीयलसदद्वितीयसुखप्रकर्षाणां नातिहर्षाय स्यादिति चानिर्णीयवक्तृनाम्ना तदा-म्नातव्यमिति ।

---

(१) शोधितं ।

(२) समासे निपातोऽयं। स्तुहिकृष्णामित्यभीक्ष्णामाह यः स स्तुहिकृष्णस्तद्रूपतां । (३) कथनं ।

(४) सेवमानानां । (५) हिंसापूर्वं सूचयतां ।

अथ सापलापं[1] स्पष्टमभ्याचष्ट ।—

श्रीहरिणारिष्टे[2] विद्विष्टे क्लष्टेन च कंसेन वर्षं यावन्न कश्चित्प्रस्थापितः केशी च गच्छन् पुनः स्ववेश्म प्रवेशितः । वृथा वैरं मा कृथा इति ॥

अथ मुख्यमाघकृष्णैकादश्यां कश्चिद्विविष्टः सार्वदिकज्ञानमहिष्ठस्तं प्रति प्रतिकूल एव सन्ननुकूल इव श्रीवसुदेवस्य रहस्यं वृत्तमनुवृत्तश्चकार ॥

येन खलु रामकृष्णावपि वसुदेवसुततयोदायसातां[3] ॥

ततश्च तत्कृतप्रतिरोधाद्धन्तुमशक्यतया वसुदेवदेवक्यौ पुनर्मक्षु लोहशृङ्खलया कारागारे क्रुद्धेन सता सतां विरुद्धेन तेन निरुद्धे ॥

निरुध्य चार्वमतिनार्व[4] दानवः समाहूय भूयश्च नियुक्तः । नियुक्तमात्रश्चायं व्रजाय कृतयात्रः प्रातरेव तत्रायातः ॥

व्रजश्चारिष्टवधादधस्तान्नन्दीश्वरगिरिमारभ्य परपरस्तात् कृतवास इति दूरत एव तं लब्धवान् ॥

---

(१) अपलापस्तु निह्नवः । (२) हिंसिते ।
(३) मूढबुद्धिना । (४) अश्व ।

यत्र च स प्रखरतर[१]खरखुरघृष्टिच्छिन्नक्षोणिपृष्ठतया गोष्ठमागच्छन् सटाघटामुदस्य नभस्यभिभ्रमयन् भ्रेषवशा[२]ददभ्रभयादभ्रप्रच्छन्नतया तत्तद्वृत्तमायच्छतां[३]विमानपरिच्छदानां[४]विमानानुच्छादयामास । पूर्वपूर्वमानानिव ॥

यत एव निर्जराश्च ते स्फुर्जदूर्जस्वलत्वर्जनतः सजरा इव जाताः ॥

ततश्च जङ्गल[५]गतिलङ्घिताङ्घ्रिपः स पुनरखर्वगर्वतः सर्वमेव धुन्वन्नर्वदानवः सिंहसंहतिरिव घर्घरितनिर्घोषमाततान ॥

आतते च निर्घोषे सम्यगर्गलितमहार्गलावर्गदुर्घट्ट[६]विकटकण्ठककवाटदुर्घट[७] निर्गमात्युदग्र[८]दुर्गायमाणगरिष्ठगोष्ठान्निशङ्कटङ्कुठशाखावृतिसङ्घं सङ्घशः समुल्लङ्घितवत्यः साम्नावत्यः प्लुतगत्या सोद्भ्रमं[९]सपद्यटवीं प्रत्येव च द्रुतं परिद्रुतवत्यः ॥

तदगणयन्नेव गोष्ठस्योपशल्यं प्रविष्टः परितश्च

---

(१) प्रागल्भ । (२) भ्रेषो भ्रंशो यथोचितात् ।
(३) गृह्णतां । (४) देवानां ।
(५) वेगवत्तर । (६) अचाल्य । (७) दुष्कर ।
(८) उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे । (९) उद्वेग उद्भ्रमे ।

घोटमानः[1]स देवद्विड्घोटकस्तु तमरिष्टमोटक[2]मेव ।
घोरितरीतिगत्यन्विष्टवान् ॥

अथ गवां द्रवाच्छोकाविष्टाः प्रष्ठ[3]गोष्ठपतिविशिष्टाः सर्वं एव गोमिना[4] लोकानि जान्योकांसि[5]झगिति[6]समुज्झन्तस्तदभिमुख[7]मेव परमुन्मुखतया चक्रमुः । यान् समग्रानप्यतिक्रम्य सम्यग्रभसमग्रत एव गच्छंश्छातासच्छातकर्मा[8]रामावरजन्मा राममप्यतिक्रम्याभ्यमित्रीयतया[9] चित्रीयते स्म ॥

ततः समग्रव्यग्रतां गता व्रजजनाग्रण्यस्तमभिक्रममाणं[10] प्रत्याचक्षाणास्तदेतदाचक्षत ॥

अयं वाजी वज्रतनुरुहततिर्व्राजिविजयी
निजध्वानस्फूर्जद्विजितदिविजप्रोज्झितपथः ।
भवांश्छायाप्रायप्रभवनवतापिञ्छतुलित-
स्ततस्त्वं मा यासीः सपदि पुरत[11]स्तस्य पुरतः ॥

---

(१) घुटपरिवर्त्तने ।　(२) मुट प्रमर्द्दने ।　(३) अग्रग ।
(४) गवीश्वरे गोमान् गोमी ।　(५) गृहाणि ।
(६) झटिति वा पाठः ।　(७) गवाभिमुखं ।
(८) छातं छिन्नं असतां शातं सुखं येन तादृशं कर्म्म यस्य सः ।
(९) अमित्रं प्रत्यभिमुखतया ।
(१०) शत्रुमभिगच्छन्तं ।　(११) पुरीतः ।

तदेवमत्याहिते[1] प्रत्यासन्ने मातरपुत्रयोरपीदं विवदनमासीत् ।

पुत्र ! क गच्छसि हयं कलयामि मातः !
प्रोद्दामदुर्व्यवसितः खलु हन्त ! सोऽयं ।
किं नः करिष्यति स वा विगतस्वसादी[2]
त्वं याहि गेहमहमस्मि विचेतनः किं ॥

ततश्च क्षोभात्प्रोद्भावितधार्ष्ट्या गोष्ठाधीशमपि सेदं निर्दिष्टवती ॥

मया वाल्यान्नैव त्वयि गृहपतावुद्धुरवचः
प्रयुक्तं किन्त्वद्य प्रकटयितुमिष्टं निशमय ।
कथं न त्वं सर्वैः सह सपदि गृह्णासि पृथुकं
कथञ्चा नान्येऽपि प्रतिहयमयन्ति व्रजपते !॥

अनादित एव दितीकृत[3]दितितनुजः श्रीरामानुजस्तु तदेवं वर्ण्यमानमवकर्ण्य विहस्य मातरं विश्वास्य विश्वविश्वासास्पदसुखदस्तं सासूक्षणां[4] क्षणां निरीक्ष्य स्वमुपह्वर[5]मानेतुमाह्वयत ।

---

(१) अत्याहितं महाभीतिः कर्म्मजीवानपेक्षि च ।
(२) अश्वारोहास्तु सादिनः ।　　(३) छिन्नीकृत ।
(४) अवहेलमसूक्षणं ।
(६) निकटं । रहोऽन्तिकमुपह्वर इत्यमरः ।

स च पूतनारिणाहूतस्तत्तेजसाप्यन्तः परिभूतः शूरम्मन्यतया तस्मिन्नधूतः प्रथमतस्तावन्निजपराक्रमक्रमणाय क्रमशः प्रत्यग्गत्यनुक्रममन्थरतया विक्रममाणस्तं प्रति यमुनां यावदवकाशक्षोणीं विश्राणितवान्। दूरतस्तु निजाभिद्रवस्य तेजस्विता भवेदिति। क्षोणीं विश्राण्य च कृष्णं निर्धार्य्यतया[1] निर्धार्य्य देवार्य्यर्व्वा[2]गर्वाद्दूर्य्यत्तलत्तस्येव गर्जितमर्जन्नरिपक्षं तर्जति स्म ।

ततश्च सर्व्वं युगपदरिरिषतीव[3] चिकरिषतीव[4] जिगरिषतीव[5] च तस्मिंस्तदसहमानः सहसा सिंहनादं वृंहयन् सिंहसंहननः[6] स च कृष्णस्तं धृष्णज[7]मभिसाग्रहमभिग्रह[8]मेव जग्राह। समग्र एव व्रजश्च व्यग्रतया तदनुगतिमिति स्थिते ॥

---

(१) निर्द्धार्य्यः कार्य्यकर्त्ता यः सम्पतन् सत्वसम्पदा।
(२) देवानामरिरूपो यो अर्वा अश्वः केशी।
(३) गन्तुमिच्छतीव। (४) विक्षेप्तुमिच्छतीव।
(५) निगरीतुमिच्छतीव।
(६) वराङ्गरूपोपेतो यः सिंहसंहननो हि सः।
(७) धृष्णक् प्रगल्भः।
(८) अभियोगस्त्वभिग्रह इत्यमरः। आभिमुख्येनोद्यम इति क्षी.रः।

स तु तत्पश्यन्नुत्तेरिता[1] रुपया गत्या तमेव रोषादमन्दमभ्यवचस्कन्द[2] ॥

यत्र ।—

व्योम सोऽयमतियन्निवाप्लवत्
तत्पिबन्निव मुखं व्यदीदरत् ।
एवमङ्घ्रियुगलेन यद्वयहं-
स्तच्च त[3]त्प्रतिगतं हरिर्व्यधात् ॥

ततश्च ।—

द्रागुच्छलच्चरणपुच्छमतुच्छमेत-
मुच्छूनरोम-ततिगुच्छवदुन्नमय्य ।
चिक्षेप चापशतकक्षितिलक्षिताग्रे
डिण्डीर[4]पिण्डमिव वारिधिभङ्गसङ्घः ॥

स लब्धसंज्ञः पुनरुत्थितस्तदा
व्यादाय वक्त्रं तरसापतद्धरिं ।
सोऽप्यस्य वक्त्रे भुजमुत्तरं हसन्
प्रादान्महादर्दुरकस्य नागवत् ॥

दिव्याहिवत्कृष्णभुजश्च तद्गला-
वटे स्फुटं वीररसादवर्द्धत ।

(१) उत्तरिते तु वेगान्धो न शृणोति न पश्यति ।
(२) अमन्दं यथास्यात् आभिमुख्येनागतवान् ।
(३) व्योम । (४) डिण्डीरोऽब्धिकफः फेनः ।

महाविषज्वालहता इवापि त-
द्रदास्तदा पेतुरमुष्य तेजसा ॥
दन्ता निपेतुः सममिन्द्रियाण्य-
प्युद्धूतिमापुर्वपुराप कम्पं ।
जरात्र तत्कालमुदित्य मृत्युं
प्रतीक्षमाणा किल वर्त्तते स्म ॥
यदास्य कण्ठं रुरुधे स तद्भुज-
स्तदाखिलाङ्गानि विदीर्णतां ययुः ।
तस्यैव शोकादिव तानि यत्परं
तदाश्रयाण्येव भवन्ति सर्वशः ॥

विशन्तं केशिनः कण्ठं कृष्ण-दोर्दण्डमेव किं ।
जगत्प्राणाशनं मत्वा तस्य प्राणा विदुद्रुवुः ॥

एकं द्वारं रुद्धमेतद्गलाख्यं
मन्निष्क्रान्तौ तानि भूयांसि कुर्य्यां ।
इत्थं किं तत्प्राणवर्गः समन्ता-
च्छिद्राण्याचर्य्याथ तस्मात्प्रतस्थे ॥
तस्य प्राणे निर्गते देहगेहात्
कार्ष्णो वाहुर्निर्गतः प्राघुणाभः[१] ।

(१) प्राघुणोऽतिथिः ।

गेहं तच्च स्वामिनं तं विनाभू-

त्खण्डं खण्डं दिष्टतः किञ्च नष्टं ॥

केशिकण्ठावटात्तेन निरकोषि यदा भुजः ।

तदा स्वभावमेवाप्तः संहारे दिव्यवाणवत् ॥

अन्ते मुक्तं तेन गूथमित्युक्तं युक्तमिष्यते ।

तादृशां मुक्तिकृत्कृष्ण-कृपा या सातियुक्तिका ॥

द्विधाकृतं केशि-देहं वर्णयन्ति द्विधाकृतं ।

जरासन्धनिभं केचित् केचित्कर्कटिकानिभं ॥

तदेवमश्वद्वैतेये वपुषा लब्धद्वैते स्वरूपेण तु लब्धाद्वैते प्रमनसां[1] बिकीर्णसुमनसां सुमनसां कृष्णाभिप्रायमभिप्रयतामुक्तिर्यथा ॥

आस्यं व्यादाः सपदि निखिलं मद्वपूस्त्वं गरीतुं

तत्राहं तत्परिकलयितुं तद्गले बाहुमाधां ।

तेनैवासीर्यदि विगलितप्राणकस्तर्हि ताव-

द्वर्विन्नर्वन्नहह ! सहसा साहसं किं न्वकार्षीः ॥इति॥

अथ ब्रजः कलकलशब्दमब्दव-

त्सृजन्मुहुर्हरिमचलं मुदावृणोत् ।

सवृष्टिवत्प्रमदजमस्रमस्रब-

ज्जरप्रभं स च तदसूत भूतले ॥

---

(१) हृष्टानां ।

अथ सर्वे सतृष्णामध्यमध्यासितकृष्णाः प्रेम-तारतम्यरम्यतया यथास्वमन्तरन्तर्लब्धान्तरास्तद-न्तरव्यन्तरितत्वेऽपि तदनन्तरम्मन्यास्ते धन्यास्तद-परमप्यालिङ्गन्तस्तमेव मन्वाना विकार-वृन्दम-विन्दत ॥

ततश्च क्षणकतिपयात्प्रतिगतवहिर्मतितया सह-कृष्णाः कृष्णा-घट्टमटित्वा सस्नुः ॥

यत् खल्वद्यापि केशितीर्थतया तीर्थवर्य्याः पर्य्य-वयन्ति ॥

यस्य च भास्वत्पुत्र्याः प्रतिलोमगतिं प्रति किञ्चि-न्निकटत एव कुठकूटघटिततटघट्टान्तरमधिष्ठाय तत्परिश्रमशमनाय विशश्रमुः ॥

द्वितीयघट्टश्चायं चेनघट्ट इति वृद्धैश्चीरघट्ट इति चाधुनिकैरुद्घुष्यते ॥

चेनेति विश्रमसुखस्य हि माथुरभाषा ॥

अथ विश्रम्य च कंसभ्रंशनशंसनमिदं केशि-ध्वंसनमिति रम्यसुखं सम्यगवगम्य द्विगुणफुल्ल-मुल्लसन्तस्तं तन्यमानकीर्त्तिनर्त्तितमुखैर्वन्दिमुखै-र्वन्दिनमन्तर्विन्दमानं श्रीगोविन्दमावृण्वन्तः श्रीमन्तं व्रजदेवमनुव्रजन्तस्ते व्रजजनाः प्रथमं गोव्रजमयोजयन् ॥

हाहाजाते गोदुहां तत्र जाते
कार्ष्णी तत्तु प्रस्फुटं पर्य्यचायि ।
आसाराणां नर्हिते यद्वदुच्चै-
रम्भोदस्य स्निग्धगम्भीरशब्दः ॥

अथ शत्रुं जितवन्तस्ते व्रजयुवराजादिगोमन्तः प्रतिस्वं गोवृन्दमन्वितवन्तः परं व्रजराजादय एव व्रजमाव्राजितवन्तः ॥

कंसस्तु केशिध्वंसनमपि शृण्वन् व्यग्रमना विग्र[1] इव गृहान्न निःससार ॥

अथ समापनं ।—

सोऽयं तव व्रजाधीश ! सुतः सूतमनोरथः ।
केशिनं चात्र यश्चक्रे यमस्य प्रतिवेशिनं ॥

इति श्रीगोपालचम्पूमनु केशिध्वंसन-
शंशनं नाम द्वात्रिंशं
पूरणम् ॥

---

(१) विग्रो विगतनासिकः ।

# त्रयस्त्रिंशं पूरणम् ।

अथ निशीथिनीकथायां कुण्ठः समुत्कण्ठश्च मधुकण्ठः सगद्गदं जगाद ॥

तदेवं रामानुजस्य रमणीनामप्यमूषां दिनं दिनमप्यनुपरमणं रमणमतीव जीवनसमतामवाप ॥

यत्र समुत्कण्ठाप्यकुण्ठा जाता ॥

यतः ।—

यदपि परस्परमिलनं
हरिगोपीणां चिरान्न विच्छिन्नं ।
तदपि न तृष्णा शान्ता
स्वाप्निकपाने यथा पिपासूनां ॥

तत्र तु रमणं यथा ।—

अन्योन्यं रहसि प्रयाति मिलति
श्लिष्यत्यलं चुम्बति
क्रीडत्युल्लसति ब्रवीति निदिशत्युद्भूषयत्यन्वहं ।
गोपीकृष्णयुगं मुहुर्बहुविधं किन्तु स्वयं नोहते
शश्वत् किं नु करोमि किन्वकरवं
कुर्वीय किं वेत्यपि ॥

उत्कण्ठायान्तु तत्रैव पद्यं बहुविधमित्यनन्तरमेवं पठनीयं ॥

किन्त्वेतदेवोहते तच्चैतन्न हि जागरस्थमपि तु स्वप्नादिचित्तभ्रमः ॥

किं बहुना ? तदनुभवे च तासां भावनेयं ।—

उत्पत्तिरक्ष्णोरभितो न सत्फला
याभ्यां न तस्याद्भुतरूपमीक्षितं ।
हा ! कर्णयोरप्यलमर्थदा न सा
याभ्यां श्रुतं नैव हरेः सुभाषितं ॥
हा ! चक्षुरादीनि हरेः समागमे
यद्यागमिष्यन् श्रवणादिकर्म च ।
तदा व्रजिष्यन् विषयीणिनाप्यमू-
न्यसूयया धिग्व्यतिदूयमानतां ॥ इति ॥

कदाचिच्च ।—

साङ्गालिङ्गनलाङ्गिमेऽङ्गवलया सङ्गेऽपि शार्ङ्गी तदा
गोपीनां स्फुरति स्म दूरगतया प्रेमापगा पूरतः ।
यस्मादुत्कलिकाकलापवलनावृत्तिं वहिर्लुम्पती
स्वप्नाभां दिशती सतीमपि दृशि
स्फूर्त्तिं मुहुर्लुम्पति ॥

———

श्रीराधायास्तु सुतरामनिर्वचनीयमेव सर्वं तत्प्रथमतया मिथस्तन्मिथुनस्यापि ॥

तथाहि ।—

राधाजानादसङ्गे दनुजविजयिनः सङ्गमारादसङ्गं
सङ्गे चैवं समन्ताद्गृहसमयसुखस्वप्नशीतादिकानि ।
एतस्या वृत्तिरेषाजनि सपदि यदा-
न्यद्विचित्रं तदासीत्
कान्ताकान्तस्वभावोऽप्यहह ! यदनयो-
र्वैपरीत्याय जज्ञे ॥

तदेवमतिभूमितामिते भावभूमनि तेन च सर्वाभ्यर्णतामिव याते वृत्तजाते स्वस्ववधूनिरोधाय नियुक्तपुरुजनीजनेषु च गुरुषु तदुद्दङ्कनतः कृष्णास्तु तृष्णालज्जाभ्यां सज्जन्मनाः स्वमानसमन्वेवं भावयामास ॥

हन्त ! किमिदमन्तरा जातं । कौलीनं[१] खलु कौलीनं[२] जनं कौ[३]लीनमिव करोतीति मन्मनः कश्चन विचारमाचारञ्च न सञ्चरति । लोकश्च शोकं

(१) लोकापवादः । (२) कुलीनोत्पन्नं ।
(३) पृथिव्यां ।

प्रयास्यतीति निजवर्ग्यमनु दुःखं पाणिसर्ग्यं[१]
स्वयमेवाकरवं ततः किं करवाणि ॥

पुनः सप्रणिधानमिदं विविनक्ति स्म ॥

नेदमनाचारमिव प्रतिभाति । भाति हि मम चित्तमनेन । न तु म्लानिं याति । पुनरपि च परामम़र्श । ताः पुनर्मम पराङ्गना[२] एवानुभूयन्ते । न तु पराङ्गनाः[३] । तस्माद्भवेदत्र विशेषः सन्दर्भविशेषः । यमेव खल्वहमिव लोकोऽप्ययमनिर्णीय नूनं गर्गदुर्वर्णनयास्मदपयानं निर्णीय च शीर्णीभवन् शङ्कया सङ्कसुकतामुरीचक्रे[४] । येन चामूरपि नूनं स्वं धिक्कुर्वन्ति ॥

यथा ।—

व्रजे जाते[५] जाता व्रजजनसमा न प्रकृतिता
ततः कृष्णे प्रेमा तमनु सहसा तं प्रति गतिः ।
ततस्तत्रासङ्गस्तमनु विपरीतं किमपि त-
त्ततो व्यक्तं तच्च प्रथय सखि ! धिक् किं नु करवै ॥

इति ॥

(१) पाणिना मृज्यत इति ।
(२) श्रेष्ठाङ्गना । (३) परदाराः ।
(४) सङ्कसुकोऽस्थिरः । तादृशः कृतः ।
(५) जन्मनो हेतोः ।

अथ तं पराङ्मावराङ्मनाभिचारम्भं सन्ध्यं[1] पुनरस्मिन्निजनिजाभिलषितकल्लोललोलमत्प्रेम-कल्लोलिनीवल्लभे[2] मदङ्गसङ्गतमरुल्लवेनापि वेल्लति[3] वल्लवालयेन सम्यगनुसन्धातुं सन्धां[4] लभामहे ।

किञ्च यदि च वास्तवतया न विद्यते दोषस्तथापि तत्कथापि प्रथयति मम सङ्कोचमिति व्रजाद्व्यव-धातुमिवाबद्धाति मे चित्तवृत्तिः ॥

तदेतद्व्यवधानमेव चायतामायाति[5] शुद्धिं विधा-स्यति ॥

"ऋण-व्रण-कलङ्कानां काले लोपो भविष्यती"ति न्यायेन मम सम्यगनुसन्धानेन तेषां लोकानां पश्चात्तापमनु सदुपदेशग्रहणेन च ॥

अथ तदेतद्विभाव्य पुनः सोद्वेगं विभावयाम्बभूव ॥

हा ! गोष्ठं विपिनं पशून् व्रजजनं
दासान् सखीन् प्रेयसी-
स्तातं मातरमप्यहो ! कथममूं हास्यामि राधामपि ।
मां यान्यङ्ग विना क्षणं कथमपि
प्राप्स्यन्ति नात्मस्थितिं

(१) अभिप्रायं । (२) समुद्रे ।
(३) चलति क्षुभ्यति । (४) मर्यादां ।
(५) उत्तरकाले ।

यान्यन्तर्ज्वलनप्रभानि विदधत्

प्राप्स्यामि दाहप्रथां ॥

पुनर्विभाव्यात्मानमुद्दिश्याह ।—

अन्तःपुरीयसि[1] वनेषु सखीयसि[2] त्वं

वन्यान् मृगान्निजतनूयसि गोपरामाः ।

दृष्टश्चकोरनयनाभिरमूभिरिन्दु-

दर्शं[3] कथं वहसि कृष्ण ! परत्र तृष्णां ॥

पुनः प्रेयसीरनुसन्धाय ।—

यस्मिन्नारोपिता हारास्तासां हन्त ! मया हृदि ।

साम्राज्यं हा ! करिष्यन्ति तस्मिन्नप्यस्र-विन्दवः ॥

तत्र च श्रीराधामनुसन्धाय हन्त हन्तेति प्रोच्य पुनराह ।

हा ! चन्द्रद्रवयुतचन्दनेन सिक्ता

राधायास्तनुलतिका मया सहार्द्रं ।

सैषा मद्विरहजलोचनोदगाहा

म्लास्यन्ती प्रतपति सम्प्रतीह माञ्च ॥

या पूर्वमुपलब्धासीन्नवचन्द्रकलोपमा ।

वह्नेः शिखेव सा जाता राधा दन्दाग्धि हन्मम ॥

---

(१) अन्तःपुर्य्यामिवाचरसि ।

(२) सखीमिवाचरसि । (३) इन्दुरिवेत्यर्थः ।

राधाप्रेमप्राध्व[१]मत्रागतोऽहं
हा ! प्राध्वः[२]स्यामाशु सोऽहं कथं वा ।
तस्मात्प्राध्वं[३]कृत्यधीवृत्तयोऽस्मि-
न्नेव प्राध्वं[४]कुत्रचिन्नापरत्र ॥

इति क्षणं वाप्यायमाणोत्क्षणतया तूष्णीमासीत् ॥

पुनश्च तथा तथाभावनव्राते जाते हन्त हन्त कथमहमहो ! क्लीवमानः[५]पुनः शोकप्रपञ्चमञ्चामि यतः सम्प्रति भिदुरं[६]चित्तं[७]न त्विदुरतां विन्देतेति विचिन्तयति स्म ॥

तदेवं सावधानं सहसा रहस्तद्विमुञ्चन् सहचरं सहचारितामापन्नः किन्तु नातिप्रसन्नतया ॥

एतदनन्तरमुदन्तन्तु प्रातरेव प्रथयिष्यामीति सगद्गदं गदित्वा सहस्निग्धकण्ठः स मधुकण्ठः स्ववाससा वदनं वसानः सशब्दं रुदन्नलब्धतदवसानश्चिरमासीत् ।

---

(१) बन्धनं । (२) प्रगतोऽध्वानं ।
(३) आनुकूल्ये गतिसंज्ञेयं ।
(४) प्रकर्षेण उपविशत आसउपवेशने ।
(५) क्लीबृ अधार्ष्ट्ये ।
(६) स्वयम्भेदं । (७) प्राप्नुवत् ।

चिरत एव तु तस्माद्विरम्य श्रीराधामाधवादीनपि स्वसाधारणानधिगम्य तदिदमवादीत् ॥

सुखाकुर्वन्त[1] एवाध्वं तदिदं सुखमात्मनः ।
कथागतन्तु तद्दुःखं कथकानेव बाधतामिति ।

तदेवं तयोः सदनमासन्नयोः श्रीराधामाधवादयश्च पुनः स्वप्नलब्धमिव तद्दुःखं सुखपर्य्यवसानमुपलब्धं विधाय यथास्वमावासमासादयामासुः ।

अथ प्रातःकथायां स्निग्धकण्ठ उवाच ।—

तदेवं कंसगृह्या[2]नन्यानन्यायभाजो निगृह्यार्ववेशिकेशिवधात्पूर्वमहर्मुखे चालितचक्षुररविन्दः श्रीमान् गोविन्दश्चेतसि चिन्तितवान् ॥

प्रायः सर्व एव हिंसिताः कंसपक्षीयाः । केशी चाद्य श्वोवापतिष्यति । केवलं कुवलयापीडः करी वरीवर्ति । अन्ये चान्यायभाजः शूरम्मन्याश्चानूरतल्लजाः कतिचिन्मल्लाश्च ॥

स तु भोजवंशध्वसनः कंसः श्रीमद्व्रजराजतादात्म्यविराजमानमस्मत्पितरं श्रीमदानकदुन्दुभिं द्वन्द्वकारी दुन्वन्नेव वर्त्तते सम्प्रति तु लोहशृङ्खलया

---

(१) अनुकूलं कुर्वन्तः । (२) कंसपक्षाश्रितान् ।

स्त्यथमस्तीत्यपि श्रूयते। भयातिशयमयतया च कंसः स्वयमिह न समायिष्यते ॥

तत्र लब्धान्तरे तत्प्रधानतासव्यपेक्षतया न तत्र मम गन्तव्यमस्ति ॥

यतः पितृमुखावितृकः खल्वहं न तु स्वतन्त्रमन्त्रः किन्तु योग्यं व्याजान्तरं मृग्यते ।

भवतु यथाप्राप्तं तत्समाप्तव्यं। तदलमलं तच्चिन्तनमलेन ॥

तदेतद्विचार्य्य च हन्त ! हन्त ! तत्र प्रयाणे च जाते न जाने कियान् कार्य्यपर्य्यायावरोधः स्यादिति। कथं व्रजं विना समयं गमयिष्यामीति पुनः सास्रं चिन्तयाञ्चकार ॥

विना मां तातः प्राग्न पिबति जलं सा च जननी
विना मामुच्छ्वासान् विसृजति बताऽसूनिव[1] मुहुः ।
यथा तौ हा ! तद्वद्व्रजमनुगता विश्वजनता
तदास्तां तिर्य्यञ्चोऽप्यहह ! हृदि शल्यं विदधति ॥

तदिदं न चाग्रजमपि वेदयितुमुत्सहे ॥

---

(१) प्राणानिव ।

यतः ।—

दुःखायते[1] पुमान् कश्चित् कश्चिद्वा यः सुखायते ।
पूर्वस्मिन्न दयालुत्वं परस्मिंस्तु दयालुता ॥

तदेवं प्रातर्विचारमाचर्य्य तदैव दैवत आपतितं केशिनं च मृत्युं प्रापय्य गोचारणाय चरणाचर्य्यया वनं सञ्चरन्तं श्रीकान्तं क्वचिदेकान्तगतया हर्षितः श्रीमान् देवर्षिः सपदि साक्षादासेदिवान् । स चासन्नमागच्छन्तमच्छपरिच्छदं श्रीनारदं ददर्श ॥

दृष्ट्वा च गीर्देवतादेहमिवाक्षररूपतां[2] धरन्तं ।
गङ्गाप्रवाहमिव विष्णुपदा[3]दवतरन्तं ॥
कैलासमिव वैष्णवलक्ष्मशिवमूर्तिं[4] ।
निजयशःस्तोममिव विविधगानकृतकर्णपूर्तिं ॥
क्षीरनीरनिधिमिवान्तर्वासितनारायणादि-
नामानं[5] ।

(१) दुःखं वेदयते ।
(२) अनश्वररूपतां । पक्षे वर्णरूपतां ।
(३) आकाशात् । पक्षे विष्णुचरणात् ।
(४) वैष्णवचिह्नेन मङ्गलमूर्त्ति । पक्षे वैष्णवलक्ष्मा शिवस्य मूर्त्तिर्यत्र ।
(५) अन्तःकरणे वासितानि नारायणादिनामानि येन । पक्षे नारायणादिनामाशेषशायी ।

अमन्दकलासान्द्रचन्द्रमसमिवान्तरङ्गतया धृत-कृष्णधामानं ॥

शारदनीरदसमुदायमिव शर्मनेत्राप्यधारा वर्षन्तं[१]। भक्तिविशेषाशक्तिव्यक्तनिजभक्तप्रहासमिव कृत-हर्षन्तं । परामममर्श ॥ स च तमेवं ददर्श ।—

सदाचरण[२]सुष्टुतायां साधुपद्मवत्[३] । सदा-शेषसुखदपदपृष्टतायां[४]कृततद्विध[५] तनुश्रीकमठ-वत् ॥

जङ्घालसत्कटकशोभितायां[६] विजयध्वजवत् । सहजानूरुनामशस्ततायां[७] गारुत्मतस्तम्भवत् ॥

---

(१) शर्मणा या नेत्रयोराप्यधारास्ताः । पक्षे शर्मणां नेत्र्यः प्रापिका या आप्यधारास्ता वर्षन्तं ।

(२) पक्षे सदाचार ।     (३) पक्षे साधूनां पद्मसङ्ख्यावत्

(४) पक्षे शेषस्य सुखदस्थानरूपं पृष्ठं तत्तायां ।

(५) तद्विधत्वं पदसदृशत्वं । पक्षे महत्त्वं ।

(६) जङ्घयोर्लसन्तो ये कटकावलयास्तैः शोभितायां । पक्षे जङ्घालानि वेगवत्तराणि यानि सत्कटकानि तैः ।

(७) जानुभ्यां सह यावूरू तयोर्नाम या ख्यातिः तया शस्ततायां ।

पक्षे सहजोऽनूरुररुणो यस्य तस्य गरुत्मतो नाम्ना शस्ततायां ।

काकुद्मतविततताायां[1] निजव्रजतटवत् ।
शुभशोभावलग्न[2]प्रह्लादकतायां नरसिंहवत् ॥

भुवनकमलरमणीयनाभितायां[3] सरोवरवत् ।
नारायणवद्वा[4] । वरगुणरसनापीताम्बरतायां[5] नव्यरव्यंशुवत् ॥

सन्ततमुदरश्वसनचलतायां[6] पिप्पलदलवत् ।
हृदयकुम्भस्वर्णरेखाश्रीकतायां नीलमणिनिकष-पट्टवत् ॥

सद्गुणरत्नालयहृदयतायां रत्नाकरवत् ।
मर्यादापर्यापनभुजतायां जिष्णुरत्नार्गलवत् ॥

---

(१) ककुद्मत्या नितम्बस्य या विततता तस्यां । पक्षे ककुद्मतां वृषभाणां या विततता ।

(२) मध्यः । पक्षे अवसम्मनात् लग्नः ।

(३) भुवनमेव कमलं तस्य रमणीयो नाभिर्यस्य तद्रूपतायां । पक्षे भुवनं जलं कमलं पद्मं तयोरमणीयो नाभिः क्षेत्रं तद्रूपतायां । नाभिः प्राणयङ्कके क्षेत्रे चक्रान्तश्चक्रवर्तिनोः नाभिः प्रधाने कस्तूरीमदे च क्वचिदिष्यत इति विश्व-प्रकाशात् ।

(४) अत्र पक्षे भुवनात्मकं यत् कमलं ।

(५) वरो गुणो डोरिका यत्र तादृशी रसना यत्र तादृशं आ सम्यक् पीतमम्बरं यस्य तत्तायां । वरो गुणः पीताख्यो यः स एव रसना जिह्वा तेन आपीतमात्मसात्कृतमम्बर-माकाशो येन तत्तायां ।

(६) उदरे यः श्वसनः श्वासवायुस्तेन चलतायां । पक्षे उ वितर्के इव ईषत् श्वसनेन वायुना या चलता तस्यां ।

अङ्गदादिलब्धप्रवेष्टतायां कौशल्या गर्भमङ्गलवत् ।
रोचमानमुद्राकरतायां[१] कल्पवल्लीपल्लववत् ॥

समुत्कण्ठस्वररूपतायां[२] पाञ्चजन्यवत् ।
द्विजताराधिराजदास्यतायां[३] द्विजराजवत् ॥

नासया शुकमुखशक्तिजेतृशोभितायां स्वयमेव यद्वत् । निजसत्यव्रतभक्तरोचनविलोचनतायां नवीनदिव्यमीनवत् ॥

चन्द्रकशोभकेशनिर्माणतायां[४] सनीरदागमसमय-नीरदवत् । मकराङ्कालङ्कृतश्रवणतायां[५] मकर-ध्वजवत् ॥

सर्वदा सर्वत्रामृतवर्षिशिति[६]मूर्त्तिकृतपूर्त्तितायां

---

(१) रोचमाना या मुत् तां राति या आकरता तस्यां ।

(२) मुदा सहवर्त्तत इति समुदि कण्ठस्वररूपे यत्र तादृशतायां । पक्षे सम्यगुत्कण्ठा यस्मात् तादृशे स्वररूपे यत्र तादृशतायां ।

(३) आस्यं मुखं । पक्षे आस्या स्थितिः द्विजा दन्ताः । पक्षे ब्राह्मणाः तारा नेत्रयोः पक्षे आकाशस्य ।

(४) चन्द्रकशोभं केशनिर्माणं यत्र तत्तायां । पक्षे चन्द्रकशोभ-कर्म्मशनिर्माणं यत्र तत्तायां ।

(५) श्रवणं कर्णः । पक्षे श्रवणक्रिया ।

(६) शितिनी धवलमेचकौ

पुनरमृतरश्मिवत् । रोहिणीयशोदानन्दनन्दनतायां[1] रौहिणेयवत् ॥

नरसिंहता[2]संहितसंहनन[3]तायां पुनर्नरसिंहवत् । मुहुरपूर्वमानरूपतायां पुनर्मीनमहीनवत् ॥

पटिष्ठताविघटितवलिगर्विष्ठभावतायां वामनदेववत् । उत्पथवृषलाञ्छितवृष[4]निन्दकतायां जिननन्दनवत् ॥

पयोराशिनिमज्जद्धुर्धरगोत्रसमुद्धरणधूर्य्यतायां पुनः श्रीकमठवत् । धरणीधरहारिविहारितायां वाराहावतारवत् ॥

कृतवीर्य्यजातदुर्जनक्षत्रक्षपणतायां भार्गवरामवत् । भाविकालयवनसंयमनतायां विष्णुयशस्तनयवत् । लक्ष्मण[5]चरितरचितप्रचुरसुखतायां पुनः श्रीरामचन्द्रवदिति ॥

---

(१) कृष्णपक्षे रोहिणीनां गवां नन्दनतायामानन्दकतायां यशोदानन्दयोस्तु पुत्रतायां । रामपक्षे रोहिण्या यशोदो य आनन्दस्तद्रूपपुत्रतायां ।

(२) श्रेष्ठता ।  (३) देह ।

(४) कृष्णपक्षे वृष इन्द्रः । तेन लाञ्छितश्चिह्नितो यो वृषो धर्म्मः । बुद्धपक्षे वृषलानां शूद्रानां य आञ्छित आयतो धर्म्मः । आञ्छि आयामे ।

(५) प्रथमपक्षे लक्ष्मीवान् लक्ष्मणः ।

तदेवमैकरूप्यश्लेषेण[१] शब्दश्लेषेण च मिथ-श्चिन्तितसदुपमानयोरनयोः श्रीदेवर्षिरमुं श्रीहर्षि-श्री[२]निधानं वेदपारायणातः स्तूयमानं विधाय वीकाशं[३] निवेदयामास ॥

श[४]मितः शमितो येन दानवोऽसौ सदा नवः ।
सपरो[५]ऽपरतां[६]यातः सोदयोनुदयो[७] भवान् ॥
अविलम्बेन ये डिम्बे[८]हसताऽहसत[९]त्वया ।
ते सर्वे पूतनापूर्वाःपूनाः[१०] पूताश्च सर्वतः ॥
गुणैरगुणतां[११] यातस्त्वमसौ नन्दनन्दन ! ।
बिभर्षि वसुधां चित्रं स्थित्वापि वसुधोपरि ॥
शशधरमूर्त्तिः शुक्ला,गङ्गाविशदा सरस्वतीश्येनी[१२]
कीर्त्तिस्तव तु बकान्तक !, शुभ्रा सर्वं करोति
शुभ्राभम् ।
त्वत्कीर्त्या श्वेतितः कंसोऽप्येतत्कृष्ण ! मृषोदितं
तत्स्पर्शस्तस्य नास्त्येव किन्तु तद्भीतिवैकृतं ॥

---

(१) योगेन । (२) शोभा ।
(३) प्रकटं यथा स्यात् । रहः प्रकाशौ वीकाशौ ।
(४) शं कल्याणं । (५) श्रेष्ठः । (६) शत्रुराहित्यं ।
(७) अनुगता दया यत्र । (८) अशस्त्रकलहे ।
(९) हताः । (१०) नष्टाः ।
(११) अगौणतां । (१२) श्वेतवर्णा ।

तदेवं स्थिते तु किञ्चिन्मम निवेदनमस्ति ॥

तथाहि ।—

प्रेमा वशयति सर्वं, खल्विति न मृषा प्रसिद्धिरुद्धाति ।
कृष्ण! त्वमपि स यस्मा,न्न भजसि पूर्वापरानुसन्धानं ॥
तस्माद्विमनसमधियं,[(१)] स्त्वामहमागच्छमाच्छन्नं ।
तां स्मारयितुमवश्यं, या सम्भविता भवल्लीला ॥
लोकेऽस्मिंस्तव भक्ता,वहवः क्रमशश्च ते पाल्याः ।
तस्मादवश्यमुदियुः, पौर्वापर्य्येन ता लीलाः ॥

केशिनं दितिजमश्ववेशिनं
यो जघान स भवानथाभवान्[(२)] ।
तान् विधातुमपरान् सतां परा-[(३)]
नुच्चकैः प्रभविताखिलाविता ॥

तथाहि ।—

केलिमात्रेण ते दैत्या यद्विदेलिमतां[(४)] गताः ।
पचेलिम[(५)] स्तेन तापात् कंसः प्रध्वंसमेष्यति ॥
क्रूरः स नेतुं सद्यस्त्वामक्रूरन्तु प्रहास्यति ।
त्वञ्च मात्रादिकं हित्वा यात्रां तं हन्तुमाप्स्यसि ॥

अथ स वैवर्ण्यं निर्वर्ण्य तथावस्थितवति तस्मिन्

---

(१) जानन् ।　　(२) मुक्तान् ।
(३) शत्रून् ।　　(४) स्वयं भिद्यमानतां ।
(५) स्वयंपच्यमानः ।

भावान्तरमृषिरुद्भावयन्नुवाच । ततश्च सुजनरोष्टारं[१] कंसं क्रोष्टारमिव रोषितासि[२] ॥

यतः ।—

कूपमण्डूकवत्कंसः कण्डूतिं खण्डयन्निजां ।
त्वत्कर्कशभुजाभोगि सङ्घर्षं लब्धुमिच्छति ॥

यं खलु मातरि पुरुषं[३] पुरुषोत्तमस्त्वामिह जीवग्राहं[४] ग्रहीष्यसि समूलघातं[५] हनिष्यस्यकृतकारं करिष्यसि[६] । करग्राहं[७] गृह्णंश्च विश्रान्तिपर्य्यन्तमश्रान्तिविक्रमतया विकर्क्ष्यसि[८] ॥

हर्षवद्भिः पाणिकर्षं[९] निष्कर्षस्तमनेकपं[१०] ।
द्रक्ष्यसे पुण्डरीकाक्ष ! त्वं व्यक्तं हरितां गतः ॥

तत्र संक्षेपार्थनिक्षेपश्चायं ।

अक्रूरं द्वारमात्रं विदधदथ भवान्
वृष्णिधिष्ण्यानि गत्वा
भंक्त्वा त्रैयक्षचापं सपदि कुवलया-
पीडकं पीडयित्वा ।

(१) हन्तारं । (२) हन्तासि ।
(३) सदाचारभेत्तारं । (४) जीवन्तमेव ।
(५) मूलसहितमेव ।
(६) केनाप्यकृतो यथातथाविधं करिष्यसि ।
(७) करेण । (८ विकृष्टं करिष्यसि ।
(९) पाणिना कृष्ट्वा । (१०) गजं ।

मल्लान् हत्वा परश्वो[१] दनुजजनितनुं
　　　　कंसकं ध्वंसयित्वा
राज्यं दत्वोग्रसेनं प्रति निजजनकौ
　　　　मोचयिष्यत्यवश्यं ॥

अत्र पौराः पौराणिकीमिव गाथां गातारः ।—

उन्मीलन्नीलशुभ्रारुणकमलजिती खञ्जनध्वंसिलीला
चाञ्चल्ये सिंहसंघप्रमथनमदताढ्यञ्जिनी यस्य नेत्रे ।
चेष्टा दुर्दुष्टवृन्दप्रशमपटुकलाकल्पिनी मज्जयन्ती
पीयूषे सज्जनालीर्नववयसि वरा
　　　　श्यामलः कोऽयमेति ॥

कृष्णः स्वगतमुवाच ।—

उग्रसेनाय राज्यं दास्यामीति युक्तमेव खलूक्तं ।
यतो मम व्रजागमनमेव रमणीयं ॥

प्रकाशश्चाह स्म ।—ततस्ततः ?

ऋषिरुवाच ।—

ग्राम्याः पौरा नृपालाः सदसि नभसि तु
　　　　स्वर्गसङ्गीतविज्ञा
देवा देवाधिनाथा विधि-शिव-विधिजा-
　　　　स्ते वयञ्च स्तुवानाः ।

---

(१) तृतीयेऽहनि ।

रक्तत्यग्दन्तिदन्तच्छविरविकरभागंसकौ लूनमल्लौ
द्रक्ष्यामो भ्रातरौ वां कवलितवलव-
त्कंसकं त्वामपीह ॥

तत्र मल्लसभागतानामिदं कोलाहलकुतूहलं भविता ॥

किमिदं श्यामलं रूपं मधुरं रौद्रमेव वा ।
स्त्री चास्त्री च न यद्विद्यादस्त्रमस्त्रं यथायथं ॥

पापकंसे चापवर्गमिते ॥

वधार्हस्यापि कंसस्य स्त्रीणां दृग्वारि-विन्दवः ।
धरण्यां निपतिष्यन्ति द्रावयिष्यन्ति हृत्तव ॥

कृष्ण उवाच ।—

हन्त! तौ मम निजजनकाविति भवता कावुक्तौ ॥

ऋषिः सहासमुवाच ।—

"प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ।
वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते ॥

इति गर्गोक्तप्रकारौ । कृष्णः साश्चर्य्यस्मित-मुवाच ।—

ततस्ततः ? । ऋषिरुवाच ।—

वसुदेवादयस्तु नष्टं चिन्तामणिमिव स्पष्टं विन्दमानास्त्वां हातुं न हि सहिष्यन्ते ।

तव च तदनुरोधाय यदूनामितस्ततः पलायन-समवायदूनानामवरोधाय[१] च निश्चितचित्तस्य कतिचिद्वासरा़णि न सावसरा़णि भविष्यन्ति ।

त्वदनुषङ्गतस्तत्र सङ्गता तदपेक्षितीकृत्य व्रज-क्षितिपतिप्रभृतिव्रजजनतापि शाकटवाटपट-निवासमासत्स्यति ॥

तथापि चिरतः कंसप्रथितव्यथतया प्राप्तवितथ-ताया यदुराजराजधान्याः स्फुरदुग्रसेनेनाप्युग्रसे-नेन दुःसमाधानं समाधानं ॥

स्वयं वहुप्रणिधानत एव स्यादिति क्षणमपि[२] क्षण[३]मलभमानश्चिरायमाणो निजव्रजप्रयाणो विचार्य्य रामेण सममैकचर्य्यचर्य्यया स्वजनव्रजे विराजमानं व्रजेशमुपव्रज्य स्वस्य व्रजागमनमवश्य-कार्य्यतया निर्धार्य्य व्रजमेव व्राजयिष्यसि ॥

कृष्ण उवाच ।—

हन्त ! ते किं त्यजन्त एव मामाव्रजिष्यन्ति ॥

---

(१) प्राप्तये ।
(२) निर्व्यापारः स्थितौ कालविशेषोत्सवयोः क्षणः ।
(३) अवसरं ।

ऋषिरुवाच ।—

नन्दादयस्तव परं महताग्रहेण
प्राप्स्यन्ति गोष्ठमथ तद्वपुषात्मना न ।
इत्थं भवेद्वपुरिति स्फुटमस्य[1] तस्मिन्[2]
सङ्कोचिता समुचिता न तु तद्वदात्मा ।

कृष्ण उवाच ।—

हन्त ! किमहं वक्ष्यामि ? ॥

ऋषिरुवाच ।—

तत्र भवता तदिदं सङ्गीर्णं[3]गीर्णमाचरिष्यते ॥ "यात यूयं व्रजं तात ! वयञ्च स्नेहदुःखितान् । ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखं" ॥इति॥ तदिदमेव भवदाश्वासनं तेषां विश्वासस्य शश्वायमानता[4]माचरिष्यति ॥

कृष्ण उवाच ।—

कदाहमागमिष्यामि ? ॥

ऋषिरुवाच ।—

यदा सुहृदां हृदयङ्गमं सुखमुत्पत्स्यते ॥

---

(१) वपुषः । (२) महाग्रहे ।
(३) सङ्गीर्णं प्रतिज्ञां । गीर्णमुक्तं ।
(४) अशश्वत् शश्वद्भवति शश्वायते यः तद्रूपतां ।

कृष्णा उवाच ।—

तच्च कदा ? ॥ ऋषिरुवाच ।—

तेषां सुखमुत्पत्तये तु दूरं व्याप्तुमुन्मुखं भविता ॥

कृष्णा उवाच ।—

अहो ! वत ! वियतीव कियती व्याप्तिस्तत्र ॥

ऋषिरुवाच ।—

तत्तत्कार्य्यजालतः कालक्षेपं क्षपयत्यपि[१] भवति यावत्कंसपक्षलक्षविध्वंसनं यावद्भवत्पुत्रादिविचित्रसम्पद्गणाश्च सम्पत्स्यते ॥

कृष्णा उवाच ।—

अहो ! महात्मन् ! महद्व्यसनं[२] खलु मयि न्यसनमायास्यति । यतो दीर्घसूत्रता[३] मम वन्धनाय निर्वन्धमापत्स्यते ॥

ऋषिरुवाच ।—

मा तापमापद्यस्व, भवतः स्वभाव एवायं । यत्कदाचिदन्तरङ्गाणां परिवारसङ्घानां सुखभङ्गं स्वाङ्गानामिव विषह्य वहिरङ्गाणां दुःखभङ्गं करोषि ॥

---

(१) क्षिप्रं कुर्वत्यपि ।    (२) व्यसनं विपदि भ्रंशे ।
(३) दीर्घसूत्रश्चिरक्रि :।

कृष्ण उवाच ।—

भवतु; भाविकथा प्रथ्यतां । तत्र मदीयदुर्वृत्तता-मयं व्रजदुःखवृत्तं तावदास्तां, पुरवृत्तं पुरस्तादनु-वर्त्यतां; येनाहमुपरक्त[1]स्तत्र निष्प्रतिभतां व्यक्त-माप्स्यामि ॥

ऋषिरुवाच ।—

साम्प्रतं तव गायत्रव्रतमेव समग्रेण वसुदेवादि-यदुवर्गेण प्रथयिष्यते ॥

यत्र च व्रजतः कर्णीरथा[2] रोहिणी रोहिणी च तत्र नेष्यते ॥

न तु व्रजजनः कश्चित् । छात्रविधानपात्रतया तन्निर्माणे तस्य निर्मान[3]दुःखं दुःखननमूलं भवितेति ॥

कृष्णः स्वमतमिदमधिगतवान् ॥

हन्त ! प्रसङ्गतस्तद्दुःखमेवासङ्गं लभते; मन्मातृ-सङ्गिनी हि सा रोहिणी कथं तद्भाङ्गिनी भविष्य-तीति ।

ततः कथान्तरं पृच्छाम इति स्पष्टं पप्रच्छ ।

ततस्तद्व्रताचारानन्तरं किन्तरामाचरिष्यामि ॥

---

(१) व्यसनासोपरक्तौ द्वौ ।
(२) सूक्ष्मरथ ।　　(३) अपरिमित ।

ऋषिरुवाच ।—

ततः सान्दीपनि सन्दीपितविद्यासभामवन्तीमवन्ती[1]मासाद्यानवद्यविद्यासमुदायाय भ्रातरौ युवामकातरौ सब्रह्मचारितया[2]गौरवसङ्कुलतया गौरवं कुलमेष्यथः ॥

यत्र सकृन्निगदमात्रेण सर्वां विद्यामधीयन्तौ धारयन्तौ[3]च सर्वतश्चमत्कारमर्पयिष्यथः । यत्रेदं सखेदमुपश्लोकयन्महाँल्लोकसङ्घः परस्परं सविस्मयमालोकयिष्यति ॥

यथा ।—

अङ्गं पल्लवकोमलं प्रभवनं[4]लक्ष्मीपराङ्गाश्रितं
सेव्यत्वं समसेवकायुतमनोराज्याभमुद्भ्राजते ।
यस्य श्रीरमणस्य सोऽपि नितरां वागीश्वरी-लोभनो
ऽप्याचार्याण्युपदिष्टकाष्ठघटनं
शर्माश्रिया निर्ममे[5] ॥

तदेवं चतुःषष्टिमात्रैरहोरात्रैः सर्वास्वपि कलास्वधीतिना भवता गुरुपत्नीभिक्षितपञ्चजनभक्षिततनू-

---

(१) नगरी ।
(२) वेदाध्ययनार्थं समानब्रह्मचारितया ।
(३) इङ्धारिभ्यामकृच्छ्रकर्तरि शतृप्रत्ययः । (४) प्रभुत्वं ।
(५) माङ्माने ।

पुत्रानयनमयदक्षिणानिवेदने चेदं लोका व्यतिवेदयिष्यन्ते ॥

यथा ।—

वस्त्वस्ति यत्तद्गुरवे प्रदीयता-
मदुर्लभं चेदथवा सुदुर्लभं ।
नष्टं वपुर्यद्गुरुजस्य तद्वपु-
ष्मन्तं यमात् पश्यतमानिनाय सः ॥

ततश्च ।—

यमादपि समानेता गुर्वपत्यं त्वया यदा ।
विवदेरन्मुखे तर्हि म्रियेरन्नरयो हृदि ॥

कृष्णः स्वगतं ।—

न जाने, जनेन तद्वर्ण्यमानमाकर्ण्य निरवलम्वतां सम्वलमानानां मय्यनुकम्पासम्पातवतामम्वादीनां का दशा भविता। या सम्प्रति च मम हृत्कम्पाय सम्पद्यते ॥

भवतु; प्रस्तावान्तरं विस्तारयाम इति स्पष्टमाचष्ट ॥

भगवन् ! कोऽसौ पञ्चजनः ? ऋषिरुवाच ।—

जयविजयवत्कस्माच्चित्कारणाच्छङ्खासुरतां प्राप्तोऽसौ प्रसिद्धः शङ्खविशेष एव ॥

त्वञ्च तदङ्गमादास्यते । किन्तु ।—

यदा यदा ध्मापयिता भवान् दरं
नेत्रे तदार्द्रे इव ते भविष्यतः ।
लब्धं यशोदा-स्तनपानजं सुखं
कृपा-भरेण स्मरणप्रथावतः ॥

कृष्णः सोद्वेगमुवाच ।—

एतद्वस्तूद्देशं विना कथान्तरं प्रस्तूयतां ॥

ऋषिरुवाच ।—

किञ्चिदन्यदल्पं श्रूयतां । वृत्तविद्यस्त्वं मथुराया-मागतमात्रः श्रीमद्व्रजाय कृतयात्रस्तत्रत्यपित्रा-दिभिः कृतसङ्कोचनस्तदाज्ञालङ्घनं नायत्यां मङ्गल-मिति रचितविचारतया चरितशोचनः स्वानुकूल्य-कैवल्यलसदुद्धवमतिविनीतमुद्धवमेवाभिनीतं मत्वा व्रजजनानामनाविजमानता(१)जननाय नियोज-यिष्यसि ॥

तेषां सङ्कोचत एव न च व्रजजनमात्मोपह्वर-माह्वयिष्यसि ॥

ते ह्येवं रहस्यं मंस्यन्ते कृष्णस्य व्रजमात्रतृष्णस्य

---

(१) अनुद्वेगता ।

व्रजदेशे प्रवेशे पुनर्लम्भनं विप्रलम्भतः स्तम्भन-मेव लप्स्यते ॥

व्रजजनस्यात्र प्रवेशश्च तथावेश एवेति ॥

अथ व्रजजनः स च स्वयमपि नायास्यति ॥

"ज्ञातीन् वो द्रष्टुमेष्याम" इति रहस्यत्वद्वचनस्य भवद्भिस्तु नागम्यतामिति स्वारस्यभङ्गप्रसङ्गः स्यादिति ॥

तथा स्वारस्यमपि तादृशतन्मन्त्रणायन्त्रणया न तु स्वतन्त्रतया ॥

किञ्च तव चेतसि यः कोऽप्यन्यः सङ्कोचः सम्प्रति सम्प्रतीतिं विना रोचमानतां प्रतिपन्नवानस्ति, सोऽपि व्रजभूमावाव्रजनादिवर्जने साहायकं मुहु-र्निर्वाहयिता । व्रजजनं प्रति तदिदन्तु वेदवदपर-तन्त्रं मन्त्रं निवेदष्यसि ॥

सम्प्रति च भवतां सम्बन्धे जरासन्धादिभिः कृतानुसन्धे तत्रापि निर्बन्धात् कटकेन धाटी(१) घटयिष्यत इति ॥

तथास्मिन्नुद्धव-द्वारा पित्रादिषु वाचिकपत्रिका यथा ।—

(१) छद्माक्रमणं धाटी ।

सम्बन्धाद्वः समन्तादहमपि स तथा
यामितं वृष्णि-वृन्दे
युष्माकं प्राणयोग्यप्रणयभुवि तथै-
वावनं सम्विधित्से ।
किन्त्वेषा मूर्त्तिरत्र स्वयमपि तु भव-
त्पार्श्ववर्त्ती ममात्मा
किं वा मूर्त्तिश्च तस्मिन् भवति हि भवतां
स्फूर्त्तिरेव प्रमाणं ॥

किञ्च ।—

आयास्यामीति किं जल्पेद्बद्धः प्रणयरज्जुभिः ।
येन वद्धस्तु तस्येच्छामनिच्छाश्चानुयाति सः ॥

श्रीवसुदेवादीनां देवद्विडुपद्रवस्य विद्रवः खलु भवदभिमत एवेति तु मया मतमेव ॥

अथ पुरस्तादुद्धव-दर्शनमात्रेण च ते परमसुखं प्राप्स्यन्ति ॥

यतः ।—

अपरिचयेऽप्यवलोका,द्रक्तं भक्तः पिपर्त्ति कृष्णस्य ।
स्वरमात्रात्तद्गाना, रम्भः सुजनं प्रमोदयति ॥

———

ततश्च ।—

तव विश्लेषान्नवनवार्त्तास्ते त्वद्वार्त्ता(१)मेव वार्त्ता-मनुवर्त्तमाना वार्त्तायमानाः(२) शीघ्रमिव विषन्ति कियन्ति मासा वासराणीव तं कतिचिन्मासान् वासयित्वा पर्य्यवसाने तद्द्वारा स्वं भावमेवापेक्ष्य मुद्रितमुखेन स्वस्तिमुखेन सन्देक्ष्यन्ति ॥

यथा ।—

ईश्वरस्त्वमिति सोऽयमस्मका-
नुद्धवः समुपदिश्य गच्छति ।
पुत्र ! तत्तु न वयं स्म मन्महे
नास्मदेष भवतस्तु मर्मवित् ॥

अथवा ।—

हन्त ! तत्र न वयं स्म मन्महे
श्रीश ! ता किमु सुतेन रोचते ॥

किञ्च ।—

यद्यहो ! सुत ! भवानधीश्वर-
स्तर्ह्यपि स्फुरतु ते पदाब्जयोः ।
प्रीतिरत्र च परत्र नः सदा-
कृष्णतामनु यतः सतृष्णता ॥

---

(१) जीविकां । (२) निरामयायमानाः ।

कृष्ण उवाच ।—

उद्धवस्तु किं मां वक्ष्यते ॥

ऋषिरुवाच ।—

विना चन्द्रं शरल्लक्ष्मीर्विना पुष्पं मधून्नतिः ।
विना पयोदं वर्षा-श्रीर्विना त्वां का व्रजस्थितिः ॥

इति ॥

कृष्णः सास्रमुवाच ।—

यादवके[१] मम विलम्बसम्वलनकारणं विशेषेण च वर्णय ॥

ऋषिरुवाच ।—

तत्र भक्तं भजमानस्य कवचं बिभ्राणस्य शत्रून्निघ्नानस्य तव व्यासङ्गान्तरमपि लब्धान्तरतामाप्स्यति ॥

कृष्णः सोद्वेगमुवाच ।—

हन्त ! किन्तत् ? ॥ ऋषिरुवाच ।—

यत्खलु वसुदेव-स्वस्रीयाणां युधिष्ठिरादीनां धृतराष्ट्रेण दुष्टुभ्रष्टराष्ट्रीकृतानां पक्षस्य पुष्टीकरणाय भविता ।

---

(१) यादवसमूहे ।

ते च त्वामेव परमातिष्ठमाना भक्तवश्यतां वावश्यमानस्य तव कैतवरहितभक्तिभाज इति ॥

यदर्थं प्रथमतस्तावदभिजातमभिजातं[1]चाक्रूरं दूततया दूरमापयिष्यसि ॥

प्राकृतव्यामङ्गः पुनरङ्गिभूतः प्रभूत एव । यतः कंसपक्षनिर्हरणां तदापि त्वया कृताकृतमेव वत्स्यति ॥

तथा हि ।—

वराकेषु कंसपक्षीयेषु चान्येषु तीर्थकाकतां गतेषु यत्खल्वास्तिः प्राप्तिश्चेति तस्य तत्र कलत्रद्वयमस्ति ॥

तत्पुनर्वैधव्येनान्धीभूतमिव स्वबन्धुजनदत्तानुसन्धीभवत् पितृतया धृताश्वासनिर्बन्धं जरासन्धं गमिष्यति ॥

यत्र च ।—

विस्रस्तकेशवेशाढ्योस्तयोः कंसस्य भार्य्ययोः ।
द्रक्ष्यन्ति विहसिष्यन्ति चाङ्गानि पथिका अपि ॥

ततस्तत्प्रेरणया जरासन्धः प्राप्तजरासन्ध इव

---

(१) अभिजातस्तु कुलजे बुधे ।

कालरूपतावन्तं भवन्तमेव त्रयोविंशतिसंख्याभिरक्षौहिणीभिरभियास्यति ॥

तादृशतां भृशमविद्वान् कीटक इव कूपीटयोर्नि ।
अभियाय चाभिया मथुरां मन्थन्निवावरिष्यति ॥

ततश्च ।—

इन्द्रर्केद्योतकेलिं कुतुककलनया
　　निर्मिमाणावधृष्णौ
जारासन्धं तदन्धं तम इव कटकं
　　त्रोटयन्तौ भवन्तौ ।
एकं तं मागधेशं तम इव(१)घृणया
　　वाढमुत्सृज्य पर्व
प्राप्तं सर्वं स्वभक्तं स्वमहसि दधतौ
　　भास्यतः शश्वदेव ॥

एवं सप्तदशस्वप्यभिसम्पाते(२)ष्वपयातेषु कूटीकृत म्लेच्छकोटित्रयप्रकटकटकः समहाजवनः कालयवनः प्रातरेवातिदूरतः सामुद्रपूर इवालोकिष्यते ।
येन नीवृदेव निवृता(३) भविता ॥

---

(१) राहुमिव ।
(२) युद्धेषु ।　　(३) व्याप्तः ।

कृष्ण उवाच ।—

भूरिदूरतया शात्रवपात्रतारहितः स कस्माद-स्माकमहिततामाप्स्यति ॥

ऋषिरुवाच ।—

यदुवर्गवाधितगार्ग्याराधितभर्गवरस्फुरदुपसर्ग-निसर्गत एव यादवदवं प्रति भयदवविसर्गनिरर्गले तस्मिन् जरासन्धानुसन्धानादेव । स चात्रावश्य-मरणावश्यतामाप्स्यतीति मत्प्रेरणाच्च ॥

कृष्ण उवाच ।—

कथं तर्हि तस्य गर्हितस्य मरणं भविता ? ॥

ऋषिरुवाच ।—

गर्हितत्वमेव तत्त्वतः खल्वर्हितं कारणं ।
प्रकारश्चामुं सहास्यमुद्भास्यन्ति ॥

शीतं महस्तदनुसृत्य मुकुन्दमूर्ते-
र्म्लेच्छाधिराडधितमः कटुकीटतुल्यः ।
एष ज्वलज्ज्वलनवन्मुचुकुन्दतेजः-
सङ्गादलं वलितविस्मिति भस्मति स्म ॥

अथ कृष्णः स्वगतमधिगतवान् ।—

न जाने योजनशतकमर्दति तस्मिन् दुर्दमदुर्जन-

सम्मर्दे मत्प्रमदसत्रव्रजतुल्यव्रजः परिक्षिप्ततया विक्षिप्तचित्तः कुत्र वा व्रजिष्यति ॥

ऋषिस्तु तदभिप्रयन् प्रथयति स्म ।—

काम्यकतः पश्चिमायां दिशि गिरितटगतगरिष्ठाटवीमटिष्यति ॥

किन्तु भवता यादवानामिव व्रजभवनानामरितस्तनिष्यमाणसन्तापसन्तानाभावाय तदिदं चिन्तयिष्यते ॥

सम्प्रति शरणागततया कृतमदनुस्मरणानां यादवानामवनाय युक्ततया नियुक्त इवास्मि ॥

ततस्तत्र गरिष्ठं प्रकोष्ठान्तरं विधेयं । हन्त ! यदि गोवर्द्धनधरणातः—

"तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहं ।
गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहितः" ॥

इत्यनुसृत्य कृतरक्षाणां मत्प्राणावलिलक्षाणामिव व्रजाध्यक्षाणां यद्यरयस्ते च रयाद्विघ्ननिघ्नतां करिष्यन्ति तदा सर्वमेव खर्वं स्यात् ॥

तेषामटवीषु गोकोटिलक्षरक्षकाणां रक्षा च प्रकोष्ठघटनया दुर्घटा ॥

---

तथा ।—

"रहीभूत[१]मरुभूतं[२] चक्षुभूतं[३] मनीकृतं[४] ॥
यस्य यत् तत्कथं तेन त्यज्यतां व्यज्यतामपि"

इति न्यायेन तत्र सम्प्रतिगमनमपि तत्रकीयसङ्कोच-विशेषत एव विशेषतः प्रसह्य मह्यं न रोचते ॥

सङ्कोचान्तरन्तु तस्य नान्तरीयक[५]मेव मन्ये ॥

ततः सम्प्रति साक्षान्मम तत्र स्थितिमपि न लक्षयामि तस्मात्तेषु वहिः शश्वदुदासीनताविन्यसनमेव मयि तदुपासीनतायां प्रवीणतामाचरति ॥

तत एव शत्रवस्तत्र मद्बहिरङ्गताया जानाना[६] गृह्णीरन्निति ॥

तदेवं व्रजत उदासीनायमानस्य तव तादृशचिन्तामात्रेणाचिन्त्यशक्त्या द्रागेव दूरतः समुद्रान्तः पुरीविशेषस्य व्यक्त्या तत्र च यदूनां झटितिप्रसन्नया तमुरीकरिष्यसि ॥

तदनन्तरमेव कालयवने कालवदाचरिष्यसि ॥

मुचुकुन्दश्च प्रति मुकुन्दस्त्वं कुन्दसुन्दरदन्तकान्ति-

---

(१) रहस्तां प्राप्तं । (२) मरुम्मर्म्म तत्तां प्राप्तं ।
(३) चक्षुष्ट्वं प्राप्तं । (४) मनस्तया सम्पादितं ।
(५) अनैकान्तिकं ।
(६) तां क्रमेण जानन्त इत्यर्थः । ज्ञोऽविदर्थस्य करणे षष्ठी ।

कन्दलितमन्दहासमयसमयरचनवंचनविलासतः कृपामुल्लासयिष्यसि ॥

अथ मथुरामेव रामेण सह सहचरयदुकुमारवृतः प्रतिगत्यपत्यभाववतः पुरुधा म्लेच्छतस्तान् म्लेच्छयाधान् निधनमेव रोधयमानस्तदमानधनानि निजराजधनानीति द्वारकां हारयन्नपि म्लेच्छपरिच्छदतया मनसि नाच्छतां मंस्यसे ॥

अथ पुनः पुनर्जात इव स राजा जराजातः पूर्वपूर्ववदेव मधुपुरीमारुन्धानस्तद्वनहर्तॄणां भर्तॄन् युष्मानेव प्रत्यभिगमिष्यति ॥

ततश्च तद्वनानामरक्षणाय निजजमानां रक्षणाय चाक्षामश्यामशुभ्रताशुभ्र[1]वपुषौ परमपुरुषौ कुतुकविशेषादव्यञ्जितरुषौ शुभवन्तौ भवन्तौ सद्रवमपद्रवन्तौ तद्धर्षत[2]इव वस्तुतस्तु तद्धर्षतः[3] प्रवर्षणाख्यं गिरिमारोक्ष्यतः ॥

आरुह्य च तन्तु द्रुह्यद्भिः प्रसह्य दह्यमानमुज्झन्तावेकादशयोजनसमुत्तुङ्गशृङ्गादुत्प्लुत्य

(१) उज्वल ।   (२) तस्मात् हर्षतः ।
(३) तस्मात् धर्षतः ।

भृरि दूरं युवां पंतिष्यथः । पतित्वा च द्वारकापति-
तामागमिष्यथः ॥

स तु वां प्रतापमविदन्निजपश्चात्तापपापपावपवी-
जायमानमभिशापं[१] हृदि वापं वापं गृहमवाप्-
स्यति। गीर्वाणश्रेण्या काशवाण्या तु हासिष्यते ॥

मृधे[२] तु विजितः पुरा त्वमसि यद्द्वयेनामुना
स सप्तदशवारकं विजित एव किं तद्गिरा ।
अहो ! सकुतुकद्रवे प्रकटमद्य चाजीयथा
जरासुतनयद्ध्रुवं तमदसीय[३] मानच्छिद ॥

कृष्ण उवाच ।—

लब्धदुर्गाणां यदुवर्गाणां बलं वा तेषां बल[४]-
मेव वावलम्बनं विधाय तदापि किं व्रजं नाव्र-
जिष्यामि ॥

ऋषिः स्वगतमाह स्म ।—

अहो ! तादृशि सङ्कोचेऽप्येतादृगस्योत्कण्ठामादृ-
गन्तर्बुद्धिं कुण्ठयतीति ॥

स्पष्टं तु स्पष्टं कारणमाचष्ट । एकस्मिन् कंसे

---

(१) अनिष्टभावनां ।
(२) युद्धे । (३) मदःसम्बन्धिनं । (४) सैन्यं ।

ध्वंसिते बहवस्तत्सम्बन्धिबान्धवा जरासन्धवत्
कंसायिस्यन्ते, कथमागमनं स्यात् ॥

कृष्ण उवाच ।—

दर्शनमात्रार्थमपि न स्यात् ॥

ऋषिः सरुच्चहासमुवाच ।—

न हि न हि ॥

कृष्ण उवाच ।—

कथमिव ? । ऋषिरुवाच ।—

वसुदेवाद्यनुज्ञां विनेति विज्ञापितमेव ॥

कृष्ण उवाच ।—

तर्ह्यागमनमेव न भविता ॥

ऋषिरुवाच ।—

भविता; किन्तु कालविलम्बितया । भवांस्तु
व्रजागमनं मनसिकृत्य विवाहकृत्यविमुखतया
स्थास्यति किन्तु तदपि व्यभिचरिष्यति ॥

कृष्ण उवाच ।—

हन्त ! किं तत्र कारणं ? ॥

ऋषिरुवाच ।—

रैवतनामा कश्चित्प्राचीनः सुराजा द्रुहिणाविहित-
तया रौहिणेयाय यदा दुहितरं वितरिष्यति

तदा वसुदेवदेवक्यादिभिरीडितैर्विवाहाय बहुधा विहिताम्रेडितैः कृतः स च प्रयत्नस्त्वया सयत्न इव नानुमोदिष्यते ॥

तदेवमेव वासरशते गते कदाचित्कश्चिदुद्विजमान इव द्विजन्मा विजने सन्तं भवन्तमाव्रजिष्यति ॥

आव्रज्य च स धन्यात्मा पितृपरवत्याश्च परसात्कृतिमयस्वभयावृततयापावृतायमानाया(१) भीष्मककन्यायाः सन्यायां(२)पत्रिकां सापत्रपमिव त्वय्यर्पयिष्यति ॥

तस्याः संक्षेपतस्त्वयमर्थनिक्षेपः ।—

तव स्वभावेनाकृष्टा स्वस्य वा त्वयि केशव ! ।
कृष्येय चेद्बलादन्येनासून्मध्ये जहाम्यहं ॥ इति ॥

ततश्च मर्मस्पृशा धर्म्मदृशा विधर्माद्भयं भावयमानस्त्वमन्यथा मन्यमानतां न लप्स्यसे ॥

किं बहुना ! विवाहमपि निर्वाहयिष्यसे ॥

यथा च लोके कथाप्रथामाप्स्यति ।—

भीष्माद्रिस्थितरुक्मिणीमणिमय-
श्रेणी विलोकस्पृहां

---

(१) स्वतन्त्रयमानायाः । (२) न्यायेन सह वर्त्तमानां ।

शार्दूलस्थितिमाश्रिता नृपसुता[१]

स्तावन्मदान्निर्म्ममुः ।

यावच्छंखनिनादगर्जदलितप्रागल्भ्यतत्तत्सभा-

मध्यध्वंसिनृसिंहनव्यतरुणाश्चक्रे मनाग्रोद्यमं ॥

तदेवं पर्य्यय[२]मागतायां मर्य्यादायां तादृश-पर्य्यायतया काश्चिदन्याश्च धन्याः कन्यास्तामधि-विन्नां[३] प्रणयन् परिणेतासि । ताश्च भवन्तमन्तरेण न शरीरस्थितिमनुसरेयुरिति । तत्र सत्यभामां ताव-त्पाणौ प्रणेष्यसि । यत्र जाम्बवतीमपि सम्बल-यिष्यसि । यत्र च जाम्बवान् कूकुद[४]मुदं लप्स्यते ॥

तथाहि । समासेन कथयिष्यन्ति ।—

प्रसेने निःसेने निजसहजनौ दिव्यमणिभा-

ग्मल्ले सिंहध्वस्ते रचयदभिशस्तं हरिमसौ ।

यदा सत्राजित्तर्ह्यनुमृगयमाणो मणिममूं

सकन्यामृक्षेन्द्रादलभत स[५]तस्मादपि पुनः ॥

मणिमन्वेष्टुं चिररात्राय कान्तारं गते तु त्वयि

(१) राजपुत्राः । (२) पर्य्ययः स्यादुपात्ययः ।

(३) कृतसापत्निकाध्यूढाधिविन्ना ।

(४) सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः । (५) हरिः ।

परमकान्ते पुनर्निर्दरतया[१] भल्लूकदरं प्रविष्टे द्वारकायां सुष्ठु कष्टमापातिष्यति ॥

यतः ।—

यर्हीति[२]र्भवतः कृष्णा ! तर्हीति[३]र्न तु दुर्लभा ।
अक्ष्णोरीति[४]स्तु लोकानारीति[५]रेव तदा मता ॥

प्राप्तायां सरत्नायां सत्यभामायां रत्नं पुनः स्वस्मिन्नर्पितेनावगीतेन सत्रा सत्राजित्येव प्रत्यर्पयिष्यति ॥

यदा च पाण्डवानामुद्दण्डं दाहवृत्तमतथ्यं कथ्यमानमाकर्ण्य तूर्णमेव हस्तिनापुरं प्रस्थितौ भविष्यथः । तदा गर्भे सुहित[६]स्त्वदहितः शतधन्वा सु वां दूरगौ मन्वानः प्राप्तरत्नं सत्राजितं सयत्नं सपत्नवन्निहत्य रत्नमपहृत्य तच्च कर्णोटिरटिरा[७]कारिणमक्रूरं प्रत्यपहृत्य ज्ञातिहत्याभीत्या कुशस्थलादवगत्य विद्रोष्यति ॥

---

(१) निर्भयतया । (२) प्रवासः ।
(३) ईतिरुपप्लवः । (४) रीतिः स्पन्दः ।
(५) रीतिः प्रचारः ।
(६) गर्भे सुहितगर्भे तृप्तावनुचितचेष्टे ।
(७) कर्णोटिरटिराकर्णौ स्फुरस्फुरेति द्वयमनुचितचेष्टायां ।

अथ स्वपुरमागत्य तदधिगत्य तमेवानुपदि-तयानुसृत्य निहत्य च मणिमसङ्गत्य पश्चादक्रूरात्प्रतिपत्य स्वमभिदुर्जनाभिशापमार्जवान्मार्जयिष्यसि ॥

कृष्णः स्वगतमुवाच ।—

सङ्गः क्वायं व्रजस्थानां मदकप्राणताजुषां ।
क्व वा यदूनां सत्राजिच्छतधन्वादिशालिनां ॥

अथवा ।—

भवेद्यः प्रोष्य पापीयांस्तस्य किं कर्म शर्मदम् ।
यद्यत्करोति तत्रैव स्नात्वा कालक एव सः ॥

स्पष्टं चाचष्ट ।—

कथान्तरं प्रथ्यतां । यदनन्तरं गोष्ठस्था ममानन्तरस्था भविष्यन्ति ॥

ऋषिरुवाच ।—

तदप्याख्यास्यति श्रूयतां ॥

अथ भवता तास्तत्तदुपायमुपायंसते(१)ति वर्ण्यमानमाकर्ण्य मृगयायां परीता रविदुहिता च त्वां वरीता । एतन्निर्वर्ण्य च जना वर्णयिष्यन्ति ॥

---

(१) व्यूढा ।

यथा ।—

सूर्य्ये जीवति तत्कन्या तमनापृच्छ्य पश्यत ।
स्वयं वृतवती कृष्णां वराकी कान्यकन्यका ॥

अथ राजाधिदेव्या नन्दनीं मित्रविन्दां स्वयम्वरणेन भवन्तमनुविन्दमानां तत्र भ्रातृभ्यां विन्दानुविन्दाभ्यां निन्द्यमानां युद्धेन विन्दमानः परिणीतासि ॥

कृष्ण उवाच ।—

राजाधिदेवी खल्वानकदुन्दुभेर्भगिनी भण्यते सत्राजिदपि गोत्रजतया । तर्हि कथमिदं लोकगर्हितमर्हिष्यति ? ॥

ऋषिः सहासमुवाच ।—

राजाधिदेव्या इव श्रुतकीर्तेरपि सुतां भद्रामुपयंस्यसे ॥

कृष्णः ससङ्कोचलोचनमुवाच ।—

तदपि कथं ? ।

ऋषिरुवाच ।—

यादवप्रभवाणामयमेव कुलक्रमसमाचारः ॥

———

कृष्णः स्वगतमुवाच ।—

न खल्विदं ज्ञातेयं, किन्तु कार्ष्णेयमेव । तथापि भद्रमेवेदं । यस्मादनेन सम्बन्धेन व्रजबन्धवस्तादिदं मंस्यन्ते । नासौ तेषां गोत्रतया स्तोत्रविषयता-मात्मनि मन्यते । किन्तु गोत्रान्तरमितानामस्माक-मेवेति ॥

ऋषिरुवाच ।—

मित्रविन्दामनु चेदं वदिष्यन्ते ।—

यथार्थनाम्ना साम्नाता मित्रविन्दा स्वबन्धुभिः ।
समित्रं बिन्दमाना या तदमित्रान्निराकरोत् ॥

भद्रामनु च वर्णयिष्यन्ति ।

श्रुतकीर्त्तेः सुता व्याजात्कीर्त्तिमेव व्यजायत ।
कृष्णसात्कृतितः सा तु भद्राप्यजनि विश्रुता ॥

अथ नाग्नजितीमप्युद्वक्ष्यसि ॥

यत्र सप्तानां वृषभाणां युगपद्बन्धः खलु तत्-पित्रा पणबन्धतया स्थापयिष्यते ॥

तत्र च ।—

यदा त्वं सप्तवृषभानुद्दिताना(१)चरिष्यति ।
तदा त्वद्रोपतां स्मृत्वा वाष्पं मोक्ष्यामहे वयं ॥

(१) बद्ध'न ।

कृष्ण उवाच ।—

हन्त ! युष्मभ्यमपि रोचते खल्वियं मल्लीला ॥

ऋषिरुवाच ।—

आस्तामस्मद्वार्त्ता, वाढमस्मत्पित्रेऽपि ॥

यथाप्रार्थितं "तद्भूरि भाग्य"मित्यादिना ।

तत्र च या कापि तव प्रेयसीलीला सा तु परम-श्रेयसी । यत्सम्बन्धेन भवन्मन्त्रद्वयं मन्त्रद्वयं मन्त्रराजतया प्रचारितमावाभ्यां ॥

तथा हि ।—

मृगो न हरिसेविता व्ययकृती न हर्य्यर्पकः
कविर्न हरिवर्णकः श्रुतगुरुर्न हर्य्याश्रितः ।
गुणी न हरितत्परः स्वरसधीर्न कृष्णाश्रयः
स न व्रजरमानुगः स्वहृदि सप्तशल्यानि मे ॥

कृष्णः स्वगतमुवाच ।—

साधीयान्[1] ममानुभवः, स तु न सवाधीभवितु-महति । यतश्च न स्वानुभव एवायमनुभावश्च तन्मनो मान्यथा मन्यस्वेति ॥

(१) वाढतमः ।

स्पष्टश्च पृष्टवान् ॥

ततस्ततः ? ॥ ऋषिरुवाच ।—

तदेवं काव्यश्रेणीरिव नानादेशवेशभाषारसैरेनीरेणीदृशः पाणीकृत्य[१] पूर्वपूर्ववद्रागिणीं मद्राधिपतेरपि कन्यां सन्यायतया वर्य्यां[२] भार्य्यावर्य्यां करिष्यसि ॥

न केवला सा तासामधराः[३] षोडशसहस्रपरिमाणाश्चापराः । तत्र मद्रकन्यायाः परिणयन्यायं भद्रमेवं वर्णयिष्यन्ति ।—

अत्युच्चैर्वद्धवेध्या प्रकटझषतनोश्छेदमाकर्ण्य पण्यं
कन्याया मद्रपातुः क्षितिपतिनियुता
　　　　　　　　साध्यमेकस्तु पश्चात् ।
दूरादागम्य पश्चादपि च विलुलुवे
　　　　　　　　तां हरिर्यः स पश्चा-
द्भूत्वा तान् युक्तमाद्दद्युधि तदपि मता-
　　　　　　　　ग्रीयता तस्य चित्रा ॥

कन्यानां षोडशसहस्राण्युद्दिश्य च सहस्रवक्त्रतामेव देवताः प्राप्स्यन्ति ।

---

(१) परिणीय ।　　(२) पतिम्बरा च वर्य्या च ।
(३) अवराः ।

तत्र दिग्दर्शनं यथा ।—

अथ नरकनिकाय्यं नारकं मेनिरे ता-
स्तदधिकमपि तन्तु श्रीहरिर्मन्यते स्म ।
नरकहरणनामाप्यत्र यत्नातियत्नं
यदकृत यदिहासीद्व्यग्रताविद्धबुद्धिः ॥

नरकवधप्रक्रियां चैवं वर्णयिष्यन्ति ॥

भित्त्वा दुर्गाणि कृष्णः ससुतमुरयुतं
भौममुन्मथ्य राज्ये
तत्पुत्रं स्थापयित्वा सुरनरदुहितॄर्बन्धनादुज्जहार ।
देवाम्बा[१] कुण्डलाद्यो मणिगिरिवरुण-
च्छत्रमुद्धृत्य तत्र
प्रत्यर्प्य क्षुद्रवृष्णः[२]सहमणिगिरिणा-
प्यग्रहीत्पारिजातं ॥

तदेवं तव स्वर्गस्थविघ्नहन्तृतां तत्र च वृत्रघ्नः कृतघ्नतामवधाय वयमेवं मन्यामहे ॥

त्वामर्चन्ति यदा स्वर्ग्यास्तदा स्वर्गः सुरालयः ।
त्वां नार्चन्ति यदा स्वर्ग्यास्तदा स्वर्गः सुरालयः ॥

---

(१) माता ।　　(२) इन्द्रस्य ।

युक्तमेव च तत् ॥

अजनाशमसौ नष्टो जीवनाशं ननाश च ।
ऊर्द्ध्वशोषं स चाशुष्यत्कृष्ण ! यस्त्वत्पराङ्मुखः ॥

कृष्ण उवाच ।—

ततस्ततः ? । ऋषिरुवाच ।—

तदेवं तव सर्वस्वास्थ्यमयगार्हस्थ्यचये प्रतिश्वस्तनं स्फुरदुपचये सति सुतसम्पत्तिरपि मतिमतीत्य प्रत्यहं प्रत्येष्यते । किं बहुना, भवद्वर्षषट्कानन्तरमेव यौवनप्रपञ्चतस्तेषामपि प्रजाताः प्रजास्तावत्येव दिष्टे दृष्टयौवना भविष्यन्ति ॥
भवान् पुनरीदृशतया परं नववयाः स्थास्यति ॥

तथा च पौराणी वाणी ।—

"नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः" ॥
इति ॥

"तत्र कृष्णं मत्वा स्त्रियो ह्रीताः" ॥ इति च ॥

तत्र च कैमुत्यमिदमवधिरमात्राणाममवधिकमवधाननिधामपात्रायते ॥

यथा ।—

"तत्र प्रवयसोऽप्यासन् युवानोऽतिबलौजसः ।
पिबन्तोऽक्षैर्मुकुन्दस्य मुखाम्भोजसुधां मुहुः ॥
इति" ॥

एतेन श्रीमद्व्रजे तु तददतिशयात् स्फुटमेव तददतिशयः सङ्क्रमितः ।

कृष्ण उवाच ।—

अहो ! महात्मन् ! महानयमत्ययः सम्प्रत्यपि दुरत्ययं दुःखमर्पयति । यत्तावद्विलम्बं तत्राव-लम्बितास्मि । भवतु प्रकृतं प्रक्रियतां ॥

ऋषिरुवाच ।—

शम्बरेण जन्मत एव युष्मदत्तव गृहादपहृतस्य प्रद्युम्ननाम्नस्त्वत्पुत्रस्य सम्पराये(१) सम्बद्धं तद्धन-नचरित्रं विचित्रतया गास्यन्ति ॥

यथा ।—

कृष्णोऽपि धृष्णाग्भवितात्र कः पुमान्
यस्तु स्वयं ये न्नु रमुं व्रजिष्यति ।
यदद्य जातं खलु तस्य जातक
हत्वा ततो मृत्युमवाप शम्बरः ॥

अथ प्राद्युम्निमनु चाम्नास्यन्ति ।—

ऊषां बाणस्य कन्यां रहसि गतमने-
नानिरुद्धं निरुद्धं

---

(१) युद्धं ।

युद्धे वुद्ध्वा तमेकं द्रुतमभिगतवान्

युध्यतोऽन्यान्निहत्य ।

ब्रह्माण्डध्वंसदत्युज्ज्वलनवहमहाशूलभृत्कूलपाणिं

तत्पक्षं निर्जयंस्तद्भुजवलमलुना-

यस्तु तत्रान्यकः कः ॥

कृष्णा उवाच ।—

विस्मयः खल्वयं यद्विस्मरिष्याम्येव व्रज-वार्त्तां ॥

ऋषिरुवाच ।—

न हि न हि; सा हि तव हितमनसि रागमयी जागरूकतामेव परामागमिष्यति ।

हन्त ! यत् खलु निरन्तरमन्तर्गतं(१) तत्कथमन्त-र्गत(२)मिव जायेत ।

किन्तु पूर्वनिर्दिष्टं गुर्वनादिष्टतापरं तस्मिन्निष्टि-विश्लिष्टिमाचरिष्यति ।

तदा च कदाचन रामेण सह रहस्यवार्त्ता तव वर्त्तिष्यते ।

यत्र स्वगमनमनालोच्य रामः शश्वदनुशोच्य व्रजस्थानां स्मृतितः प्रच्यवमानवाष्पस्त्वया च

---

(१) चित्तगतं । (२) अन्तर्गतं विस्मृतं स्यात् ।

तथानुशोचता प्रोच्यमानस्तव सन्देशं प्रवेशयन् माथुरव्रजदेशप्रवेशं गोपवेशमेवावेश्य प्राप्स्यति ।

प्राप्य च स यथा कथाविषयस्तथा समस्य वर्णयिष्यन्ति ॥

व्रजस्थानां रामः स्वसहजवियोगार्चिषि हविः
पुरा सत्यं जज्ञे पुनरिह तु जातः सुखकृती ।
यतस्तेषां ज्वालां स्फुरदमृतवाचा प्रशमयं-
स्तदीयां स्फूर्त्तिं दृग्विषयमिव चक्रे स्वबलतः ॥

किमन्यद्वा विन्यसितव्यं । तेन तथा ते नन्दिता यथा सर्वेऽपि स्वयं सपर्वप्रायतया तं प्रार्थयामासुः ॥

तदुपभोगतृष्णया चिरपालितसुकुमारकौमारकुसुमानां सुरवल्लीसमतासुषमाणामलब्धचरतदीयसंश्लेषाणामाभीरकुमारीविशेषाणामङ्गीकाराय । श्रीमान् बलदेवश्च यथावदेव तथा बलयामास ॥ बलयित्वा च व्रजं प्रति प्रचलितानुजागमनाविश्वासः स्वप्रेयसीरिहैव विहाय द्वारकामपि निश्चिन्त इव चलिष्यति । आगत्य च द्वारकां त्वामपि सान्त्वयिष्यति । यथाकर्त्तव्यावशेषं विधाय व्रजश्लेषमवाप्स्यति ॥

---

कृष्णा उवाच —

कियानवशेषस्तावांश्च विशेषः कथ्यताम् ? ।

ऋषिरुवाच —

क्रमश एव प्रक्रमणीयः । तथाहि ।—

व्रजं प्रति चलितवति सकलगुणभद्रे बलभद्रे पुण्ड्रकमण्डलपतिः कृत्रिमवासुदेवतया चित्रित-रूपस्त्वां स्पर्द्धया वर्द्धमानगर्वः साधुक्रोधसमुद्बोधन-मेवं सन्देक्ष्यति ॥

"वासुदेवोऽवतीर्णोऽहमेक एव नचापरः ।
भूतानामनुकम्पार्थं त्वन्तु मिथ्याभिधां त्यज" ॥

इति ॥

प्रतिसन्देक्ष्यन्ति तु तं यदवः ॥

यथा ।—

पुण्ड्रकेश ! स भवानभूद्धरिः
काशिराड् न किमिहाभवच्छिवः ।
मित्रतामशिवतां तथासज-
न्नन्यथा प्रथितवान् स तु त्वयि ॥

---

वृत्तान्तेना[१]मुना तु त्वद्वृत्तान्तः[२]सोऽयमीक्ष्यते ।
कृतान्तेना[३]चिरेण त्वं कृतान्त इव[४]वर्त्तसे ॥इति॥

ऋषिरुवाच ।—

ततस्तद्वधानन्तरं त्वं तु तं तन्मित्रं काशीराजमपि प्राप्तनाशी करिष्यसि । तयोः शिवाद्यपचितिरप्यपचितिमेव करिष्यति ॥

ततश्च ।—

यदा सत्रायिता[५]तत्र काशीश-तनयस्तदा ।
तस्मात् कष्टायमानः[६]सन्नष्टिमुच्चैरटिष्यति ॥

अथ रामस्तु द्विविदं रामसेनाग्रामग्रामण्यं-[७]विदन्नपि हनिष्यति ॥

यथा च कथयिष्यन्ति ।—

आश्रित्य रामं द्विविदःस्वेच्छया नरकं श्रितः ।
इति तन्निष्कृतिं कुर्वन् रामोऽन्यस्तमदण्डयत् ॥

श्रीराममुद्दिश्य च वन्दिवृन्दानि वदिष्यन्ते ॥

---

(१) वार्त्तया ।
(२) प्रकारः । वृतान्तः स्यात् प्रकरणे प्रकारे कार्त्स्न्यवार्त्तयोः ।
(३) कृतान्तो यमसिद्धान्तदैवाकुशलकर्म्मसु ।
(४) कृतो अन्तो यस्य स इव ।
(५) पापाय सत्रं करिष्यति ।
(६) पापाय कष्टकारित्वात् । (७) श्रेष्ठं ।

हाला ! लोहितलोचने ! हलभृति
व्याकोष शोणाब्जयु-
ग्मभ्रान्तिभराकरा मधुकराः
कोटिर्गताः कूटतां ।
किञ्च चोणिशठा हठादघरिपोस्तेजः प्रसुप्तं यश-
स्युद्बुद्धं किल वर्द्धितुं तदिति ते वार्द्धिं गतिं सङ्गताः ॥

कृष्णा उवाच ।—

हन्त ! महर्षे ! वाढघटितन्यायेनापि मम व्रज-सम्वन्धिभिः समं समन्वयः किं न भविता ? ।

ऋषिरुवाच ।—

भविता; यतस्तदेव वृत्तं क्रमतः क्रमते स्म ॥

तथा हि ।—

यदा रामस्तीर्थयात्रां करिष्यति यस्याश्चान्ते भीष्मादिशान्ततांप्रान्ते दुर्योधनवधः सम्पत्स्यते । तस्याः प्राग्यदा कदापि सूर्य्योपरागः सागरवत्पर्व-गरिमाणमागन्ता ॥

यश्चैवं वर्णायिष्यते ।—

ग्रस्तसूर्य्येण तमसा तमसा व्यापि तद्दिनं ।
उदिते हरिवक्त्रेन्दौ स्मेराजनि कुमुद्वती ॥ इति ॥

तदा तु ।—

कंसप्रतापिताः सर्वे वयं याता दिशं दिशं ।
एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥इति॥

श्रीवसुदेव-वचनात्कंसवधान्नातिव्यवधानकाले कुरु-भुवि सुविमलजातीया भारतीयाः प्रजाः प्रायः प्रयास्यन्ति ॥

यत्र भीष्मयुधिष्ठिरोग्रसेनादिसंसक्तानां भवदीय-महिष्ठभक्तानां समागमः परमेष्ठिगोष्ठीमपि कनिष्ठां करिष्यति ॥

किं वहुना; भवानपि तत्र भविता, व्रजवासि-ततिरपि व्रजिता ॥

यतः परिमिलनाय परस्परमधिकमभिकतां(१) गतानां लक्ष्यमात्रं तदावधिकं लक्ष्यते ॥

कृष्णाः सास्रमुवाच ।—

ततस्ततः ? । ऋषिरुवाच ।—

ततश्च ।—

यथार्कतप्तो जलविन्दुरिन्दुना
निदाघदग्धं विपिनं पयोमुचा ।
विषार्दितं वा(२) भवता विलोकयते-
सङ्गात्तथा त्वद्विरही त्वया व्रजः ॥

---

(१) ऋजुत्वं ।　(२) जलं ।

कृष्णः सगद्गदमुवाच ।—

ततस्ततः ? । ऋषिरुवाच ।—

ततश्च ।—

माता तातः पितृसहचरा भ्रातरो वन्धुवर्गा
दासा हृद्यास्तव निजजनाः केचिदन्ये च तत्र ।
प्राप्स्यन्ति त्वां भवति च भविष्यन्ति तेऽनन्यचित्ता-
स्तेष्वावेशाद्बहुषु भविता नैकचेता भवांस्तु ॥

ततश्च ।—

त्वं व्रजेति निजप्रेमगोपयन्निव वत्स्यसि ॥
व्रजस्तु स्वगुणैस्तत्र सर्वप्रेयान् भविष्यति ॥

तत्र च ।—

यदा यदा द्रक्ष्यति तान् भवांस्तदा
पूर्णं स्वमूर्णान्विता(१) दृशोर्जलं ।
भवन्तमप्येवममी यथामुना
कण्ठान्तमन्तर्हृदयं निरोत्स्यते ॥

तदेवं वैशाखमारभ्य वर्षायावदतिहर्षात्त्वां निर्निमिषमेव निर्वर्णयन्तस्ते व्रजवासिनः सम्वत्स्यन्ति ॥

---

(१) मुहुराच्छादयिष्यसि ।

तदन्ते सदनूकतया(१) लब्धमूकस्थितिषु श्रीमन्नन्दादिषु तेषामानकदुन्दुभिप्रभृतीनां परमस्निग्धान्तःकरणतां विलोक्य जातपुत्रपौत्रावलोकनेन क्षितविपक्षपक्षप्रायतावकलनेन च स्वस्मिन्नविश्वस्तिस्त्रस्तितः समाश्वस्तिमपि विलोक्य सर्वश्लोक्यचरितः सहायीकृतबलरामोद्धवरोहिणीकतया तैः सह निजवृन्दाबनव्रजदर्शनमेकान्ते मन्त्रणापूर्वकं विचिन्त्य निश्चित्य च श्रीमन्नन्दादीन् ससान्त्वं माथुरानेव प्रस्थापयिष्यसि ॥

इदमेव बादरायणिरप्याह ।—

"ततः कामैः पूर्य्यमाणः सव्रजः सहबान्धवः" ।

इत्यादिना ॥

"कृष्णे कमलपत्राक्षे संन्यस्ताखिलराधसः"

इति पूर्वोक्तेस्त्वदागमनतात्पर्य्या एव तेषां कामा इति । प्रस्थापनसमयतस्तेषां विशेषावस्थावर्णनन्तु तत्तदस्माकं बुद्धिमास्तृणोतीत्यलमतिविस्तरेण ॥

कृष्ण उवाच ।—

अस्मदवस्थां तु वर्णय ।—

---

(१) सच्छीलतया । शीघ्राम्बयाबनूके द्वे ।

ऋषिरुवाच ।—

कुरुस्थलात्कुशस्थलमागत्य स्थितः स भवान् पाण्डवराजेन राजसूयमन्त्रणायास्मद्द्वारा निमन्त्रितः सन्निन्द्रप्रस्थं प्रस्थास्यते ॥

ततश्च सत्वरं गत्वा भीमप्रभृतये दिक्सीमविजययशांसि दत्त्वा भीमद्वारा जरासन्धं हत्वा तत्कृतबन्धानि नृपवृन्दानि मोचयित्वा विजितेन राजव्रजेन युधिष्ठिरं रोचयित्वा राजसूयेन याजयिष्यसि ॥

तत्र जरासन्धघातनं यथा ।—

बन्धं बन्धं यमनु मुमुचे तं जरासन्धमेनं
हन्यामद्धा स्वयमथ यदि श्रव्यमेतन्न तर्हि ।
इत्थं कृष्ण ! त्वमिह कलयन् भीमसेनेन युद्धा-
द्भूर्म्यादैत्यप्रकृतिममुकं घातयिष्यस्युपेत्य ॥

मिलदर्त्तन[१]गिरिगर्त्तवर्त्तमाननृपाणां कृपया मोचनं यथा ।—

कारामारान्धतामिश्रबन्धादन्धायितान्नृपान् ।
स्वरूपवृष्टिभिः सृष्टहृष्टान् परिकरिष्यसि ॥

(१) अर्त्तनश्च ऋतीया च हृणीया च घृणार्थकाः ।

राजसूयं यथा ।—

निर्जित्य क्षितिपति-मण्डलानि पाण्डोः
पुत्रैस्तान्यनुगमितानि सङ्कुटय्य ।
चेदीशं सदसि निहत्य तद्विरुद्धं
तेषां तद्विरचयितासि राजसूयं ॥

यज्ञे तस्मिन्नृलोकान्नृपतितदधिपा-
विप्रविप्रर्षिवर्य्याः
स्वर्गस्थाः स्वर्गपालास्त्रिदशमुनिवराः
किञ्च वेधाः शिवश्च ।
दृष्ट्या श्रुत्यापि तत्तद्बहुविधभगव-
द्रूपवृन्दस्य विज्ञाः
पश्यन्तो रूपमेतत्तव किमपि मुहु-
र्विस्मरिष्यन्ति सर्वं ॥

तदेवं राजसूयं सन्तान्य कुन्त्याः सन्तानान् सम्मान्य यदा द्वारकायां गन्तासि,तदा साधूनां शल्यं सात्वं लोहमयव्योमचारिपुर्य्यापर्य्यगेव तामावार्य्य चञ्चूर्य्यमाणं दृष्ट्वा पूर्य्यमाणायाञ्च जन्यः सज्ञाति-प्रयत्नतस्तं देव-सपत्नं हनिष्यसि ॥

———

ततश्च ।

क्रुध्यद्युद्ध्यत्सौभपुरं व्योमाध्वद्वारकारुधं[1] ।
ध्वंसयिष्यसि तद्यद्वात्रिपुरं त्रिपुरान्तकृत् ॥

अत्र च गास्यन्ति ।—

उडुम्बरे कृमिस्तावन्निजाडम्बरगर्वितः ।
यावन्न दन्तिदन्तानामन्तःपतति तत्फलं ॥

कृष्णा उवाच ।—

अद्यापि कतिविलम्बा व्रजभूगतिः ॥

ऋषिरुवाच ।—

आयतावेवायाता श्रूयतां ॥

तदेतत्प्रोच्य महर्षिणा मनसि प्रोच्यते स्म ।—

एषा च कलिलोकैर्विरलैरेवावकलयिष्यते ॥

अस्या हि वहिर्मुखान् प्रत्यवगुण्ठयितुमन्तर्मुखां-स्तूत्कण्ठयितुं महर्षिभिः परोक्षप्रायीकृतायाः खल्वस्मदादिसम्वादमय्याः श्रीभागवत-भारत-पाद्मादानामेकवाक्यताकरणात एव शक्या प्रतीति-रिति ॥

तदिदञ्च किञ्चन मदुपदेशनिदिग्धं मधुकण्ठ-स्निग्ध-कण्ठाभ्यां प्राप्तकृष्णोपकण्ठाभ्यां क्षीरकण्ठाभ्या-

(१) कमत्यपान्तमिदम् ।

मपि स्वकण्ठादेव चम्पूद्वयमपूर्वरचनया सम्पूर्णां कुर्वद्भ्यामुत्तरचम्पूत्तरभागमञ्ज्यां तत्तच्छास्त्रमत-विस्तारणाया प्रस्तोष्यते ॥

तदेव समस्य विचार्य्यते ॥

यदा साल्वयुद्धमुद्बुद्धं तदा पाण्डवानां दुरोदर(१) दण्ड इति वनपर्व-कथा ॥

साल्वस्य तु प्राणान् दण्डयित्वा मधुपुरपुरद्वारि वक्रताचण्डः सविदूरथदन्तवक्रः खण्डखण्डशः खण्डितश्च तेनानेन भवितेति पाद्मोत्तरखण्ड-प्रथा ॥

तदनन्तरञ्च पुनर्व्रजागमनमस्य महादेव-देव्योः सम्वादरहस्यमये तत्रैव स्पष्टं निष्टङ्क्यते ॥

यत् खलु सत्यसङ्कल्पतयानल्पसमज्ञाविज्ञातानां । "आयास्य इति दौत्यकैः," "आगमिष्यत्यदीर्घेण" इत्यादिवहुतराद्भगवद्भागवतानां प्रतिज्ञानुसारात् श्रीमद्भागवतेनाप्युद्भावितं ॥

न केवलं प्रतिज्ञामात्रं तत्र प्रतीतिपात्रीकृतं किन्तु तदागतिरप्यधिगतीकृता ॥

---

(१) दुरोदरो द्यूतकरः ।

तथाहि प्रथमे द्वारकाप्रजा-वचने ।—

"यर्ह्यम्बुजाक्षापससार भो ! भवान्
कुरून्मधून्वाथ सुहृद्दिदृक्षया," इतिप्रत्यक्षं लक्ष्यते ।
न च तत्तु कालान्तरगतं । कुरुक्षेत्रयात्रायां हि
स्फुटमस्य वचनं तस्य तत्कालतामेव रचयति ॥

तथा हि ।—

"अपि स्मरथ नः सख्यः स्वानामर्थ-चिकीर्षया ।
गतांश्चिरायिताञ्छत्रु-पक्षक्षपणचेतसः" ॥ इति ॥
विदूरथान्तशत्रुवधमेवावधिमत्र करोति नान्यदिति ॥

तदेवं स्थिते तदनन्तरं च लब्धान्तरतया तेनानेन तेषां प्रकृतिजागोचरप्रकृतिस्वपदाविर्भावनञ्च तत्र पाद्म एवोद्भावितम् ॥

तदपि ब्रह्महृदमज्जनतदुन्मज्जनादनन्तरं तद्दर्शितवत एतस्य चैतदीयानाञ्चाभिप्रायेण श्रीमद्भागवतेनाभिप्रेतं ॥

"अपि नः स्वगतिं सूक्ष्मा"मिति । "न वेद स्वां गतिं भ्रम"न्निति । "गोपानां स्वं लोक"मिति । "कृष्णश्च तत्र छन्दोभिः स्तूयमान"मित्यनेन ॥

———

अतएव स्कान्दे ।—

"वत्सैर्वत्सतरीभिश्च सरामो बालकैर्वृतः ।
वृन्दावनान्तरगतः सदा क्रीडति माधवः" ॥

सदा स्थितिप्रयोगश्चात्र वैकुण्ठनाथस्य ध्रुव-गजेन्द्राद्यर्थमन्यत्र गमनेन वैकुण्ठ इव श्रीव्रजेन्द्र-नन्दनस्य मथुरादिगमनेन वृन्दावनेऽपि न बाध्यते ।

अत्रेदं विचारयामः ॥

जननीवेषसम्बन्धाभासात्पूतनिकापि सा ।
जननी-गतिमव्राजीदिति कैमुत्ययोगतः ॥
उपकृष्णं[१] कृष्णघोषः सुगोगोपं[२] तदाप्स्यति ।
अतिदुःखं[३] दुष्प्रतीपं[४] तद्गोलोकं[५] सुशर्म्म[६] च ।

किञ्च ।—

साङ्गः[७] याव[८]द्वैभवं च व्रजः कृष्णं व्रजिष्यति ।
सकृष्ण[९]मनुकृष्णं[१०] यो धास्यते च सरामकं ॥

---

(१) कृष्णस्य सामीप्येन । (२) गोगोपानां समृद्धिः ।
(३) दुःखानामत्ययं ।
(४) प्रतीपानां प्रतिकूलानामृद्धेर्विगमं ।
(५) गोलोक इति ख्यातं । (६) सम्पन्नं शर्म्म
(७) सर्ववैभवसमेतमित्यर्थः । (८) सम्पूर्णं ।
(९) कृष्णस्य योग्यं । (१०) कृष्णमित्यस्य विशेषणं ।

सद्वादशस्कन्ध[1]मेवं श्रीभागवतमीक्ष्यते ।
यथाशक्ति[2]बुधोऽन्यस्य शक्तिप्रति[3]न विद्यते ॥

तदेवं विमृष्य तु श्रीदेवर्षिः स्पष्टमाचष्ट ।—
यदा त्वं राजसूयतः सुखं सम्भूय स्वालयचलनारम्भं सम्भावयिष्यसि ॥

तदा वक्रभावचक्रतः शक्रमपि जिगीषुर्दन्तवक्रस्त्वां केवलसर्वचंक्रमणाचक्रवलं वितर्कयन् वलेन वलेन च विना भूतेन त्वया केवलेन गदायुद्धमध्वन्यन्विच्छन् मधुपुरीमागन्तुमुरीकरिष्यति ॥

तामागत्य च गत्यन्तरं चिन्तयन्मन्मुखतस्तव द्वारकासम्मुखप्रस्थानं साल्वसंस्थापनश्चास्थाय सद्यस्त्वां प्रत्येव दुस्थात्मतया प्रस्थास्यते ॥

तदैव च मनोजूतिविभूतिमयेन मया कथनया निजव्रजगमनाय तदेवास्पद[4]मास्पदं[5]कुर्वंल्लब्धमनोरथस्तादृशादिव्यरथश्च त्वं तत्क्षणमेव मधुरापुर-द्वारि प्राप्तगतिप्रथस्तं गदावन्तं निष्क्रामन्तं द्रक्ष्यसि ॥

---

(१) द्वादशस्कन्धपर्यन्तं ।　(२) शक्तिमनतिक्रम्य ।
(३) शक्तिप्रतीत्यव्ययीभाव एवं शक्तिलेशोऽपीत्यर्थः ।
(४) कार्यं । आस्पदं कार्य-प्रतिष्ठयोः ।　(५) आश्रयं ।

स्रक्ष्यसि[१] च त्वां प्रति क्रामन्तं तं प्रति गदां । स्रक्ष्यन्ते च प्रत्यस्त्राणीव त्वदाभिमुख्येन करूष-मुख्येण तेन चैद्येनैव सात्मज्योतिष्का निष्कास्य प्राणाः ॥

अत्र च श्लोकः खल्वयं ।—

भीमस्याहं तुल्यसम्विद्गदाया
द्वन्द्वाघाते माधवं मागधाभं ।
जित्वा राज्यं माथुरं साधयिष्या-
म्येवं नद्धक्ष्यत्येष को दन्तवक्रः ॥

ततश्च ।—

दन्तवक्र-चितावह्निप्राये क्रोधे तव स्वयं ।
विदूरथश्च पतिता दूरतः क्रूरकीटवत् ॥

तदेवं दन्तवक्रं विदूरथमपि विदूरतस्तदा गदा-चक्रघातं[२] घातयित्वा स्ववचनसत्यङ्कारः स्वजन-हृद्रुजामगदङ्कारः स्वीयमुखानामस्तुङ्कारः श्रीमद्व्रजविराजमानराजकुमारः स्वकव्रजकुलमेव भवा-न्मथुराभवाननुयोक्ष्यते[३] ।

---

(१) त्यक्ष्यसि ।
(२) गदाचक्राभ्यां घातयित्वेत्यर्थः ।
(३) प्रक्ष्यते प्रश्नविषयीकरिष्यत इत्यर्थः ।

ननु(१) सर्वं प्रगाढभावमवगाढं कुरुक्षेत्रादागतेर्वाग्भवदागमनमर्यादाभ्यन्तरीणकालं कालमिव चालयितुं पुनरपि विधेः सुदिनायमानतां(२) प्रतिपालयितुं सम्प्रति यमुनापारीणं जातमित्यवकलय्यानुकामीनेन(३) निजदिव्यविमानेन समुत्तीर्य्य दिविषद्भिः कुसुमैरवकीर्य्यमाणः सहसा तद्वासभ्रासनुमुद्योक्ष्यते(४) ॥

उत्तीर्णे च त्वयि सर्वतः कीर्णेन नन्दिताशेषेण रथघर्घरितविशेषेण त्वदागमनमेव मन्वानास्त्वत्परिमलदलनेन तु निश्चिन्वानाः सर्वविधा एव त्वदेकाध्वानतः प्रधावनमेव तन्वानाः श्रीमन्नन्दाद्यभिधानाः सन्निधानं विनापि शिखण्डिमण्डलवदमी मार्त्तण्डमण्डलस्थमेघखण्डमिव दिव्यरथारूढं त्वामगूढं निशाम्य सम्यगूढप्रमदावहलकोलाहलं कलयिष्यन्ति ॥

कलयन्तश्च स्तम्भस्वेदरोमोद्भेदस्वरभेदरोदनविभेदप्रलयमयतया स्पन्दमप्यविन्दमानाः स्यन्दनादूरतस्तत्तदवस्था एव स्थास्यन्ति ॥

---

(१) व्रजकुलं । (२) सुदिनं कारितां ।
(३) कामं गाम्यनुकामिनः । (४) उद्योगं करिष्यति ।

त्वं पुनः सहसा रथादवतीर्य्य तेषां पथा यथावीर्य्यं
धावन् सकलगीर्वाणविकीर्य्यमाणकुसुमादिवादित-
वादित्रादिकृतमानः सर्वथाप्यसम्भावितसमानः
परमासक्त्या सर्वानपिताननर्वाचीनशक्त्या च पृथक्
पृथगेव च युगपदेव च सङ्गच्छन्[1]समालिङ्गंस्तत्त-
दङ्गसङ्गतं स्वाङ्गमपि न ततो भिन्नमङ्गीकरिष्यसि ॥
ते च तथा शोकापनुदं दत्तमुदं त्वां लभमानाः सर्वे
जन्यव[2]स्त्वदनन्यम्मन्या भविष्यन्ति ॥

तथा च गास्यते ।—

यदा यातः कृष्णः पुनरपि यदूनां नगरत-
स्तदा गोपाः सोऽपि प्रतिनिजमधुर्मोदनिवहं ।
व्यतिश्लिष्टा यर्हि प्रतिजनमिदं नाजनि मना-
गयं कृष्णः कृष्णः किमहमिति तर्हि स्फुटतरं ॥

यतः ।—

यद्वत्कल्यन्तिमानां सुकृतविरहिणां
सत्यधर्मावतारः
पृथ्वीस्थानां महावग्रहदुतवपुषां
वर्षुकाब्दप्रचारः ।

---

(१) सकर्म्मकत्वान्न शानः । (२) जन्तवः ।

आकूपारहृदानां मुनिहतपयसां नव्यगङ्गाप्रसार-
स्तद्वद्गोष्ठस्थितानां तव विरहरुजां
हन्त ! ते सञ्चारः ॥

अथ चिराय प्रतिमावत् प्रतिस्वं लब्धत्वत्परि-
ष्वक्तिषु व्रजजनव्यक्तिषु पूर्वव्यक्तीभावमापन्ना
मधुमङ्गलपूर्णाभ्यर्णा पौर्णमासी सवृन्दा वृन्दा च
सममप्रच्छन्नतां गच्छन्ती तु सुखसम्मूर्च्छना[1]न्मूर्च्छा-
मिव गताभ्यस्ताभ्यः साभ्यसूयमिव क्रमाद्बहिर्वृत्तिं
यच्छन्ती तद्वनिकायां तन्निकायमुपवेशयिष्यति ॥

तथा च कथयिष्यन्ति ।—

कृष्णं मध्यगतं विधाय पितरौ तद्भ्रातरः स्त्रीगणा-
स्तन्मित्राणि कुटुम्बसम्वलनया
चान्ये चिरात्प्रापितः ।
मुञ्चन्तः स्फुटमश्रु तस्य सुखदश्चारूपचारं चिरं
विस्मृत्य स्थगितक्रियाः समभव-
न्मूकाश्च वैस्वर्यतः[2] ॥

त्वन्तु तत्र स्त्रीकुमारं[3] पुत्रपौत्रं कुब्जवामनं
दासीदासमपि सर्वं यथायथं तोषयिष्यसि ॥

---

(१) सम्मूर्च्छनमभिव्याप्तिः । (२) स्वरभङ्गतः ।
(३) समाहारे द्वन्द्वसमासात् ।

दारुकस्तु दारुवदेव दूरस्थितस्तत्प्रेमवश्यतया कौतुकमिव द्रक्ष्यति ।

ततश्च तत्रासीना पौर्णमासी कुपितेवालपिष्यति ।

अहह ! किमिदमविदन्त इव कुर्वन्तः स्थ । पथि परिश्रान्तमिमं कथमिव न विश्रान्तं कुरुथ ।

तदेवं जातचमत्काराभ्यां तत्परिश्रमकातराभ्यां मातरपितराभ्यामुभयतः स्वस्वभुजया कृतालिङ्गन-मयप्रणायचेष्टितः सर्वैरेव च परितो वेष्टितः स्वगोष्ठप्रकोष्ठमध्यगशकटघटाघटितवाट[1]मवाप्-स्यसि ॥

ततश्च ते सर्वे भवत्परिचर्य्यामयपरिसर्य्या[2]कृतः सम्भ्रममेवाचरिष्यन्ति न तु कार्य्यक्रमं ॥

तथाहि ।—

यर्ह्यागन्तास्यघहर ! चिराद्द्वारकातस्तदा ते
सर्वेऽप्येते व्रजजनिजना श्रेष्ठमध्यस्थनिघ्नाः ।
धावन्तोऽपि प्रतिदिशमहो ! तत्तदेकैककार्य्यं
कुर्वन्तोऽपि स्थगितकृततामेव यास्यन्ति हन्त ! ॥

---

(१) गृहभूमि ।

(२) परिसर्य्या परीसार इत्यमरः । पर्य्यन्ते समन्ताद्वा सरण-मिति टीकाकारः ।

यद्यपि गोपाः सम्यक्, परिचरितुं त्वां न तर्हि
शक्ष्यन्ति ।

तदपि च तत्प्रमदामृत,भोगास्त्वामी सदैव
योक्ष्यन्ति ॥

तदारभ्य च ।—

किं भोक्तव्यं क्वासितव्यं स्नपनीयं क वामुना ।
इति मात्रादिधीयात्रा नात्रायास्यति तृप्तताम् ॥

सखायस्ते सुखाधीना विस्मरिष्यन्ति सर्वकं ।
स्मरिष्यन्ति तु तां त्वत्कां पुनः संश्लेषनव्यताम् ॥

दासाश्च तव दाशार्ह ! पुनराशां स्वमूर्त्तिषु ।
धास्यन्ति सेवासुधया विधास्यन्ति यदाप्लवं ॥

गावः प्राग्वद्भवत्स्फूर्त्तिप्रभावस्थिततद्दशाः ।
तद्वदेव सदैवामूर्धास्यन्ति प्रमदं त्वयि ॥

शिशवः पशवश्चैव वयांसि च पयांसि च ।
ये ऽन्ये हृद्या[1]जना हृद्या[2]स्तव तेषां तु का कथा ॥

कूर्मस्येव स्मरणानुभावेन तव तेन त्वदीयाः पूर्ववदेव हि ते स्थातारः । तथैव ब्रजाद्वलदेवः कुशस्थलीमासाद्य त्वयि निवेदयिष्यति ॥

---

(१) हृद्गताः ।　　(२) मनोहराः ।

यथा श्रीहरिवंशे ।—

"तथैवाध्वगवेषेण सोपश्लिष्टो जनार्द्दनः ।
प्रत्यग्रवनमालेन वक्षसाभिविराजता ॥
उपविष्टं तदा रामं पप्रच्छ कुशलं व्रजे ।
बान्धवेषु च सर्वेषु गोषु चैव जनार्द्दनः ॥
प्रत्युवाच ततो रामो भ्रातरं साधुभाषिणं ।
सर्वेषां कुशलं कृष्ण ! येषां कुशलमिच्छसि" ॥
इति ॥

तदेवं स्थितेऽपि तदा तव सदा व्रजावस्थिति-प्रतीतिस्तु तेषां नातिजनिष्यते । स्यन्दनं तदत्र तदवस्थमेव स्थापितमस्तीत्यनास्थाभावनया ॥

किञ्च ।—

तव सवयसः प्रवयसः प्रतीदं प्रतीपमावेदयिष्यन्ति । प्रियवयस्यस्य नातिसौमनस्यं मनस्यभ्यस्यते ॥

यतो अनितानुरागजनतासु तासु प्रागिव नानुरागं जागरमागमयति ।

ताश्च तथादृष्ट्वा लगितदुःखस्थगिततया शुष्का इव तिष्ठन्ति ।

तदेतदाकर्णयन्तः प्राप्तकद्दनान्तरतया विवर्णवदनास्ते त्वन्मातरपितरादयः कातरतामवाप्स्यन्ति ॥

त्वन्तु जन्तुमात्रचित्तज्ञस्तद्विज्ञाय स्वयमेव तान् विज्ञापयिष्यसि ॥

कथं भवन्तो नाद्याप्यानन्दादुद्रवन्तो दृश्यन्ते । सर्वे तु सगद्गदं गदिष्यन्ति ॥

अस्माकमानन्दकारणं त्वदवधारणापदवीं विन्दत एव ॥

अथ त्वं वक्ष्यसि । वाढं; किन्तु येन भवद्भिः सन्दिह्यते सोऽयं शताङ्गः साङ्गभवत्कार्य्यसङ्गमनाय सङ्गरक्षिततया लक्ष्यते । यथा वान्यथाज्ञापयथ तथा प्रथयिष्यामि ॥

एतदेव प्रागेव निवेदितं मया ॥

"यात यूयं व्रजं तात ! वयञ्च स्नेहदुःखितान् ।
ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखं" ॥
इति ॥

ज्ञातीनिति युष्मन्मध्यत एवासौ वासः सम्भविष्यति । द्रष्टुमिति तत्र च युष्मद्दर्शनमेवास्माकं पुरुषार्थ इत्यर्थः । यद्वा । द्रष्टुमिति दर्शनविषयीभवितुमित्यर्थः ॥

"अथापि भूमन् ! महिमा गुणस्य ते
विवोद्धुमर्हत्यमलान्तरात्मभिः" ।

इत्यत्र बोधविषयी भवितुमितिवत्

एतदुद्भवेन च भवत्सु समुद्बुद्धा चक्रे ॥

"आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ।
प्रियं विधास्यते पित्रोर्भगवान्सात्वतां पतिः ॥
हत्वा कंसं रङ्ग-मध्ये प्रतीपं सर्वसात्वतां ।
यदाह वः समागत्य कृष्णः सत्यं करोति तत्" ॥

इति ॥

सात्वतां पतिरपि पूर्णषडैश्वर्य्यसम्पत्तिरपि पित्रोर्युवयोर्व्रजेशित्रोः परमसुखाश्रियं सदा स्वलालनारूपं प्रियं विधास्यते ॥

तत्राप्यच्युत एवावस्थास्यते, यतस्तत्ततो हेतोरद्यापि सत्यं सपथं करोति कुर्वन्नेव वर्त्तत इत्यर्थः ॥ तदमेनैव नयेन भवतां प्रणायर्णं विनयेय । न तु मनागपि गमनागस्त्वेन ॥

तथाहि ।—

पित्रादिप्रतिरूपरूपवसुदेवादिप्रतीघातजा-
दुःखात्कंसविनाशनार्थमगमं शीघ्रां निवृत्तिं विदन् ।
तत्रासीत् सुहृदां मनोरथ-ततिर्युद्धायतिर्दुर्हृदां
चैवं तद्वधसन्नं समाप्य यदि च प्रागां क वा यान्यहं ॥

इति ॥

ततः श्रीव्रजेश्वरानुमत्या प्रत्यासन्नाः सर्वेऽपि प्रार्थयिष्यन्ते । एवं चेदिह च तव द्वारकावदेव वहलगृहं वृंहणाय स्पृहयामः । अन्यथा करणन्तु यदस्माकमधन्यतां वहतीति ॥

तदेतदाकर्ण्य भूमिं निर्वर्ण्य त्वन्तु तस्मिन्नसन्तुष्ट इव चेतसि चिन्तयितासि । गृहशब्दः खल्वेभि- र्गृहिणीपर्य्यायतया पर्य्यवसायितः । तत्र च हन्त ! मम स्वान्तं कीदृशं वामी विधास्यन्तीति ।

अथ पुनर्विभावयितासि । भवतु पूर्णाज्ञाना तूर्णं विधाना च पौर्णमास्यत्र सर्वं शर्म निर्म्मास्यतीति । न त्वन्यथा कर्मतां धास्यतीति ॥

व्यक्तन्तु वक्ष्यसि ॥

तर्हि रोहिणीमाता रौहिणेयभ्राता च द्वारका- गारादाकारणीयौ । तावेव सर्वमर्वाग्भाव्यं निवेद- यिष्यतः ॥

अथ पुनर्दारुकसारथिं प्रति प्रथयिष्यसि । भो ! सारथे ! सरथः प्रथमानयात्यन्तीनतया(१) भवान् यदुभवनमासाद्य सद्यः श्रीमद्भ्रातरं तन्मातरञ्च प्रापयेति ॥

---

(१) अत्यन्तीनं भृशं गच्छति अत्यन्तीनः ।

पुनर्विचार्य वक्ष्यसि। हन्त! तमुद्धवमप्यानयेति ॥

ततस्तद्वन्दारूके दारुके पवनमनुहरमाणेन यानेन मुहूर्त्तमात्रादुद्धतस्तैः सार्द्धमागते तस्मिन् विस्मित-मनसः श्रीमन्नन्दादयः परमानन्दाशयतया सहसा भवदागमनवदेव सहसा[1]महता तोद्यमानातोद्य व्रजं तान्निजालयमानेष्यन्ति ॥

गतेषु च दिनेषु त्रिचतुरेषु परमचतुरा रामादयस्ते व्रजस्थाभिरुचितमेव तुभ्यं रोचयिष्यन्ति ॥

येषां प्रेम-गुणैर्यस्त्वं बद्धः सुष्ठुतया हरिः।
तस्य तैर्विनिरुद्धा ये कुर्युस्ते कथमन्यथा ॥

सर्वे च मिलित्वा निर्णेष्यन्ति मान्याः कन्या-विचारं। कात्यायन्याराधिकास्ताः कन्या धन्यादयः सन्यायतामर्हन्तीति ॥

रामोद्धवौ तु परमनिष्णातौ कृष्णानज्ञात्वा तूष्णीमेव स्थास्यतः।

ततस्तदर्थमारम्भे लब्धसम्भेदे व्रजपतिजम्पती पूर्णमनोगती पूर्णिमाभ्यर्णमासाद्य सद्यस्तस्यां वरिवस्यापूर्वकं सर्वं निवेदयिष्यतः ॥

---

(१) बलेन।

सापि वक्ष्यति । तदपि भद्रमेव । किन्तु वर्य्याः[१] परमवर्य्या राधादयः कथं वा न स्वीकार्य्याः ।

तौ तु सवैलक्ष्यं वक्ष्यतः । काः खलु राधिकाद्यभिधाः ॥

सा वक्ष्यति । धन्यानां वृषभान्वादीनां कन्या एव ॥

पुनस्तौ वक्ष्यतः । सुध्यादिगुरो ! न बुध्यामहे । निःशोध्यं[२] तु बोध्यतां ॥

सा तु सहासं वक्ष्यति । यथा कात्यायन्याराधकानां कन्या त्वमेवमन्यासां राधिकादिकानामपि ॥

तौ पुनरुत्फुल्लनयनं वक्ष्यतः । विस्पष्टं कथ्यतां ? यदि विषयमयेऽप्यस्मादृशि कृपाविषयता चर्य्यते ॥

सा वक्ष्यति । भवन्तः खल्विदं नानुभवन्त इव सन्ति । यत्पुनरद्यापि कन्या एव ता धन्याः । मायाकल्पितच्छायाप्राया एवान्यत्र परिणायिताः । तच्च स्वप्नत एव । तस्मान्मर्य्यादालङ्घनपर्य्ययायता एव च शय्यादौ पर्य्यवसायन्त इति किञ्च तदिदं किञ्चन भवन्तावनु सवेदनं निवेदयामि ॥

---

(१) पतिम्वरा च वर्य्याच ।
(२) निर्धिक्तं शोधितं मृष्टं निःशोध्यमनवस्करं ।

तास्तदेकानुरक्ता मादृशसान्त्वनया परमद्यावधि धैर्य्यसम्पृक्ताः सम्प्रति तु त्यक्तमात्रारिक्तप्राणगात्रा भविष्यन्ति ॥

तासां तदिदं न केवलमहमेव विदत्यस्मि। किन्तु सर्वापि व्रजजनता ॥

तच्च पूर्वमपि किञ्चित्किञ्चिद्विशेषतस्तु कृष्णाकृत-वृष्णिस्थानप्रस्थानगततदनवस्थावस्थायां यत इदं मुनयोऽपि वर्णयिष्यन्ति ॥

तत्र पूर्वं यथा।—

"कुजगतिं गमिता न विदामः कश्मलेन कवरं वसनं वा" इत्यादिना ॥

उत्तरन्तु "निवारयामः समुपेत्य माधवं किन्नो ऽकरिष्यन् कुलवृद्धवान्धवाः" इत्युक्त्वा "विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द! दामोदर! माधवे"त्यादिना ॥

"कृष्णादूते व्रजायाते उद्धवे त्यक्तलौकिकाः" इत्यादिना।

"गतह्रियः" इत्यादिना। "मातरं पितरं भ्रातॄन् पतीन् पुत्रान् स्वसॄरपि। यदर्थे जहिम दाशार्ह दुस्त्यजान् स्वजनान् प्रभो" इत्यादिना ॥

"या दुस्त्यजं स्वजनमार्य्यपथञ्च हित्वा" इत्यादिना च तत्र पतीन् पुत्रानिति यदुक्तं तत्खलु गौणीमेव वृत्तिमनुक्रम्य न तु मुख्यामिति भवत्प्रश्नानुक्रमेण प्रख्यास्यामि ॥

तत्र यद्यन्यथा मन्यध्वे तर्ह्येवमाचक्ष्महे ।

नरकादानीतगुरुकुमारतया जितधर्मराजधामा राजदघजिन्नामा सोऽयमेतदनुरक्तजनोऽप्यधर्मस्य कलयापि स्प्रष्टुं द्रष्टुञ्च न शक्यत एव ॥

किन्तु लज्जामात्रं तस्य तस्य च मर्य्यादापर्य्यापकमिति न केवलं रागत एव तास्तादृशीं गतिमागताः किन्त्वनादिसिद्धस्वभावतया तद्वधूभावतश्चेति मन्त्र-द्रष्टारोऽपि निष्टङ्कयन्ति ॥

तदेतद्बलरामोद्धवौ च सुष्ठु जानीत इति तावपि प्रष्टव्यौ । अन्यथा तासु तत्सन्देशहरता तयोर्न देशरूपतामासीदेत् ॥

पुनस्तौ वक्ष्यतः । वत्सः किमिदमनुसन्दधाति ? । सा वक्ष्यति । स च पूर्वं किञ्चिदनुसंहितवानासीत् । उत्तरन्तु सम्यग्विदन्नेवास्ते किन्तु सम्प्रति लज्जया नावधानं सज्जयति ॥

---

तौ वक्ष्यतः । तासां तदर्थप्राणजिहासां किमसौ जानाति ? ॥

सा वक्ष्यति । उक्तमेव सम्यग्विदन्नास्त इति ।

यतः पूर्वमप्युद्धवे तथा समुद्दिष्टं कृतवान् यथा च तद्वचनं सत्यवचसश्च गास्यन्ति ।

"गच्छोद्धव ! व्रजं सौम्य ! पित्रोर्नः प्रीतिमावह ।
गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय ॥
ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ।
मामेव दयितं प्रेष्ठमात्मानं मनसा गताः ॥
ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहं ।
मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ॥
स्मरन्त्योऽङ्ग ! विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ।
धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान्कथञ्चन ॥
प्रत्यागमनसन्देशैर्वल्लव्यो मे मदात्मिकाः" ॥ इति ॥

अत्र "मत्सन्देशैरिति" मय्यावेश्य मनः कृष्णे विमुक्ताशेषवृत्ति यत् । अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथे"ति पर्य्यवसानैरित्यर्थः । "मामेव दयित"मिति "मे वल्लव्य"इत्यत्र तु विशेषोऽप्यस्ति तस्मात्तदेकव्रजजीवनव्रतानां तद्भार्य्याणां नान्या गतिर्न्याय्या ॥

कृष्ण उवाच ।— ततस्ततः ? ॥

ऋषिरुवाच ।—

ततस्तौ भावयिष्यतः ॥

सत्यमस्माकं प्रकटतरेऽपि लोकधर्मघटनानर्ह-प्रतीकारेऽपि तासां विघटनदुःखे यद्यापि स्नुषाकरणस्पृहा नापयाति ॥

प्रत्युत सातत्यत एव, तासु स्नुषाभानं विभाति ।
धर्मान्यथाभावे तु, नास्माकं भावे तदुदयेत् ॥इति॥

अथ स्पष्टं वक्ष्यतः ॥

रहस्यमिदं लोकाः कथं मंस्यन्ते ॥

सा वक्ष्यति ।—

मायायाः स्वभावव्याप्तिरियमव्यभिचारितया लक्ष्यते ।
यदवश्यमायत्यां विदितरहस्यतामायातीति ॥

तदपि प्राप्तकालतां कलयति स्म ॥

यतः ।—

सर्वेषामपि सत्सङ्कल्पानामुपरिप्रभवतोर्भवतो-र्निगूढा या तदर्थमुत्कण्ठा सा ह्यधुना परां कोटि-मारूढा झटितिरूढकार्य्या भवेदेव ॥

तौ वक्ष्यतः ।—

स्वीयामनन्यसम्बन्धितां ताः कथं बिदन्ति ॥

सा वक्ष्यति ।—

"पूर्वं स वो हि स्वामी भवती"ति दुर्वाससो वचनेनापि सम्यङ्नाविदुः । किन्तु पश्चाद्विविदुः ॥

तौ वक्ष्यतः ।—

कथमिव ? । सा वक्ष्यति ।—

उद्धवेन श्रीकृष्णाभिप्रायमनुव्यक्तीकरणात् ॥

अतएवोक्तं ।—

"अपि बत मधुपुर्य्यामार्य्यपुत्रोऽधुनास्त"इति ॥

तौ वक्ष्यतः ।—

तासां श्वशुरम्मन्यादीनां येऽनुगतास्ते प्रायेणानुतापं प्राप्स्यन्ति ॥

अथ सा तु परुषमिव वक्ष्यति ।—

तत्किमासां परमसाध्वीनां माध्वीकवन्मधुरस्निग्धतावलितानां दुष्करतरणादुःखभास्करपुष्कलतापशुष्कता सोढव्या ॥

तथा सर्वधुरीणताप्रवीणस्य निजकुलधुरन्धरस्य गोवर्द्धनधरस्य दुर्धरलज्जाभारसज्जनमनुमोदनीयं ॥

वस्तुतस्तु तेषामपि न सुखभङ्गप्रसङ्गः ।

"यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते" इति श्रीब्रह्मवचनात् ।

"कृष्णेऽर्पितात्म–सुहृदर्थ–कलत्र–कामा" इति श्रीशुकवचनादपि ॥

तथा च रचनमस्माभिराचरणीयं यथा सर्वसुख-सचनमेव स्यात् ॥

तदेतन्निरूप्य सा पुनः सहासं वक्ष्यति ।—

साम्प्रतं प्रततं कुतुकान्तरं भवद्भ्यां किल नावकलितं ।

यत् खलु युष्मन्नन्दन आनन्दद्यूते तासां पति-म्मन्यांस्तत्पर्यन्तं सर्वं जितवान्[1] । लज्जामेव सज्जन्न तद्गृहमानीतवानिति ॥

तदिदं गुप्तमपि कूर्मादिवराहनामा भगवानपि स्वपुराणे साक्षितया लक्षयतीति सर्वथात्र नान्यथा मन्तव्यं ॥

यथा ।—

द्यूतक्रीडा भगवता कृता गोपजनैः सह ।
पणावहासरूपेण जिता गोप्यो धनानि च ॥
गोपैरानीय तत्रैव कृष्णाय विनिवेदिताः ॥ इति ॥

तौ वक्ष्यतः ॥

तत्पित्रादीनां तन्मित्रादीनां वा को व्यवसायः ॥

---

(१) द्विकर्म्मकोऽयं ।

सा वक्ष्यति ।—

तेऽपि मयोपदिष्टं तत्त्वीकृत्य पृष्टकृत्यास्तदिद-मुद्दिष्टवन्तः ॥

अहो ! परस्पर्शसुभीरु यद्वपु-
र्यत्कृष्णसारप्रणयैकशर्म च ।
तासां मृगीणामिव तत्परं प्रति
प्रदित्सवो(१)व्याधमनांसि विभ्रति ॥

तौ वक्ष्यतः ।—

राधिकाद्याराधिकानां का वार्त्ता ? ॥

सा वक्ष्यति ।—

मत्पृष्टाभिस्ताभिरप्येवमादिष्टं ।—

यथा सीतादेव्या दशमुखकृतार्त्तिर्विपदभूद्
यथा वा रुक्मिण्या विवहनविधिश्चेदिपकृते ।
तथा राधादीनां परगृहगतिर्या बत विपत्
कथं तस्या नित्या स्थितिरभिमता हन्त ! सुहृदाम् ॥

तौ वक्ष्यतः ।—

अथ राधिकादीनामार्त्तानां का वार्त्ता ॥

(१) प्रदातुमिच्छवः ।

सा वक्ष्यति ।—

देयमधीनं कात्स्न्र्ये,नाभिव्याप्त्या च तत्र कृष्णे स्वं ।
तद्रूपं रचयित्वा,सातिप्रत्ययपदानि ता दधिरे[१] ॥

तौ वक्ष्यतः ।—ताः किं साक्षादनुयुक्ताः[२] ? ।

सा वक्ष्यति ।—

अथ किं ! यतस्तासां मर्मप्रकटनकर्मठतया मया पृष्टं । भो ! विपश्चितः काश्चिदेवं वदन्ति ॥ ताः खलु कृष्णे प्रेममात्राखर्वसर्वस्वाः प्रेमा च वलवद्विरोधिसद्भावमिलद्द्वयप्रयासप्रच्छादनपरिच्छदतया यथा वर्द्धते न तथान्यथा ॥

---

(१) कृष्णे स्वं देयं कृत्वा अधीनं कृत्वा । कात्स्न्र्येन तद्रूपं कृत्वा । अभिव्याप्त्या च तद्रूपं कृत्वेत्यन्वयः । तथा च पाणिनिसूत्राणि । देये त्रा च । यथा विप्रसात्कृतभूयसीर्भूवः । तदधीनवचने । यथा रागसात् करोत्यात्मानं । विभाषासातिः कात्स्न्र्ये । यथाकाष्ठं भस्मसात्करोति कात्स्न्र्येन भस्मरूपं करोतीत्यर्थः । अभिविधौ सम्पदा च । यथा लवणमुदकसात्करोति । अभिव्याप्त्या सर्वतोभावेन लवणमुदकं करोतीत्यर्थः । पूर्वपूर्वार्थे दर्शितस्य सातिप्रत्ययस्य पदानि । दानप्रत्ययचिह्नानि । सातिर्दानावसानयोरिति नानार्थः । पदं व्यवसितित्राणस्थानलक्ष्मांघ्रिवस्तुष्विति नानार्थः । पादन्यासे पादचिह्ने सुप्तिङन्ते चेति त्रिरः ।

(२) पृष्टाः । प्रश्नोऽनुयोगः पृच्छा चेत्यमरः ।

तर्हि कथं तासामप्यन्यासामिव पतितया तनू-सम्पत्तिकामनानिकाममन्तरनुवर्त्तत इति ॥

तदेतदवकर्ण्य पाटलपटल(१)सवर्णवर्णिन्य-(२)स्ता वरवर्णिन्यस्तद्विदमवर्णयन्त ॥

हन्त ! तासामेव सविरोधस्तदवरोधः(३) सम्भवता-हृतीयमान(४)द्वितीयपतिभावना च। न पुनरन्यस्याः कस्याश्चिदपि।

या खलु तदवरोधविरोधवाञ्छा सा वा कथं प्रेमप्रथनमयी स्यादिति न बुध्यामहे ॥

अस्माकं "यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्याङ्घ्रियुगं नवं नव"मित्येव बोधविषयो भवति ॥

किन्तु।—

बुधिताः पैतृकजनता, बुद्धाः श्वशुराभिमानिनो लोकाः।
मानिताः सर्वेऽप्यस्माभिर्न मतो धर्मस्तु केनापि ॥

यदस्माकं बाल्यादेव तस्मिन् निजरमणता-भावनां दूरीकर्त्तुमाग्रहमुरीकुर्वन्ति। तस्मादस्मान्मा स्नेहपेषं पिण्ढि किन्तु स्वाभीष्टमेव विशिण्ढि ॥

---

(१) समूह। (२) उत्तमाः स्त्रियः। (३) तत्प्राप्तिः। (४) घृणास्पद। ऋतीया च घृणीया च घृणार्थके इत्यमरः।

अथ तौ वक्ष्यतः ।—

भवत्या किमुद्भावितं ? ॥

सा वक्ष्यति ।—

ततो मया हसित्वा श्वसित्वा च ताभ्यः प्रत्याशामात्रं प्रत्यासादितमस्ति । यदि भवतोरिच्छा समृच्छते ॥

तास्तु दैवतस्तावन्निजप्राणवल्लभस्य वल्लभत्वेनालाभाल्लब्धमहादुःखास्तत्र च स्वस्यान्यहस्तपतिततया जुगुप्सितम्मन्यता शुष्कास्तत्र च प्रियाप्रियविप्रकर्षसन्निकर्षतः प्राप्तमनोधर्षास्तत्र च निरन्तरं शङ्कमानैः पतिम्मन्यादिभिर्मङ्क्षु मङ्क्षुकृतनिवारणभर्त्सनादिनिकर्षास्ततस्तत एव च "दुःसहप्रेष्ठविरहतीव्रतापे"त्याद्युक्तताद्दृगवस्थाभ्योऽपि महानुरागतः पीडनाद्बहुलदहनाकारकारागारवसतिम्मन्यतया निर्गीर्णसर्वक्षणां क्षणमपि कल्पं मन्वानाः सम्प्रति तदीयमहाविरहवहसमयमतीत्य चात्मनां तदुपेक्ष्यतामप्युत्प्रेक्ष्य लज्जामात्रपर्यवसानमासज्य च धिक्कृतम्मन्या दशमीमपि दशां तन्वानाः ॥

———

किं वहुना? वहिरन्तः सुकुमारतायामपि कौमारत एव व्याधानुविद्धस्निग्धकाननप्रत्यासत्त्य-परित्यागिमृगीवत् प्रखरदरापारपरपारवश्यलब्ध-विचित्रदुर्गतिसम्प्लुततया पश्यतां शृण्वतामपि हृदयं धुन्वाना रसोऽयमिति मन्यमानेन निष्क-रुणाकौतुकेन केनचिदेवोपेक्षितुं शक्यन्ते न पुन-रन्येन ॥

तौ सास्रं वक्ष्यतः।—

सम्प्रति ताः कां गतिं मतिमासादयन्ति? ॥

सा वक्ष्यति।—

कुर्वन्ति मौनं क्रन्दं वा शून्यं पश्यति वर्त्म वा।
कृष्णं वाञ्छन्ति मृत्युं वा तासामेवम्विधा गतिः ॥

पुनस्तौ सास्रं वक्ष्यतः।—

सम्प्रति ताः प्रति वत्सस्य का विधित्सा? ॥

सा वक्ष्यति।—

तदेतत्पश्चादपि निश्चीयतां। यत्खलु प्रेयसां क्षेमाक्षेमं तद्भावनामयप्रेमानुरूपमेव सख्ये मानं लभते न तु स्वाग्रहग्राहिलतामिति ॥

तौ वक्ष्यतः।—

मन्यामहे तथाप्यस्मत्तः सङ्कोचं रोचयिष्यति ॥

सा वक्ष्यति ।—

भवतां हृदि सदा विद्योतमानः सोऽयं तदपि वेत्ति तस्मान्नितान्तं नान्यथा करिष्यति ।

किं बहुना ? भवदाश्रव[१]मनु सर्वेषामेव संश्रवः[२] प्रतिभाति किमुत तस्य ॥

तौ वक्ष्यतः ।—

तर्हि गर्गनिषेधवेधस्य का चिकित्सा ? ॥

सा सहासं वक्ष्यति ।—

स खलु लीलानैयत्यमेव तत्रत्यदोषतयाध्यस्तवान् । स्वयजमानहितसमीहितसहिततया न तु परम-शुभनिवेशवेशरूपाणामासां क्लेशलेशप्रवेशदासदेशता सम्भवति ॥

तौ वक्ष्यतः ।—

सम्प्रत्यस्माभिः किमिव सोपानमुपेयं ॥

सा वक्ष्यति ।—

सोपानं ममाचेयं भवद्भिस्तु सर्व एव व्रजजना भोजनाय प्रणयेन नियन्त्र्य निमन्त्र्यन्तां ॥

तर्ह्यन्तःपटीक्षेपान्नटीनामाकार इव तत्प्रकटीभविष्यति ॥

---

(१) अङ्गीकारं ।　(२) प्रतिज्ञानाभ्युपगमानियमाश्रवसंश्रवाः ।

तौ वक्ष्यतः ।—

यथाज्ञापयन्ति विज्ञानाचार्य्यवर्य्याः ॥

कृष्ण उवाच ।—ततस्ततः ? ॥

ऋषिरुवाच ।—

ततः सा प्रत्यक्षत एव तावभिबहुलमभिवदन्ती गृहाय प्रह्लापयिष्यति ॥

अथ कथकस्य मनःकथा ।—

ततश्च पूर्णिमा मनसि विविवेच । श्रीकृष्णलीलायामनादिसिद्धं श्रीमद्भागवतमेव मुख्यं प्रमाणं ॥

तत्र या खलु रासयोगे "योगमायामुपाश्रित" इत्यनेन नित्यव्यक्तिस्वरूपशक्तिवृत्तिविशेषका या योगमाया तन्निर्वाहकतया वादरायणिना समुदीरिता सा पुनरहमेव ॥

तत्र तेन रासं प्रकाशं परीक्षित्परिषदि वर्णयित्वा तत्र प्राप्तअवर्ण[१]त्रितयं निरस्य रस्यतया समाहितं ॥

तथा सम्प्रति व्रजेऽपि तत्प्रसक्तमिति ज्ञात्वा मयापि समाधेयं ॥

---

(१) अवर्णाक्षेपनिर्वादपरीवादापवादवत् ।

"तत्र तेजीयसां न दोषाये"तिवदत्रापि यद्यपि नरकाद्यानीतेत्यादिना तल्लेपसम्भावनापयापितैव ॥

अथ परदारवारसमाहारकारणानाचारश्च यथा "गोपीनां तत्पतीनां चे"त्यनेन यं परिहारमापित-स्तथात्रापि ताश्च न केवलं रागत एव तादृशीं गतिमागता इत्यादिना तासु तदीयनित्याङ्गनाभाव-व्यञ्जतः स च साङ्गीकृतः ॥

तथापि "नासूयन् खलु कृष्णाये"तिवदसूया-भासवत्तया सम्भावितास्तत्पतिम्मन्याः समा-धातव्याः ॥

तच्च तद्रहस्यं पूर्वं गुप्तमासीदिति मायाद्वारा यथागुप्तं समाहितं साम्प्रतं तु व्यक्तमभूदिति तथा तद्वारा व्यक्तमेव समाधेयं। येन च सर्वेषामपि सर्व-समाधानमाधेयं भविता । अन्यथा तत्तत्करणं वृथा परं स्यादिति ॥

अथ स्पष्टमाचष्ट ॥

ऋषिरुवाच ।—

दिनान्तरे तु सर्वनिमन्त्रणायां तथावृत्तान्ते वर्त्तिते सर्वासाधारणमहोदयाः श्रीराधादयश्च तत्रा-गमिष्यन्ति ॥

किन्तु पूर्वत एव जनसङ्गीतव्रजेशनिर्मितानङ्गी-
कारणामात्मनां दुःखभङ्गिसङ्गितां मंस्यन्त एव।
तव च रूक्षतावीक्षणेन ताः सूक्ष्माङ्गतां गमि-
ष्यन्ति॥

तत्र साम्प्रतमन्यासां स्वसमानकन्यानामङ्गीकारेण
हृत्कमलेऽपि भङ्गितामापत्स्यन्ते॥

तथा च भावी श्लोकः।—

दावत्रस्ता मृग-दुहितरश्चन्द्रहीनाश्चकोर्य्यः
त्रस्ता वृत्तान्नवकलतिकानीररिक्ताः शफर्य्यः।
ऊर्ज्जप्रान्ताद्बहिरपगता हन्त! नव्याञ्जनाल्यो
यद्वद्दृष्टा हरिविरहिता राधिकाद्याश्च तद्वत्॥

तदेवं तासां कृच्छ्रायमाणानाममिताभ्यमितता-(१)
दृश्वरी श्रीव्रजेश्वरी तु वाष्पपूर्णनयना पौर्णमासीं
निवेदयिष्यति॥

सा तु वदिष्यति।—

सर्वे सर्वतोऽप्यन्विच्छन्तु॥

यथाद्यतननिमन्त्रणतः कश्चिदपि न पश्चिमता-
मश्नाति॥

---

(१) अपरिमितरुग्नता।

श्रीकृष्ण उवाच ।—ततस्ततः ? ॥

ऋषिरुवाच ।—

ततस्तदाकर्णनमात्रतः सर्वे सर्वतो निर्वर्णनाय सङ्गत्य सत्वरमेव चागत्य यथावत्कथयिष्यन्ति ॥

तेषु काश्चिन्महिलास्तु किञ्चिदप्यप्रस्तुत्य श्रीराधिकादिकाः प्रत्यपूर्वतापूर्वं द्रक्ष्यन्ति ॥

ततः पौर्णमासी वक्ष्यति ।—

किमिव पश्यथ । किमिव च किञ्चिन्न कथयथ ?

ता वक्ष्यन्ति ।—

किमिव वक्ष्यामः । यतः सर्वैराहतं मन्येत ॥

पौर्णमासी वक्ष्यति ।—

तथ्यञ्चेत्कथ्यतां ? मयि कृष्णमातरि च । तास्तु नीचैर्वक्ष्यन्ति ॥

तत्राप्येतासां राधिकादिकानां धृततुल्यतापूर्त्ती-मूर्त्तीरपश्यामः ॥

पौर्णमासी स्पष्टं वक्ष्यति ।—

अन्याश्च पुनरच्छगच्छन्तु ॥

कृष्ण उवाच ।— ततस्ततः ? ॥

ऋषिरुवाच ।—

ततो वहलकुतूहलवहा वहुला महिलास्तत्र तत्र

गत्वा ज्ञाततादृशतत्त्वाः पुनः पौर्णमास्यन्ते लब्ध-सत्वास्तद्वदेव वार्त्तयिष्यन्ति। वार्त्ता चैषा व्रज-राजसभापर्य्यन्तं पर्य्यवसिष्यति ॥

व्रजराजश्च पौर्णमासीमनु तूर्णमासाद्य प्रसाद्य च वक्ष्यति ॥

भगवति! परमविस्मापनमिदमस्मान् बोधय ॥

पौर्णमासी वक्ष्यति।—

भवत्कन्याभावाभिमानिन्यामार्य्यायामिदमाश्चर्य्यं पर्य्यवस्यति। भवांस्तु सर्वव्रजस्थं स्त्रीपुंसव्रज-मेकसभानुगतं करोतु ॥

श्रीकृष्ण उवाच।—ततस्ततः? ॥

ऋषिरुवाच।—

तदेतदवधार्य्य ज्ञातकार्य्यगतिना व्रजभूपतिना तदभिहिते तथाविहिते तव हितवती पौर्णमासी महितायां तस्यामेव सभायामाहितब्रह्मासनमासीना किमपि प्रणिहितवती भविता। तदाव्यवहित-मेव च सिंहपृष्ठाहितमहितविग्रहा महायुधाष्टक-वेष्टिता देवीगणसेविता देवी नभसः सरभसमवत-रिष्यति ॥

---

अवतीर्णमात्रा च पौर्णमास्या व्रजेश्वरयोः कृष्ण-कृष्णाग्रजयोरन्येषामपि भूमिस्पृशामभूमिस्पृग्मानिनी यथान्यायमभिवादनादिकमाकाशत एव प्रकाशयिष्यति ॥

ततः साश्चर्य्यं पर्य्यवलोकमानेषु तेषु देवी वक्ष्यति ।—

कथं वेह सन्देहः क्रियते । पूर्वत एव तावदुभयविधा एता नापूर्वतया मन्तव्याः । पूर्वासां सजातीया द्वितीया हि योगमायाज्ञया गर्गविघ्नं निघ्नत्या मायया मया निर्मिताः । संज्ञायाश्छायावत् रत्यास्तन्मायाकल्पितावच्च ।

ताश्चेमा गृहगृहात् सङ्क्रामीति तथाह्वाय सापक्षं कुलवधूमध्ये विधाय पुनर्वक्ष्यति ।—

लक्ष्यतां कुलपालिकाभिरुभयविलक्षणता । यत्परमलक्ष्मीलक्ष्माणि प्रागागतानामेव लक्ष्यन्ते नार्वागागतानां ॥

तथा मणितत्त्वदृशामिव तादृशां दृष्टिभिरेव नेत्रानन्दकसौन्दर्य्यविशेषवृष्टिस्ताभ्य एव लभ्या न त्वन्यासां । न च पुनराभ्यश्चाकूचित्रयाचिक्कणकाचतुल्याभ्यः ॥

कृष्णा उवाच ।—ततस्ततः ? ॥

ऋषिरुवाच ।—

अथ सर्वाभिस्तथा तदाश्चर्य्यं साक्षात्कार्य्यमाण-मवधार्य्य तदार्य्याणां समज्यायां निवेदयिष्यते । हन्त ! यथावदेव देवी वदतीति ॥

ततः श्रीव्रजराज-वचनं ।—

तर्ह्यधुना किं विधेयं ? । देवी वक्ष्यति ।—

भोजने निर्वृत्ते मन्निर्वर्त्तिताः स्वस्वपतिगृहमनु-वर्त्तन्ताम् । परास्तु कृष्णमात्रपतिसम्मतिपरायणाः स्वस्वपितृगृहं । मया तु यमुनातटेऽष्टहस्तालये स्थास्यते यथा यदा मातृचरणैराज्ञाप्यते तथा तदा व्यवहर्त्तव्यं ॥

कृष्णा उवाच ।—ततस्ततः ? ॥

ऋषिरुवाच ।—

तदेवमाप्रच्छन[1]पूर्वकमापृच्छ्य प्रच्छन्नायां देव्यां सर्वेषु वल्लवनिलयेषु प्रह्लन्नेषु वर्णानां वरवर्णिनीभि-र्वर्ण्यमानं तदाकर्ण्य भवत्पतिव्रतास्तु तत्क्षणा-देव जूर्त्तिपरित्यक्तमूर्त्तिकाव्यक्तनिजकान्तिस्फूर्त्ति-काश्च भविष्यन्ति ॥

---

(१) द्वे आनन्दनसभाजने आप्रच्छने ।

तथा हि ।—

राहुग्रासादिव शशिकला वारिदाद्भृत्तमाला
वर्षाघर्षात्पुलिनरुचयः स्पर्शनाद्दीपलक्ष्म्यः ।
निष्कम्पामूः परपरिभवात्तत्त्वतां विन्दमानाः
कान्तिं स्वीयां मथनकहनं मोचयेयुर्जनानां ॥

तत्र च ।—

तारासु चन्द्रवलपस्य कलाः कलासु
तस्यातिचारु दधते स्फुरणं यथा श्रीः ।
गोपाङ्गनाह्वयरमासु विशाखिकादि-
सख्यः सखीषु च तथा वृषभानुपुत्री ॥

कृष्ण उवाच ।—ततस्ततः ? ॥

ऋषिरुवाच ।—

ततो दैव्यादेशावेशवशा यथायथं ते विहितवन्त एव । तथापि विधिं विना न संग्राह्यास्ता इति श्रीव्रजराजादिभिर्विहिते च तस्मिन् विवाहविचारे भवांस्त्वग्रजस्य विवाहार्थमागृह्य तं तदर्थरचित-कौमारा द्वारकात आगत्य कदाचित्तेम प्रसादीकृत-स्वविहाराः । काश्चिन्नित्याकिशोरिका विधिना च विवाह्य नैरपेक्ष्यमिवावगाह्य विगतपूर्वाशङ्काः परम-ललितमाधवसमयमालम्ब्यालङ्कृतपूर्णमनोरथाङ्कः

श्रीव्रजराज-गृहिणी मुहुरागृहीततया शनैरेव स्वविवाहमङ्गीकारसङ्गिनं करिष्यति ॥

तत्र बहुलमहसा श्रीरामविवहने जाते तं जातं समासतः समासां[1] सममेव त्वत्कृतविवाहमेवं वर्णयिष्यन्ति ॥

गोधुङ्न्यर्वुदगेहगेहवल्लवद्वाद्यानवद्यध्वनि-
प्रोल्लासिव्रजमण्डले दिविषदां वादित्रचित्रे महे ।
आदानप्रतिदानदानरचनोदारैः सदारैर्नरै-
र्निर्व्यूढा मुरजिद्विवाहपटली ज्ञाता न तत्तद्विदा ॥

तदेवमङ्गीकारेण च "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमि"ति भवतः समाधिः[2] समाधीयेत ॥

अत्र ये यथेति ये यदिच्छयेत्येवमेव विवक्षितं । यतश्च साधारणजनमन्वनुरागलङ्घितलोकधर्म-मर्य्यादासङ्गानामङ्गनान्तराणामप्यन्तर्वृत्तिस्तत्तद्-गृहिणीपदस्पृहिणी दृश्यते । किमुत भवन्तमनु सन्ततप्रियाणां मायामयात्ययादेव लब्धान्यथा-भावप्रायाणां "गोप्यः किमाचरदयं कुशलं स्म वेणु-

---

(१) सर्वासां । (२) प्रतिज्ञा ।

दामोदराधरसुधामपि गोपिकानां । भुंक्त" इति तद्वाक्यव्यक्ततादृशाभिप्रायाणां स्वतस्तादृशाभिप्रायत्वे सत्यपि भ्रमरगीताया"मपि वत! मधुपुर्य्या"मित्यादौ"भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत् कदा न्वि"त्यनेन तदीयं प्रकटतथास्वीकारं प्रार्थयमानानां भवद्गृहिणीभावस्पृहावृंहणमिति स्थिते तथैव तद्योजयितुं शक्यत इति । सर्वेषामस्माकं धैर्य्यपर्य्यापणामेव भवताचरिष्यते ॥

यतः ।—

गतानामुत्पत्त्या त्वयि रतिमपि त्वद्विरहना-
न्निरस्तानां तत्प्राप्त्यभिलषितसंन्यस्तजगतां ।
अमूषामुत्कण्ठा यदि हतफला तर्हि वलतां
कथम्वा विश्वासस्त्वयि मुरहरास्माकमभितः ॥

तदेतदवधाय मधुकण्ठेनामुक्तकण्ठमनुसन्धीयते स्म ॥

अहो ! तदेतत्पर्य्यन्तं फलमागताया भगवल्लीलालताया माधुर्य्यप्रसविता ॥

तथाहि ।—

प्राग्दूरप्रियता ततो गुरुजनध्वस्तप्रयत्नात्मता
तत्पश्चाच्छुतिलोकलङ्घिरभसाद्दुष्प्रा प्रियाङ्गीकृतिः ।

तस्माद्दूरमहावियोगचिरता तत्प्रान्तमुद्वाहृतः
प्राप्तश्चेन्मिथुनं मिथो हरिरमा-रूपं सुखं किं परं ॥
इति ॥

अथ प्रकृततत्कर्त्तृककथा ।—

कृष्ण उवाच ।— ततस्ततः ? ॥

ऋषिरुवाच ।—

ततश्च सर्वेषां गतये दुहितुः[१] पतये तुभ्यं कौतुकावहानि वहूनि यौतुकानि परमधन्यां निजकन्यां च प्रस्थाप्यते । गोपाः सोपाध्यायाः सदा तदा ध्यायं ध्यायं दिवस्पृथिव्यावपि स्वानन्दसमुद्रमुद्रिते करिष्यन्ति ॥

कृष्ण उवाच ।— ततस्ततः ? ॥

ऋषिरुवाच ।—

तत्र च कविलोकानां श्लोकावेतावुदेष्यतः ॥

यह्यायाता व्रजनृपगृहं राधिकाद्यास्तदासां
स्वज्योत्स्नाभिस्तदलमभवद्धेमधामप्रकारं ।
गोलोकाख्यं पदमुदयिता यत्तु तस्य प्रकाश-
स्तासां श्रीणामनुगत इति द्योतनं यत्र जातम् ॥

(१) विभाषा स्वसृपत्योरित्यलुक् ।

असंख्यगणनस्नुषागणनिवासमाकस्मिकं
कथं व्रजपती तदा विदधतुस्तथा तच्छृणु ।
गृहा इव तरुव्रजा यदिह भान्ति यावत्स्पृहं
वनान्युपवनप्रभाण्यतिसहस्रसंस्थान्यपि ॥

तदेतदवधाय मधुकण्ठेनामुक्तकण्ठं पुनरनुसन्धीयते स्म ॥

वाढं विवाहादिभिरसङ्कोचे विरोचमान एव गोपजातिभिर्नारीभिः सह गोपजातियोग्यवेषधारिणस्तस्य लीलानैरन्तर्य्यमपि तदौचिततया पर्य्यालोचितं पाद्मोत्तरखण्डे दन्तवक्रवधानन्तरतद्व्रजागमने ॥

यथा ।—

कालिन्द्याः पुलिने रम्ये पुण्यवृक्षसमाचिते ।
गोपनारीभिरनिशं क्रीडयामास केशवः ॥
रम्यकेलिसुखेनैव गोपवेशधरः प्रभुः ।
बहुप्रेमरसेनात्र मासद्वयमुवास ह ॥ इति ॥

किञ्च ।—

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपाः"
इत्याद्यप्यधियन् कयाचिदुदितं गोपालिकागीरिति ।

भावोन्मादजगाननृत्यविवशः श्रीगुण्डिचापर्वसु
श्रीचैतन्यतनुर्मतं स भगवानङ्गीकरिष्यत्यदः ॥

तदीदृगेव भाविनि विदग्धमाधवललितमाधवाह्वये पूर्वोत्तरनाटकद्वये सर्वरचनायाः परमफलतया सर्वान्ते प्रकारान्तरेणावकल्पते ॥

तवात्र परिमृग्यता किमपि लक्ष्मसाक्षादियं मया त्वमुपसादिता निखिललोकलक्ष्मीरसि ॥

यथा जगति चञ्चता चणकमुष्टिसम्पत्तये ।
जनेन पतिता पुरः कनकवृष्टिरासाद्यते ॥

इति श्रीकृष्णवाक्यादिना ॥

सख्यस्ता मिलिता निसर्गमधुरप्रेमाभिरामीकृता
यामी[१]यं समगंस्त संस्तववती[२]श्वश्रूश्च गोष्ठेश्वरी ।
वृन्दारण्यनिकुञ्जधाम्नि भवता सङ्गोऽप्ययं रङ्गवान्
सम्वृत्तः किमतः परं प्रियतरं कर्त्तव्यमत्रास्ति मे ॥

इति पूर्णमनोरथाङ्कुरपूरकश्रीराधावाक्यपर्य्यन्तेन ग्रन्थेन ॥

तदिदमत्र श्रीभगवद्भक्तिरसामृतसिन्धुनिधिरूप-श्रीमदुज्ज्वलनीलमणावपि सर्वरसपरीपाटीपूर्त्ति-

---

(१) भगिनीरूपचन्द्रावली । (२) परिचिता ।

सारमूर्त्तिसमृद्धिमदाख्यसम्भोगतया दर्शितं । तेषामुपासनावासना चेद्दृश्येव तदीयश्लोकेनाव-लोक्यते ॥

गोपेशौ पितरौ तवाचलधर ! श्रीराधिका प्रेयसी
श्रीदामा सुवलादयश्च सुहृदो नीलाम्वरः पूर्वजः ।
वेणुर्वाद्यमलङ्कृतिः शिखिदलं नन्दीश्वरो मन्दिरं
वृन्दाटव्यपि निष्कुटः परमतो जानामि नान्यत्प्रभो ! ॥

इति ॥

अथ पुनः श्रीकृष्ण-नारद-सम्वादं मधुकण्ठः कण्ठतः प्रकटयामास ॥

ऋषिरुवाच ।—

तदेवं मासद्वितये सर्वेषामेव परमानन्देन लब्ध-व्यत्यये दत्तव्रजोद्धवः कदाचिद्भवान् रामोद्धवाभ्यां समं सम्मन्त्र्य श्रीव्रजमहेन्द्रादीन् परमगौरवादा-मन्त्र्य निवेदयिष्यति ॥

अधुना यद्याज्ञा राज्ञामाज्ञायेत तदा स्यन्दनोऽयं सदारुको द्वारकां विन्देत ॥

अथ परमहृदयालुता(१)मयदयालुरसौ श्रीव्रज-राजस्तु वक्ष्यति ।—

---

(१) हृदयालुः सहृदय इत्यमरः ।

यथा तत्र मङ्खातृप्रभृतीनां भृतिभुक्[(१)]पर्य्यन्तानां दुःखं न स्यात्तथा च प्रथनीयं ॥

भवान् वक्ष्यति ।—

सर्व्वथा सर्व्वेषामाहृत्यास्तत्र भवतां भृत्यास्तत्र प्रद्युम्नादयः प्रद्योतन्त एव ॥

तथापि भवतामपूर्त्तिश्चेत्तदा भवदाराधनवशतयास्मन्मूर्त्तिव्यूहमपि तत्र नारायणः पारयिष्यति ॥

पुनर्व्रजराजो वक्ष्यति ।—

रोहिणीरामवदयमुद्धवश्चास्मदेकसम्पदुद्धवस्तस्मादयमपि तथाचरणीयः ॥

भवान् वक्ष्यति ।—

यत्र भवदिच्छा तदा किं न सेत्स्यति । किन्त्वाज्ञान्तरं ज्ञापय ॥

व्रजराजो वक्ष्यति ।—

जैवातृक![(२)]भवतामक्रूरादिरचितेनातिचिरं भवता विरहेण चिराय तदन्तिमः सर्व एव जीवः सुष्ठु दुर्जीवनमवाप ॥

---

(१) भृतिको भृतिभुक् कर्म्मकरो वैतानिकश्च स इत्यमरः ।
(२) दीर्घायुष्मन् । जैवातृकः केशो चन्द्रे भेषज्यायुष्मतोरपि इतिविश्वः ।

ततो न किमपि प्रत्येति । ततस्त्वद्विरहपरिहाराय नान्यजनलोचनगोचरः स्यामिति प्रार्थयते ॥

ततो निःशलाक[1]मालयविशेषं संश्लेषय ॥

भवान् वक्ष्यति ।—

हन्त ! वृन्दावन एव तादृशं प्रकाशवृन्दं वर्त्तते ॥

यत्खलु ब्रह्महृदे निमज्ज्य पुनस्तस्मादुन्मज्ज्य च भवद्भिः पूर्वमप्यपूर्वं दृष्टमस्ति । ज्ञाताङ्गस्यास्य कामं गामितया तत्प्रवेशितापि प्रतिवेशीयते ॥

ततो यथाज्ञाप्यते प्राज्ञानां राजा ॥

व्रजराजो वक्ष्यति ।—

वत्स ! तदेव प्रच्छन्नं वनं गच्छामः ॥

ततः सप्रतिश्रवश्रवणां[2]भवान् वक्ष्यति ।—

यथा महेच्छाना[3]मिच्छा तथैव सेत्स्यति ॥

पुनश्च ।—

तिर्य्यगवेक्ष्य पार्श्वलक्ष्यं दारुकमादेक्ष्यसि ॥

सारथे ! तथा रथं प्रथय यथा सर्व एव व्रजस्तत्रान्तर्भवंस्तद्धाम प्रविशंश्च धामग्रामतः[4]सर्वासिनामपि दृगारामतां नासीदति ॥

---

(१) विविक्तविजनच्छन्ननिःशलाकास्तथा रह इत्यमरः ।

(२) साङ्गीकारश्रवणं यथा स्यात् ।

(३) महेच्छस्तु महाशय इत्यमरः ।

(४) कान्तिसमूहेन ।

अथ तेन सूतेन तु तथाकृतप्रथे रथे सर्व एव व्रजप्राणिव्रजः स्वैरं निविशमानस्तं देशं प्रविवेश॥

तदेवं सति।

उत्सर्पज्ज्योतिरालीविभववशतया तं रथं तूर्द्धभाजं
धर्मात्मा मेनिरे तद्युपरिगततया तत्पदोपासकाश्च।
कृष्णाब्रह्महृदात्प्रागपि मुरजयिना
लम्भिता गोमिनो या
तां वृन्दारण्यमध्ये गतिमिह सुगतं[(१)]
तद्विदश्चार्वपश्यन्॥

तत्र पर्जन्यवर्य्याश्च ये गताः प्रागदृश्यतां।
द्रक्ष्यन्ते तेऽपि तत्रैव तदाश्चर्य्यं भविष्यति॥

ततश्च।—

वृन्दारण्ये सकलपद्रुमविविधलतामञ्जुकुञ्जादिधन्ये
घोषे चिन्तामणीन्द्रप्रथितनिलयता
चित्तवृत्तिप्रमोषे।
रामाद्यैः कामधुग्गव्यनुगतिकुतुकी
लब्धलक्ष्मीप्रकार-
श्रीगोपीप्राण-सारः स जयति नितरां
गोप-गोप्तुः कुमारः॥

---

(१) सुखेन प्राप्तं तं रथमित्यन्वयः।

अथ स्निग्धकण्ठ उवाच ।— ततस्ततः ? ।

मधुकण्ठ उवाच ।—

तदेवमन्यं च वृत्तान्तं वर्णितवान् । श्रीमान् व्रजसुखवर्षी देवर्षिश्च परस्परं हर्षितां प्रपन्नः सवाष्परोमहर्षादिभिः सम्पन्नः स्निग्धसम्वाद-विच्छेदतः परिखिद्य शनैरेव च विच्छिद्य स्वस्व-वर्त्मानुवर्त्तते स्म । श्रीमद्व्रजेन्द्रनन्दनस्तु तत्कथा-पर्य्यन्तानन्देन पर्य्याप्तः सर्वं तद्दुःखजातमाच्छन्न-तामापन्नमेव चकार ॥

तत्र भगवन्तः श्रीदेवर्षिचरणा यद्यद्भावितया समुद्भावितवन्तस्तत्सर्वमभूदेव ॥

तदनन्तरमपि यथा व्रजस्य राज्ञानुज्ञापितं तथा वासुदेवप्रसादाद्वसुदेवप्रवीणानां तद्वर्त्मवीक्षादीना-नां(१)दारुककथिततत्तद्वृत्ताभोग(२)भोगपीनानां स्वल्प-कालतामापक(३)मायाधीनानां तदागमनाशया बहि-रेवासीनानां तदिष्टसिद्धिरिन्धाम्बभूवेति ॥

तदेवमाकर्ण्य सर्वेऽपि सभासदः प्रोचुः ॥

---

(१) तस्य श्रीकृष्णस्य पथि या वीक्षा तया दीनानां ।
(२) वृत्तं चरित्रं । आभोगः परिपूर्णता । (३) ज्ञापक ।

ततस्ततः ? । मधुकण्ठ उवाच ।—

ततश्च सर्वसुखारामाभ्यां श्रीरोहिणीरामाभ्यां गोपोचितवेशाद्यभिनिवेशलब्धसखिगणप्रवेशोद्भवेनोद्भवेन च सार्द्धमस्मिन्नेव गोलोकनामके परमदुरवलोके लोके परमविभववतां भवतां मध्ये विभवन्नेव सोऽयं विराजते ॥

पुनः सर्वेऽप्यूचुः ।—ततस्ततः ? ।

मधुकण्ठ उवाच ।—

सर्वतः प्रसरदमन्दभवदानन्दकल्लोलल्लोलन्मनस्तया वयमप्यागम्य भवद्भवदीयकृपामात्रगम्यं रम्यं वासवर्य्यमजर्य्य(१)सङ्गममासादयाम ॥

श्रीव्रजराज उवाच ।—

कथं कथमिति कथ्यतां ? ॥

मधुकण्ठ उवाच ।—

पूर्वं तावदस्मदीयानां दुष्प्रारब्धवशादद्यश्वश्विचलिषयाश्राशुयात्रायां विलम्बनमासीत् । तत्र च सति श्रीमद्व्रजप्राणस्य यदुषु संक्रमणमवकर्ण्य प्राणवियोजनमिवासीत् । चिराय तु व्रजे तत्प्रति-

---

(१) न जीर्य्यतीत्यजर्य्योऽनश्वरस्तादृशः सङ्गमो यस्य तं । अजर्य्येति यान्तनिपातनात् सिद्धं ।

संक्रमणञ्चाकर्ण्य सद्यश्चलितुमुद्यमे कृतप्रक्रमे-(१) तद(२)नुगतव्रजजनस्य मर्त्यलोकालोकपथादन्तर्धानमवधार्य्य वारिधिप्रवेशमुपच्छतां(३)दयावर्षि-श्रीदेवर्षिचरणाचरितनिदेशमुपनिषत्कृत्य जीविकाकृत्य(४)च श्रीवृन्दावनागमनं जातं। जाते चागमने तत्तत्पदं कृष्णारूप्यक्रीडास्पदतया(५)निरूप्य मूर्च्छानन्तरं जागरमुपच्छतामस्माकमकस्मादत्रानुप्रवेशः कथं जात इति न याथातथ्यं प्रथयितुं शक्यते स्म ॥

सर्वे साश्चर्य्यमूचुः ।—ततस्ततः ? ॥

मधुकण्ठ उवाच ।—

ततो भवच्चरणराजीवलोकनतः पुनर्जीवनलाभोपक्रमेण क्रमेण च भवदुपसेवनाय श्रीगोपालपूर्वचम्पूं सम्पूरयन्तस्तदिदं सुदिनाहमासीस-दामे(६)ति किम्वान्यत् कथनीयं ॥

(१) कृतारम्भे ।   (२) कृष्णा ।

(३) समुद्रप्रवेशोद्यमं कुर्वतामित्यर्थः ।

(४) अत्रोपनिषत् जीविका चेति द्वयमव्ययमुपमार्थं । इस्वे पाणौ प्राध्वं जीविकोपनिषद इत्यनेन कृञ धातौ परपदे नित्यं समासः । समासोऽप्येकपदीभावमात्रं । तत उपनिषत्कृत्य उपनिषदमिव कृत्य जीविकाकृत्य जीविकामिव कृत्वेत्यर्थः ।

(५) कृष्णस्य भूतपूर्वा या क्रीडा तदाश्रयतया ।

(६) प्रापयामासिम ।

तदेतदुक्त्वा समापनामिदं पद्यं निगद्य पनायति स्म[१)]।—

सोऽयं गोपेन्द्र! पुत्रस्तव महितमहीयःसुशश्वन्महीयस्
त्वन्नानाबन्धुतानामपि विविधतया बन्धुतावद्धबुद्धिः।
यस्माल्लब्धा भवन्तः शिवकमलभवाद्यन्तरध्येयवर्गा-
दूरं धाम[२)]प्रभावं[३)]विभव[४)]मपि महा-
प्रेममाधुर्य्यमत्र॥

तदेतदुक्त्वा भ्रातरं प्रत्युवाच।—

गोपालयशसा स्पृष्टं यन्मृष्टं सूतजन्म च।
तत्तु स्पर्शमणेर्जातं जातरूप[५)]मयोऽपि[६)]नः॥

तथाहि।—

अत्र श्रीव्रजराजराजितसभा-मध्ये क्रमध्येयता-
साध्ये श्रीहरिरेष रामसहितः प्रत्यक्षतामागतः।
तत्रापि स्वकथा-प्रथां कथयितुं नः सम्यगादिष्टवान्
कारुण्यं किमथास्य वर्ण्यमसकृत्पुण्यञ्च किं नः सखे!॥

तदेवं श्रीव्रजदेवकुमारसुकुमारमुखमभिपश्यन्न-
ङ्कुरत्पुलककुलसङ्कुल[७)]कलेवरतावलेन पुनरर्जुन-
ता[८)]मर्जयन्निव ततश्च स्तम्भसम्भजनमतिगम्भीर-

(१) स्तौति स्म।
(२) प्रसिद्धगोलोकाख्यं। (३) प्रभावः सर्वजित्स्थितिः।
(४) ऐश्वर्यं। (५) स्वर्णं। (६) लोहमपि।

कम्पसम्पत् सम्पतन(१)साम्प्रततया(२)लुम्पन् पतन्निव पुनश्च निर्निमिषतानिर्मितसुपर्वता(३)मात्मनि पर्वन्(४)पूर्वावस्थामवस्थापयन्निव समनन्तरञ्च लब्धप्रपञ्चनवनवदलवलयवलितवल्गुपुट(५)शोभालोभाकरकरसम्पुटमनूनवाप्यनव्यदिव्यप्रसुनपूर्णं कुर्वन्नुपहरन्निव सस्निग्धकण्ठः स मधुकण्ठः पूर्ववदेव पूर्वदेव(६)मात्रा रुचिकरं वरं वरयामास ॥

वाणी कंस-रिपो ! तवानुकथनं कर्णौ कथाकर्णनं
हस्तौ सन्ततसेवनं हृदयमप्युत्कण्ठया धारणां ।
शीर्षं गोकुलवस्तुमात्रनमनं दृष्टी समस्तव्रज-
प्रेष्ठानां स्थितिवीक्षणाञ्च भजतां(७)
नौ(८)नैव तत्तद्वहिः ॥

तदेवं लब्धभक्तिप्रपञ्चं तञ्च तञ्च कुञ्चन्मनसं भूयो भूय आहूय प्रमदव्रजविराजमानः श्रीमान्व्रजराजः सभाजनभाजनतया निजसमीपमापयामास समुपवेशयामास च । तेन च सर्वमपि समाजं शर्मणा भ्राजयामास ॥

---

(१) धारा । (२) युक्ततया । (३) देवतां ।
(४) प्राप्नुवन् । पर्व गतौ । (५) पत्रसम्पुटादि ।
(६) असुर ।
(७) अस्याः क्रियाया एकवचनत्वं द्विवचनत्वं च । (८) नावौ ।

ततश्च ।—

पुण्ड्रं पूर्वाङ्गचर्च्चा निजमणिवलितालङ्कृतिर्दिव्यताम्बू
लाग्र्यं[१] प्राग्र्य[२] स्त्रवस्त्रव्रततिरिति वहु-
स्वात्मनैवोपयुज्य ।
गन्त्र्यो[३] वाहाः[४] समन्तात्परिजनजनताः
स्पृह्यगृह्यादिवस्तू-
न्येतान्यन्यैः समर्प्य द्रुयमभिहितवान्[५]
श्रीलगोलोकराजः ॥

अद्यारभ्यानुपाल्येत लाल्येन[६] भवतोद्दयं ।
अस्य मात्रा तथा माता तद्वत् पित्रा मयापिता ॥

जयध्वनियुतास्तदा ववृषुरुद्धताः सद्धनं
यथा वत सदःसदस्तदवगाह्य वाह्यं गृहं ।
तथान्तरगता यतश्च पलमेव[७] तत्पूरितं[८]
स्थलं किल कृतक्रियं व्यसृजदात्मलब्धान् जनान् ॥

---

(१) श्रेष्ठं। (२) श्रेष्ठ।
(३) वृषैर्वाह्यं शकटं गन्त्री उच्यते। गन्त्री कम्बलिका वाह्य-मित्यमरात्।
(४) अश्वाः। (५) कथितवान्।
(६) पुत्रेण श्रीकृष्णेन। (७) पलमेव व्याप्य।
(८) सद्धनेन पूरितं।

तदेवं कथासातौ[(१)] दत्तशातौ[(२)] मधुकण्ठस्निग्ध-कण्ठौ सदैव लब्धकृष्णोपकण्ठौ[(३)] च त[(४)]द्विलास-विलोकनोत्कण्ठौ प्रतिक्षणममन्दपरमानन्दमनु-विन्दमानाविव विराजेते ॥

अत्र पूर्वमापाततः सुदुर्बोधताशङ्कया यद्यपि न वर्णितास्तथाप्यस्यां श्रीगोलोककृतप्रभायां सभायां शान्तवेशतया पुरोधसां मध्यसम्बध्यमानासनः सुखाकृतसर्वस्वजनः सर्वेषामग्रण्यः श्रीमान् पर्जन्यः पर्जन्य इव सर्वसुखं वर्षन्नासीत् वरीयसी वरीयसी[(५)] चान्तः सभायां तथालब्धप्रभा समवर्त्तत ॥

श्रीमानुद्धवश्च सर्वेषामुद्धव एवाजनीति सर्व-जनीनं सुखं कियद्वर्णणीयं । रहस्यं पुनरिदं रस्य-मानं विधीयतां ॥

वृन्दारण्याभिधाने सरसि सरसिज-
　　श्रेणिलक्ष्मीषु गोपी-
ष्वेका राधाभिधा सा विभवति सततं
　　दिव्यसौगन्धिकश्रीः ।

---

(१) कथावसाने । सातिर्दानावसानयोरिति नानार्थः ।
(२) दत्तसुखौ ।　(३) समीप ।　(४) श्रीकृष्ण ।
(५) अतिमहती ।

भ्राम्यन् यामेव लब्धुं व्रजपतितनय-
श्चार्वमूर्त्तर्मवृत्तीः[१] ।
सर्वा निर्माय यस्यामलिरिव कलया
केलिमुच्चैस्तनोति ॥
श्रीकृष्ण ! कृष्णचैतन्य ! ससनातनरूपक ! ।
गोपाल ! रघुनाथाप्त ! व्रजवल्लभ ! पाहि माम् ॥
सम्वत्पञ्चकवेदषोडश[२]युतं शाकं दशेष्वेक[३]भा-
ग्जातं यर्हि तदाखिलं विलिखिता
गोपालचम्पूरियम् ।
वृन्दाकाननमाश्रितेन लघुना जीवेन केनापि त-
द्वृन्दाकाननमेव सम्भृति[४]कलां धत्तां समन्तादिह ॥
प्रायः सर्वा हरेर्लीलाः क्रमशः सूचिता मया ।
यथास्वं[५] लब्धरुचिभिरुपास्यन्तां महात्मभिः ॥

इति श्रीगोपालचम्पूमनु सर्वमनोरथपूरणं
त्रयस्त्रिंशपूरणम् ॥
कैशोरविलासः सम्पूर्णः ॥
सम्पूरिता चेयं श्रीगोपाल-
पूर्वचम्पूरिति ॥

---

(१) वृत्तिर्वर्त्तनजीवने। (२) १६४५। (३) १५१०।
(४) सम्पादन। (५) यथायथं।